॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

१८०



महावैयाकरण-श्रीनागेशभट्टप्रणीता

# वैयाकरणसिद्धान्त-
# परमलघुमञ्जूषा

'किरणावली'-संस्कृतव्याख्योपेत-हिन्द्यनुवादसहिता

व्याख्याकारः

आचार्य-लोकमणिदाहालः






चौखम्बा सुरभारती प्रकाशन

वाराणसी

प्रकाशक

**चौखम्बा सुरभारती प्रकाशन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

दूरभाष : ३३३४३१



प्रथम संस्करण १९९१

मूल्य 

अन्य प्राप्तिस्थान

**चौखम्बा संस्कृत प्रतिष्ठान**

३८ यू. ए. बंगलो रोड, जवाहरनगर

पो० बा० नं० २११३

दूरभाष : २३६३९१

*

प्रधान वितरक

**चौखम्बा विद्याभवन**

चौक ( बनारस स्टेट बैंक भवन के पीछे )

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ६३०७६

मुद्रक

**श्रीजी मुद्रणालय**

वाराणसी

THE
CHAUKHAMBA SURBHARATI GRANTHAMALA
180





VAIYĀKARAṆA-SIDDHĀNTA

# PARAMALAGHUMAÑJŪṢA

OF

## ŚRĪ NĀGEŚA BHAṬṬA

*Edited with*
*'Kiranavali' Sanskrit Commentary and Hindi Translation*

By
Acharya Lokmani Dahal



CHAUKHAMBA SURBHARATI PRAKASHAN
VARANASI

पित्रे परशुरामाय ब्रह्मलीनाय वेधसे ।
जनन्यै विष्णुमायायै श्रद्धापुण्यं समर्प्यते ।।



# किञ्चित्प्रास्ताविकम्

अथात्र प्रारभ्यते किञ्चित्प्रास्ताविकं प्रकृतग्रन्थविषये। ग्रन्थस्य भूमिकाभागतयाऽत्र विचार्यन्ते पञ्च पक्षाः व्याकरणदर्शनपरम्परा, तत्र परमलघुमञ्जूषायाः स्थानं परमलघुमञ्जूषाकृतकः केऽत्र विषया अत्र निरूपिताः, प्रस्तुतटीकायाः क उपयोग इति।

व्याकरणदर्शनपरम्परा हि कदाप्रभृत्यारब्धेति न शक्यते याथातथ्येन वक्तुम्। एतद्विषयेऽस्माकमेतावदेव ज्ञानं यदसौ सूत्रपरम्परातोऽपि प्राचीनतरा विद्यते। निरुक्तकृद्यास्काचार्यः उपसर्गनामशब्दस्वरूपविषये स्वपूर्ववर्तिनौ शाकटायनगार्ग्यौ स्मरति। तौ हि भगवान् पाणिनिरपि 'लङः शाकटायनस्य' 'आतो गार्ग्यस्ये'ति तौ सश्रद्धं स्मरति। वाक्यपदीयकृद्धरिरौदुम्बरायणमखण्डवाक्यसमर्थकत्वेन स्मरति। एवमेव स्फोटायनोऽपि भगवता पाणिनिनाऽपि 'अवङ् स्फोटायनस्ये'ति सूत्रं सादरं स्मर्यते। स हि शब्दनित्यत्ववादस्य स्फोटवादस्य च प्रतिष्ठापकाचार्यरूपेण पदमञ्जरीकृता हरदत्तेनाऽपि स्मर्यते। यास्काचार्यात्प्रागेव नामाख्यातोपसर्गनिपातादिविषये चिन्तनमुपक्रान्तमासीदिति तदीयनिरुक्तसाक्ष्येण ज्ञायते।

व्याकरणदर्शनस्य प्राचीनतमत्वेऽपि अस्य व्यवस्थितमध्ययनं व्याडिना प्रारब्धमिति महाभाष्यवाक्यपदीयप्रभृतिग्रन्थेभ्यो ज्ञायते। व्याडिर्हि लक्षश्लोकात्मकं सङ्ग्रहाख्यं ग्रन्थं प्रणीतवानासीत्। ग्रन्थोऽयं भगवता पतञ्जलिना तु दृष्ट आसीत्, किन्तु भर्तृहरिसमये स लुप्तप्राय एवासीदिति तस्य '···सङ्ग्रहेऽस्तमुपागते' इति कथनाज्ज्ञायते। अनुमीयते यदस्मिन् महति ग्रन्थे व्याकरणदर्शनस्य सर्वोऽपि पक्ष उद्घाटित आसीदिति। महाभाष्यकृद्धि सङ्ग्रहस्य प्रशंसयाऽतृप्तः कथयति—

सम्प्रति तु एतद्विषये पातञ्जलं महाभाष्यं हरेर्वाक्यपदीयमेवास्माकं शरणं व्याकरणदर्शनस्य प्राचीनस्वरूपज्ञानाय। यद्यपि अष्टाध्यायीसूत्रेष्वपि एतद्विषये प्रकाशो लभ्यते तथापि तत्र प्रकरणसिद्धेरेव प्रयोजनत्वान्नैकत्र किञ्चिल्लभ्यते। एवमेव कात्यायनीयादिवार्तिकेष्वपि। वस्तुतस्तु व्याडिप्रणीत-सङ्ग्रहानन्तरं हरेर्वाक्यपदीयमेव व्याकरणदर्शनस्याकरग्रन्थः। तस्येयं प्रथमा कारिका—

'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
प्रवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥' इति।

ग्रन्थेऽस्मिन् हेलाराजपुष्पराजप्रणीता प्राचीना विवृत्ति सूर्यनारायणप्रणीता टीका रघुनाथप्रणीता अम्बाकर्त्र्याख्या व्याख्या लभ्यन्ते ।

स्फोटविषयमादायाऽपि सन्त्यनेके ग्रन्थाः प्रणीताः; यत्र मण्डनमिश्रस्य स्फोटसिद्धिः, भरतमिश्रस्य स्फोटसिद्धिः, केशवस्य स्फोटप्रतिष्ठा, शेषकृष्णस्य स्फोटतत्त्वम्, कृष्णभट्टस्य स्फोटचन्द्रिका, जयदेवस्य स्फोटनिरूपणम्, कुन्दभट्टस्य स्फोटवादश्च प्रसिद्धाः, केचित्स्वरूपतः केचित्तु नामत एव ।

वाक्यपदीयानन्तरं व्याकरणदर्शने सर्वाङ्गपूर्णग्रन्थो भट्टोजिना प्रणीतः। तस्य वैयाकरणभूषणकारिकाः अपि विषयेऽस्मिन्नाकरग्रन्थरूपमादधते । तस्योपरि कौण्डभट्टेन प्रणीता वैयाकरणभूषणाख्या विवृतिस्त्वमूल्यं रत्नमेव । तस्यैव सङ्क्षिप्तं रूपं वैयाकरणभूषणसारः । अस्यापि दर्पण-काशिका-परीक्षाद्याः सन्त्यनेकाष्टीकाः प्रणीताः । तदनन्तरमुदयति नागेशभट्टो यस्य वैयाकरणसिद्धान्तमञ्जूषा वैयाकरणलघुमञ्जूषा च प्रसिद्धौ ग्रन्थौ। लघुमञ्जूषायाः कलाकुञ्जिका-रत्नप्रभाप्रभृतिटीकाग्रन्थाः प्रणीताः सन्ति । प्रकृता हि परमलघुमञ्जूषाऽपि तस्यैव नागेशभट्टमहाभागस्य कृतित्वेन सम्मताऽस्ति । अस्याश्च ज्योत्स्ना-वंशीप्रभृतयष्टीकाग्रन्थाः सन्ति, प्रस्तुता किरणावली च तेष्वेका ।

व्याकरणदर्शनभूमिका हि रामाज्ञापाण्डेयस्य विषयेऽस्मिश्चरमो ग्रन्थः ।

व्याकरणदर्शने परमलघुमञ्जूषायाः स्थानं प्रशस्यं विद्यते । अत्र हि विषयाः सङ्क्षेपेण किन्तु पूर्णतया निरूपिताः सन्ति । सन्त्यत्र शक्तिनिरूपणम्, लक्षणानिरूपणम्, व्यञ्जनानिरूपणम्, तात्पर्यनिरूपणम्, स्फोटनिरूपणम्, आकाङ्क्षाविचारः, योग्यताविचारः, आसत्तिविचारः, धात्वर्थनिर्णयः, निपातार्थनिर्णयः, लकारार्थनिर्णयः, कारकनिरूपणम्, नामार्थविचारः, समासादिवृत्त्यर्थ इति प्रकरणानि; यानि हि किरणावल्यां व्याख्यासौकर्याय १९८ खण्डेषु विभक्तानि सन्ति । विषयनिरूपणे ग्रन्थोऽयं वाक्यपदीयेन सह तु सर्वत्र साम्यं भजते, किन्तु वैयाकरणभूषणेन यत्र कुत्र वैषम्यमपि । क्वचित्तु कैयटेनापि । महाभाष्यन्तु ग्रन्थोऽयमुपजीव्यत्वेन गृह्णाति वाक्यपदीये प्रमाणग्रन्थरूपेण । बहुविधविषये यथा धात्वर्थनिर्णये सकर्मकत्वाकर्मकत्वविषये तु स्वकीयं मौलिकमेव रूपमाधत्ते च ।

ग्रन्थोऽयं नाम्ना तु वैयाकरणसिद्धान्तमञ्जूषाया परमलघुरूपं दृश्यते, किन्तु विषयदृष्टयाऽसौ न तथेति ग्रन्थस्यास्य नागेशप्रणीतत्वे कतिपये विचक्षणाः संशेरते । यद्यपि प्रारम्भवाक्ये—

'शिवं नत्वा हि नागेशेनानिन्द्या परमा लघुः ।
वैयाकरणसिद्धान्तमञ्जूषैषा विरच्यते ॥'

इति, चरमवाक्ये च

'इति श्रीशिवभट्टसुतसतीदेवीगर्भजनागेशभट्टकृता' ।

इत्यपि कथितमस्ति, तथापि ग्रन्थस्य पूर्वार्धे लघुमञ्जूषया साम्येऽपि यत्र कुत्र विशेषत उत्तरार्धे लघुमञ्जूषया सह वैषम्यदर्शनादुत्तरार्धे वैयाकरणभूषण-कारिकाया यथायथमुद्धृत्य व्याख्यानाच्च नागेशकृतित्वमस्य न सन्देहवाह्यम् । सत्यामपि सन्देहभूमौ वयन्त्वगतिकत्वेन ग्रन्थममुं नागेशकृतिमेव मन्यामहे, काम-मस्योत्तरार्धभागः पश्चात्केनाऽपि शिष्येण प्रणीय संयोजितः किं न स्यात् ?

नागेशैतिह्यविषयेऽपि न यथार्थतो वयं ज्ञातुं प्रभवामः । स हि शिवभट्टाख्य-सुत आसीत्, तस्य माता सतीदेव्याख्या चेति तु स स्वयमेव लिखति । शृङ्ग-वेरपुराधीशरामसिंहाश्रितोऽयं विद्वानपि तदुक्त्यैव ज्ञायते । स हि ऋग्वेद-शाखाध्यायी महाराष्ट्रीयब्राह्मण आसीत् । असौ हि कदा समुत्पन्न इति तु विवादविषय एव । सामान्यतोऽसौ १७२० वैक्रमाब्दमभितः स्थितिमानिति विश्वस्यते । अपत्यहीनोऽसौ महाविचक्षणो दीर्घायुरासीत् । शताधिकविविध-विषयकग्रन्थान् प्रणीय शतवर्षाणि धरित्रीं स्पृष्ट्वा शिवसायुज्यमाप्तवानिति केषाञ्चिन्मतम् । काल एषः १८३२ मितवैक्रमाब्दमभित आसीदिति कतिपये वदन्ति । एतत्तु निश्चितमेव यदसौ कौण्डभट्टादर्वाचीनः । स हि भट्टोजेः भ्रातुष्पुत्रः । कथ्यते ह्यसौ भट्टोजिपौत्रस्य हरिदीक्षितस्य शिष्य आसीदिति । निश्चितकाला-ज्ञानेऽप्यसौ विक्रमानन्तराष्टादशशतकस्थितिमानिति तु निश्चितमेव । कथ्यते हि १७६० मितवैक्रमाब्दे जयपुराधीशेनाश्वमेधयज्ञः समायोजितः । तत्र नागेशोऽपि सश्रद्धं समाहूत आसीत् । कलियुगे तस्य निषिद्धतयाऽऽयोजकस्यापात्रत्वेन च तत्र स नागच्छत्क्षेत्रसंन्यासव्याजेन काश्याम् । अनेके ये केचन पण्डितास्तत्र गतास्ते तं निरादरितुं प्रचक्रमिरे । तेन क्षुब्धः स काशीं विहाय शृङ्गवेरपुरं गत्वा तत्र राज्याश्रयं प्राप्य तत्रैव शेषजीवनमयापयदिति । एतेनाऽपि तस्य स एव स्थितिकाल इत्यनुमातुं शक्यते । कथ्यते हि काशीतो गच्छता तेन भ्रातुष्पुत्र्यै दत्तं तद्गृहं सम्प्रत्यपि काश्यां विद्यते इति । अस्य हि पट्टशिष्यो वैद्यनाथो येन लघुमञ्जूषायाः कलाख्या टीका प्रणीता लघुशब्देन्दुशेखरस्य चिद-स्थिमाला च । वैद्यनाथपुत्रो बालभट्टो यस्य मिताक्षराया बालम्भट्टी व्याख्या प्रसिद्धा । सन्तानहीनत्वेन तिरस्कृतत्वेन च दुःखपूर्णं जीवनं यापयन्नप्यसौ शता-धिकान् ग्रन्थान् प्राणैषीत् । तेषु शब्देन्दुशेखरः, लघुशब्देन्दुशेखरः, महाभाष्यमा-श्रित्य प्रदीपस्योद्द्योताख्या व्याख्या, वैयाकरणसिद्धान्तमञ्जूषा, लघुमञ्जूषा, परमलघुमञ्जूषा परिभाषेन्दुशेखरश्चास्य प्रसिद्धा व्याकरणविषयकग्रन्थाः । अनेन रसगङ्गाधरस्य च टीका प्रणीता काव्यप्रकाशमाश्रित्य प्रदीपव्याख्या च । तथैव दुर्गासप्तशत्या अपि टीकानेन प्रणीता । कथ्यते हि ज्यौतिषविषयेऽप्यस्य कश्चिद् ग्रन्थ आसीदिति । अस्य प्रायश्चित्तेन्दुशेखरो धर्मशास्त्रे सम्प्रत्यपि मूर्द्धन्यं स्थान-माधत्ते ।

परमलघुमञ्जूषायाः प्रस्तुता किरणावल्याख्या व्याख्या साम्प्रतिकछात्राणामावश्यकतां हृदि कृत्वा प्रणीताऽस्ति । नाऽसौ कयाऽपि पूर्ववर्तिन्या वा समकालिकया व्याख्यया सह प्रतिस्पर्धां विदधाति । असौ तु प्रतिपदव्याख्यारूपा विषयसाररूपा च केवलं छात्रोपकारिका । अस्याः प्रणयने पूर्ववर्तिटीकाग्रन्थेभ्योऽवश्यमेव साहाय्यं लब्धं, तत्कृते तत्प्रणेतॄणां पुरतो वयं नतमस्तकाः । सन्त्यत्र बहुविधास्त्रुटयोऽज्ञानतः प्रमादात् त्वरया मुद्रणदोषेणापि । तद्धि स्वाभाविकमिति मत्वा पाठकाः क्षमन्त एवेत्याशास्महे ।

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥ इति ।

वाराणस्याम्
फाल्गुनसङ्क्रान्तिः
२०४७ वै०

विदुषां वशंवदः
**लोकमणिदाहालः**



# विषयानुक्रमः



---



॥ श्रीः ॥

महावैयाकरण-श्रीमन्नागेशभट्टप्रणीता

# परमलघुमञ्जूषा

## आचार्यलोकमणिदाहालप्रणीत-
## 'किरणावली'-संस्कृत-हिन्दीव्याख्योपेता

---

## ( १ ) अथ शक्तिनिरूपणम्

### मङ्गलाचरणम्

( १ ) शिवं नत्वा हि नागेशेनानिन्द्या परमा लघुः ।
वैयाकरणसिद्धान्तमञ्जूषैषा विरच्यते ॥ १ ॥

* किरणावली *

ध्यात्वा परं महान्तं लोकमणिरितीह पर्शुरामसुतः ।
नागेशभट्टविहितां व्याख्यातीह परमलघुमञ्जूषाम् ॥

व्याख्या—शिवमित्यादि । अथ तत्रभवान् महावैयाकरणः स्वायत्तीकृतनिखिलप्रकरणः सुसमाराधितमहेशो नागेशः 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि हि प्रथन्ते वीरपुरुषाणि च भवन्ति आयुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युः' इति शिष्टोक्तिमनुसृत्य प्रारिप्सितग्रन्थनिष्प्रत्यूहपरिसमाप्तिकामनया ग्रन्थारम्भे कृतमभीष्टदेवताप्रणामात्मकं मङ्गलं शिष्यशिक्षायै निबध्नन् 'ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः' ॥ इति शिष्टवचनमनुसृत्य प्रेक्षावतां प्रवृत्तये प्रवृत्तिप्रयोजकज्ञानजनकज्ञानविषयत्वरूपं विषयप्रयोजनसम्बन्धाधिकार्यात्मकमनुबन्धचतुष्टयञ्च निरूपयति—शिवमित्यादिना । नागेशेन शिवं नत्वा एषा अनिन्द्या परमा लघुः वैयाकरणसिद्धान्तमञ्जूषा विरच्यत इत्यन्वयः । नागेशेन नागेशभट्टाख्येन शिवभट्टसुतेन सतीदेवीगर्भजेन विदुषा—'शिवभट्टसुतो धीमान् सतीदेव्यास्तु गर्भजः' इत्यन्यत्र कथनात् । मयेति शेषः । न च 'आत्म नाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः' ॥ इति शिष्टशासनान्नागेशेनेति स्वनामग्रहणं प्रत्यवायजनकन्तच्च मङ्गले न युक्तमिति वाच्यं ग्रहधातोस्तत्रोच्चारणार्थपरकत्वाल्लेखने निषेधाभावात् निषेधस्य वैखरीमात्रविषयत्वाद्वा प्रतिज्ञादौ स्वनामसङ्कीर्तने दोषाभावस्य शास्त्रान्तरेऽपि दर्शनाच्च न तस्य वैखरीविषयत्वेऽपि 'रामो द्विर्नाभिभाषते' इत्यादावापत्तिः । अस्मदर्थनामार्थयोरभेदसम्बन्धेन

यत्रान्वयस्तथाविधस्थले एवात्मनामग्रहणनिषेधविषयकत्वकल्पनान्नैतादृशस्थले दोष इति। अथवा प्रणामादौ प्रतिज्ञास्थले चैतादृशप्रयोगस्य शिष्टसम्मतत्वस्य शास्त्रान्तरेऽपि दर्शनान्नात्र दोषः। न च कूपखानकन्यायेन तथाविधप्रत्यवायनाश इति वाच्यमत्र तन्न्यायस्य नान्तरीयकपापनाशविषयत्वात् एतादृशस्थले ग्रन्थकरणनान्तरीयकत्वाभावात्। यथा हि पांसुसंसर्गमन्तरा कूपखननासम्भवो न तथाऽत्र नामग्रहणमन्तराऽपि ग्रन्थकरणसम्भवात्। वस्तुतस्तु निषेधस्यास्य गर्वोक्त्यादावेव विषयत्वं न तु प्रणामप्रतिज्ञापरिचयप्रदानादावपि; अन्यथा 'रामोऽस्मि सर्वं सहे' 'नत्वा वरदराजः श्रीगुरून् भट्टोजिदीक्षितान्' 'संस्मृत्य गुरुपादाब्जे, भट्टमल्लेन रच्यते' 'यथागमं विधास्येऽहं कैयटो जैयटात्मजः' 'श्रीकौण्डभट्टः कुर्वेऽहं वैयाकरणभूषणम्' 'रामोऽहं कातरात्मा दशरथतनयः' इत्यादिप्रयोगदर्शनात् नामग्रहणपूर्वकं गुरोरभिवादनविधेः शास्त्रे निर्देशाच्च। शिवं शङ्करं तस्य विद्याकामैरुपास्यत्वेन शास्त्रे निर्देशात् प्रकृतग्रन्थस्य व्याकरणविषयकत्वाद् व्याकरणस्य शिवोपदिष्टत्वेन प्रसिद्धेः ग्रन्थकृतोऽभीष्टदेवत्वाच्चात्र समुचितेष्टदेवतात्वं शिवस्य। 'न च प्रमहसि निस्त्रैगुण्ये शिवाय नमो नमः' इत्यादि शिष्टवाक्याच्छिवस्य गुणातीतत्वप्रतिपादनान्नमस्कारस्य करशिरःसंयोगादिरूपव्यापारत्वेन सगुणत्वप्रयोजकत्वाच्छिवकर्मकं नमनमसङ्गतमिति वाच्यं तस्य सर्वात्मकत्वेन शास्त्रे वर्णनात्सगुणरूपस्यापि प्रतिपादनात् 'पदे त्वर्वाचीने पतति न मनः कस्य न वचः' इत्यादि शिष्टस्मरणाच्च। न च तस्य संहारकत्वेन ख्यातेर्द्वेषविषयकत्वान्मङ्गलानर्हतेति वाच्यं 'तथापि स्मर्तॄणां वरद परमं मङ्गलमसि' 'अकिञ्चनः सन् प्रभवः स सम्पदां त्रिलोकनाथः पितृसद्मगोचरः। सभीमरूपः शिव इत्युदीर्यते न सन्ति याथार्थ्यविदः पिनाकिनः॥' इत्यादि शिष्टवाक्यात् संहारस्य तदवसरमात्रविषयत्वेन तस्य सम्पदामणिप्रभवत्वेन कथनाच्च। शिवभट्टाख्यं पितरञ्च तादृशशिष्टप्रयोगदर्शनात् 'पाणिन्यादिमुनीन् प्रणम्य पितरं रङ्गोजिभट्टाभिधम्' इत्यादौ। नामैकदेशग्रहणेऽपि नामग्रहणविधानादुपाधिरहितस्य शिवशब्दस्य प्रयोगः साधुरेव। नत्वा अभिवन्द्य योऽभिवन्द्यते तदपेक्षयाऽभिवादकनिष्ठापकृष्टत्वप्रकारकबोधप्रकारकबोधानुकूलव्यापार एव नमधात्वर्थः। व्यापारश्च करशिरःसंयोगरूपो नमःपदप्रयोगरूपश्च। अप्रत्यक्षमपि शिवं हृदि प्रत्यक्षीकृत्येति। एतावता हि मङ्गलमाचरितं भवति। मङ्गलत्वञ्च प्रारिप्सितपरिसमाप्तिप्रतिबन्धकध्वंसासाधारणकारणत्वम्। कार्यमात्रं प्रति अष्टौ वा नव साधारणकारणानि तत्र तत्रोक्तानि ईश्वरतज्ज्ञानेच्छाकृतयः दिक्कालावदृष्टं प्रागभावश्चेत्यष्टौ ईश्वरतज्ज्ञानेच्छाकृतिदिक्कालादृष्टप्रतिबन्धकाभावाकाशश्चेति नव वा। मङ्गलस्य तु तद्विलक्षणत्वेन विघ्नध्वंसं प्रति असाधारणकारणत्वमुक्तम्। न च सत्यपि मङ्गले कादम्बर्यादौ विघ्नध्वंसाऽदर्शनादसत्यपि तस्मिन् किरणावल्यादौ नास्तिकग्रन्थे वा विघ्नध्वंसदर्शनाच्च अन्वयव्यतिरेकाभ्यां व्यभिचारात् (कादम्बर्यादौ कारणस्य मङ्गलस्य सत्त्वेऽपि विघ्नध्वंसरूपकार्यानुपपत्तिरूपान्वयव्यभिचारः किरणावल्यादौ तु कारणाभावेऽपि कार्योत्पत्तिरूपव्यतिरेकव्यभिचारः) मङ्गलस्य समाप्तिसाधनत्वं नास्तीति वाच्यं कादम्बर्यादौ मङ्गलापेक्षया विघ्नबाहुल्यात् समाप्त्यभावात् किरणा-

वल्यादौ ग्रन्थाद् वहिरेव मङ्गलस्य विधानान्नास्तिकग्रन्थादौ जन्मान्तरीयमङ्गलसत्त्वसम्भवाच्च। ननु मङ्गलस्य कर्तव्यत्वे किं प्रमाणमिति न वाच्यं, शिष्टाचारानुमितश्रुतेरेव प्रमाणत्वात्। एषा बुद्धिविषयत्वेन विद्यमाना **अनिन्द्या** दोषरहिता केनाप्यखण्डनीया एतत्प्रतिपादयिष्यमाणसिद्धान्तस्यानिन्दनीयत्वेन ग्रन्थस्यापि तथात्वात् **परमा** अत्यन्तमेव **लघुः** स्वल्पविग्रहा स्वल्पैरेव शब्दैर्महतोऽर्थराशेर्व्याख्यानादस्याः परमलघुविग्रहवतीत्वम्। न च कश्चिदेतावदर्थमतोऽपि सङ्क्षेपेण वक्तुं प्रभवतीति ग्रन्थस्यास्य परमलघुत्वम्। न चास्य मञ्जूषायाः लघुमञ्जूषाया वा सङ्क्षेपितरूपत्वेन परमलघुत्वमस्य वाच्यमुभयोर्निरूपणीयविषयाणां साम्यादर्शनात्। शक्तिनिरूपणप्रसङ्गादारभ्य निपातार्थनिर्णयप्रकरणपर्यन्तमेव तयोः साम्यं दृश्यते, यद्यपि तत्रापि दृश्यन्ते कतिपया विमतयः। परमलघुमञ्जूषायां 'सर्वे सर्वार्थवाचकाः सति तात्पर्ये' इति यः सिद्धान्तरूपेणाध्युक्तः स एव लघुमञ्जूषायां पूर्वपक्षत्वेनोपस्थापितः। उक्तश्च तत्र 'ननु सर्वेषां सर्वार्थवाचकत्वे लक्षणोच्छेद इति चेन्न; योगिनां सर्वार्थवाचकत्वज्ञाने सत्यपि अस्मदादीनां तदभावात्' इति। लघुमञ्जूषागते सनाद्यर्थविचार-कृदर्थविचारप्रकरणे परमलघुमञ्जूषायां नितान्तमेवोपेक्षिते। लघुमञ्जूषायां वृत्त्याश्रयभूतशब्दस्वरूपविषये नैयायिकदृष्ट्या द्वावेव विकल्पावुपस्थापितौ यदा परमलघुमञ्जूषायां त्रयो विकल्पाः प्रस्तुताः। परमलघुमञ्जूषायां तात्पर्यस्य यत्स्वरूपमुक्तं तल्लघुमञ्जूषायां नैव लभ्यते। नैतावन्मात्रमपितु लघुमञ्जूषायां सङ्क्षेपेण निरूपितोऽर्थः परमलघुमञ्जूषायां विस्तारितोऽप्यस्ति। केचित्तु ग्रन्थममुं नागेशेतरकृतित्वेन गृह्णन्ति, अवसानभागे कौण्डभट्टस्य पङ्क्तिशः उद्धरणदर्शनाच्च। **वैयाकरणसिद्धान्तमञ्जूषा** व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति व्याकरणं शब्दानुशासनशास्त्रं तत्सम्बद्धा वैयाकरणाः यद्वा व्याकरणमधीयते विदन्ति वा वैयाकरणास्तेषां सिद्धान्ताः सिद्धो निष्पन्नोऽन्तो निश्चयो येषां ते निश्चितार्था इति। आचार्यास्तु सिद्धः प्रमाणैर्निश्चितोऽन्त उक्तरूपा व्यवस्था येषामर्थानामिति सिद्धान्तपदार्थस्य व्यापारभिन्नत्वान्न षष्ठीतत्पुरुषः, तेनैवोक्तम्—'अस्त्वयमित्यनुज्ञायमानोऽर्थः सिद्धान्तः' इति। तेषां मञ्जूषा स्थापनभाण्डम्। यथा वस्तूनि मञ्जूषायां क्रमेण स्थाप्यन्ते तथैवात्रापि वैयाकरणसिद्धान्ताः स्थाप्यन्त इत्यस्य संज्ञा। न च सिद्धा एव पदार्थाः समीपतरवर्तिनो भवन्ति, येषां हि मञ्जूषायां स्थापनं सम्भवति। अत्र तु सिद्धान्ताः प्रतिपादयिष्यमाणा एवेति कथमस्य मञ्जूषात्वमिति वाच्यं, ग्रन्थकृता स्वबुद्धिविषयीकृतत्वेन तेषामपि समीपतरवर्तित्वात् सत्कार्यवादानुसारेण पूर्वमपि सत्ताया अक्षतेश्च। एतेन विषयप्रयोजनसम्बन्धाधिकारिरूपानुबन्धचतुष्टयमप्युक्तम्। यत्र विषया वैयाकरणसिद्धान्ताः तज्ज्ञानं प्रयोजनसम्बन्धः साध्यसाधनभावो न तु वाच्यवाचकभावस्तत्सम्बन्धज्ञानं विनाऽपि प्रवृत्तिदर्शनात्। अधिकारी तु ग्रन्थप्रतिपाद्यविषयावबोधधारणाशक्तिविशिष्ट इति। **विरच्यते** प्रणीयते इति। वर्तमानासामीप्ये लट्।

**हिन्दी**—नागेश के द्वारा भगवान् शिव को प्रणाम कर यह (किसी के द्वारा भी) निन्दा न किये जा सकने वाली अत्यन्त संक्षिप्त वैयाकरणसिद्धान्तमञ्जूषा रची जाती है।

यहाँ नागेश ग्रन्थकर्ता का नाम है। अभिवादन एवं प्रतिज्ञा में इस तरह अपना नाम लेना कोई दोष नहीं है। यहाँ दोनों हैं। भगवान् शिव नागेश के अभीष्ट देवता हैं तथा प्रतिपाद्य विषय के अधिष्ठाता भी और साथ-साथ नागेश के पिता का नाम भी शिव है। यहाँ 'शिव' शब्द से तीनों बातें झलकती हैं। नमस्कार यहाँ हृदय में साक्षात्कृत शिव को किया गया है और उनके निर्गुण होते हुए भी सगुणत्व का भी उल्लेख होने से इसमें कोई दोष नहीं है। प्रमाणसिद्ध सिद्धान्तों का प्रतिपादन होने से कोई भी इसकी निन्दा नहीं कर पाता, अतः यह अनिन्द्य है। थोडे ही पदों में बहुत से अर्थों के बतलाए जाने के कारण यह अत्यन्त संक्षिप्त है। व्याकरण से सम्वद्ध सिद्धान्त इसका विषय है और उन सिद्धान्तों का ज्ञान इसका प्रयोजन। विषय एवं ग्रन्थ का साध्यसाधनभाव सम्वन्ध है। सम्बन्धरूप अनुबन्ध का ज्ञान ही प्रवृत्ति में प्रयोजक है और ऐसी प्रवृत्ति वाच्यवाचक सम्वन्ध के ज्ञान के बिना भी हो जाती है। अतः वाच्यवाचक सम्वन्ध तो हो नहीं सकता। ग्रन्थ के द्वारा प्रतिपाद्य विषय के तत्त्व को समझने एवं धारणा करने की शक्तिवाला वैयाकरण ही इसका अधिकारी है।

## ( स्फोटनिरूपणम् )

( २ ) तत्र वर्णपदवाक्यभेदेन स्फोटस्त्रिधा। तत्रापि जातिव्यक्तिभेदेन पुनः षोढा। अखण्डपदस्फोटोऽखण्डवाक्यस्फोटश्चेति सङ्कलनयाऽष्टौ स्फोटाः।

**व्याख्या**—व्याकरणस्य शब्दानुशासनत्वेन स्फोटात्मकस्यैव शब्दस्य वृत्त्याश्रयत्वेन प्रथमं स्फोटभेदान्निरूपयति—तत्रेत्यादिना। अत्रेदमवधेयं यच्छब्दानित्यत्ववादिनो नैयायिकाः वैखर्या एव वाचकत्वं मन्यन्ते, तद्विपरीतं शब्दनित्यत्ववादिनो मीमांसकाः ध्वनिरूपशब्दानामेव वाचकत्वं स्वीकुर्वन्ति। तदुभयविलक्षणत्वेन वैयाकरणा हि स्फोटात्मकं शब्दमेव वृत्त्याश्रयत्वेन स्वीकुर्वन्ति। कोऽसौ स्फोट इत्यपेक्षायामुच्यते, स्फुटत्यर्थोऽस्मादिति स्फोटः, स्फुटयतेऽभिव्यज्यते वर्णैरिति स्फोटो वा। तेन यस्मादर्थाभिव्यक्तिर्ज्ञाता भवति, स स्फोट इति सिध्यति। सार्थकशब्दस्य हि द्वौ पक्षौ—ध्वनिः स्फोटश्च। तत्र ध्वनिरनित्यः सावयवोऽर्थाभिव्यक्त्यक्षमः। स तु केवलं स्फोटाभिव्यञ्जक एव। ध्वन्यभिव्यक्तः स्फोटशब्दस्यात्माऽर्थाभिव्यक्तिमूलम्। स्फोटोऽसौ मध्यमाविषयो यदा ध्वनिर्वैखरीविषय एव। अत्रोक्तम्—

'चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥
परा वाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥
वैखर्या हि कृतो नादः परश्रवणगोचरः।
मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते॥' इति।

सत्यपि स्फोटे वर्णातिरिक्ततत्त्वेऽसौ वर्णात्मकध्वनित एवाभिव्यक्तो भवति। यद्यपि स्फोटो नित्यो निरंशोऽविभाज्यश्च तथापि शब्दानां स्वरूपज्ञानोपायतया

कृताः सन्ति स्फोटस्यानेके काल्पनिका विभागाः। वाचकतादृष्ट्या वर्णपदादिविभिन्नरूपेषु स्फोटः स्वीक्रियते। तत्र निर्द्धारणे सप्तमी स्फोटस्यानेकेषु भेदेष्विति। **स्फोटः** अर्थबोधकशब्दो वैयाकरणसिद्धान्तघटकीभूतः। **वर्णपदवाक्यभेदेन** वर्णाः अकहादयः यथोक्तम्—

'आद्यमन्तेन संयोगादहमित्येव जायते।
इकारादिहकारान्ता वर्णाः समभवंस्ततः॥' इति।

पदं प्रयोगार्हानन्वितैकार्थबोधका वर्णाः। वाक्यं पूर्णार्थकपदसमूहः, इत्येतेषां भेदेन। त्रिधा त्रिप्रकारको भवति मूलत इति शेषः। प्रथमतस्तु स्फोटस्त्रिविधो वर्णगतः पदगतो वाक्यगतश्चेति। त्रिविधस्याऽप्यस्य पुनर्द्वैविध्यमाह—**तत्रापीत्यादिना।** **तत्रापि** त्रिविधेष्वपि स्फोटेषु च। **जातिव्यक्तिभेदेन** जातिः सामान्यं व्यक्तिर्द्रव्यं तयोर्भेदेन विभागेन। स्फोटः **पुनः** एवमेव। **षोढा** षट्प्रकारको भवतीति। वर्णपदवाक्यसम्बद्धस्फोटा अपि प्रत्येकं जातिगतत्वेन व्यक्तिगतत्वेन च षट्प्रकारका भवन्तीत्याशयः। अस्यायमाशयः—पदार्थविश्लेषणे मीमांसका जातेः प्राधान्यमामनन्ति, नैयायिकास्तु व्यक्तेः। जातिरत्र सामान्यं यद्वा सा सत्ता याऽनेकव्यक्तिषु समानरूपेण लभ्यते। सामान्यमेवेदं त्वतल्प्रत्ययाभ्यां सूच्यते। यथा गोत्वम्। गोत्वं हि सामान्यरूपेण सर्वास्वेव गोव्यक्तिषु लभ्यते। जातिर्हि नित्या निरवयवा च। तद्विपरीतं व्यक्तिस्तु द्रव्यं पृथक्पृथग्रूपेण दृश्यः पदार्थो यमाश्रित्य सोऽस्तीति विशिष्टवस्तुसंसूचकसर्वनाम्नः प्रयोगः क्रियते। जातिवादिनामिदं मतं यच्छब्दो हि प्रथमं जातिं बोधयति, किन्तु जातिर्न हि व्यक्त्याश्रयणं विना स्वतन्त्ररूपेण स्थातुं न प्रभवति। तेन जात्या सह व्यक्तेरपि बोधः पश्चाच्छब्देनैव भवति। तन्मते आकृतिरेव वाचिका वाच्या च—शब्दाकृतिर्वाचिका अर्थाकृतिर्वाच्येति। व्यक्तिवादिमते तु द्रव्यमेव शब्दस्य विषयः, तन्मते न हि शब्दाकृत्यांऽर्थाकृतिर्ज्ञाप्यतेऽपितु पृथक्पृथक्शब्देभ्यः पृथक्पृथगर्थानां बोधो भवति। व्यक्तेः शब्दार्थत्वेन ग्रहणे एव लिङ्गवचनादीनामपि सिद्धिः सम्भवति नान्यथा। व्यक्तौ जातेरस्तित्वं त्वपरिहार्यरूपेण भवत्येव, तेन व्यक्तेः शब्दार्थत्वेन ग्रहणेऽपि व्यक्त्या सह जातेरपि बोधः शब्दाद् भवत्येवेति। इत्थं हि वर्णपदवाक्येभ्यो यदा वर्णपदवाक्याकृतीनां बोधोऽभिमन्यते, तासामर्थबोधकत्वञ्च तदा वर्णजातिस्फोटः पदजातिस्फोटः वाक्यजातिस्फोटश्चेति त्रयः स्फोटस्य जातिगतभेदा भवन्ति, तथैव वर्णपदवाक्येभ्यो यदा वर्णपदवाक्यव्यक्तीनां बोधः समर्थ्यते तासामर्थबोधकत्वञ्च तदा वर्णव्यक्तिस्फोटः पदव्यक्तिस्फोटो वाक्यव्यक्तिस्फोटश्चेति पुनरपरे त्रयो भेदा भवन्ति। तदुपसंहृत्य भवन्ति स्फोटस्य षड् भेदा इति। पदवाक्याश्रयेण पुनः स्फोटस्य भेदावाह—**अखण्डेत्यादिना।** **अखण्डपदस्फोटः** अखण्डः समष्ट्या गृहीतोऽविभक्तः पदस्फोटः पदव्यक्तिजन्यस्फोटः। **अखण्डवाक्यस्फोटः** अखण्डोऽविभक्तः वाक्यस्फोटः वाक्यव्यक्तिजन्यस्फोटः। च इति समुच्चये। उक्तं सङ्कलयति—**इतीत्यादिना।** **इति** इत्थं हि। **सङ्कलनया** सर्वेषामेकत्र गणनया। **अष्टौ** अष्टविधाः। स्फोटा अर्थावबोधकशब्दाः। भवन्तीति शेषः।

तदित्थं जातेरखण्डत्वादविभाज्यत्वाच्च वर्णजातिस्फोटः पदजातिस्फोटः वाक्य-

जातिस्फोटश्चेति तिस्र एव जातयः स्फोटाः । व्यक्तेस्तु विभागसम्भवात्—वर्णव्यक्तिस्फोटः, सखण्डपदव्यक्तिस्फोटः, अखण्डपदव्यक्तिस्फोटः, सखण्डवाक्यव्यक्तिस्फोटः, अखण्डवाक्यव्यक्तिस्फोटश्चेते पञ्च व्यक्तयः स्फोटाः । तेषां सम्मेलनेनाष्टौ स्फोटा इति । प्रकृतिप्रत्ययगतवर्णानां पृथक्पृथगर्थाभावान्न हि वर्णव्यक्तिस्फोटस्य सखण्डत्वमखण्डत्वं वा । प्रकृतेः प्रत्ययाच्च पृथक्पृथगर्थप्रतीतौ प्रकृतिप्रत्ययादिरूपव्यक्तिदृष्टचा वर्णव्यक्तिस्फोटस्तद्विपरीतमुभयोरेव सामान्यार्थाभिमते तु वर्णजातिस्फोट एव । पदानां तु खण्डसम्भवेन व्यक्तिदृष्टचा सखण्डत्वमखण्डत्वमपि । तथैव वाक्यस्यापि पदानां पृथक्सत्ताऽस्वीकारे यथा वैयाकरणा आमनन्ति अखण्डत्वमेव तथा स्वीकारे तु सखण्डत्वमपीति ।

अतो हि वर्णस्फोटौ द्विविधौ—वर्णजातिस्फोटो वर्णव्यक्तिस्फोटश्चेति । पदस्फोटस्त्रिविधः—पदजातिस्फोटः, सखण्डपदव्यक्तिस्फोटोऽखण्डपदव्यक्तिस्फोटश्चेति । वाक्यस्फोटोऽपि त्रिविधः—वाक्यजातिस्फोटः, सखण्डवाक्यव्यक्तिस्फोटः, अखण्डवाक्यव्यक्तिस्फोटश्चेति ।

### ( स्फोट के भेद )

**हिन्दी**—वर्ण, पद एवं वाक्य के भेद के कारण स्फोट अर्थात् अर्थावबोधक शब्द तीन प्रकार का होता है । उनमें भी फिर जाति एवं व्यक्ति के भेद के कारण यह स्फोट छः प्रकार का होता है । इनके अतिरिक्त अखण्डपदस्फोट और अखण्डवाक्यस्फोट करके स्फोट के और भी दो भेद होते हैं । इस प्रकार सबके सङ्कलन से आठ प्रकार का स्फोट होता है ।

जिससे अर्थ की अभिव्यक्ति हो जाय, वह स्फोट है । शब्द के दो तत्त्व माने गये हैं—ध्वनि और स्फोट । 'ध्वनि' सावयव एवं विनाशी होता है, अतः वह अर्थ का बोध नहीं कर सकता, वह तो केवल स्फोट का अभिव्यञ्जक मात्र है । अर्थ का बोध तो स्फोट से होता है । यह स्फोट वर्णों से अतिरिक्त तत्त्व है, फिर भी यह वर्णरूप ध्वनियों से अभिव्यक्त होता है । अतः जो वर्णों आदि के द्वारा अभिव्यक्त हो, वह भी स्फोट कहलाता है । इस तरह अभिव्यक्ति के माध्यम को लेकर निरंश एवं अविभाज्य स्फोट के भी काल्पनिक विभाग किये गये हैं । मुख्यतः इसके तीन विभाग माने गये हैं—वर्णस्फोट, पदस्फोट एवं वाक्यस्फोट । जो प्रकृति-प्रत्ययरूप वर्णों से स्फुटित हो, वह वर्णस्फोट है, जो पदों से स्फुटित हो, वह पदस्फोट है और जो वाक्य से स्फुटित हो, वह वाक्यस्फोट है । इन तीनों भेदों के भी जाति एवं व्यक्ति के भेद से प्रत्येक के दो-दो भेद मानने पर स्फोट छः प्रकार का होता है । मीमांसक अर्थ को जातिपरक मानते हैं, अर्थात् शब्द जाति का बोध कराता है अथवा यों कहें कि शब्द का अर्थ जाति ही है । इसके विपरीत नैयायिक शब्द के अर्थ के रूप में व्यक्ति को लेते हैं । गौ में गोत्व जाति है और वही 'गो' शब्द का अर्थ है । जो सभी में समान रूप से पाया जाय वह जाति है । जाति नित्य एवं निरवयव होती है । इसके विपरीत व्यक्ति पृथक् पृथक् रूप में दिखलायी देने वाला पदार्थ है । जातिवादियों के अनुसार शब्द से पहले जाति का बोध

होता है और उसके आश्रय के रूप में बाद में व्यक्ति का भी। व्यक्तिवादियों का कहना है कि व्यक्ति ही शब्द का अर्थ है और व्यक्ति में जाति के रहने के कारण बाद में जाति का भी बोध होता है। व्यक्ति को शब्दार्थ मानने पर ही शब्द के लिङ्ग-वचन आदि की सिद्धि होती है, अन्यथा नहीं।

इस प्रकार जाति की दृष्टि से स्फोट के तीन भेद हो जाते हैं—वर्णजातिस्फोट, पदजातिस्फोट एवं वाक्यजातिस्फोट और व्यक्ति की दृष्टि से भी उतने ही वर्ण-व्यक्तिस्फोट, पदव्यक्तिस्फोट एवं वाक्यव्यक्तिस्फोट।

इनमें भी जाति तो अखण्ड एवं अविभाज्य होती है, अतः उसमें खण्डता का प्रश्न ही नहीं उठता, किन्तु व्यक्ति के खण्ड भी हो सकते हैं। उसमें भी प्रकृति-प्रत्यय आदि में विद्यमान वर्णों के पृथक्-पृथक् अर्थ न होने से वर्णव्यक्तिस्फोट तो सखण्ड नहीं हो सकता, लेकिन पद एवं वाक्य से सम्बन्धित व्यक्तिस्फोट सखण्ड एवं अखण्ड हो सकते हैं। अतः अखण्डपदव्यक्तिस्फोट एवं अखण्डवाक्यव्यक्तिस्फोट भी माने गये हैं। अर्थात् व्यक्तिस्फोट पाँच प्रकार का माना गया है—वर्णव्यक्तिस्फोट, सखण्डपद-व्यक्तिस्फोट, अखण्डपदव्यक्तिस्फोट, सखण्डवाक्यस्फोट एवं अखण्डवाक्यस्फोट। इस प्रकार जाति से सम्बन्धित तीन एवं व्यक्ति से सम्बन्धित पाँच कुल आठ प्रकार के स्फोट माने गये हैं। इसी को हम तालिका में निम्न प्रकार व्यक्त कर सकते हैं—

| आश्रय | जातिगत | व्यक्तिगत | |
|---|---|---|---|
| | | सखण्ड | अखण्ड |
| वर्ण | वर्णजातिस्फोट<br>१ | | वर्णव्यक्तिस्फोट<br>२ |
| पद | पदजातिस्फोट<br>३ | पदव्यक्तिस्फोट<br>४ | पदव्यक्तिस्फोट<br>५ |
| वाक्य | वाक्यजातिस्फोट<br>६ | वाक्यव्यक्तिस्फोट<br>७ | वाक्यव्यक्तिस्फोट<br>८ |

शब्दान्तर में कहने पर दो प्रकार के वर्णस्फोट, तीन प्रकार के पदस्फोट एवं तीन प्रकार के जातिस्फोट होते हैं।

( ३ ) तत्र वाक्यस्फोटो मुख्यस्तस्यैव लोकेऽर्थबोधकत्वात् तेनैवार्थसमाप्तेश्चेति। तदाह न्यायभाष्यकारः—'पदसमूहो वाक्यमर्थसमाप्तौ' इति। अस्य समर्थमिति शेषः।

**व्याख्या**—स्फोटभेदान्निरूप्य तत्र वाक्यस्फोटस्य प्राधान्यं निरूपयति—**तत्रे**-त्यादिना। **तत्र** तेषु स्फोटेष्वपि। **वाक्यस्फोटः**—वाक्याभिव्यक्तो वाक्यार्थावबोधकश्च यः स्फोटः स जातिरूपो व्यक्तिरूपो वा व्यक्तिरूपेऽपि सखण्डोऽखण्डो वा। **मुख्यः** सर्वातिशायित्वेन प्रधानं तत्रापि वाक्यजातिस्फोट अखण्डवाक्यव्यक्तिस्फोटश्च विशेषतः। तथा-भवने हेतुमाह—**तस्येत्यादि**। **तस्य** वाक्यस्फोटस्य। **एव** इत्यवधारणेऽन्ययोगव्यवच्छेद-रूपत्वेन वाक्येतरावृत्ति यदर्थावबोधकत्वं तादृशार्थावबोधकत्ववान् यो वाक्यस्फोटस्त-

स्यैव नान्यस्येति । लोके जगति व्यवहारे इत्याशयः । अर्थबोधकत्वात् अर्थस्याभिप्रायस्य बोधकत्वाज्ज्ञापकत्वाद् वृद्धव्यवहारेण वाक्ये एव प्रथमं शक्तिग्रहादिति । तेन वाक्य-स्फोटेन । एव इत्यवधारणेऽन्ययोगव्यवच्छेदत्वेन । अर्थपरिसमाप्तेः अर्थस्याभिप्रायस्य समाप्तेरवसानात् तस्यैव निराकाङ्क्षार्थबोधकत्वेनार्थस्य पूर्णत्वान्निराकाङ्क्षत्वादिति । च चकारः समुच्चयार्थः । इति इति हेतौ । वाक्यमेव व्यवहारे शक्तिग्रहसाधनं तस्मादेव चार्थस्य निरपेक्षज्ञानमिति वाक्यस्यैव प्राधान्यमर्थावबोधने इति । लोके हि वाक्या-देवार्थस्य निराकाङ्क्षरूपेण ज्ञानं भवति, न तु पदाद्वर्णाद्वा । वाक्यं तु यथा परिभाषितं मीमांसासूत्रकारेण—'अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' ( २।१।४६ ) इति । यथा वा भर्तृहरिरपि—

'साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम् ।
कर्मप्रधानं गुणवदेकार्थं वाक्यमुच्यते ।
तथैवैकस्य वाक्यस्य निराकाङ्क्षस्य सर्वतः ।
शब्दान्तरैः समाख्यानं साकाङ्क्षैरनुगम्यते ॥' ( २।८-९ ) इति ।

तेन हि साकाङ्क्षपदानां निराकाङ्क्षसमूहो वाक्यम् । उक्तं द्रढयति—तदि-त्यादिना । तत् पूर्वोक्तमेव तथ्यम् । न्यायभाष्यकारः गौतमप्रणीत-न्यायसूत्राणां भाष्य-कृद्वात्स्यायनः । आह कथयति । तदेवोद्धरति—पदेति । पदसमूहः पदानां विभक्त्यन्त-शब्दानां 'ते विभक्त्यन्ताः पदम्' ( न्या० सू० २।२।६० ) 'सुप्तिङन्तं पदम्' ( पा० १।४। १४ ) इति परिभाषितानां समूहः समुच्चयः । वाक्यं वाक्यं भवितुमर्हति । अर्थपरि-समाप्तौ अर्थस्याभिप्रायस्य परिसमाप्तावसाने सति निराकाङ्क्षत्वेनार्थे पूर्णे सति इति । इति इति उद्धरणोद्धारसमाप्तौ । पदानां परस्परमनन्वितत्वात्कथं सूत्रार्थबोध इत्य-पेक्षामाशङ्क्याह—अस्येति । अस्य अनन्तरोक्तसूत्रस्य । समर्थं शक्तम् अर्थनिष्ठविषयता-निरूपकनिराकाङ्क्षबोधे समर्थमिति । इति इत्येतत् शेषः अवशिष्टभागः पदसमूहो वाक्यमर्थपरिसमाप्तौ समर्थमिति सूत्राशय इति । न च प्रतिभाया वाक्यार्थत्वप्रति-पादनादेकस्यैव निरवयवस्य स्फोटस्य वाक्यत्वसमर्थनाच्च कथं पदसमूहो वाक्यमित्यु-च्यते इति वाच्यं पदे प्रकृतिप्रत्ययादिकल्पनेव वाक्ये पदकल्पनाया न्याय्यत्वात् । उक्तमेव हरिणा—

'यथा पदे विभज्यन्ते प्रकृतिप्रत्ययादयः ।
अपोद्धारस्तथा वाक्ये पदानामुपवर्ण्यते ॥' इति ।

### ( वाक्यस्फोट की प्रधानता )

**हिन्दी**—उनमें से भी वाक्यस्फोट मुख्य है । उस ( वाक्यस्फोट ) की ही लोक-व्यवहार में अर्थ के बोधक होने से और उसी के द्वारा ही अर्थ का अवसान अर्थात् निराकाङ्क्ष ज्ञान होने से भी । जैसा कि न्यायसूत्र के भाष्यकार वात्स्यायन ने कहा है—पदों का समूह ही वाक्य है अर्थ की समाप्ति में । इस कथन में 'समर्थ' पद शेष है, अर्थात् पदों का वह समूह जो कि निराकाङ्क्ष ज्ञान कराने में समर्थ है, वाक्य होता है ।

अन्य स्फोटों की अपेक्षा वाक्यस्फोट ही मुख्य होता है, क्योंकि वाक्य में ही व्यवहार में शक्तिग्रह हो सकता है और उससे ही अर्थ का बोध होता है तथा उसके द्वारा ही अर्थ का अवसान अर्थात् निराकाङ्क्ष ज्ञान होता है। साकाङ्क्ष पदों का निराकाङ्क्ष ज्ञान कराने में समर्थ समूह ही वाक्य है। पद में प्रकृति एवं प्रत्यय की तरह वाक्य में पदों की कल्पना की जाती है। यद्यपि वाक्य एक एवं अखण्ड माना जाता है।

(४) तत्र प्रतिवाक्यं सङ्केतग्रहासम्भवाद् वाक्यान्वाख्यानस्य लघूपायेनाशक्यत्वाच्च कल्पनया पदानि प्रविभज्य पदे प्रकृतिप्रत्ययभागान् प्रविभज्यं कल्पिताभ्यामन्वयव्यतिरेकाभ्यां तत्तदर्थविभागं शास्त्रमात्रविषयं परिकल्पयन्ति स्माचार्याः।

**व्याख्या**—अखण्डत्वेन सम्मतस्य वाक्यस्य कथं पदादिप्रतीतिरित्यपेक्षायामाह—**तत्रे**त्यादिना। **तत्र** पूर्वोक्ते पदसमूहो वाक्यमर्थपरिसमाप्तौ समर्थम् इति सिद्धान्ते। **प्रतिवाक्यं** प्रत्येकवाक्ये। **सङ्केतग्रहासम्भवात्** सङ्केतग्रहस्य वाच्यवाचकसम्बन्धज्ञानस्य असम्भवात् अशक्तेः। **वाक्यान्वाख्यानस्य** वाक्यस्य निराकाङ्क्षज्ञानसाधनभूतपदोच्चयस्य अन्वाख्यानस्य संयोजनायाः **लघूपायेन** सरलरीत्या। **अशक्यत्वात्** अपार्यत्वात्। **च** चकारः समुच्चयार्थः। **कल्पनया** वस्तुतस्तत्वाभावेऽपि तद्विषयकबोधकल्पनया। **पदानि प्रविभज्य** पदरूपेण भागं कृत्वा। **पदे** प्रतिपदमपि। **प्रकृतिप्रत्ययभागान्** प्रकृतिर्यतः प्रत्ययविधिः क्रियते प्रत्ययो यश्च प्रकृत्यां संयोज्यते तदुभयभागान् खण्डान्। **प्रविभज्य** पृथक्कृत्य। **कल्पिताभ्यां** कल्पनामात्रेण स्थितिमत्त्वेन सम्मताभ्याम्। **अन्वयव्यतिरेकाभ्याम्** अन्वयस्तत्सत्त्वे सति तद्भावः व्यतिरेकस्तदभावे तदभावः यथा गोशब्दसत्त्वे सास्नादिमदर्थस्य प्रतीतिरित्यन्वयः गोशब्दाभावे तु न तदर्थस्य प्रतीतिरिति व्यतिरेकः। तेन गोशब्दस्यैव सास्नादिमदर्थ इति निश्चयोऽन्वयव्यतिरेकाभ्याम्। एवमेव 'गाम्' इत्यत्र 'अम्' विभक्तिसत्त्वे कर्मत्वस्य भावस्तदभावे नेति अम् विभक्तिरेव कर्मत्वबाधिकेति च। **शास्त्रमात्रविषयं** शास्त्रमात्रस्य व्याकरणशास्त्रस्यैव केवलस्य विषयं क्षेत्रभूतम्। **तत्तदर्थविभागं** तेषां तेषां पदानां प्रकृतिप्रत्ययादीनां तेषां तेषामर्थानाञ्च भागम्। **आचार्याः** शिष्टाः। **परिकल्पयन्ति स्म** परिकल्पनां कृतवन्तः, इति।

वस्तुतस्तु वाक्यं निरवयवमखण्डञ्च तथापि प्रत्येकवाक्ये सङ्केतग्रहणस्यासम्भवतया कृतेऽपि प्रयत्ने केनापि सरलेनोपायेन वाक्यसंयोजनाया अपार्यत्वाच्च वाक्यं पदेषु पदानि च प्रकृतिप्रत्ययादिषु कल्पनया प्रविभज्य कल्पिताभ्यामेव तत्सत्त्वे तत्सत्त्वं तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यां तत्तत्पदप्रकृतिप्रत्ययादीनामर्थविभागञ्च कुर्वन्ति स्म शिष्टाः। विभागश्च केवलं व्याकरणशास्त्रविषयो न तु वास्तविक इति। यथाऽऽह हरिरपि—

'पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन॥ (१७३)

यथा पदे विभज्यन्ते प्रकृतिप्रत्ययादयः ।
अपोद्धारस्तथा वाक्ये पदानामुपवर्ण्यते ।।
भागैरनर्थकैर्युक्ता वृषभोदकयावकाः ।
अन्वयव्यतिरेकी तु व्यवहारनिबन्धनम् ।।
शब्दस्य न विभागोऽस्ति कुतोऽर्थस्य भविष्यति ।
विभागैः प्रक्रियाभेदमविद्वान् प्रतिपद्यते ।।
ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले ।
देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः ।।' ( २।१०-१४ )

हिन्दी—उस पर भी प्रत्येक वाक्य में सङ्केत ग्रहण करना अर्थात् वाच्य-वाचक-सम्बन्ध का ज्ञान करना सम्भव न होने से और सरल उपाय के द्वारा वाक्य का अन्वाख्यान न हो सकने के कारण भी वाक्य में पदों का विभाग कर और पद में प्रकृति-प्रत्यय आदि का भी विभाग कर कल्पित अन्वय एवं व्यतिरेक के द्वारा शास्त्रीय प्रक्रिया के निर्वाह के साधन बन पाने वाले प्रकृति-प्रत्यय एवं उनके अर्थों का विभाग आचार्यों ने परिकल्पित किया है ।

यथार्थ तो यह है कि वाक्य ही एकमात्र सत्य और अखण्ड है, फिर भी प्रत्येक वाक्य में समूचे वाक्य की दृष्टि से सङ्केत-ग्रहण अर्थात् वाच्यवाचकभाव का ज्ञान करना सम्भव नहीं होता और उसके लिए प्रयास किये जाने पर भी वह किसी आसान उपाय से बन नहीं पाता । अतः आचार्यों ने वाक्य में पदों का और पदों में प्रकृति-प्रत्यय आदि का काल्पनिक विभाजन मानकर उनमें कल्पित ही अन्वय अर्थात् जिसके रहने से वह रहे और व्यतिरेक जिसके न रहने से वह न रहे, के द्वारा पदों एवं प्रकृति तथा प्रत्ययों के अर्थों का विभाग किया है । यह विभाग केवल शास्त्रीय प्रक्रिया का निर्वाहक मात्र है । जैसे कि 'गामानय' एक वाक्य है, उसमें 'गाम्' 'आनय' ये दो पद माने गये हैं । 'गाम्' पद में गो-प्रकृति है और 'अम्' प्रत्यय है । 'गो' शब्द के रहने से सास्नादिमान् अर्थ भी रहता है और न रहने पर नहीं । इसमें पहला अन्वय हुआ और दूसरा व्यतिरेक । इसी तरह 'अम्' के रहने पर कर्म का बोध होता है और न रहने पर नहीं । एवं इस प्रक्रिया के द्वारा गो शब्द का अर्थ हुआ सास्नादिमत्पिण्ड और 'अम्' का अर्थ हुआ कर्म । सास्नादिमान् अर्थ गो के अतिरिक्त किसी के द्वारा भी प्रतीत नहीं होता और कर्म अर्थ 'अम्' को छोड़कर अन्य किसी का भी नहीं होता । यही अन्वयव्यतिरेक है ।

( ५ ) शास्त्रप्रक्रियानिर्वाहको वर्णस्फोटः । प्रकृतिप्रत्ययास्तत्तदर्थवाचका इति तदर्थः । उपसर्गनिपातधात्वादिविभागोऽपि काल्पनिकः । स्थानिनो लादय आदेशास्तिबादयः कल्पिता एव । तत्र ऋषिभिः स्थानिनां कल्पिता अर्थाः कण्ठरवेणैवोक्ताः । आदेशानां तु स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति भाष्यात्तेऽर्थाः । एवञ्च स्थानिनां वाचकत्वमादेशानां वेति विचारो निष्फल एव,

कल्पितवाचकत्वस्योभयत्र सत्त्वात्। मुख्यं वाचकत्वं तु कल्पनया बोधितसमुदायरूपे पदे वाक्ये वा लोकानां तत एवार्थबोधात्।

'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः'।

इति न्यायेन व्याकरणभेदेन स्थानिभेदेऽपि न क्षतिः, देशभेदेन लिपिभेदवदिति दिक्।

**व्याख्या**—इत्थं वाक्यस्फोटस्य वास्तविकत्वं निरूप्य सम्प्रति वर्णस्फोटस्योपादेयतामाह—**तत्रे**त्यादिना। सिद्धेऽपि वाक्यस्फोटस्यैव वास्तविकत्वे वर्णस्फोटप्रतिपादनमपि न निरर्थकं यतः **तत्र** अष्टविधेषु स्फोटेषु। **वर्णस्फोटः** पदावयवस्फोटः प्रकृतिप्रत्ययसम्बद्धः। **शास्त्रप्रक्रियानिर्वाहकः** शास्त्रीया व्याकरणशास्त्रसम्बद्धा या प्रक्रिया साधनी तस्या निर्वाहकः साधक इति। वर्णस्फोटं परिचाययति—**प्रकृतीति**। **प्रकृतिप्रत्ययाः** यस्मात्प्रत्ययविधिः क्रियते सा प्रकृतिः प्रक्रियते प्रत्ययात्पूर्वं क्रियते इति व्युत्पत्त्या। असति प्रतिबन्धके यदनुशासनेन प्रत्ययात्पूर्वं विधीयते सा प्रकृतिरित्यस्य तात्पर्यमिति ज्योत्स्नाकृतः। प्रकृतित्वञ्च प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकाक्रान्तत्वमिति त एव। यथा 'भवति' इत्यत्र 'भू' इति। प्रत्ययः प्रकृत्या सह संयोगाय निर्दिष्टो वर्णो वा वर्णौघः। प्रत्ययत्वञ्च अर्थबोधकत्वे सति शास्त्रीयसङ्केतसम्बन्धेन प्रत्ययपदवत्त्वम्। प्रकृतयश्च प्रत्ययाश्च ते। **तत्तदर्थवाचकाः** स्वनिर्दिष्टार्थबोधकाः, यथा 'भवति' इत्यत्र भूरूपप्रकृतेः सत्तायामर्थे तिप्प्रत्ययस्य कर्तरि शक्तेर्बोधेन प्रकृतिप्रत्यययोरेव वाचकत्वम्। **एव** इत्यवधारणेऽयोगव्यवच्छेदेन। **इति** इत्थं हि। **तदर्थः** तस्य वर्णस्फोटस्य अर्थ आशयो न तु वर्णानां वाचकत्वधिया तन्मतिः। वर्णानामानर्थक्यं तु महाभाष्ये प्रतिपादितमस्ति। तेन हि वर्णशब्दोऽत्र पदावयवः पर एव प्रकृतिप्रत्ययरूपः। एतेषां स्थितिं निरूपयति—**उपसर्गे**त्यादिना। **उपसर्गनिपातधात्वादिविभागः**—उपसर्गाः प्रादयः क्रियायोगे च निपाताश्चादयोऽसत्त्वे च धातवो भूवादयः आदिपदात्प्रत्ययादीनामपि ग्रहणं च तेषां विभागो विभाजनमसावुपसर्गोऽसौ निपातोऽसौ धातुरिति पृथक्कृत्वा कथनम्। अपि च। **काल्पनिकः**—वस्तुतस्तत्त्वाभावेऽपि तद्विषयककल्पनया कृतः। यथा हि प्रकृतिप्रत्ययाः काल्पनिकास्तथैव उपसर्गा निपाता धातवोऽपि। **स्थानिनः** स्थानित्वेन सम्मताः। **लादयः** लकारादयः ये हि धातोर्भवन्ति। **आदेशाः** लस्य स्थाने व्यवस्थापिताः। **तिबादयः** तिप्प्रभृतयश्च। **कल्पिताः** कल्पनाविषयाः। **एव** इत्यवधारणे। **तत्र** तयोरपि। **ऋषिभिः** शास्त्रप्रवर्तकैर्मुनिभिः। **स्थानिनां** स्थानित्वेन कल्पितानां लादीनाम्। **कल्पिताः** कल्पनया विस्थापिताः। **अर्थाः** अभिधेयाशयाः। **कण्ठरवेण** स्वोच्चारितशब्देन 'लः कर्मणि···' इत्यादिरूपेण स्वयमेव। श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयतावच्छेदकधर्मसमानाधिकरणपाणिनिकर्तृकोच्चारणविषयतावच्छेदकधर्मावच्छिन्न—लः कर्मणि चेत्यादिरूपेण इति ज्योत्स्नायां स्पष्टम्। एव इत्यवधारणेऽन्ययोगव्यवच्छेदकत्वेन। **उक्ताः** कथिता इति। स्थानिनामपि येऽर्थास्तेऽपि शास्त्रकृद्भिः पाणिनिप्रभृतिमुनिभिः स्वोच्चारितशब्देनैवोक्ताः शास्त्रप्रक्रियानिर्वाहायेत्याशयः। **आदेशानां स्थानिनां**

प्रतिष्ठापकत्वेन प्रकल्पितानां तिबादीनाम् । तु इति व्यवच्छेदे । **स्थान्यर्थाभिधानसमर्थस्य** स्थानिनां स्थानित्वेन प्राथम्येनोच्चारितानां लादीनां येऽर्था आशयास्तेषामभिधानं कथनं तदर्थं समर्थस्य सक्षमस्य । **एव** इत्यवधारणेऽन्ययोगव्यवच्छेदकत्वेन न तदसमर्थस्येति । **आदेशता** आदेशपदवाच्यत्वम् । **इति** इत्थम् । **भाष्यात्** भाष्यप्रतिपादितत्वेन यदुच्चारणप्रसङ्गे यदुच्यते तत्तदर्थं बोधयति । यथा दन्तस्य स्थाने ददादेश इति 'स्थानेऽन्तरतमः' ( पा० सू० १।१।५० ) इति परिभाषासूत्रप्रसङ्गेन महाभाष्ये प्रतिपादनादित्याशयः । तेन स्थानिनामिवादेशानामपि कल्पितं वाचकत्वमिति । निगलितमाह—**एवमित्यादिना** । **एवम्** इत्थम् । **च हि** अव्ययानामनेकार्थत्वात् । **स्थानिनां** स्थानित्वेन सम्मतानां लादीनाम् । **वाचकत्वमर्थाववोधकत्वम्** । **वा** इति पक्षान्तरे । **आदेशानाम्** आदेशत्वेन सम्मतानां तिवादीनां **च** अपि । **इति** इत्थम् । **विचारो** विवेकः । **निष्फलः** व्यर्थं **एव** इत्यवधारणेऽयोगव्यवच्छेदकत्वेन न तु सफल इति । तस्य निष्फलत्वे हेतुमाह—**कल्पितेति** । **कल्पितवाचकत्वस्य** प्रकल्पितार्थाववोधकत्वस्य । **उभयत्र** उभयोः स्थान्यादेशयोः । **सत्त्वात्** स्थितेः । न ह्युभयोरेव वास्तविकं वाचकत्वं कल्पितवाचकत्वं तूभयत्रैवेति । सिद्धान्तमाह—**मुख्यमित्यादिना** । **मुख्यं** व्यवहारयोग्यम् । **वाचकत्वम्** अर्थाववोधकत्वम् । **तु** इति व्यवच्छेदे न तु शास्त्रीयप्रक्रियानिर्वाहकमात्रमिति । **कल्पनया** वस्तुतस्तत्त्वाभावेऽपि सौकर्याय तथासम्मत्या । **बोधितसमुदायरूपे** वोधितां ज्ञापितां ये प्रकृतिप्रत्ययास्तेषां समुदायरूपे समुच्चयविग्रहत्वेन गृहीते । **पदे** वाक्यैकदेशे । **वा** इति विकल्पे । **वाक्ये** निराकाङ्क्षत्वेनार्थबोधके कल्पितपदसमुदायरूपे । तत्र हेतुमाह—**लोकानामित्यादिना** । **लोकानां** व्यवहर्तॄणाम् । **ततः** प्रकृतिप्रत्ययसमुदायरूपपदेभ्यः पदसमुदायरूपवाक्येभ्यो वा । **एव** इत्यवधारणेऽन्ययोगव्यवच्छेदकत्वेन न तु प्रकृतिभिः केवलाभिर्न वा प्रत्ययैः केवलैर्वेति । **अर्थबोधात्** अर्थस्याभिधेयस्य वोधो ज्ञानं तस्मात् हेतोरिति । वाचकत्वमादाय दार्शनिका वेभिद्यन्ते । तत्र मीमांसका हि वर्णानां वाचकत्वं मन्यन्ते । तद्विपरीतं नैयायिकाः कतिपये प्राचीना वैयाकरणाश्च पदानां वाचकत्वं मन्यन्ते यदाऽपरे तु वाक्यस्यैव । यथोक्तं कैयटेन—'अन्ये वर्णव्यतिरिक्तं पदस्फोटमिच्छन्ति । वाक्यस्फोटमपरे सङ्गिरन्ते इति । तच्च नागेशो यथा व्याख्याति अन्ये वैयाकरणाः । अपरे त एव मुख्याः । पदे वर्णानामिव वाक्ये पदानां कल्पितत्वात् । तेषामर्थवत्त्वमपि काल्पनिकमिति वाक्यस्यैव शब्दत्वमिति तद्भावः । इति । यथाऽऽह भट्टोजिरपि—'वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिरि'ति । यत्र हि स्थानिभेदस्तत्र किमुच्यते इत्यपेक्षायामाह—**उपेयेत्यादि** । **उपेयप्रतिपत्त्यर्थाः** उपेयस्य साध्यस्य प्रतिपत्तिः सिद्धिस्तदर्थास्तन्निमित्तकाः केवलं साध्यसिद्धये एव समुद्दिष्टाः । **उपायाः** साधनानि । **अव्यवस्थिताः** नैकरूपा अपि तु यथेच्छरूपाः । ( भवन्तीति ) **इति** एतत्प्रकारकेण **न्यायेन** विधिना । **व्याकरणभेदेन**/ प्रवक्तृविशेषप्रोक्तशब्दानुशासनशास्त्रवैशिष्ट्येन । **स्थानिभेदे** स्थानित्वेन प्रकल्पितो वंशेषु वैभिन्न्येऽपि । **न** नैव । **क्षतिः** हानिः तेषामुपेयसिद्धये प्रकल्पितोपायमात्रत्वादिति । तत्र निदर्शनमाह—**देशेत्यादि** । **देशभेदेन** स्थानगतवैशिष्ट्येन । **लिपिभेदवत्** लिपिगतवैशिष्ट्यवदिति । **इति** इत्थम् । **दिक्** दिग्दर्शनमात्रमिति । प्रकरणस्या-

स्यायमाशयः। वस्तुतस्तु वाक्यस्फोट एव वास्तविकोऽखण्डो नित्यश्च तथापि शास्त्रीय-प्रक्रियानिर्वाहाय वर्णस्फोटोऽपि स्वीक्रियते आचार्यैः। वर्णस्फोटस्यायमेवाशयो यत्पदावयवत्वेन प्रकल्पिताः प्रकृतिप्रत्ययास्तत्तदर्थवाचका भवन्ति, तेन तेषां काल्पनिकमपि वाचकत्वं स्फोटाभिव्यक्तये मन्यते। वर्णानामवाचकत्वं तु महाभाष्येऽपि प्रतिपादितमेव। तेन वर्ण इत्येतस्यात्र पदावयव इत्याशयो ग्राह्यः। पदावयवानां विभागोऽपि काल्पनिक एव। तेनोपसर्गनिपातधात्वागमादेशाद्या अपि काल्पनिका एव। स्थानित्वेन प्रकल्पिता लादयः स्थानापन्नत्वेन प्रकल्पितास्तिबादयोऽपि काल्पनिका एव। स्थानिनामर्थाः शास्त्रकारैः प्रकल्पिता स्थान्यर्थाभिधानसमर्था एवादेशा आदेशा भवन्तीति तेषामप्यर्थाः स्वीकृताः। स्थान्यादेशयोरुभयोरेव वाचकत्वं काल्पनिकमेव। वास्तविकं वाचकत्वं तु प्रकृतिप्रत्ययसमुच्चयरूपत्वेन सम्मते पदे वाक्ये वा भवति व्यवहारे तत एवार्थज्ञानात्। स्थान्यादेशाद्यास्तु उपेयभूतार्थज्ञानाय प्रकल्पिता उपाया एव। तेन व्याकरणभेदेन तद्भेदेऽपि न हानिः यथा हि देशभेदेन लिपिभेदेऽपि नार्थज्ञाने क्षतिर्लिपेरपि वर्णज्ञानस्योपायमात्रत्वात्।

नैयायिका हि स्थानिनां लादीनामेव वाचकत्वं मन्यन्ते यदा प्राचीनवैयाकरणास्तु आदेशानां तिवादीनामेव वाचकत्वं मन्यन्ते तेषामेव व्यवहार्यत्वात्। प्रकृतग्रन्थकृतूभयोरेव वाचकत्वं मन्यते स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वस्वीकारोक्त्युद्धरणेन किन्तु तयोरुभयोरेव वाचकत्वं काल्पनिकमिति एतद्विषयकविवादो निरर्थक इति तन्मतम्। यदि हि तेषां वाचकत्वमेव स्वीकर्तव्यं तदा तत्स्थानिनामेव भवति आचार्याणां तथैव सम्मतत्वात्। यथा हि 'लः कर्मणि...' (पा० ३।४।६९) इति सूत्रे स्थानिभूतस्य लस्यैव कर्तृकर्मभाववाचकत्वमुक्तं न तु तिवादीनामादेशानाम्। ते तु स्थानिवद्भावेनैव स्थान्यर्थद्योतकाः। न हि स्थान्यर्थाभिधानासमर्थानामादेशानामादेशत्वं सिध्यति, स्थानिनामादेशानां वा वाचकत्वं किं न स्याद्वास्तविकवाचकत्वं नोभयोरेव। तर्हि कस्य तदित्यपेक्षायां द्विविधा ह्याचार्याणां प्रवृत्तिर्दृश्यते—पदस्फोटसमर्थिका वाक्यस्फोटसमर्थिका च। तत्राद्यपक्षे हि प्रकृतिप्रत्ययसमुदायरूपस्य पदस्य वास्तविकं वाचकत्वं समर्थ्यते। द्वितीयपक्षे तु पदानामपि काल्पनिकत्वं विभाव्य वाक्यमात्रस्य वास्तविकं वाचकत्वमनुमन्यते। अधिकांशविपश्चितस्तु द्वितीयमेव पक्षं श्रद्दधति वाक्यस्यैव व्यवहारेऽर्थबोधकत्वात्।

स्थान्यादयस्तु उपेयसिद्धये प्रकल्पिता उपाया एव। एषा हि कल्पना पञ्चकोशादिवन्मता। तैत्तिरीयोपनिषदि ब्रह्मानन्दवल्लीप्रकरणे (अनु० २–५) अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयसंज्ञका पञ्चकोशा उदिताः। एतेषां हि क्रमिकसाधनयाऽऽत्मतत्त्वसिद्धिस्तत्रोक्ता। अत्र हि प्रत्येकं कोशा ब्रह्मत्वेन व्याख्याता यद्यपि चरम एव वास्तविकत्वेन ब्रह्म। एतेषु हि पूर्वपूर्वापेक्षया उत्तरोत्तरः सूक्ष्मतरः। साधना हि अन्नमयकोशादारभ्यते पर्यवस्यति चानन्दमयकोशे। अस्यैवानुभवी ब्रह्मभूयाय कल्पते। एवमेवात्रापि पञ्च स्फोटश्रेणय उत्तरोत्तरं सूक्ष्मतरा वास्तविकतावहाश्च। ताश्च वर्णस्फोटः पदस्फोटः वाक्यस्फोटः अखण्डवाक्यस्फोटः वाक्यजातिस्फोटश्चेति। अत्र हि

वर्णस्फोटोऽन्नमयकोशः पदस्फोटस्तु प्राणमयः। एवमेव वाक्यस्फोटो मनोमयः अखण्डवाक्यस्फोटो हि विज्ञानमयः वाक्यजातिस्फोटश्चानन्दमयः। यथा ह्यानन्दकोशसाधनयाऽखण्डं सद्ब्रह्म लभ्यते तथैव वाक्यजातिस्फोटसिद्धया नित्यमनादिनिधनमक्षरं शब्दब्रह्माधिगम्यते।

उपायास्तु केवलमुपेयप्रतिपत्तय एव भवन्ति। उक्तमेव हरिणाऽपि—

'उपादायाऽपि ये हेयास्तानुपायान् प्रचक्षते।
उपायानाञ्च नियमो नाऽवश्यमवतिष्ठते॥' ( वाक्य० २।३८ )

तेनोपायभूता स्थानिन आदेशा वा अनियता एवेति किमाश्चर्यम्। ते हि खलु व्याकरणानुसारेण भिन्ना अपि भवन्ति। यथा हि पाणिनीये व्याकरणे 'अस्तेर्भूः' ( २।४।५२ ) इति असं स्थानिनं भुवमादेशं मत्वा अस्तेर्बभूव भवितेत्यादिरूपाणि साधितानि, किन्तु आपिशलीये भूधातुं स्थानिनम् अस् धातुमादेशं मत्वा साधितानि आसीदित्यादिरूपाणि। उभयोः स्थान्यादेशविषये एव भेदो न तु रूपविषये। तेन नैव काचिद्राजाज्ञा यद् व्याकरणस्य कस्मिंश्चिदेकस्मिन् सम्प्रदाये स्थानित्वेन वाऽऽदेशत्वेन सम्मताऽन्यस्मिन् सम्प्रदायेऽपि तथैव स्युरिति।

## ( वर्णस्फोट आदि का विवेचन )

हिन्दी—उन स्फोटों में वर्णस्फोट शास्त्रीय प्रक्रिया का निर्वाहक ही होता है। ( अर्थात् उससे केवल व्याकरणशास्त्र में बतलाई गई प्रक्रिया ही पूरी होती है, न कि अर्थ का वोध। ) प्रकृति एवं प्रत्यय उन-उन अर्थों के वाचक हैं, यही वर्णस्फोट का आशय है ( न कि वर्णों के द्वारा अर्थबोध )। उपसर्ग निपात धातु आदि का विभाग भी काल्पनिक ही है। स्थानी माने गये लकार आदि एवं आदेश माने गये तिप् आदि भी कल्पित ही हैं। उसमें ऋषियों के द्वारा स्थानियों के कल्पित अर्थ गले की आवाज से अर्थात् उच्चारित शब्द से कहे गये हैं। आदेशों के तो स्थानी के अर्थ को वतलाने में समर्थ का ही आदेशत्व होता है ( अर्थात् जो स्थानी का अर्थ वतला सके, वही आदेश आदेश होता है )। इस प्रकार के भाष्योक्त न्याय से वे ही अर्थ होते है, जो स्थानी के हैं। इस प्रकार 'स्थानी का वाचकत्व होता है या आदेश का' ऐसा विचार भी दोनों में कल्पित वाचकत्व के होने से व्यर्थ है। मुख्य वाचकत्व तो कल्पना, प्रकृति एवं प्रत्यय के द्वारा वोधित समुदायरूप पदों में अथवा वाक्य में ही होता है, व्यवहार में उनके द्वारा ही अर्थ का बोध होने से।

'उपेय अर्थात् जो साध्य है उसके ज्ञान के जो उपाय होते हैं, वे अनिश्चित होते हैं ( अर्थात् कोई भी हो सकता है—जिससे उपेय का ज्ञान हो सके, वही उपाय है चाहे उसका स्वरूप कैसा भी क्यों न हो ); इस न्याय से व्याकरण के भेद से स्थानी के भी भेद हो जाने पर भी कोई हानि नहीं है, देश-भेद से लिपि में भी भेद हो जाने की तरह। इस तरह इसे संक्षेप में वतलाया गया।

( ६ ) तत्र प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि इति गौतमसूत्रे। शब्द-

श्चाप्तोपदेशरूपः प्रमाणम् । आप्तो नामानुभवेन वस्तुतत्त्वस्य कात्स्न्र्येन निश्चयवान् । रागादिवशादपि नान्यथावादी यः स इति चरके पतञ्जलिः ।

**व्याख्या**—वाक्यस्वरूपस्य शब्दस्यैव वाचकत्वं युक्त्या निरूप्य सम्प्रति तत्प्रामाण्यमभिधातुमुपक्रमते न्यायसूत्रस्मरणपूर्वकं—**तत्रे**त्यादिना तत्र वाक्येषु निर्द्धारणे सप्तमी । **प्रत्यक्षानुमानोपमानशब्दाः** प्रत्यक्षमिन्द्रियजन्यत्वे सति ज्ञानत्वमर्थाद् यत्रेन्द्रियत्वेन रूपेणेन्द्रियाणां ज्ञाने करणत्वं तत्प्रत्यक्षमिति । इन्द्रियत्वञ्च प्रत्यक्षप्रमितिकरणतावच्छेदको धर्मं इत्याचार्याः । मनसो हि द्वौ धर्मौं—इन्द्रियत्वं मनस्त्वञ्च । तत्र मनसो ज्ञानत्वावच्छिन्नं प्रति मनस्त्वावच्छिन्नतया कारणत्वं न त्विन्द्रियत्वावच्छिन्नतया । प्रत्यक्षप्रमाणमात्रं प्रति तु मनस इन्द्रियत्वावच्छिन्नतया कारणत्वं चक्षुरादीन्द्रियाणामपि इन्द्रियत्वावच्छिन्नतया कारणत्वं भवतीति ज्योत्स्नायां स्पष्टम् । इन्द्रियार्थसन्निकर्षोत्पन्नं भ्रमभिन्नं ज्ञानमेव प्रत्यक्षम् । यत्र व्याप्तिसादृश्यपदादिज्ञानानुभवाश्च न भवन्ति करणं यत्र तज्ज्ञानं प्रत्यक्षमिति निगलितोऽर्थः । एतद्धि ज्ञानाकरणकं ज्ञानम् । यथा हि अनुमितिं प्रति व्याप्तिज्ञानमुपमितिं प्रति सादृश्यज्ञानं शाब्दबोधं प्रति पदज्ञानं स्मृतिं प्रत्यनुभवः करणं न तथा प्रत्यक्षप्रमां प्रति किमपि । अनुमानं परामर्शजन्यं ज्ञानमिति । अनुमानमनुमितिरनुमितित्वञ्च परामर्शजन्यत्वे सति ज्ञानत्वमेव । व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः । 'वह्निव्याप्यधूमवान् पर्वतः' इत्याकारकं ज्ञानमेव व्याप्तिविशिष्टपक्षधर्मताज्ञानम् । स एव परामर्शः । तेन परामर्शजन्यं 'पर्वतो वह्निमान्' इति ज्ञानमेवानुमितिः । परामर्शजन्यत्वमस्य प्रत्यक्षाद् भेदकम् । उपमानं हि सादृश्यज्ञानकरणकज्ञानमेव । शब्दः पदज्ञानकरणं ज्ञानमेव । तेन पदज्ञानकरणत्वे सति ज्ञानत्वं शाब्दबोधत्वम् । प्रत्यक्षश्चानुमानश्चोपमानश्च शब्दाश्च ते । **प्रमाणानि** प्रमोपायाः । तद्वति तत्प्रकारकं ज्ञानं प्रमा प्रमा क्रियतेऽनेनेति प्रमाणं प्रमाकरणानि प्रमाणानि । **इति** इत्थम् । **गौतमसूत्रे** गौतमप्रणीतन्यायदर्शनसूत्रे ( १।१।३ ) । प्रमाणविषयेऽपि मतवैभिन्न्यं दृश्यते । प्रत्यक्षमेकमेव प्रमाणमिति चार्वाकाः प्रत्यक्षमनुमानञ्चेति वैशेषिकाः प्रत्यक्षमनुमानमागम इति साङ्ख्याः प्रत्यक्षानुमानोपमानशब्दाः, इति नैयायिकाः प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धय इति भाट्टा वेदान्तिनश्च प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिसम्भवैतिह्यानि इति पौराणिकाः आलङ्कारिकास्तु नवेति अनुभवः संयोज्य । वैयाकरणानां मते तु प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिअभ्यासादृष्टानि प्रमाणान्यष्टौ । तत्र स्वाभीष्टं शब्दप्रमाणं निर्वक्ति—**शब्द** इत्यादिना । **शब्दः** ज्ञानप्रमाणत्वेन सम्मतो यः शब्दः सः । **आप्तोपदेशरूपः** आप्तः शिष्टस्तस्योपदेश उच्चारणमुपदिश्यतेऽसाविति व्युत्पत्त्या तेन रूप्यते ज्ञायत इति । आप्तकर्तृकव्यवहारग्राह्यः । अथवा आप्तो युक्तो य उपदेशस्तद्रूप इति । उपदेशे भुक्तत्वञ्च यथार्थज्ञानजनकत्वम् । **प्रमाणम्** प्रमा यथार्थज्ञानं तत्करणं प्रमाणमिति । आप्तलक्षणमाह—**आप्त** इति । **आप्तः** शिष्टः । नाम इति वाक्यालङ्कारे । **अनुभवेन** स्वानुभूतज्ञानद्वारा । **वस्तुतत्त्वस्य** याथार्थ्यस्य । **कात्स्न्र्येन** सर्वतोभावेन न तु एकदेशिनिश्चयतया । **निश्चयवान्** यथार्थज्ञानसम्पन्नो न तु भ्रमसंशयाक्लृप्तः । यः खलु स्वानुभूतज्ञानद्वारा याथार्थ्यस्य सर्वतो-

भावेन निश्चितज्ञानवान् स आप्त इति। प्रकारान्तरेणाप्तं परिभाषते पतञ्जलिमनुसृत्य रागेति यः यो हि जनः। रागादिवशात् रागो विषयासक्तिः आदिपदात् द्वेषमोहलोभादयस्तेषां वशादाधीन्यात्। अपि च। न नैव। अन्यथावादी अयथार्थवक्ता। सः तादृशो जनः, आप्त इति। चरके चरकशास्त्रे वैद्यशास्त्रव्याख्याने इति। पतञ्जलिः तदाख्य आचार्य इति। आप्तलक्षणं यथा चरकसंहितायाः सूत्रस्थाने तिस्रैषणीयाध्याये—

रजस्तमोभ्यां निर्मुक्तास्तपो ज्ञानबलेन वै।
येषां त्रैकालममलं ज्ञानमव्याहतं सदा॥
आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम्।
सत्यं वक्ष्यन्ति ते कस्मादसत्यं नीरजस्तमाः॥ इति।

प्राधान्येन हि प्रमेयभूतस्य ज्ञानस्य सिद्धये चत्वारि करणानि प्रमाणत्वेन सम्मतानि प्रत्यक्षमनुमानमुपमानं शब्दश्चेति। यद्यपि अर्थापत्त्यनुपलब्धि-सम्भवैतिह्याभ्यासादृष्टागमादयोऽपि प्रमाणत्वेन तत्र तत्र गृहीतानि तथापि प्रमाणीकृतग्रन्थमनुसृत्यात्र तानि चत्वार्येवोक्तानि। तत्र आद्यानि त्रीणि प्रकृतग्रन्थासम्बद्धत्वेन नैव परिभाषितानि। शब्दस्तु स एवार्थज्ञानाय प्रमाणं भवति, यो हि आप्तेनोपदिष्टो भवति। यद्वा उपदेशनमुपदेश आप्तश्चासावुपदेश आप्तोपदेश इति व्युत्पत्त्या येन सदुपदिश्यते स इति अपौरुषेयत्वेऽपि वेदानां न प्रामाण्ये क्षतिः। यथा च न्यायदर्शनसूत्रम्—'आप्तोपदेशः शब्दः' (१।१।७) इति आप्तस्योपदेश इति व्युत्पत्त्या ग्रहणे आप्तः क इत्यपेक्षायामुच्यते। यो हि स्वानुभूतत्वेन निश्चयेन वस्तुतत्त्वस्य निःशेषं याथार्थ्यं जानाति स आप्त इति यद्वा यो हि स्वाभीष्टसाधनासाधननैरपेक्ष्येण यथार्थं वक्ति रागद्वेषमोहलोभक्रोधादिवशादपि नान्यथा वदति वा स आप्त इति। स्थितमेतद्यदाप्तोपदेशस्यैव शब्दस्यार्थज्ञाने प्रामाण्यं नान्यस्येति। महाभाष्येऽस्मिन् विषये रोचकः प्रसङ्गः समायाति। तत्रोक्तं यदाप्तोक्तत्वाद् भ्राजा नाम ये श्लोकास्तेषां प्रामाण्यं भवतीति। शब्दस्यापि प्रमत्तोच्चारितस्य न प्रामाण्यमिति। तथ्यमेवेदं न्यायसूत्रभाष्येऽपि प्रतिपादितं भगवता वात्स्यायनेन। यथा—'आप्तो नाम यथादृष्टस्यार्थस्य विख्यापयिषया प्रयुक्त उपदेष्टा' तस्य शब्दः इति। समग्रत्वेनार्थस्य निश्चितं ज्ञानं सापेक्षिकमेव। न हि मनुष्यो निश्चयेन निखिलार्थवेत्ता तस्य ज्ञानस्य देशकालावधिपरिच्छिन्नत्वात्। तेनाऽस्यात्र इतरापेक्षयाधिकज्ञानवानाप्त इति अर्थो गृहीतव्यः।

हिन्दी—उन वाक्यों में प्रत्यक्ष, अनुमान, उपमान और शब्द (ये चार अर्थज्ञान के) प्रमाण होते हैं—ऐसा गौतमसूत्र में कहा गया है। (उनमें) जो आप्त का उपदेश रूप है अथवा जो आप्त अर्थात् उपयुक्त उपदेश रूप है, वैसा शब्द ही प्रमाण होता है (न कि सभी शब्द)। आप्त वही है, जो अनुभव के द्वारा वस्तु के तत्त्व का सम्पूर्णरूप से निश्चित ज्ञान रखता हो। राग आदि के कारण भी जो अन्यथा न बोले (वह आप्त है)—ऐसा चरकशास्त्र में पतञ्जलि ने कहा है।

किसी भी वाक्य से अर्थ के ज्ञान में चार प्रमाण गौतमसूत्र में बतलाये गये हैं। ये हैं—प्रत्यक्ष, उपमान, अनुमान एवं शब्द। वस्तुतस्तु किसी भी दर्शन का दर्शनत्व

प्रमाणों में ही आधारित होता है। दर्शनों में चार्वाकदर्शन केवल प्रत्यक्षप्रमाण को ही मानता है। वैशेषिकदर्शन दो ही प्रमाण मानता है—प्रत्यक्ष एवं अनुमान। प्रत्यक्ष, अनुमान एवं आगम—ये तीन प्रमाण साङ्ख्यदर्शन के लिए मान्य हैं। न्यायदर्शन में प्रत्यक्ष, अनुमान, उपमान एवं शब्द—ये चार प्रमाण माने गये हैं। भाट्टमीमांसक उनमें अर्थापत्ति एवं अनुपलब्धि को समावेश कर छः प्रमाण मानते हैं। पौराणिक उसमें भी सम्भव एवं ऐतिह्य को जोडकर आठ प्रमाण मानते हैं। आलङ्कारिक उनमें अनुभव को जोडकर नौ प्रमाण मानते हैं। उनमें भी अपने पक्ष से किसी एक का प्राधान्य होता है। चार्वाकदर्शन में प्रत्यक्ष का, न्यायदर्शन में अनुमान का, साङ्ख्य में आगम का, आलङ्कारिक में अनुभव का और व्याकरण में शब्द का प्राधान्य माना गया है। शब्दों में वही शब्द प्रमाण होता है, जो आप्त का उपदेश रूप हो या आप्त अर्थात् उपयुक्त उपदेशरूप हो। यदि केवल आप्त के उपदेश रूप शब्द को ही प्रमाण माना जाय तो अपौरुषेय माने गये वेदों का प्रामाण्य नहीं बन पाएगा। वेद तो आप्त अर्थात् उपयुक्त उपदेशरूप शब्द वाले हैं। आप्त वही है, जो अपने अनुभव के द्वारा वस्तु का सम्पूर्ण एवं निश्चित ज्ञान रखता हो। चरकशास्त्र में भगवान् पतञ्जलि का कथन है कि जो राग-द्वेष आदि के कारण भी अन्यथा न बोले, वही आप्त हो सकता है। 'यह मेरा इष्ट साधन है' इस प्रकार के ज्ञान से उत्पन्न धर्मविशेष ही राग है और 'यह मेरा अनिष्ट साधन है' इस प्रकार के ज्ञान से उत्पन्न धर्मविशेष ही द्वेष है। आप्त होने के लिए जो ज्ञान की पूर्णता मानी गई है, वह सापेक्षिक ही है और इसका यह आशय होना चाहिए कि आप्त अपनी तुलना में अधिक ज्ञान वाला हो, क्योंकि मनुष्य तो सदा अपूर्ण ही है और उसका ज्ञान किसी न किसी रूप में देश-काल आदि की सीमाओं से परिच्छिन्न होता ही है।

(७) तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः। अत एव नागृहीतवृत्तिकस्य शाब्दबोधः। अत एव च 'न हि गुड इत्युक्ते मधुरत्वं प्रकारतया गम्यते इति समर्थसूत्रभाष्यं सङ्गच्छते। गुडादिशब्देन गुडत्वजात्यवच्छिन्नो गुडपदवाच्य इत्येव बोधो जातिप्रकारकः। मधुरत्वं तु 'गुडो मधुर ऐक्षवत्त्वात्' इत्यनुमानरूपमानान्तरगम्यम्।

**व्याख्या**—शाब्दबोधप्रकारं व्याचिख्यासुर्ग्रन्थकृच्छाब्दबोधे कार्यकारणभावं निर्वक्ति—तदित्यादिना। **तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नम्**—तस्य पदार्थस्य यो धर्मः पदार्थप्राणप्रदतत्वं तेनावच्छिन्नः पदार्थान्तरात्पृथक्कृत्य परिचायितः पदार्थः विषयो लक्ष्यं यस्य तत्तादृशं यच्छाब्दबुद्धित्वं शाब्दत्वं तेनावच्छिन्नो विशिष्टः शाब्दबोधस्तम्। प्रति **तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानम्**—तस्य पदार्थस्य धर्मेण प्राणप्रदतत्वेनावच्छिन्नो विशिष्टो यः पदार्थस्तेन निरूपिताऽङ्गीकृता या वृत्तिर्व्यापारस्तस्याः विशिष्टं विशेषस्वरूपं ज्ञानमवबोधः। **हेतुः** कारणं भवतीति शेषः। अनेनैतदुक्तं भवति। यद्ध-

२ प०

र्मावच्छिन्नं लक्ष्यं स धर्मो लक्ष्यतावच्छेदकस्तेन यो धर्मो यस्यावच्छेदकः स तद्धर्मावच्छिन्नः। तस्य धर्मो घटत्वं तेनावच्छिन्नो घटस्तद्विषयको यः शाब्दबोधो घटोऽयमिति तं प्रति तस्य घटस्य यो धर्मो घटत्वं तेनावच्छिन्नो घटस्तेन निरूपिता या घटत्ववृत्तिस्तस्या विशिष्टज्ञानं कारणं भवतीति। वृत्तिविशिष्टज्ञानाभावेऽपि शाब्दबोधसम्भवे शब्दस्यैव प्रमाजनकत्वेन सर्वैः सर्वेषामेव श्रोतॄणां बोधापत्तिः स्यात्। न च तथा। तेन शाब्दबोधं प्रति वृत्तिप्रयोज्योपस्थितेरन्वयव्यतिरेकाभ्यां कारणत्वम्। वृत्तेरपि दाहं प्रति वह्न्यादिवन्न स्वरूपेण हेतुत्वं तथा सति सर्वेषामेव बोधापत्तिः स्यात्। तेन ज्ञानविषयीभूताया एव वृत्तेः कारणत्वं भवति। तत्तत्पदनिष्ठवृत्तिमजानतः पुरुषस्य तत्तत्पदश्रवणेऽपि बोधादर्शनात्। तादृशं वृत्तिविशिष्टज्ञानञ्च जायते व्यवहारोपदेशादेः। तत्र पर्यवसितमाह—अत इत्यादि। **अत एव** शाब्दबोधे वृत्तिविशिष्टज्ञानस्य हेतुत्वेन। **अगृहीतवृत्तिकस्य** अगृहीता अज्ञाता वृत्तिः शाब्दबोधशक्तिर्येन तस्य वृत्तिमजानतः। **न** नैव। **शाब्दबोधः** शब्दसंसूच्यार्थज्ञानम्। भवतीति शेषः। यद्धर्मप्रकारकवृत्तिज्ञानं तद्धर्मप्रकारक एव शाब्दबोध इति फलितोऽर्थः। उक्तं भाष्येण सह सङ्गमय्य द्रढयति—अत इत्यादिना। **अत एव** तत्तद्विषयकशाब्दबोधं प्रति तद्वन्निरूपितवृत्तिज्ञानस्य हेतुत्वस्वीकारेण एव **गुड इत्युक्ते** गुड इति पदस्योच्चारणे। **प्रकारतया** प्रकारीभूतधर्मनिरूपिततया विशेषणरूपेण। **मधुरत्वं** माधुर्यम्। **न गम्यते** ज्ञायते। **हि**। **इति** इत्थम्। **समर्थसूत्रभाष्यम्**—'समर्थः पदविधिः' (पा० सू० २।१।१) इति सूत्रस्य भाष्ये भाष्यकारवचनम्। **सङ्गच्छते** सुसङ्गतं भवति। पर्यवसितमाह—गुडेत्यादि। **गुडादिशब्देन** गुडप्रभृतिशब्दश्रवणेन। **गुडत्वजात्यवच्छिन्नः** गुडत्वविशिष्टा या जातिस्तया अवच्छिन्नः पदार्थान्तरात्पृथक्कृत्य परिचायितः पदार्थः। **इति** इत्थम्। **एव** इति अन्यायोगव्यवच्छेदे नान्य इत्याशयः। **जातिप्रकारकः** जातिधर्मप्रकारकः। **एव**। **बोधः** ज्ञानमिति। न तु गुड इत्युक्ते मधुरताया अपि बोधो भवति, यद्धर्मप्रकारकवृत्तिज्ञानं तद्धर्मप्रकारकस्यैव बोधस्य सम्भवात्। गुडपदेन च गुडत्वप्रकारकबोधस्यैव दर्शनात् मधुरताद्यनेकधर्मसत्त्वेऽपि गुडत्वप्रकारिकैव गुडपदवृत्तिरिति न मधुरत्वप्रकारकबोध इति ज्योत्स्नायां स्पष्टम्।

शाब्दबोधे हि पदवृत्तिज्ञानयोः पृथक्तया कारणत्वस्वीकारे यथा नैयायिका आमनन्ति कार्यकारणभावद्वयकल्पने महद् गौरवमिति वृत्तिविशिष्टस्य कारणत्वं शाब्दिकाः स्वीकुर्वन्ति। तदेवोक्तं **वृत्तिविशिष्टपदेन** मूले। वृत्तिविशिष्टज्ञानञ्च उपदेशव्यवहारयोर्भवति। अनेन पदेनेदं बोध्यमिति आप्तवाक्यमुपदेशः। व्यवहारस्तु व्यापारदर्शनमेव। यथा उत्तमवृद्धेन मध्यमवृद्धमुद्दिश्य 'घटमानय' इत्युक्ते तदनुसृत्य मध्यमवृद्धेन आनीतं पिण्डं दृष्ट्वा समीपस्थेन बालेनानुमीयते यत्प्रयोज्यवृद्धेनानीतः पिण्डो घटपदवाच्यः 'आनय' इत्येतस्य उपस्थापनमर्थं इति। तत्र घटानयनकार्ये घटमानयेति तत्प्रवृत्तिनिमित्तवाक्यमेव कारणं भवति। यो यदन्वयव्यतिरेकानुविधायी तस्य तज्जन्यत्वात्। ततश्च घटमानय इत्युक्ते घटानयनं दृश्यते न तु पटानयनमिति अन्वयव्यतिरेकाभ्यां पदमपि तत्तदर्थबोधे कारणम्। पदवाक्ययोस्तदर्थे बोधरूपकार्येण सह यः सम्बन्धः स नैयायिकैः ईश्वरेच्छारूपशक्तिः मीमांसकैर्बोधजनकतावच्छेदकशक्तिः प्राचीनवैयाकरणैर्बोधजन-

कतासम्बन्धः नव्यैस्तु वाच्यवाचकभावापरपर्यायरूपा शक्तिरित्युच्यते। स च सम्बन्धोऽपि अखण्डो धर्मविशेषो न तु किञ्चिन्निष्ठवाच्यतानिरूपितवाचकतारूप इति। एवं व्यवहारदर्शनादिना तत्तत्पदादिनिष्ठशक्तिज्ञानानन्तरं तद्विषयकः संस्कारो जन्यते, यो हि श्रवणप्रत्यक्षविषयीभूतपदरूपोद्‌बोधकवशादुद्‌बुद्धः स्वविषयशक्तिविषयिणीं जनयति स्मृतिम्। स्मृता च शक्तिः पदार्थविषयकं ज्ञानमुत्पादयति इति ज्योत्स्नायां स्पष्टम्।

ननु यद्धर्मप्रकारकवृत्तिज्ञानं तद्धर्मप्रकारक एव बोध इति इत्युक्ते गुडपदवाच्यो हि गुडत्वप्रकारकजातिविशेष एव इति चेत्कथं तत्र मधुरत्वज्ञानमित्यपेक्षा मा भूदित्युच्यते— मधुरत्वमित्यादि। मधुरत्वं गुडे या मधुरता सा। तु इति व्यवच्छेदे तद्व्यतिरिक्तमित्याशयः। गुडः गुडत्वधर्मविशिष्टपदार्थः। मधुरः मधुरतायुक्तो भवतीति—मतुपो लुक्। ऐक्षवत्त्वात् इक्षोर्विकार ऐक्षवं तस्य भावस्तत्त्वात्। इति इत्थम्—गुडो हि इक्षोर्विकारस्तेनायमपि स्वप्रकृतिरिव मधुर एव भवति इति। अनुमानेति अनुमानमनुमा तद्रूपं यन्मानान्तरं प्रमाणान्तरं तेन गम्यं बोध्यमेवेति न तु शब्दगम्यमिति। नैयायिकास्तु ज्ञानलक्षणप्रत्यासत्त्या आलङ्कारिकास्तु व्यञ्जनयाऽत्र मधुरत्वप्रकारकं बोधं मन्यन्ते इति ज्योत्स्नायाम्।

हिन्दी—शाब्दबोध में कार्यकारणभाव इस प्रकार माना जाता है—उस धर्म से अवच्छिन्न जो पदार्थ है, उस विषयवाली शाब्दबुद्धि के भाव से अवच्छिन्न जो शाब्दबोध ( कार्य ) है, उसके प्रति उस धर्म से अवच्छिन्न पदार्थ के द्वारा निरूपित वृत्ति का विशिष्ट ज्ञान ही कारण होता है। अर्थात् घटत्वधर्म से अवच्छिन्न जो घट है, उस विषयक शाब्दबुद्धित्व से अवच्छिन्न जो शाब्दबोध है, उसके प्रति घटत्वधर्म से अवच्छिन्न घट से निरूपित वृत्ति का विशेष ज्ञान ही कारण होता है। इसी कारण जिसको वृत्ति का ज्ञान नहीं है, उसको शाब्दबोध नहीं होता। इसी कारण से 'गुड़' कहने मात्र से मधुरत्व का बोध नहीं होता। ऐसे 'समर्थः पदविधिः' ( पा० सू० २।१।१ ) के भाष्य की सङ्गति बैठती है। गुड़ पद से गुडत्वधर्म से विशिष्ट गुड़ शब्द का जो अर्थ है, जिसमें गुड़त्व रूप जाति का ज्ञान विशेषण बनता है, उसी का बोध होता है। मधुरत्व का ज्ञान तो 'गुड़ मीठा होता है, क्योंकि वह ईख से बनता है' इस प्रकार के अनुमान रूप दूसरे प्रमाण के द्वारा होता है, न कि शब्द से।

शब्द से जो बोध होता है, वही शाब्दबोध है और उसमें शब्द कारण है तथा अर्थ कार्य है। यह तो सामान्य है। शाब्दबोध में विशेषता यह है कि उसमें पहले तो शब्द का सही ज्ञान हो और दूसरा यह कि उस विषयक वृत्ति का अच्छी तरह ज्ञान हो। **'शब्दो हि येन व्यापारेण स्वीयमर्थं बोधयति स वृत्तिः'**। अर्थात् शब्द जिस व्यापार के द्वारा अपने अर्थ का बोध कराता है, उसे वृत्ति कहते हैं। शब्द से जिस अर्थ का बोध होता है, वह शाब्दबुद्धि है और उसमें शाब्दबुद्धित्व धर्म रहता है। शाब्दबुद्धित्व से अवच्छिन्न होता है—शाब्दबोध। जैसे—घटपदार्थ-विषयक शाब्दबुद्धि में घटपदार्थ घटत्व रूप धर्म से अवच्छिन्न होता है। अतः घटत्वधर्म से विशिष्ट शाब्दबुद्धि कार्य होता है। उस कार्य के प्रति शब्द का सम्यक् ज्ञान एवं उसे अभीष्ट पदार्थ अर्थात् वृत्ति-विषयक

ज्ञान उत्तरदायी है। शब्द को ठीक-ठीक सुन न पाने से एवं सुनकर भी उसके अभीष्ट अर्थ का ज्ञान न होने से दोनों ही स्थिति में शाब्दबोध नहीं होता। अतः घटपदार्थ-विषयक शाब्दबोध के लिए घटशब्द एवं घटपदार्थ से सम्बद्ध वृत्ति का ज्ञान कारण होता है। यही सङ्क्षेप में पदार्थों के शाब्दबोध में कार्यकारण की स्थिति मान ली गई है। जिस धर्मप्रकारक वृत्ति का ज्ञान होता है, उसी धर्म के ही प्रकार का शाब्दबोध होता है। इसी कारण गुड़त्वधर्म से विशिष्ट गुड़ शब्द का गुड़त्व जाति प्रकार का ही शाब्दबोध हो पाता है, मीठेपन का नहीं। मीठापन तो 'गुड ईख से बना होने के कारण मीठा होता है', ऐसे अनुमान से जाना जाता है, शब्द से नहीं।

(८) विशेष्यविशेषणभावव्यत्यासेन गृहीतशक्तिकस्य पुंसो घटपदात् घटत्वविशिष्टघटबोधवारणाय तद्धर्मावच्छिन्नेति। ज्ञाने वृत्तिवैशिष्टयञ्च स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्यस्य स्वाश्रयपदविषयकत्वोभय-सम्बन्धेन बोध्यम्। अतो नागृहीतवृत्तिकस्य बोधो नापि विस्मृतकस्य नापि तद्वाचकपदमजानतो नापि घटापदादाश्रयत्वेनोपस्थिताकाशस्य जनकतयोप-स्थितचैत्रादेश्च बोधः।

संस्कारकल्पिका च वृत्तिस्मृतिरेव शाब्दबुद्धिरेव वेत्यन्यदेतत्।

**व्याख्या**—कार्यकारणभावकथने कार्यदले 'तद्धर्मावच्छिन्ने'ति पदसन्निवेशस्य प्रयोजनमाह—**विशेष्येत्यादि**। **विशेष्यविशेषणभावव्यत्यासेन**—विशेष्यस्य घटस्य विशेषणस्य घटत्वस्य च यो भावः अवस्थितिस्तयोर्व्यत्यासेन वैपरीत्येन बोधेन। घटपदं घटविशिष्ट-घटत्वे शक्तमित्येव प्रकारेण व्यत्यासेन। **गृहीतशक्तिकस्य** ज्ञातवृत्तेः। **पुंसः** जनस्य। घटपदात् घटेति श्रावणप्रत्यक्षविषयीभूतपदात्। **घटत्वविशिष्टघटबोधवारणाय**—घटत्वं घटधर्मस्तदस्ति विशिष्टं विशेष्यं यस्य तादृशस्य घटस्य बोधस्य वारणाय निरासाय घटपदाद्यः शाब्दबोधस्तत्र घटत्वं भवति, विशेषणं घटस्तु विशेष्य एव। तेन हि घट-पदाद् घटत्वजातिविशिष्टघटस्य बोधो भवति, किन्तु घटत्वघटयोर्विशेषणविशेष्यभाव-व्युत्क्रमे तु घटपदाद् घटविशिष्टघटत्वस्य बोधो मा भूदिति। **तद्धर्मावच्छिन्नेति** एत-द्विशेषणभागस्तत्र संयोजित इति। अयम्भावः—कार्यकारणभावकथने केवलं शाब्दबुद्धि-त्वावच्छिन्नं प्रति इत्येतावन्मात्रकथने धर्मधर्मिणोर्विशेषणविशेष्यभावव्यत्यासेन घटपदं घटावच्छिन्नघटत्वे शक्तमिति एवंरूपेण बोधो मा भूदिति तद्धर्मावच्छिन्नपदम्। तथा सति तु न तथा सम्भवति, तद्धर्मावच्छिन्नत्वस्य घटे एव सम्भवान्न तु घटत्वे इति। घटत्वावच्छिन्नविषयकशाब्दबोधं प्रति घटत्वावच्छिन्ननिरूपितशक्तिज्ञानस्यैव कारण-त्वेन प्रकृते तदभावादिति रत्नप्रभायां स्पष्टम्। तत्र वाक्ये कारणदलगतवृत्तिविशिष्ट-ज्ञानपदं व्याचष्टे—**ज्ञान** इत्यादिना। **ज्ञाने** बोधे। **वृत्तिवैशिष्टयं** वृत्तेः शब्दव्यापारस्य वैशिष्टयं विशेषता। च भवति द्वाभ्यां सम्बन्धाभ्यामिति यावत्। तदेवाह—**स्वेति**। स्वविषयकः स्वसम्बद्धो य उद्बुद्धो जागृतः संस्कारः पूर्वानुभवजन्यज्ञानं तेन सामाना-

धिकरण्यमेकाश्रयणम् उद्बुद्धसंस्कारस्य पदज्ञानस्य चैकाधिकरणमिति वृत्तेः स्वस्याः आश्रयं यत्पदं तद्विषयकत्वञ्चेति उभयसम्बन्धेन उभयविधितारतम्येन। **बोध्यं** ज्ञेयमिति।

अयम्भावः—ज्ञाने हि वृत्तिकृता विशेषता द्वाभ्यां सम्बन्धाभ्यां भवति। प्रथमा तत्र श्रोता हि यत्पदं ज्ञानविषयीकरोति तस्य हि तत्पदविषयकवृत्तिज्ञानसंस्कारस्योद्बोधनं वा स्मरणमप्यावश्यकं भवति, यद्धि स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्यसम्बन्धत्वेन मूले गृहीतम्। अत्र वृत्तेः पदस्योभयोरेव ज्ञानस्याधिकरणं वाश्रयम् एक एव ज्ञातं पदम्। अपरा तु वृत्त्याश्रयपदस्य ज्ञानं तत्पदविषयकशाब्दबोधस्य कृते नितान्तमावश्यकम्, न त्वन्यस्य समानार्थकस्यापि। एतदेव स्वाश्रयपदविषयकत्वसम्बन्ध इत्युच्यते। उभयत्र स्वपदेन वृत्तिः संसूच्यते। तत्रापि स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्यसम्बन्ध एतदर्थमावश्यको यद्वृत्तिज्ञानविहीनस्य नैव भवति, शाब्दबोधः तत्र वृत्तिज्ञानपदज्ञानयोर्नैव समानाधिकरणसम्भवः। अपरञ्च यत्पदं वृत्तेराश्रयभूतं तदेव पदं पदज्ञानस्यापि विषयः स्यात्। अन्यथा नैव श्रोतुः शाब्दबोधः। सत्यपि वृत्तिज्ञाने तदाश्रयभूतपदस्य ज्ञानाभावेऽपि न भवति शाब्दबोधः। तेन हि शाब्दबोधे स्वाश्रयपदविषयकत्वसम्बन्धोऽपि शाब्दबोधे आवश्यकः। इत्युभयसम्बन्धेन ज्ञाने वृत्तेर्वैशिष्टयमावश्यकम्।

फलितमाह—अत इत्यादिना। अतः अनेन हेतुना शाब्दबोधे वृत्तिज्ञानोपस्थितिरावश्यकीति। **अगृहीतवृत्तिकस्य** अगृहीताऽनधिगता वृत्तिर्व्यापारो येन तादृशस्य। न नैव शाब्दबोधः तत्र उद्बुद्धसंस्काराभावात्। **विस्मृतवृत्तिकस्य** पूर्वं गृहीताऽपि विस्मृता अनवधारिता वृत्तिर्येन तादृशस्य। अपि। न नैव शाब्दबोधस्तत्रापि उद्बुद्धसंस्कारसम्भवात्। इति वैशिष्टयघटकयोः प्रथमसम्बन्धस्य फलम्। **तत्पदम्**—यत्पदं श्रुतं तदेव पदम्। **अजानतः** अबोधयतः। न नैव शाब्दबोधः तत्र पदे विषयतया पदज्ञानस्यैवासत्त्वात्। इति द्वितीयसम्बन्धस्य फलम्। एवं वैशिष्टयघटकसम्बन्धयोः फलमुक्त्वा तद्धर्मावच्छिन्ननिरूपितेत्यस्य फलमाह—**नापीति**। घटपदाश्रयत्वेन घटे समवायेन स्थितत्वेन घटपदात्। न। **आकाशस्य** आकाशत्वावच्छिन्नविषयस्य च। **बोधः** ज्ञानम्। भवतीति। अयमाशयः—एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति शब्दगुणाश्रयत्वाद् घटपदात्समवायेन सम्बन्धिन आकाशस्य उपस्थितावपि घटपदान्नाकाशबोधः घटपदे आकाशत्वावच्छिन्नार्थनिरूपितवृत्तेरभावात्। न नैव च। घटपदात्। **जनकतया** उच्चारणकर्तृत्वेन पदव्यञ्जकतया। **उपस्थितचैत्रादेः** उपस्थितो ज्ञातो यश्चैत्रादिस्तस्य। शाब्दबोधे न किमपि मानमिति। चैत्रविषयकशाब्दबोधस्तु चैत्रत्वधर्मविशिष्टचैत्रशब्दादेव सम्भवति घटपदे तथात्वाभावात्।

ननु तादृशसंस्कारस्य सत्त्वे किं मानमित्यपेक्षायामाह—**संस्कारेति**। **संस्कारकल्पिका** संस्कारस्य स्वविषयकोद्बुद्धसंस्कारस्य कल्पिका अनुमापिका। तु। **वृत्तिस्मृतिः** वृत्तेः व्यापारस्य स्मृतिरवधानमेव। **तस्याश्च सत्त्वे शाब्दबुद्धिः** शाब्दबोधः। एव प्रमाणमिति। वा शब्दः समुच्चयार्थे। **इति** इत्थम्। **एतत्** एतादृशविषयविवेचनम्। **अन्यत्र**

प्रसङ्गासम्बद्धमेव, तेन नात्र कश्चिद् विशेषादर इति । **अयमाशयः**—वृत्तिवैशिष्टचघटके स्वविषयकोद्बुद्धसंस्कारेण सह पदस्य सामानाधिकरण्यमुक्तं किन्तु संस्कारस्य अतीन्द्रियत्वादप्रत्यक्षत्वात्कथं तेन सह इन्द्रियविषयस्य पदस्य सामानाधिकरण्यं सम्भवति । न च संस्कारस्य सत्त्वे किमपि मानम् । किं भवताऽप्यगतिकेन मीमांसकैरिव कश्चिदपूर्वः कल्प्यते ? इत्यपेक्षायामुच्यते न ह्यत्र कस्यचिदपूर्वस्यावकाशः । अत्र तु स्पष्ट एव विषयः । न हि कारणं विना कार्यं भवति । अत्र कार्यं शाब्दबोधो येन कारणत्वेन वृत्तिस्मृतिरनुमीयते । सा च कार्यं येन संस्कारः कारणत्वेनानुमीयते । न हि वृत्तिस्मृतिं विना शाब्दबोधो नैव च संस्कारं विना वृत्तिस्मृतिरिति संस्कारसत्त्वेऽनुमानं प्रमाणमिति ।

**हिन्दी**—विशेष्य ( घट ) एवं विशेषण ( घटत्व ) भाव के विपर्यय बोध से अर्थात् घटत्व को विशेष्य एवं घट को विशेषण मानकर शक्तिग्रहण किये हुए पुरुष को घटपद से घटविशिष्ट घटत्व का जो बोध हो सकता है, उसके निवारण के लिए कार्य-कारणभाव विवेचक वाक्य में 'तद्धर्मावच्छिन्न' यह पद रखा गया है । 'उसका जो धर्म है उससे अवच्छिन्न' ऐसा कहने पर यह भ्रम नहीं हो सकता, क्योंकि घट का धर्म घटत्व होता है, न कि घटत्व का धर्म घट । घटपद से घटत्वजाति से विशिष्ट घट का बोध होना चाहिए ।

ज्ञान में जो वृत्ति का वैशिष्टच कहा गया है, वह भी अपने विषय से सम्बद्ध होकर उद्बुद्ध संस्कार का सामानाधिकरण्य एवं अपने आश्रयभूत पद का विषयत्व इन दोनों सम्बन्धों से जानना चाहिए । इस हेतु न तो जिसको वृत्तिग्रहण नहीं है उसका शाब्दबोध हो पाएगा न तो वृत्ति को भूले हुए को, न तो पद न जानने वाले को ही शाब्दबोध हो पाएगा और न ही घट पद से उसके आश्रयत्व से उपस्थित आकाश का ही बोध होगा, न तो उच्चारण करने के कारण जनक के रूप में उपस्थित चैत्र आदि का ही बोध होगा ।

ज्ञान में वृत्ति का वैशिष्टच दो प्रकार के सम्बन्धों से मानना चाहिए । पहला तो यह है कि पदज्ञान एवं अपने विषय वाले उद्बुद्ध संस्कार में सामानाधिकरण्य हो अर्थात् पदज्ञान एवं संस्कार का एक अधिकरण हो । जहाँ एक का पदज्ञान दूसरे का वृत्तिज्ञान हो, उसमें शाब्दबोध नही हो पाता । दूसरा तो यह है कि वृत्ति के आश्रयभूत पद का ही ज्ञान अथवा उस पदविषयक शाब्दबोध के लिए श्रवण आवश्यक है ।

इसीलिए ही—

'वृत्ति न जानने वाले को शाब्दबोध नहीं होता ।'

'जो वृत्ति को भूल गया है, वैसे को भी शाब्दबोध नहीं होता ।'

और—

'जो पद को ही न जानता हो, ऐसे को भी शाब्दबोध नहीं होता ।'

यह तो हुआ कार्यपक्ष का विवरण । कारणपक्ष में यदि 'तद्धर्मावच्छिन्ननिरूपित' यह पदावली न रखकर केवल 'वृत्तिविशिष्टज्ञानं हेतुः' इतना ही कहा जाय तो घट

पद से उसके शब्द होने के नाते आश्रय बनकर उपस्थित आकाश का भी बोध होने लगेगा। शब्द का आश्रय आकाश है। उसमें 'उसके धर्म से अवच्छिन्न जो है उससे निरूपित' इतना अंश जोड देने से वैसा नहीं हो पाएगा, क्योंकि आकाश तो आकाशत्व धर्म से अवच्छिन्न आकाश से निरूपित वृत्ति से ही जाना जाता है, न कि घटत्व धर्म से अवच्छिन्न घट से निरूपित वृत्ति से। उसी तरह घटपद से उसके उच्चारण करने के कारण जनक के रूप में उपस्थित चैत्र आदि का ही बोध होता है, क्योंकि चैत्र आदि में भी घटत्वधर्म नहीं रहता है। चैत्र-विषयक शाब्दबोध तो चैत्रत्व धर्म से विशिष्ट चैत्र शब्द के द्वारा ही होता है।

संस्कार के भाव का अनुमान वृत्ति की स्मृति से और वृत्ति की स्मृति का अनुमान शाब्दबुद्धि से ही होता है। यह दूसरी बात है।

'इन्द्रिय के विषय से बाहर एवं अप्रत्यक्ष होने के कारण संस्कार के अस्तित्व में कोई प्रमाण नहीं है' ऐसा नहीं मानना चाहिए। बिना कारण कार्य नहीं होता। जब शाब्दबोध प्रत्यक्ष है तो उसके कारण के रूप में वृत्ति की स्मृति को मानना ही पड़ेगा। जब वृत्तिस्मृति मानी जाती है तो उसके कारण के रूप में संस्कार को मानना ही पड़ेगा। अतः वृत्तिस्मृति से संस्कार का अनुमान होता है और शाब्दबोध से वृत्तिस्मृति का। यह स्पष्ट ही है।

**( ९ ) सा च वृत्तिस्त्रिधा—शक्तिर्लक्षणा व्यञ्जना च।**

**व्याख्या**—इत्थं शाब्दबोधे वृत्तिवैशिष्टचमुक्त्वा सम्प्रति वृत्तेः सामान्यलक्षणे वक्तव्ये पदार्थस्मृत्यनुकूलत्वे सति पदपदार्थसम्बन्धरूपस्य वृत्तिसामान्यस्य प्रसिद्धतया तदनुल्लिख्य वृत्तिविभागमाह—**सा** चेत्यादिना। **सा** प्रसिद्धा पदपदार्थसम्बन्धरूपा **वृत्तिः**। **त्रिधा** त्रिप्रकारा। अत्र धाप्रत्ययः प्रकारार्थः स च सामान्यव्यावर्तको विशेषधर्मः। **शक्तिः लक्षणा व्यञ्जना**। **चकारः** समुच्चयार्थः। तत्त्वं तु शक्तिलक्षणा व्यञ्जनाऽन्यतमत्वमिति। वृत्तिर्हि शक्तिलक्षणाव्यञ्जनात्वधर्मत्रयविशिष्टा भवतीत्यस्याशयः। शक्त्यादयो वक्ष्यन्ते।

**हिन्दी**—वह पद एवं पदार्थ के सम्बन्ध रूप वृत्ति तीन प्रकार की होती है—शक्ति, लक्षणा एवं व्यञ्जना। प्रकार से यहाँ विशेष धर्म लिया गया है और वृत्ति शक्तित्व, लक्षणात्व एवं व्यञ्जनात्व इन तीन धर्मों से विशिष्ट होती है—यह इसका आशय है। वृत्ति होने के लिए इन तीनों में से कम से कम किसी एक धर्म का होना आवश्यक है।

**(१०) तत्र शक्तिः कः पदार्थ इति चेत्? अत्र तार्किकाः—'अस्माच्छब्दादयमर्थो बोद्धव्य' इत्याकारा 'इदं पदमिममर्थं बोधयतु' इत्याकारा वेश्वरेच्छा शक्तिर्लाघवात्। सैव सङ्केतः सम्बन्धः।** शक्तेर्यद्यपि विषयत्वलक्षणः सम्बन्धः पदेऽर्थे बोधे च तथापि बोधनिष्ठजन्यतानिरूपितजनकतावत्त्वेन शक्तिविषयो वाचकः पदजन्यबोधविषयत्वेन शक्तिविषयो वाच्य इति नातिप्रसङ्गः। यद्यपि

प्रथमं शक्तिग्रहो वाक्य एव तथाप्यावापोद्वापाभ्यां शास्त्रकृत्कल्पिताभ्यां तत्तत्पदशक्तिग्रह इत्याहुः ।

**व्याख्या**—तत्र शक्तिस्वरूपं निरूपयिष्यन् प्रकरणमारभते—**तत्रे**त्यादिना । **तत्र** शक्तिलक्षणाव्यञ्जनासु । **शक्तिः** शक्त्याख्यः **कः पदार्थः** विषयः ? इति जिज्ञासा विद्यते चेत् —शक्तेः किं स्वरूपमित्यपेक्षायामुच्यते इत्याशयः । प्रथमं प्रत्याख्यानाय शक्तिविषये नैयायिकाभिमतमुपक्षिपति—**अत्रे**त्यादिना । **अत्र** एतद्विषये । **तार्किकाः** तर्कप्रवीणा नैयायिकाः—तर्कशब्दात् उक्थादित्वाद् ठक् । आहुरित्यनेन सम्बन्धः । तदेवोद्धरति—**अस्मादित्यादि** । **अस्मात्** प्रकृतात् । **शब्दात्** घटप्रभृतिवर्णौघात् । **अयं** निर्दिष्टः घटत्वजातिविशिष्टः । **अर्थः** आशयः । **बोद्धव्यः** ज्ञातव्यः । अत्र समीपवर्तिबोधकेन इदम् इत्येतेन उच्चारणकर्मीभूतं परामृश्यते तस्याभेदेन विशेष्यविशेषणभावेन शब्देऽन्वयः । शब्दोत्तरपञ्चमीविभक्तेर्जन्यत्वमर्थः, तत्र शब्दस्य निरूपितत्वसम्बन्धेनान्वयः जन्यत्वस्य च बोद्धव्यपदघटक-बुध-धात्वर्थे बोधे स्वरूप( आश्रयत्व )सम्बन्धेनान्वयः । बोधस्य च निरूपितत्वसम्बन्धेन तव्यप्रत्ययार्थविषयतायामन्वयः । तस्याश्च स्वरूपसम्बन्धेनार्थेऽन्वयः । तथा च इदमभिन्नशब्दनिरूपितजन्यतावद्बोधनिरूपितविषयतावानर्थः, इत्यर्थविशेष्यिका ईश्वरेच्छा शक्तिरिति रत्नप्रभायां स्पष्टम् । **इति** इत्थम् । **आकारा** स्वरूपा अर्थप्रधाना । पक्षान्तरमाह—**इदमिति** । **इदं** उच्चारितम् । **पदं** घटादिको वर्णसमुदायः । **इमं** निर्दिश्यमानम् । **अर्थं** वस्तु आशयं वा । **बोधयतु** जनयतु । अत्रापि इदमर्थस्य अभेदेनार्थेऽन्वयः अर्थस्य च विषयत्वरूपार्थे निष्ठत्वसम्बन्धेनान्वयः । विषयत्वस्य च निरूपकत्वसम्बन्धेन बुधधात्वर्थे बोधेऽन्वयः । बोधस्य च निरूपितत्वसम्बन्धेन जनकत्वरूपे आख्यातार्थेऽन्वयः । जनकत्वस्य च स्वरूपसम्बन्धेन पदेऽन्वयः । तेन इदमर्थनिष्ठविषयतानिरूपकबोधनिष्ठजन्यतानिरूपितजनकतावत्पदमिति पदविशेष्यिका ईश्वरेच्छा शक्तिरिति रत्नप्रभायाम् । **इत्याकारा** इत्थंरूपा पदप्रधाना, एतत्पदजन्यो बोधः एतदर्थनिष्ठविषयतानिरूपको भवत्विति बोधविशेष्यिका तथा च एतदर्थनिष्ठाविषयता एतत्पदजन्यबोधनिरूपिता भवत्विति विषयताविशेष्यिका चेति नानाविधा ईश्वरेच्छा शक्तिरित्याशयः । तथामते हेतुमाह—**लाघवादिति** । शब्दप्रकारकार्थविशेष्यिका अर्थप्रकारकपदविशेष्यिका च या ईश्वरेच्छा तस्या एव सङ्केतत्वेन ग्रहणात् शक्तिसङ्केतयोरैक्येन लाघवमन्यादृशशक्तिस्वीकारे तु पदार्थद्वयकल्पनया गौरवं स्यादिति । मतमिदं प्राचीननैयायिकानाम् । नव्यानां मते तु इच्छैव शक्तिर्न तु ईश्वरेच्छा । तत्रेयं युक्तिः । प्रथमतस्तु शब्दा एव नैवेश्वरकृता इति तत्र शक्तित्वेन ईश्वरेच्छाया नैव समायोजनम् । नूतनपदार्थानां नामकरणे न दृश्यते काऽपि ईश्वरेच्छा । तथा सति अपभ्रंशशब्देषु कथं शक्तिग्रहः स्यात् ? तत्र ईश्वरेच्छाया अभावात् । ईश्वरानङ्गीकारमते कथं शाब्दबोधः स्याद्यथा मीमांसकानाम् । तेन नव्यनैयायिका हि इच्छामात्रे शक्ति मन्यन्ते । मीमांसकास्तु ईश्वरेच्छास्थले बोधजनकतावच्छेदकशक्ति मन्यन्ते । अस्तु तावत् । लाघवे हेतुमाह—**सैवेति** । **सा** तादृशी शब्दप्रकारकार्थविशेष्यिका अर्थप्रकारकपदविशेष्यिका चेत्युभयरूपा ईश्वरेच्छा । **एव** इति अयोगव्यवच्छेदे नान्येति ।

**सङ्केतः** सङ्केतपदवाच्यः । **सम्बन्धः** पदपदार्थयोः सम्वन्धश्चेति । ईश्वरेच्छा हि पद-प्रकारकार्थविशेष्यिका अर्थप्रकारकपदविशेष्यिका वा स्यात् सामान्यतस्तु न किमप्यन्तरं प्रतिभाति, किन्तु नैयायिकमते प्रथमान्तार्थविशेष्यकबोधस्यैव प्राधान्यात्तत्र बोध-विशेष्यिका विषयताविशेष्यिका चेच्छा स्वकीयं महत्त्वमावहतः ।

ननु एवं विषयतासम्बन्धेन इच्छावत्त्वमेव वाचकत्वं वाच्यत्वं वा वाच्यं तस्येच्छा-विषये पदेऽर्थे सम्वन्धे वोधे च सर्वत्र सत्त्वात् वाचकत्ववाच्यत्वयोर्व्यवस्थानुपपत्तिरिति अत आह—**शक्तेरिति** । **शक्तेः** ईश्वरेच्छारूपशक्तेः **यद्यपि** सामान्यतः । **विषयत्वलक्षणः** विषयतास्वरूपः । **सम्बन्धः** सङ्केतः । **पदे** वाचकपदे । **अर्थे** वाच्ये । **बोधे** तज्ज्ञाने च विद्यते **तथापि** । **बोधेति**—ईश्वरेच्छाविषयो यो बोधस्तन्निष्ठा या जन्यता उत्पाद्यभाव-स्तया निरूपितं निर्दिष्टं यज्जनकतावत्त्वं जनकताख्यविषयताश्रयत्वसम्बन्धः तेन यः **शक्तिविषयः** शक्तेर्विषयत्वेन सम्मतः पदमित्याशयः अस्मात्पदादिति पदस्य जनकत्वेन ग्रहणात् । **सः वाचकः** अर्थाववोधकः । **पदजन्यबोधविषयत्वेन** पदजन्यः पदनिमित्तको यो बोधो ज्ञानं तस्य विषयत्वं विषयताश्रयत्वसम्बन्धस्तेन यः **शक्तिविषयः अर्थ** इति, इममर्थं बोधयतु इति कथनात् स **वाच्यः** अभिधेयः **इति** इत्थं व्यवस्थितत्वात् । **न** नैव । **अतिप्रसङ्गः** वाच्यवाचकभावा व्यवस्था नैव च सम्वन्धादौ वाचकत्वलक्षणाति-व्याप्तिरिति । अयम्भावः—पदमर्थो बोधश्च त्रय एव शक्तेर्विषयत्वेन गृहीताः, तत्कथ-मुच्यते पदस्यैव वाचकत्वमर्थस्य वाच्यत्वमिति चेदुच्यते यद्यपि शक्तेर्विषयतासम्बन्धः पदेऽर्थे जन्यजनकभावे वोधे च तथापि शाब्दबोधस्य प्रत्यक्षतया जनकत्वेन पदमेव वाचकं बोधविषयत्वेनार्थो वाच्य इति न तत्र काऽप्यव्यवस्था । तेनैवोक्तम्—ईश्वरेच्छाविषयो यो बोधस्तन्निष्ठजन्यतानिरूपितजनकताख्यविषयताश्रयत्वसम्बन्धेन इच्छावत्त्वं वाचक-त्वम् इच्छीयबोधनिष्ठविषयतानिरूपितविषयतावत्त्वसम्बन्धेन इच्छावत्त्वं वाच्यत्व-मिति ।

ननु व्यवहारादिदर्शनेन यः शक्तिग्रहो भवति स तु 'गामानय' इत्यादिवाक्ये एव भवति, न पदे । तत्कथमुच्यते पदस्य वाचकत्वमिति, अत आह—**यद्यपीत्यादि** । **यद्यपि** वस्तुतस्तु । **प्रथमं** प्राथम्येन । **शक्तिग्रहः** सङ्केतज्ञानम् । वाक्ये 'गामानय' इत्यादिपद-समूहे । **एव** न तु पदे । **तथापि** सत्यपि तथा । **शास्त्रकृत्कल्पिताभ्यां** प्रक्रियानिर्वाहाय शास्त्रकृद्भिर्वाक्याखण्डत्वसमर्थकैरपि शास्त्रकारैः कल्पिताभ्यां वाक्यस्यांशत्वेन परिकल्पिताभ्याम् । **आवापोद्वापाभ्याम्**—आवापो निक्षेपः गामानयेत्यत्र गोरानयनम्, उद्वापो निष्काशनम्, अश्वमानय इत्यादौ गोरपसारणम् इत्येताभ्याम् । यद्यपि नैयायिक-मते वाक्यं सखण्डमेव तथापि तन्मतेऽपि वाक्येनैवार्थसमाप्तेस्तत्रापीयं व्यवस्था । **तत्तत्पदशक्तिग्रहः** तेषु तेषु गाम् आनय इत्यादिषु । **पदेषु** वाक्यावयवेषु । **शक्तिग्रहः** सङ्केतज्ञानमिति । **इति** इत्थम् । **आहुः** कथयन्ति इति तार्किका इत्यनेन सहान्वयः ।

**हिन्दी**—उनमें से शक्ति कौन-सा पदार्थ है ? ऐसी आकाङ्क्षा में नैयायिक ( कहते हैं ) 'इस पद से इस अर्थ को जाना जाय' इस प्रकार की एवं 'यह पद इस अर्थ को जनावे' इस प्रकार की भी ईश्वरेच्छा ही शक्ति है । ऐसा ही मानने से लाघव होता

है। यह शक्ति ही सङ्केत है और वही शक्ति पद एवं पदार्थ का सम्बन्ध भी है। यद्यपि शक्ति का विषयतारूप सम्बन्ध पद, अर्थ, जन्यजनकभाव एवं बोध इन सभी में है तथापि ईश्वरेच्छारूप बोध में निहित जो जन्यता है, उसके द्वारा निरूपित जनकता भाव से जो शक्ति का विषय है, वह ( पद ) वाचक है और पद के द्वारा निरूप्य जो बोध है, उसके विषय के रूप में जो शक्ति का विषय है, वह ( अर्थ ) वाच्य है। अतः इसमें कोई अतिव्याप्ति नहीं है अर्थात् सम्बन्ध आदि वाचक नहीं बन पाते। यद्यपि पहले शक्तिग्रह वाक्य में ही होता है तथापि शास्त्रकार के द्वारा कल्पित आवाप ( ग्रहण ) एवं उद्वाप ( त्याग ) के द्वारा उन-उन पदों में भी शक्तिग्रह माना जाता है।

नैयायिक के मत में ईश्वरेच्छा ही शक्ति है और वही सङ्केत, पद एवं पदार्थ के बीच का सम्बन्ध भी है। 'इस पद से यह अर्थ जाना जाय' ऐसी और 'यह पद इस अर्थ को बतावें' ऐसी भी पद-प्रकार अर्थ विशेष्य वाली एवं अर्थ-प्रकार पद विशेष्य वाली ईश्वरेच्छा शक्ति है। शक्ति का सम्बन्ध पद, अर्थ, जन्यजनकभाव एवं बोध इन सब में होने पर भी शाब्दबोध का जनक होने के कारण पद वाचक होता है और बोध का विषय होने के कारण अर्थ वाच्य है।

( ११ ) तन्न। इच्छायाः सम्बन्धिनोराश्रयतानियामकत्वाभावेन सम्बन्धत्वासम्भवात्। 'सम्बन्धो हि सम्बन्धिद्वयभिन्नत्वे सति द्विष्ठत्वे च सति आश्रयतया विशिष्टबुद्धिनियामक' इत्यभियुक्तव्यवहारात्। यथा घटवद् भूतलमित्यादौ संयोगरूपः सम्बन्धः सम्बन्धिभ्यां भिन्नो द्विष्ठो घटनिरूपितसंयोगाश्रयो भूतलम् इति विशिष्टबुद्धिनियामकश्च। नात्र तथा घटशब्द इच्छावान् तदर्थो वेच्छावानिति व्यवहारः।

**व्याख्या**—इत्थं हि शक्तिविषये नैयायिकमतमनूद्य सम्प्रति तत्प्रत्याख्यानायोपक्रमते—**तदि**त्यादिना। तत् उपर्युद्धृतम् ईश्वरेच्छैव शक्तिः सैव सङ्केतः सम्बन्धश्चेति नैयायिकमतम्। न न साधु। तस्यासमीचीनत्वे हेतुमाह—**इच्छाया** इत्यादिना। **इच्छायाः** शक्तिरूपत्वेन नैयायिकमते सम्मताया ईश्वरेच्छाया इच्छाया वा। **सम्बन्धिनोः** सम्बन्धित्वेन गृहीतयोः शब्दार्थयोः। **आश्रयतानियामकत्वाभावेन**—आश्रयता आधाराधेयभावस्तस्या नियामकत्वं निरूपकत्वं तस्याभावोऽविद्यमानता तेन। **सम्बन्धत्वासम्भवात्** सम्बन्धत्वस्य सम्बन्धभावस्य असम्भवादनस्तित्वात्। अयमाशयः—नेच्छायाः शक्तित्वं तस्याः सम्बन्धत्वाभावात् शाब्दबोधौपायिकत्वे सति सम्बन्धत्वस्यैव वृत्तित्वसम्भवात्। सम्बन्धत्वञ्चाधाराधेयभावनियामकस्यैव न त्वन्यस्य। इच्छाविषयस्तु बोध एव न पदं नार्थश्च। अत्र तु इच्छीयविषयताश्रयबोधनिष्ठजन्यतानिरूपितजनकताख्यविषयतासम्बन्धेन अयमर्थः 'अयं शब्दश्च इच्छावानि'ति व्यवहारादर्शनात्, इच्छायाः सम्बन्धत्वकल्पनं मनोरथमात्रमेवेति ज्योत्स्नायां स्पष्टम्। वस्तुतस्तु ईश्वरेच्छा शक्तिर्न सम्बन्धः आश्रयताया अप्रयोजकत्वात्तादात्म्यवदित्यपि तत्रैव। विषयस्पष्टीकरणाय सम्बन्धव्याख्यानार्थं शिष्टोक्तिमनुवदति—**सम्बन्ध** इत्यादिना। **सम्बन्धः** पदपदार्थसम्बन्धः। हि

यतः। **सम्बन्धिद्वयभिन्नत्वे** सम्बन्धिद्वयं प्रतियोग्यनुयोगिद्वयं तस्माद्भिन्न इतरः तस्य भावस्तत्वं तस्मिन्। **सति** विद्यमाने। प्रतियोग्यनुयोगिभ्यां पृथक्त्वे सतीति। **द्विष्ठत्वे** द्वयोः प्रतियोगिनि अनुयोगिनि च तिष्ठति वर्तते इति द्विष्ठस्तस्य भावस्तत्वं तस्मिन्। **च** इति समुच्चये। **सति** स्थिते। **आश्रयतया** आधाररूपेण **विशिष्टबुद्धिनियामकः** विशिष्टा विशेष्यविशेषणसम्वन्धसम्बद्धा बुद्धिर्मतिस्तस्या नियामको निरूपको भवतीति इति इत्थम्। **अभियुक्तव्यवहारात्** शिष्टाचारात्। 'द्विष्ठः सम्वन्धः' इति हरिवचनमत्र स्मर्यते अभियुक्तपदेन। तेन नाभेदे सम्बन्धस्तस्य सम्बन्धिभिन्नत्वात्, न च केवलं जनकत्वमेव सम्वन्धस्तस्य उभयनिष्ठत्वात्, न च तस्य वृत्त्यनियामकत्वं तस्य विशिष्टवुद्धिनियामकत्वात्। व्यतिरेकिदृष्टान्तमाह—**यथेत्यादिना**। **यथेति** निदर्शने। **'घटवद् भूतलम्'** **इत्यादौ** इत्यादिवाक्ये। **घटभूतलयोः संयोगरूपः** संयोगलक्षणः। **सम्बन्धः**। **सम्बन्धिभ्यां** प्रतियोग्यनुयोगिभ्यां घटभूतलाभ्याम्। **भिन्नः** पृथगेव। **द्विष्ठः** घटभूतलोभयनिष्ठः। **घटनिरूपितसंयोगाश्रयः** घटेन निरूपितो निर्द्धारितो यः संयोगः सम्पर्कस्तस्याश्रय आधारः। **भूतलम्**। **इति** इत्थम्। **विशिष्टवुद्धिनियामकविशेषणभूतस्य** घटस्य विशेष्यभूतस्य भूतलस्य सम्वन्धस्य संयोगरूपसम्वन्धस्य च विशिष्टा या बुद्धिस्तस्या नियामको निरूपकश्च। **अत्र** वाक्येऽस्मिन्। **न** नैव। **घटशब्दः**. **तथा** तेन प्रकारेण **यथोच्यते तार्किकैः**। **इच्छावान्** संयोगेच्छायुक्तः। **न च**। **तदर्थः** तस्य घटशव्दस्य अर्थः संसूचितवस्तु। **इच्छावान्** संयोगसम्वन्धेच्छुकः। **इति** इत्थम्। **व्यवहारः** कथनमिति। प्रकरणस्यास्यायमाशयः—इच्छैव शक्तिः सङ्केतः सम्बन्धश्चेति यदुक्तं नैयायिकैस्तन्न साधु। इच्छायाः शक्तित्वसम्भवेऽपि सम्बन्धत्वासम्भवात्। सा हि न प्रतियोग्यनुयोगिनोराधाराधेयभावपरिचायिका। सम्बन्धस्य हि त्रीणि वैशिष्ट्यानि—सम्वन्धिद्वयभिन्नो भवति सम्वन्धिद्वयनिष्ठो भवति आश्रयतारूपेण विशेष्यविशेषणोभयसम्बन्धज्ञाननियामको भवति च सम्बन्धः। घटवद् भूतलमित्यस्योदाहरणम्। अत्र संयोगरूपः सम्बन्धः। स च घटभूतलाभ्यां भिन्न एव किन्तूभयसम्बद्धश्च घटनिरूपितसंयोगाश्रयो भूतलमिति विशेष्यविशेषणोभयसम्बन्धज्ञानपरिचायकश्चेति। अत्र न घटशब्दो न च तदर्थ एव इच्छावान् इच्छायाश्चेतनधर्मत्वाद् घटादौ तदभावात्। तेनेश्वरेच्छा न सम्वन्धः। सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयसम्बन्ध्याश्रितश्चैकश्च। स च नेच्छायामिति।

**हिन्दी**—नैयायिकों का ईश्वरेच्छा को ही शक्ति-सङ्केत एवं सम्बन्ध मानने का मत ठीक नहीं है। इच्छा में दो सम्बन्धियों के बीच के आधाराधेयभाव का परिचायकत्व न होने से सम्बन्धत्व सम्भव नहीं होता। जो सम्बन्ध है, वह दो सम्बन्धियों से भिन्न होते हुए भी दोनों में आश्रित होकर विशेष्य, विशेषण एवं उनके सम्बन्ध के ज्ञान का नियामक होता है ( जो कि इच्छा में नहीं है ), ऐसा विद्वानों का मत है। जैसे—'घटवद् भूतलम्'—'घड़े से युक्त भूमि' में जो घड़ा एवं भूतल का संयोगरूप सम्बन्ध है, वह घड़ा एवं भूतल दोनों प्रतियोगी एवं अनुयोगी से भिन्न है और दोनों में आश्रित भी है और घट से निरूपित जो संयोग है, उसका आश्रय है भूतल, ऐसे

विशिष्ट बुद्धि का नियामक भी है। यहाँ न तो घट शब्द इच्छा से युक्त है न तो उसका अर्थ ही। ऐसा व्यवहार देखा नहीं गया है। अतः ईश्वरेच्छा को सम्वन्ध नहीं माना जा सकता।

(१२) तस्मात् पदपदार्थयोः सम्बन्धान्तरमेव शक्तिर्वाच्यवाचकभावापरपर्याया। तद्ग्राहकञ्चेतरेतराध्यासमूलकं तादात्म्यम्। तदेव सम्बन्धः। उभयनिरूपिततादात्म्यवानुभय इति अर्थपदयोर्व्यवहारात्। शक्तेरपि कार्यजनकत्वे सम्बन्धस्यैव नियामकत्वात्। दीपादिगतप्रकाशकत्वशक्तावपि आलोकविषयसम्बन्धे सत्येव वस्तुप्रकाशकत्वं नान्यथेति दृष्टत्वात्।

**व्याख्या**—इत्थं शक्तिविषये तार्किकमतं प्रत्याख्याय सम्प्रति स्वाभीष्टमतं प्रस्तौति—**तस्मादित्यादिना**। **तस्मात्** यतो हि ईश्वरेच्छायाः प्रतियोग्यनुयोगिनोराधाराधेयभावपरिचायकत्वाभावेन सम्वन्धत्वाभावान्न शक्तित्वमतः। **पदपदार्थयोः** पदं वाचकं पदार्थो वाच्यस्तयोः। **सम्बन्धान्तरम्** अन्यः ईश्वरेच्छादिभिन्नः सम्बन्धः संयुक्तभावः सम्वन्धान्तरम्। अत्र सम्बन्धान्तरपदेन न केवलं तार्किकमतं निराक्रियतेऽपितु मीमांसकानां बोधजनकतावच्छेदकशक्तिमतं प्राचीनवैयाकरणानां बोधजनकतासम्बन्धमतमपि प्रत्याख्यायते। **वाच्यवाचकाभावापरपर्याया**—वाच्यं पदसंसूच्योऽर्थः वाचकं तत्संसूचकपदं किन्तु न तु वाच्यत्वं बोधविषयत्वरूपं न च वाचकत्वं बोधजनकत्वरूपमपितु अखण्डोपाधिरूपं पदार्थान्तरमेव यस्य वाच्यवाचकभावरूपशब्दार्थोभयनिष्ठत्वात् सम्बन्धत्वं सम्भवति तयोर्भावोऽवस्थितिः स एव अपरोऽन्य पर्यायः संसूचको यस्याः सा तादृशी वाच्यवाचकभावपदप्रतिपाद्या। **शक्तिः** शक्तिर्नाम वृत्तिः। **तद्ग्राहकं** तस्याः शक्तेः ग्राहकं बोधकम्। **च** तु। **इतरेतराध्यासमूलकम्** इतरेतरयोः परस्परयोर्यं अध्यासः इतरस्मिन्नितरधर्मावभासः स एव मूलं ज्ञापकं यस्य तत् तादृशम्। **तादात्म्यम्**—स एव आत्मा यस्य तदात्मा तदात्मनो भावस्तादात्म्यम्। पदपदार्थयोर्वाच्यवाचकपदप्रतिपाद्या शक्तिर्यस्या ग्राहकं हि तयोः 'अयं घटः' इत्याकारकं तादात्म्यमेव यद्धि केवलमध्यासमूलकं न तु वस्तुतः यथा लोहितस्फटिकपदार्थयोस्तादात्म्यम्। शब्दार्थौ इतरेतराध्यासवत्त्वात् परस्परतादात्म्यपरौ। तत्र यत्र-यत्र इतरेतराध्यासस्तत्र तत्र तादात्म्यमिति अन्वयव्याप्तिर्यथा गुणगुणिनोः नीलो घट इत्यादौ। यत्र न तादात्म्यं न तत्राध्यास इति व्यतिरेकव्याप्तिर्यथा घटपटयोः। योगसूत्रेऽप्युक्तम्—

'शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम्।' इति।
(३।१७)

व्याख्यातञ्च यथा··· ··· ··· सङ्केतस्तु इतरेतराध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽयमर्थः योऽर्थः स शब्दः इत्येवमितरेतराध्यासरूपो हि सङ्केतो भवति। इत्येवमेते शब्दार्थप्रत्यया इतरेतराध्याससङ्कीर्णाः गौरिति शब्दः गौरित्यर्थः गौरिति ज्ञानम् ··· ··· इत्यादि। **तदेव** तादात्म्यमेव। पदपदार्थयोः **सम्बन्धः**। तादात्म्यस्य सम्बन्धत्वं प्रतिपादयति—**उभयेत्यादिना**। **उभयनिरूपिततादात्म्यवान्** उभयेन पदेन

पदार्थेन च निरूपितं निर्दिष्टं यत्तादात्म्यं तद्वान् तद्युक्त उभयः पदं पदार्थश्च । इति इत्थम् अर्थपदयोः वाच्यवाचकयोः । व्यवहारात् प्रयोगदर्शनात् । इत्थं हि तादात्म्यस्य पदपदार्थोभयस्थत्वं सिध्यति । इत्थं तादात्म्यस्य द्विष्ठत्वं प्रतिपाद्य सम्प्रति तस्य शक्तेः सम्वन्धत्वमाह—शक्तेरित्यादिना । शक्तेः वाच्यवाचकपदप्रतिपाद्यायाः शक्त्याख्यवृत्तेः । अपि च । कार्यजनकत्वे फलोत्पादकत्वे । सम्बन्धस्य शक्तिभिन्नस्यैव तस्य । एव इति अयोगव्यवच्छेदे न तु स्वयं शक्तेः । नियामकत्वात् निरूपकत्वात् । शक्तेर्भिन्न एव सम्बन्धस्तस्या कार्यजनकत्वनियामकत्वेन सर्वत्र दृष्टः । अत्रापि तादात्म्यमेव सम्वन्धस्तदेव नियामकञ्चेति तस्य द्विष्ठत्वेन नियामकत्वेन च सम्बन्धत्वं सिद्धयति । तादात्म्यस्य सम्बन्धत्वं पुनः 'रूपवान् घटः, जातिमान् पटः' इत्यादौ आश्रयताबुद्धिनियामकत्वात् । एतदेव भेदाभेदसंवलितं तार्किकैः समवायशब्देन व्यवह्रियत इति ज्योत्स्नायां स्पष्टम् । शक्तेः कार्यजनकत्वे सम्बन्धस्य नियामकत्वं यदुक्तम्, तस्य दृष्टान्तमाह—दीपेत्यादिना । दीपादिगतप्रकाशकत्वशक्तौ दीपादिगता या प्रकाशकत्वशक्तिस्तस्याम् । अपि । आलोकविषयसम्बन्धे आलोकस्य दर्शनस्य यो विषयो वस्त्वादि तेन यः सम्वन्धस्तस्मिन् । सति विद्यमाने । एव नान्यथा । वस्तुप्रकाशकत्वं पदार्थद्योतकत्वम् । अन्यथा तादृशसम्वन्धाभावे । न नैव प्रकाशकत्वम् । इति इत्थम् । दृष्टत्वात् अनुभूतत्वात् । अयमाशयः—यथा हि दीपः प्रकाशकशक्तिमान् किन्तु तस्याः कार्यजनकत्वं तदैव सम्भवति यदा दीपवस्तुनोः शक्त्यतिरिक्तसंयोगादिसम्वन्धो भवति तयोः संयोगसम्वन्धाभावे तु न दीपशक्तेः वस्तुप्रकाशकत्वं सिध्यति । तथैवात्र घटशब्दादिशक्तेरपि शाब्दवोधरूपकार्यजननं शक्त्यतिरिक्तसम्वन्धसत्त्व एव नान्यथा । शब्दार्थयोर्न हि संयोगादिसम्बन्धोऽपितु तयोरनुमानेन तादात्म्यमेव सम्वन्ध इति । प्रकरणस्यास्यायमाशयः—न हि ईश्वरेच्छा पदपदार्थयोः शक्तिस्तस्यास्तयोः परस्परसम्वन्धादर्शनात्, सम्बन्धं विना शक्तेः कार्यजनकत्वासम्भवात् । तेन पदपदार्थयोर्वाच्यवाचकभाव एव शक्तिस्तस्याश्च इतरेतराध्यासमूलं तादात्म्यं ग्राहकम् । तादात्म्यस्य पदपदार्थोभयनिष्ठत्वेन विशिष्टबुद्धिनियामकत्वेन च सम्वन्धत्वमपि । यथा दीपघटयोः संयोगसम्बन्धस्तथा पदपदार्थयोस्तादात्म्यसम्बन्धः । स चानुमानेन ज्ञातव्यः इति ।

**हिन्दी**—इस प्रकार शक्ति के विषय में नैयायिक के मत का खण्डन करके अपने मत की स्थापना करते हैं—

( क्योंकि ईश्वरेच्छा शक्ति नहीं हो सकती, क्योंकि उसमें द्विष्ठत्व एवं पद एवं पदार्थ से भिन्नत्व नहीं है और विशिष्ट बुद्धि का नियामकत्व भी नहीं है, अतः उसमें सम्बन्धत्व नहीं हैं । ) इस कारण पद एवं पदार्थ का ईश्वरेच्छा आदि से भिन्न सम्बन्ध ही शक्ति है, जो कि वाच्यवाचकभाव पद से जानी जाती है । उसका ग्राहक होता है पद एवं पदार्थ के परस्पर का अध्यासमूलक तादात्म्य । एक में दूसरे का आरोप अध्यास है । तादात्म्य केवल आरोपित है, न कि वस्तुतः । शब्द ही अर्थ है और अर्थ ही शब्द है, यही दोनों का तादात्म्य है । वही तादात्म्य दोनों का सम्बन्ध भी है । दोनों के द्वारा निरूपित तादात्म्य वाले हैं दोनों—इस तरह अर्थ एवं पद का व्यवहार

है। शक्ति के भी कार्यजनकत्व में सम्बन्ध का ही नियामकत्व है। दीप आदि में जो प्रकाशकत्व शक्ति है, उसमें भी जो आलोक का विषय है, उसके साथ ( संयोग आदि ) सम्बन्ध होने पर ही वस्तु का प्रकाशकत्व वन पाता है, अन्यथा नहीं—इस प्रकार देखा गया है।

वाच्यवाचकभाव ही पद-पदार्थ की शक्ति है, जो कि ईश्वरेच्छा आदि से भिन्न दूसरा ही सम्बन्ध है। परस्पर का अध्यासमूलक तादात्म्य ही उसका ग्राहक होता है। तादात्म्य दोनों में होने से द्विष्ठ है और दोनों सम्बन्धियों से भिन्न भी है तथा विशिष्ट बुद्धि का नियामक भी। अतः वह सम्बन्ध हो सकता है। शक्ति का जो कार्य-जनकत्व है उसमें भी सम्बन्ध ही नियामक होता है। जैसे दीप में जो प्रकाशन शक्ति है, उसका आलोक के विषय वने घट आदि से संयोगसम्बन्ध होने पर ही कार्यजन-कत्व सम्भव होता है, अन्यथा नहीं। जिसके साथ संयोगसम्बन्ध नहीं है, उस वस्तु को दीपशक्ति प्रकाशित नहीं कर सकती। पद एवं पदार्थ में संयोगसम्वन्ध तो नहीं है, लेकिन उनके वीच अध्यासमूलक तादात्म्यसम्बन्ध का अनुमान किया जा सकता है। जहाँ-जहाँ अध्यास है वहाँ-वहाँ तादात्म्य है, जहाँ-जहाँ अध्यास नहीं है वहाँ-वहाँ तादात्म्य नहीं है। इस तरह व्याप्ति माननी चाहिए। घटपट का कोई तादात्म्य नहीं है और सम्वन्ध भी नहीं है, अतः घट से पट का बोध नहीं होता और पट से घट का भी।

( १३ ) तदुक्तं हरिणा—

उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते।
शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः॥ इति।

उपकारः उपकार्योपकारकयोर्बोधशक्त्योरुपकारस्वभावः सम्बन्धो यत्रा-स्ति तत्र धर्मः शक्तिरूपः कार्यं दृष्ट्वाऽनुमीयते। असौ सम्बन्धः शक्तीनामपि कार्यजनने उपकारकः। गुणानामपि द्रव्याश्रितत्वनियामक इति हेलाराजः।

व्याख्या—उक्तार्थे हरिं प्रमाणयति—तदित्यादिना—तद् तदेव शक्तेः कार्यजनकत्वे सम्वन्धस्यैव नियामकत्वमिति। हरिणा वाक्यपदीयकृता भर्तृहरिणा। उक्तं कथितम्। तदनुवदति—उपकार इत्यादिना। सः प्रसिद्धः इतरेतराध्यासमूलकतादात्म्यरूपः। उपकारः सम्बन्धः। यत्र यस्मिन् स्थले। अस्ति विद्यते। धर्मः शक्तिः। तत्र तस्मिन्नेव स्थले। अनुगम्यते अनुमीयते। असौ सम्बन्धः शक्तीनाम् शब्दवृत्तीनाम्। अपि च। शक्तिः कार्यजनकत्वसामर्थ्यम्। असौ सम्बन्धः। एव। गुणानाम् द्रव्याश्रितधर्माणाम्। अपि। गुणः नियामक इति।

उक्तस्य हेलाराजकृतव्याख्यामनुवदति—उपकार इत्यादिना। उपकार इति उप-कार्योपकारकयोः यस्योपकारः क्रियते स उपकार्योऽत्र शाब्दबोधः उपकारकः उपकार-साधकोऽत्र शक्तिस्तथाभूतयोः। बोधशक्त्योः बोधः शाब्दबुद्धिः शक्तिस्तद्बोधकवृत्तिः तयोः। उपकारस्वभावः उपकारप्रकृतिकः। सम्बन्धः यत्र अस्ति तत्र। धर्म इति शक्ति-रूपो धर्मः। अनुगम्यते कार्यं दृष्ट्वा अनुमीयते। असौ सम्बन्ध एव। शक्तीनाम्। अपि

शक्तिः कार्यंजनने कार्योत्पत्तौ शाब्दबोधे उपकारकः। गुणानाम् अपि गुणः द्रव्याश्रितत्वनियामकः गुणा द्रव्ये आश्रिता भवन्तीति नियामकः। इति इत्थम्। हेलाराजः वाक्यपदीयस्य प्रसिद्धः टीकाकारः। व्याख्यातीति शेषः।

बोध्यत्वेनोपकार्योऽर्थः बोधकत्वेनोपकारकः शब्दः। उभयस्मिन्नेव शक्तेः सत्ता स्वीक्रियते विपश्चिद्भिः यत्रार्थे वाच्यतारूपाशब्दे तु वाचकतारूपा। उभयस्या एवोपकारकत्वाद् वाच्यवाचकभावनियामकतादात्म्यादिसम्बन्धः उपकार इत्युक्तः। शक्तिश्च शब्दार्थविद्यमानशाश्वततत्त्वत्वाद्धर्मशब्देन जनिताऽत्रेति।

हिन्दी—जो कि हरि ने भी कहा है—यह उपकार अर्थात् वाच्यता एवं वाचकता का उपकार करने वाला सम्बन्ध जहाँ होता है, वही धर्म अर्थात् शक्ति का भी अनुमान किया जाता है। यह शक्ति की भी शक्ति अर्थात् सामर्थ्य है और गुणों का भी नियामक हैं।

उपकार, उपकार्यं एवं उपकारक बोध एवं शक्ति का उपकार स्वभाव वाला सम्बन्ध जहाँ है, वहाँ शक्तिरूप जो धर्म है, उसके काम को देखकर अनुमान किया जाता है। यह सम्बन्ध शक्तियों का भी कार्य के उत्पादन में उपकारक है, गुणों का भी द्रव्य में आश्रितपन का नियामक है, इस तरह हेलाराज ने व्याख्या की है।

(१४) स सम्बन्धः पदे वाक्ये च। तदाह न्यायभाष्यकारः—'समयज्ञानार्थञ्चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणम्। वाक्यलक्षणाया वाचोऽर्थलक्षणम्' इति। अनेन पदेष्विव वाक्येष्वपि ईश्वरसमय इति स्पष्टमेवोक्तम्। तस्मादितरेतराध्यासः सङ्केतस्तन्मूलकं तादात्म्यश्च सम्बन्ध इति सङ्क्षातार्थः।

**व्याख्या**—सम्बन्धस्यावस्थानमाह—स इत्यादिना। सः तादृशः पदपदार्थयोरितरेतराध्यासमूलकतादात्म्यरूपः। सम्बन्धः। पदे वाक्यावयवभूतवर्णसमुदाये। वाक्ये अर्थपरिसमापकपदसमुदाये। च भवतीति शेषः। सम्बन्धो न केवलं पदपदार्थयोरेवापितु वाक्यवाक्यार्थयोरपि भवतीत्याशयः। उक्तार्थे न्यायभाष्यकारं प्रमाणयति—तदित्यादिना। तत् तदेव पदे वाक्ये च सम्बन्धस्य सत्तेति। आह कथयति। न्यायभाष्यकारः गौतमन्यायसूत्राणां भाष्यकृद् वात्स्यायनः। तदेवोद्धरति—समयेत्यादि। समयज्ञानार्थम्—समयस्य वाच्यवाचकभावद्योतकतादात्म्यरूपसङ्केतस्य ज्ञानमवबोधस्तदर्थम्। पदलक्षणायाः पदस्वरूपायाः। वाचः गिरः। अन्वाख्यानं प्रकृतिप्रत्ययतत्तदर्थप्रदर्शनपुरस्सरं बोधकम्। च। इदं प्रसिद्धम्। व्याकरणं शब्दशास्त्रम्। वाक्यलक्षणायाः वाक्यस्वरूपायाः। वाचः गिरः। अन्वाख्यानं ज्ञापकम्। अर्थलक्षणं वाक्यार्थबोधकशास्त्रं तर्कमीमांसादि। इति इति प्रकरणसमाप्तौ। फलितमाह—अनेनेत्यादि। अनेन वाक्यलक्षणाया वाच इति कथनेन। पदेषु वाक्यावयवभूतेषु वर्णसमुदायेषु। इव यथा। वाक्येषु अर्थपरिसमापकपदसमुदाये। अपि च। ईश्वरसमयः ईश्वरकृतसङ्केतः। इति इत्थम्। स्पष्टं स्पष्टतया सर्वैः सुज्ञेयत्वेन। एव हि। उक्तं कथितमिति। तत्पर्यवसितमाह—तस्मादित्यादिना। तस्मात् तेन हेतुना। पदपदार्थयोः वाक्यवाक्यार्थयोश्च इतरेतराध्यासः

परस्परारोपः। सङ्केतः संसूचनम्। तन्मूलकं स इतरेतराध्यासो मूलं ज्ञापकं यस्य तादृशम्। तादात्म्यं तदात्मभावः। च एव। सम्बन्धः ग्राहकः। इति इत्थम्। सङ्गतार्थः समुदिताशयः पिण्डितोऽर्थ इति।

अत्र विचारणीयं यल्लघुमञ्जूषायां हि 'तद्ग्राहकञ्चेतरेतराध्यासमूलकं तादात्म्यं तच्च सङ्केतः' इति तादात्म्यस्यैव सङ्केतत्वयुक्तं व्याख्यातञ्च रत्नप्रभायां यथा ननु अस्माच्छब्दादयमर्थो वोद्धव्य इत्याकारकेच्छाद्यात्मकत्वेनैव सङ्केतस्य प्रसिद्धत्वात् तादात्म्यं सङ्केत इत्यसङ्गतमिति चेन्न, शाब्दबोधोपपत्तये कल्प्यमानस्य सङ्केतस्य विनिगमनविरहेण तादात्म्यरूपत्वस्यापि सम्भवात्। सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः इति भाष्यकृता स्वीकृतत्वाच्च। तथा च सङ्केतो द्विविधः—भेदरूपोऽभेदरूपश्च। आद्यो नैयायिकाद्यभिमतः द्वितीयो वैयाकरणमात्राद्यभिमतः इति। अत्र तु इतरेतराध्यासस्यैव सङ्केतत्वमुक्तम्। महाभाष्येऽपि 'सङ्केतस्तु पदार्थयोरितरेतराध्यासरूपः' इत्युक्तं यत्र इतरेतराध्यासेन रूप्यते इति सङ्केतस्येतरेतराध्याससाधकत्वमुक्तम्।

**हिन्दी**—वह तादात्म्यरूप सम्बन्ध पद एवं वाक्य में भी होता है। जैसे कि न्यायभाष्यकार वात्स्यायन ने कहा है—सङ्केत के ज्ञान के लिए पदस्वरूप वाली भाषा का अन्वाख्यान अर्थात् प्रकृति-प्रत्यय आदि के विवेचन द्वारा स्वरूप का निर्द्धारण ही यह व्याकरण है और वाक्यस्वरूप भाषा का अन्वाख्यान यह अर्थलक्षण अर्थात् तर्क-मीमांसा आदि शास्त्र हैं। इससे पदों की तरह वाक्यों में भी ईश्वरेच्छारूप सङ्केत होता है, ऐसा स्पष्ट ही कहा गया है। इस कारण पद-पदार्थ एवं वाक्य-वाक्यार्थ का परस्पर का अध्यास ही सङ्केत है और उससे ज्ञापित तादात्म्य ही सम्बन्ध है। यह प्रकरण का पिण्डित अर्थ है।

(१५) तदुक्तं पातञ्जलभाष्ये—

'सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽर्थो योऽर्थः स शब्द' इति।

'स्मृत्यात्मक' इत्यनेन ज्ञातस्यैव सङ्केतस्य शक्तिबोधकत्वं दर्शितम्।

**व्याख्या**—उक्तार्थं महाभाष्येण प्रमाणयति—तदित्यादिना। तत् तदेव तथ्यम्। पातञ्जलमहाभाष्ये भगवत्पतञ्जलिप्रोक्तयोगसूत्रभाष्ये उक्तं कथितम्। तदेवानुवदति—सङ्केत इत्यादिना। सङ्केतः शक्तिग्राहकः। तु इति व्यवच्छेदे। पदपदार्थयोः वाचकवाच्ययोः। इतरेतराध्यासरूपः इतरेतरस्य परस्परस्य अध्यासः आरोपिताभेदः रूपं स्वरूपमात्मा यस्येति परे तु इतरेतराध्यासेन रूप्यते साध्यतेऽसावित्यपि विग्रहं कुर्वन्ति। अत्र त्वाद्य एव विग्रहोऽभीष्टः। स्मृत्यात्मकः स्मृतिः पूर्वज्ञानसंस्कार आत्मा प्राणा यस्येति स्मृती आत्मा स्वरूपं यस्येति वा (भास्वत्यां तत्त्ववैशारद्याञ्च) तादृशः। यः अयं शब्दः सः अर्थः यः अर्थः स शब्दः शब्द एवार्थः अर्थ एव शब्दः न हि कृत एव सङ्केतोऽर्थमवधारयति अपितु स्मर्यमाणोऽपि। सङ्केतो हि द्विविधः—भेदरूपोऽभेदरूपश्च। तत्राद्यस्तार्किकसम्मतः अपरस्तु वैयाकरणाभिमतः। भेदरूपश्च शब्दस्यार्थस्य

च पार्थक्येन ग्रहणात् अभेदरूपश्च घट इत्येवं शब्दो घट इत्येवमर्थश्चेति। न केवलं शब्दार्थयोरेवाध्यासोऽपितु 'घट' इत्याकारकं ज्ञानमिति व्यवहारात् शब्दज्ञानयोरप्यध्यासः। आरोपोऽपि द्विविधः—आहार्योऽनाहार्यश्च। तत्र बाधकालीनमिच्छाजन्यं ज्ञानमाहार्यम्, यथा मुखे चन्द्रमस आह्लादकत्वादिधर्मारोपः। अयमेव रूपकालङ्कारस्य मूलम्। अनाहार्यस्तु वास्तविक एव। सिद्धमेतद्यत्पदपदार्थयोरन्योन्याध्यारोपः पदे पदार्थस्य पदार्थे पदस्य च एव सङ्केतस्तन्मूलकञ्च तादात्म्यं सम्बन्ध इति।

शक्तिग्राहकः सङ्केतः सम्बन्धस्तु तस्य नियामक इति ग्रन्थाशयोऽत्र प्रतिभाति किन्तु मूले एव एकत्र तद्ग्राहकञ्चेतरेतराध्यासमूलकं तादात्म्यम्। 'तदेव सम्बन्धः' इत्युक्तमत्र तु इतरेतराध्यासः सङ्केतस्तन्मूलकं तादात्म्यञ्च सम्बन्ध इत्युक्तः प्रमाणितश्च सङ्केतस्तु इतरेतराध्यासरूपः स्मृत्यात्मकः इति व्यासभाष्यं योगसूत्रस्य लघुमञ्जूषायां तु पुनः तद्ग्राहकञ्चेतरेतराध्यासमूलं तादात्म्यं तच्च सङ्केतः, इति प्रतिपादितं तादात्म्यस्यैव सङ्केतत्वमिति कतमो हि पक्षोऽभीष्टोऽत्रेति विचारणीयः पक्षः। अत्र इतरेतराध्यास इत्येतस्य लक्षणामाश्रित्य इतरेतराध्यासविषय इत्यर्थस्यादाने भवति सर्वं सुस्थम्। फलञ्च इतरेतराध्यासविषयः सङ्केतस्तन्मूलकं तेन तदभिन्नं तादात्म्यञ्च सम्बन्ध इति। पातञ्जलभाष्येऽपि इतरेतराध्यासेन रूप्यते साध्यत इति इतरेतराध्यासरूपः सङ्केत इति अभीष्टपक्षः। 'स्मृत्यात्मक' इत्येतस्य फलितमाह—**स्मृत्यात्मक** इत्यादिना। **स्मृत्यात्मकः** स्मृतिरात्मा विषयो यस्येति समानाधिकरणबहुव्रीहितः न तु स्मृतौ आत्मा यस्येति व्यधिकरणबहुव्रीहेरपि प्रमाणाधीनत्वादिति ज्योत्स्नायां स्पष्टम्। **इति। अनेन** कथनेनेति किञ्च सङ्केतः स्मृतिविषयात्मकस्तेन। **ज्ञानस्य** सुपरिचितस्य। एवेति अन्यायोगव्यवच्छेदे न त्वज्ञातस्यापि। **सङ्केतस्य। शक्तिबोधकत्वं** शक्तिज्ञापकत्वम्। **दर्शितं** प्रतिपादितमिति। यथोक्तं तत्त्ववैशारद्यां वाचस्पतिमिश्रैः—'न हि कृत इत्येव सङ्केतोऽर्थमवधारयति अपितु स्मर्यमाणः। अभिन्नाकारे एव सङ्केते कथञ्चिद् भेदं विकल्प्य षष्ठी प्रयुक्तेति······'। इति।

**हिन्दी**—जैसे कि पातञ्जलयोगसूत्र के ( व्यासकृत ) भाष्य में कहा है—संकेत तो पद एवं पदार्थ के परस्पर के अध्यास रूप स्मृति का विषय 'जो यह शब्द है वही अर्थ है और जो यह अर्थ है वही शब्द है' है। स्मृत्यात्मक अर्थात् 'स्मृति के विषय' से यह दिखलाया गया है कि परिचित सङ्केत का ही शक्तिबोधकत्व होता है, न कि केवल कृत मात्र का।

( १६ ) उक्त ईश्वरसङ्केत एव शक्तिरिति नैयायिकमतं न युक्तम्। 'अयमेतच्छक्यः' 'अत्रास्य शक्तिः' इत्यस्य सङ्केतस्य शक्तितः पार्थक्येन प्रसिद्धत्वात्। अत एव न्यायवाचस्पत्ये उक्तम्—

'सर्गादिभुवां महर्षिदेवतानामीश्वरेण साक्षादेव कृतः सङ्केतस्तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्तत्सङ्केतः' इति।

**व्याख्या**—पुनर्नैयायिकमतं दूषयति—**उक्त** इत्यादिना। **उक्तः** प्राग्विवेचितः पदविशेष्यकोऽर्थविशेष्यको वा। **ईश्वरसङ्केतः** ईश्वरेच्छा एव। **शक्तिः** शब्दस्यार्थबोध-

कत्वव्यापारः । इति इत्थं प्रतिपादितम् । नैयायिकमतं तार्किकविचारः । न नैव । युक्तं साम्प्रतम् । तत्र हेतुमाह—अयमित्यादिना । अयम् एषोऽर्थः । एतच्छक्यः एतच्छक्तिलभ्यः । अत्र अर्थेऽस्मिन् । अस्य पदस्य । शक्तिः अवबोधकत्वव्यापारः । इति इत्थम् । अस्य पदपदार्थयोरितरेतराध्यासरूपस्य । सङ्केतस्य शक्तिग्राहकस्य । शक्तितः अर्थावबोधकत्वव्यापारात् । पार्थक्येन भेदेन । प्रसिद्धत्वात् ख्यातत्वात् । भेद एव षष्ठीविधानात् । सङ्केतस्य शक्तिबोधकत्वेन शक्तिस्वरूपत्वाभावात् । उक्तार्थे शिष्टं प्रमाणयति—अत इत्यादिना । अतः यतो हि सङ्केतः शक्तिग्राहक एव न तु शक्तिस्तस्मात् । एव हि । सङ्केतस्य शक्तित्वाभावात् शक्तिग्राहकत्वाच्च । न्यायवाचस्पत्ये न्यायसूत्रस्य वाचस्पतिटीकायाम् । उक्तं प्रतिपादितम् । तदेवानुवदति—सर्गेत्यादिना । सर्गादिभुवां सर्गस्य सृष्टेरादौ प्रारम्भकाले भवन्ति तच्छीला या इति तांस्ताम् । महर्षिदेवतानाम् महर्षयो देवताश्च तासाम् । ईश्वरेण जगत्प्रणेत्रा । साक्षात् प्रत्यक्षमेव । सङ्केतः अर्थसंसूचनम् । कृतः विहितः । तद्व्यवहारात् तेषां महर्षिणां व्यवहारात् प्रयोगदर्शनात् । च । अस्मदादीनाम् अस्मत्प्रभृतीनाम् अपि च । तत्सङ्केतः तस्येश्वरस्य सङ्केतः । सुग्रहः व्यवहारविषय इति । इति इति प्रकरणसमाप्तौ । योगवाचस्पत्येऽपि—'सर्वे च शब्दाः सर्वार्थाभिधानसमर्था इति सर्वैरर्थैः सर्वेषां शब्दानां सम्बन्धः ईश्वरसङ्केतस्तु प्रकाशकः' इति प्रतिपादितमस्ति ।

**हिन्दी**—उक्त 'पदविशेष्यक अथवा अर्थविशेष्यक ईश्वर-सङ्केत ही शक्ति है' ऐसा नैयायिकों का मत ठीक नहीं हैं । 'यह ( अर्थ ) इस पद का शक्य अर्थात् शक्ति का विषय है और इस ( अर्थ ) में इस ( पद ) की शक्ति है' इस प्रकार इस सङ्केत का शक्ति से भिन्न रूप में प्रसिद्ध होने से ( दोनों को एक मानने वाला उक्त मत ठीक नहीं है ) । इसीलिए ही न्यायसूत्र के वाचस्पति टीका में कहा गया है—सृष्टि के आदि में हुए महर्षियों एवं देवताओं को ईश्वर ने साक्षात् ही सङ्केत किया था । उनके व्यवहार से वह सङ्केत हम लोगों को भी सुग्राह्य है । योगवाचस्पत्य में तो और स्पष्ट ही कहा गया है—'सभी शब्द सभी अर्थों के अभिधान में समर्थ हैं । इस कारण सभी अर्थों का सभी शब्दों से सम्बन्ध है । इश्वर-सङ्केत तो उसका प्रकाशक मात्र है ।'

**( १७ ) तस्य च तादात्म्यस्य निरूपकत्वेन विवक्षितोऽर्थः शक्यः आश्रयत्वेन विवक्षितः शब्दः शक्त इत्युच्यते । शब्दार्थयोस्तादात्म्यादेव 'श्लोकमश्रृणोत्' अथ 'अर्थं शृणोति' 'अर्थं वदति' इत्यादिव्यवहारः । 'ओमित्येकाक्षरं ब्रह्म' 'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः' 'वृद्धिरादैच्' इति शक्तिग्राहकश्रुतिस्मृतिविषये सामानाधिकरण्येन प्रयोगाश्च ।**

**व्याख्या**—निरूपितस्य पदपदार्थयोस्तादात्म्यसम्बन्धस्य संज्ञाविशेषमाह—तस्येत्यादिना । तस्य तादृशस्य पदपदार्थयोरितरेतराध्यासमूलकस्य सम्बन्धरूपस्य । तादात्म्यस्य तदात्मभावस्य । निरूपकत्वेन निर्देशकरूपेण । विवक्षितः अभीष्टः । अर्थः वाच्यः ।

**शक्यः** शक्यपदज्ञेयः। **आश्रयत्वेन** तस्य तादात्म्यस्याधारत्वेन। **विवक्षितः** अभीष्टः। **शब्दः** घटादिः। **शक्तः** शक्तपदबोध्यः। **इति** इत्थम्। **उच्यते** कथ्यते। इत्थं संज्ञाविशेषमभिधाय सम्प्रति पदपदार्थयोस्तादात्म्ये लौकिकं प्रमाणमाह—**शब्दार्थयोरित्यादिना**। **शब्दार्थयोः** वाचकः शब्दो वाच्योऽर्थं इति तयोः। **तादात्म्यात्** अध्यासात्मकतदात्मभावात्। **एव** हि। **श्लोकं** पठितं पद्यम्। **अशृणोत्** श्रावणप्रत्यक्षविषयं कृतवान्, शब्दस्यैव श्रावण-प्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नत्वेन। **अथ** शब्दश्रवणानन्तरम्। **अर्थमभिप्रायम्**। शृणोति श्रवणविषयीकरोति। **अर्थम्**। **वदति** कथयति। **इत्यादि व्यवहारः** इति प्रयोगः। दृश्यते इति शेषः। अर्थस्य श्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नत्वा-भावात् न शब्दधर्मत्वमिति शब्दश्रवणानन्तरमेवार्थबोधः। तच्च तयोरध्यासमन्तरा न सम्भवति किञ्चार्थेऽध्यासादेव श्रावणप्रत्यक्षविषयतावच्छेदकधर्मवत्त्वं प्रतीयते इति। इत्थं तत्र लौकिकं प्रमाणमुपस्थाप्य सम्प्रति शास्त्रतोऽपि तं प्रमाणयति—**ओमित्यादिना**। 'ओम्' इति यद् एकाक्षरं यत्तस्य ब्रह्मेत्यर्थेन सह राम इति यद् द्व्यक्षरं नाम तस्य मर्यादापुरुषोत्तमरामेण सह वृद्धिरित्येतस्य आ ऐ औ इत्येतैः सह च अभेदारोपे एव। **शक्तिग्राहकश्रुतिस्मृतिविषये** शक्तिग्राहको यः श्रुतेः स्मृतेश्च विषयस्तत्र। **सामाना-धिकरण्येन** समानार्थबोधकत्वेन। **प्रयोगाः** व्यवहाराः। सम्भवन्तीति शेषः। सामाना-धिकरण्यञ्च ओमित्येकाक्षरस्य ब्रह्मणश्च रामेति द्व्यक्षरं नाम इत्येतस्य मर्यादापुरुषोत्तम-रामस्य च वृद्धिरित्येतस्य आ ऐ औ इत्येतेषाञ्च। अन्यथा आद्ये वर्णब्रह्मणोरभेदप्रति-पादनं द्वितीये रामशब्दमात्रे पिनाकिनो मानभङ्गः तृतीये वृद्धिसंज्ञाया आदैजित्यर्थ-बोधश्च न। तत्सर्वमभेदारोपेणैव सिध्यति वर्णब्रह्मणोः राममर्यादापुरुषोत्तमरामयोः वृद्ध्यादादैचोश्च। शब्दार्थयोस्तादात्म्ये सत्येव तादृशः प्रयोगः सम्भवतीत्यर्थः।

**हिन्दी**—उस तादात्म्य के निरूपक के रूप में विवक्षित अर्थ शक्य कहलाता है और उसके आश्रय के रूप में विवक्षित शब्द शक्त कहलाता है। शब्द एवं अर्थ के तादात्म्य से ही 'श्लोक सुना' अब 'अर्थ सुनता है' 'अर्थ कहता है' इत्यादि व्यवहार होता है। इसी तरह 'ओम्' यह एक अक्षर ब्रह्म है। 'राम' यह दो अक्षर वाला नाम पिनाकी का मानभङ्ग करता है। 'आ ऐ औ वृद्धि हैं' ऐसे शक्ति के ग्राहक श्रुति एवं स्मृति के विषय में समान अधिकरण के भाव से प्रयोग सम्भव हो पाते हैं।

इसका आशय यह है कि जो श्रावणप्रत्यक्ष है वह तो शब्द ही होता है, न कि अर्थ। अर्थ का जो श्रावणप्रत्यक्षत्व है वह तो शब्द के साथ के तादात्म्य से ही हो पाता है, चाहे वह अध्यासात्मक ही हो। इसी तरह एकाक्षर वाला 'ओम्' वर्ण एवं ब्रह्म का भी तादात्म्य मानने पर ही अर्थ सिद्ध होगा; नहीं तो वर्ण एवं ब्रह्म का ऐक्य कहाँ? 'राम' में मर्यादा पुरुषोत्तम राम से अभेद आरोप करने पर ही पिनाकी का मानभङ्ग सम्भव है, राम शब्द से वह हो नहीं पाता। वृद्धि एवं आ ऐ औ में तादात्म्य होने पर ही आ ऐ औ की वृद्धिसंज्ञा हो सकती है, भेद मानने पर नहीं। अतः यह सिद्ध है कि शब्द एवं अर्थ का तादात्म्य सम्बन्ध है।

(१८) तादात्म्यञ्च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वमिति भेदा-

भेदसमनियतम्। अभेदस्याध्यस्तत्वाच्च न तयोर्विरोधः। यत्तु तार्किकाः शब्दार्थयोस्तादात्म्यस्वीकारे मधुशब्दोच्चारणे मुखे माधुर्यरसास्वादापत्तिर्वह्निशब्दोच्चारणे मुखे दाहापत्तिरित्याहुस्तन्न; भेदाभेदस्योपपादितत्वात्। वस्तुतो बौद्ध एवार्थः शक्यः पदमपि स्फोटात्मकं प्रसिद्धम्। तयोस्तादात्म्यम्। तत्र बौद्धे वह्न्यादावर्थे दाहादिशक्तिमत्त्वाभावात्।

**व्याख्या**—इत्थं शब्दार्थयोस्तादात्म्यस्वीकारेऽस्यार्थस्यायं शब्दो वाचक इति तयोर्भेदबोधकव्यवहारः कथं सिध्यतीत्यतस्तादात्म्यस्वरूपमाह—**तादात्म्यमित्यादिना**। शब्दार्थयोः **तादात्म्यं** तदात्मभावः। **च** तु अव्ययानामनेकार्थकत्वात्। **तद्भिन्नत्वे** तस्मादिति अर्थपक्षे शब्दात् शब्दपक्षेऽर्थात् भिन्नं पृथक् तस्य भावस्तत्वं तस्मिन्। **सति** विद्यमाने। **तदभेदेन** तस्माद् अभेदेन उपपृथक्त्वेन। **प्रतीयमानत्वम्** अवभासमानता। **इति** इत्थम्। **भेदाभेदसमनियतम्**—भेदः पार्थक्यमभेदस्ताद्रूप्यं तयोः समं तुल्यं, नियतमवस्थानं यस्य तत्। तादृशं भवतीति शेषः। भेदस्य अभेदेन सह नितान्तविरोधात्कथं भेदाभेदसमनियतत्वमित्यत आह—**अभेदस्येति**। वस्तुतो भेदे सत्यपि **अभेदस्य** साम्यस्य। **अध्यस्तत्वात्** आरोपितत्वात्। **च** अपि। **तयोः** भेदाभेदयोः। **न** नैव। **विरोधः** दोषावहत्वमिति। वस्तुतः शब्दार्थयोर्भेदादभेदस्य चारोपान्नोक्तदोष इति फलितोऽर्थः।

विषयेऽस्मिन् तार्किकाक्षेपमनूद्य खण्डयितुमाह—**यदित्यादिना**। **यत्** यद्धि। **तु** इति क्षेपे। **तार्किकाः** नैयायिकाः आहुरित्यनेनान्वयः। **शब्दार्थयोः** वाचकवाच्ययोः। **तादात्म्यस्वीकारे** अभेदग्रहणे। **मधुशब्दोच्चारणे** मधु इति माक्षिकार्थकमाधुर्यधर्मवन्मधुरशब्दकथने। **मुखे** आस्ये। **माधुर्यरसास्वादापत्तिः** माधुर्यस्य रसस्य य आस्वादस्तस्य आपत्तिः स्यात्। मधुरशब्दकथनमात्रेण मुखे माधुर्यरसः पूरितः स्याद्वस्तुतस्तु न तथा भवति तथैव **वह्निशब्दोच्चारणे** वह्निशब्दस्य अग्न्यर्थकदहनधर्मवद् वह्निशब्दस्य उच्चारणे कथने। **मुखे** वदने। **दाहापत्तिः** दाहस्य दहनकर्मणः आपत्तिः क्रिया स्यात्, वस्तुतस्तु न तथेति नास्ति शब्दार्थयोस्तादात्म्यमिति। **इति** इत्थम्। **आहुः** कथयन्ति। **तत्** तादृशं कथनम्। **न** नैवोपयुक्तम्। तस्यानुपयुक्तत्वे हेतुमाह—**भेदेत्यादिना**। शब्दार्थयोः **भेदाभेदस्य** वस्तुतो भेदस्य अध्यस्तत्वेनाभेदस्य च। **उपपादितत्वात्** प्रसाधितत्वात्। अत्र दाहं प्रति वह्नेः माधुर्यं प्रति मधुरपदार्थस्य च संयोगेन कारणत्वादत्र तु मुखादावर्थस्य तेन सम्बन्धेनाभावान्न शङ्कावसर इति ज्योत्स्नायां स्पष्टम्। गङ्गायास्तटे भाक्तत्वेऽपि तत्र तटादौ यथा स्नानादिकार्यं न भवति तथाऽत्राप्यभेदस्यारोपितत्वेऽपि न वास्तविकं कार्यमित्यपि तत्रैव स्पष्टम्। एवं परमतं निराकुर्वन् स्वमतमवस्थापयति—**वस्तुत इत्यादिना**। **वस्तुतः** परमार्थतस्तु। **बौद्धः** बुद्धिरूपाधिकरणदेशः। **एव** इत्यन्यायोगव्यवच्छेदे न तु बाह्य इति। **अर्थः** वाच्यः। **शक्यः** शक्तिविषयः। तद्वाचकं **पदम् अपि** च। **स्फोटात्मकं** स्फोटरूपमेव। **प्रसिद्धं** शक्तत्वेन ख्यातम्। **तयोः** बौद्धार्थस्फोटात्मकशब्दयोः **तादात्म्यम्** ऐक्यम्। उक्तमिति शेषः। द्विविधौ हि शब्दार्थौ—बौद्धौ बाह्यौ च। तत्र बौद्धार्थस्य बौद्धशब्देनैव सह तादात्म्यमुक्तमत्र। न तु बौद्धबाह्ययोः। तत्र

तादात्म्येऽपि । बौद्धे बुद्धिरूपाधिकरणदेशे । वह्न्यादौ अग्न्यादौ । अर्थे वाच्ये । दाहादिशक्तिमत्त्वाभावात् दहनरूपकार्यादर्शनात् इति ।

हिन्दी—शब्द एवं अर्थ का एक-दूसरे से भिन्न होने पर भी एक-दूसरे से अभेद के रूप में अवभासित होना ही तादात्म्य है और इस तरह से भेद एवं अभेद दोनों में समान रूप से नियत रहता है। ( भेद एवं अभेद में विरोध होने पर भी ) अभेद के अध्यस्त अर्थात् आरोपित होने के कारण दोनों में कोई विरोध नहीं हैं। जो कि नैयायिक 'शब्दार्थ के तादात्म्य स्वीकार में तो मधु शब्द के उच्चारण में मुख में मधुर रस के आस्वाद की आपत्ति होगी और अग्नि शब्द के उच्चारण से मुख में दहन की आपत्ति होगी'—ऐसा कहते हैं वह ठीक नहीं है। भेद एवं अभेद दोनों का प्रतिपादन किये जाने से। वास्तव में बौद्ध अर्थ ही शक्य है और पद भी स्फोटात्मक ही प्रसिद्ध है। उन दोनों ( बौद्ध अर्थ एवं स्फोटात्मक शब्द ) का ही तादात्म्य माना गया है। उसमें बौद्ध अर्थ में वह्नि आदि अर्थ में दाह आदि शक्तिमत्त्व के अभाव होने से ( भी अग्नि शब्द के उच्चारण में मुख में दाह की आपत्ति नहीं होती )।

उस तादात्म्य के निरूपक के विवक्षित अर्थ को ही शक्य कहा गया है और उसके आश्रय के रूप में विवक्षित शब्द शक्त कहा जाता है।

इस तरह दोनों का तादात्म्य मानने पर 'इस अर्थ का यह वाचक शब्द है' ऐसा भेद कैसे हो पाएगा ? इस आक्षेप के निवारण के लिए तादात्म्य का स्वरूप बतलाते हैं—परस्पर में भिन्न होने पर भी उससे अभिन्न रूप में अवभासित होना ही तादात्म्य है, अतः यह भेद एवं अभेद दोनों में समान रूप से नियत हैं और अभेद के वास्तविक न होकर अध्यस्त होने के कारण भेद एवं अभेद दोनों में कोई विरोध नहीं है। शब्द एवं अर्थ के तादात्म्य मानने से 'मधु' शब्द के उच्चारण में मुख में माधुर्य की एवं 'आग' शब्द के उच्चारण से दाह की जो आपत्ति नैयायिकों ने उठाई है वह ठीक नहीं है। एक तो तादात्म्य में भेद एवं अभेद दोनों का ग्रहण होता है। दूसरी बात तो यह है कि तादात्म्य बौद्ध ( बुद्धिस्थ ) अर्थ एवं स्फोटात्मक शब्द का माना गया है, न कि बाह्य अर्थ एवं शब्द का। मधु आदि के जो बौद्ध अर्थ हैं उनमें माधुर्य आदि शक्ति का अभाव रहता है। सबसे मतलब की बात तो यह है कि दाह के प्रति अग्नि एवं माधुर्य के प्रति मधु संयोगसम्बन्ध से ही कारण होते हैं। मुख आदि में अर्थ का उससे संयोगसम्बन्ध न होने के कारण यह आशङ्का ही निराधार है और यह भी है कि अभेद तो केवल अध्यस्त है, वास्तविक नहीं। जैसे गङ्गा पद का तट अर्थ में लक्षणा होने पर भी तट में स्नान आदि कार्य तो नहीं होते, अतः यहाँ भी अभेद के आरोपित होने के कारण वास्तविक कार्य नहीं बनते।

( १९ ) अत एव 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' इति विकल्पसूत्रं सङ्गच्छते। शब्दज्ञानमात्रेणानुपाती बुद्धावनुपतनशीलो वस्तुशून्यो बाह्यार्थरहितो विशेषेण कल्प्यत इति विकल्पः, बुद्धिपरिकल्पित इति तदर्थः। अत एव—

एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ।
कूर्मक्षीरचये स्नातः शशशृङ्गधनुर्धरः ॥

इत्यत्र वन्ध्यासुतादीनां बाह्यार्थशून्यत्वेऽपि बुद्धिपरिकल्पितं वन्ध्यासुतशब्दवाच्यार्थमादायार्थवत्त्वात् प्रातिपदिकत्वम् । अन्यथाऽर्थवत्त्वाभावेन प्रातिपदिकत्वाभावात् स्वाद्युत्पत्तिर्न स्यात् । यत्तु शशशृङ्गमित्यत्र शृङ्गे शशीयत्वभ्रम इति तार्किकैरुक्तम् । तन्न । शशशब्दवाच्यजन्तुदर्शनरूपबाधे सति शशशृङ्गं नास्तीति वाक्ये शशशृङ्गमित्यस्य प्रातिपदिकत्वानापत्तेः ।

**व्याख्या**—पदार्थस्य बौद्धत्वे योगसूत्रं प्रमाणयितुमाह—**अत** इत्यादि । **अतः** यतो हि पदार्थो बौद्धस्ततः । **एव हि** । सूत्रमनुवदति—**शब्देत्यादि** । **शब्दज्ञानानुपाती** शब्दाद्यज्ज्ञानं शब्दश्च शाब्दज्ञानञ्च ते अनुपातिनी यस्य स तादृशस्तथा च तदुभयजनकः । **वस्तुशून्यः** वास्तवार्थशून्यः । यः प्रत्ययः सः **विकल्पः** विकल्पसंज्ञक इति । **इति** इत्थम् । **विकल्पसूत्रं** योगदर्शनसम्बद्धविकल्पविवेचकसूत्रम् । **सङ्गच्छते** सङ्गतिं भजते । व्याख्याति च सूत्रं स्वयमेव योगवाचस्पत्यमनुसृत्य—**शब्देत्यादिना** । शब्दज्ञानानुपातीति शब्दज्ञानमात्रेण शब्दजन्यं यज्ज्ञानं तदेव तेन तन्मात्रेण । अनुपाती शीलः वस्तुतत्त्वमनपेक्ष्यैव बुद्धौ अनुपतनशीलः अन्यवसायः वस्तुशून्यः इति । **बाह्यार्थरहितः** वास्तवार्थशून्यः । **विकल्पः** इति विशेषेण कल्प्यते इति विकल्पः बुद्धिपरिकल्पितः । **इति** इत्थम् । **तदर्थः** तस्य विकल्पसूत्रस्य **अर्थः** आशयः इति । अयमाशयः—प्रत्यक्षानुमानागमाः प्रमाणानि विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्, स तु न प्रमाणं तस्य प्रमाणेन बाधाद् भूतार्थविषयत्वात्प्रमाणस्य । शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः । स च न प्रमाणापारोही वास्तवार्थशून्यत्वान्न च विपर्ययापारोही शब्दज्ञानमाहात्म्यनिबन्धनत्वात् । स च क्वचिद् भेदे अभेदमारोपयति क्वचिद्भिन्नानामभेदम्, ततो भेदाभेदस्य च वस्तुतोऽभावात्तदाभासो विकल्पो न प्रमाणम्, नापि विपर्ययो व्यवहाराविसंवादात् । अभेदे भेदारोपो यथा—पुरुषस्य चैतन्यमित्यादौ । यदा चितिरेव पुरुषस्तदा किमत्र केन व्यपदिश्यते । भिन्नानामभेदो यथा चैत्रस्य गावः । न हि गवा गौर्विशिष्यते किन्तु भिन्नेन चैत्रेण । 'अयो दहति' इत्यादौ वा । अत्र अयोवह्न्योर्भेदेऽप्यभेदारोपः । स च विकल्पः वस्तुशून्योऽर्थात् बाह्यार्थरहितो भवति । केवलं स बुद्धावनुपतनशीलः इति अर्थस्य बौद्धत्वं समर्थितं भवति ।

अर्थस्य बौद्धत्वसमर्थनाय पुनर्निदर्शनं प्रस्तौति—**अत** इत्यादिना । **अतः** यतो हि बौद्धो भवत्यर्थस्तस्मात् । **एव हि** । **एषः** पुरोदृश्यमानः प्रकरणगतो वा । **खपुष्पकृतशेखरः** खे गगने यत्पुष्पं कुसुमं तेन कृतः सज्जितः शेखरो मस्तकं यस्य तादृशः । **कूर्मक्षीरचये** कूर्मस्य कच्छपस्य क्षीरस्य दुग्धस्य चये समूहे । **स्नातः** कृतावगाहः । **शशशृङ्गधनुर्धरः** शशस्य रोमकर्णस्य पशुविशेषस्य शृङ्गं विषाणं तस्य धनुः शरासनं तस्य धरः धारकः । **वन्ध्यासुतः** वन्ध्या वशा स्त्री तस्याः सुतः पुत्रः । **याति** गच्छतीति । तत्राभीष्टमाह—**इतीत्यादिना** । **इति** इत्थम् । **अत्र** उक्तवाक्ये **वन्ध्यासुतादीनां** वन्ध्यासुत-खपुष्प-कूर्मक्षीर-शशशृङ्गादिपदानाम् । **बाह्यार्थशून्यत्वे** बाह्यो वास्तवो योऽर्थस्तेन शून्यं राहित्यं

तत्त्वे। अपि च लोके तत्तदसम्भवात्। **बुद्धिपरिकल्पितं** बुद्ध्या प्रतिपादितम्। **वन्ध्यासुतवाच्यार्थम्**—वन्ध्यासुतप्रभृतिशब्दानां यद् वाच्यः शक्योऽर्थस्तम्। **आदाय** अवलम्ब्य। **अर्थवत्त्वात्** अर्थयुक्तत्वेन। **प्रातिपदिकत्वं** प्रातिपदिकसंज्ञा। भवतीति शेषः। यतो हि सुवुत्पत्तिरित्याशयः। तदेवाह—**अन्यथेति**। **अन्यथा** बौद्धार्थत्वास्वीकारे। **अर्थवत्त्वाभावेन** बाह्यार्थराहित्यादर्थयुक्तत्वविरहेण। **प्रातिपदिकत्वाभावात्** प्रातिपदिकसंज्ञाभावात्। **सुबुत्पत्तिः** 'ङ्याप् प्रातिपदिकात्' इति सुबाद्युत्पत्तिः। **न। स्यात्** सम्भवेत्। विषयेऽस्मिन् पुनस्तार्किकाक्षेपमनूद्य दूषयति—**यदित्यादिना**। **यत्** यदेव। **तु** हि। **शशश्रृङ्गम् इत्यत्र** शशश्रृङ्गपदे। **श्रृङ्गे** विषाणे। **शशीयत्वभ्रमः** शशीयत्वस्य शशसम्बद्धतायाः भ्रमो मिथ्याज्ञानम्। **इति** इत्थम्। **तार्किकैः** नैयायिकैः। **उक्तं** कथितम्। **तत्** तादृशं कथनम्। **न** नैवोपयुक्तम्। यदि हि भ्रान्तार्थवत्तामादाय सुबुत्पत्तिरुच्यते तदा **शशशब्दवाच्यजन्तुदर्शनरूपबाधे** शशशब्दस्य वाच्यः वाच्यार्थभूतो यश्चतुष्पादजन्तुविशेषस्तस्य दर्शनरूपे प्रत्यक्षस्वरूपे **बाधे** बाधज्ञाने। अर्थात् शशाख्यजन्तुदर्शनेन भ्रान्तेर्निवारणे। **सति** जायमाने। **'शशश्रृङ्गं नास्ति' इति वाक्ये**। **शशश्रृङ्गम्** इत्यस्य पदभावाय। **प्रातिपदिकत्वानापत्तेः** प्रातिपदिकसंज्ञाऽप्राप्तेः। अयमाशयः—यदि हि यथा नैयायिका वदन्ति शशश्रृङ्गमिति पदे श्रृङ्गस्य शशीयत्वभ्रान्त्या अर्थवत्तया प्रातिपदिकत्वाङ्गीकारे शशाख्यजन्तुप्रत्यक्षानन्तरं भ्रान्तिनिवारणेन तत्र अर्थवत्त्वाभावान्न तस्य प्रातिपदिकत्वं स्याद् बौद्धार्थस्वीकारे तु न तथा स्थितिरिति।

**( पदार्थ को बौद्ध मानने पर ही )**

**हिन्दी**—इसी कारण ही 'शब्दज्ञान का अनुसरण करने वाला वास्तविक अर्थ से शून्य प्रत्यय ही विकल्प है' ऐसा योगदर्शन का विकल्पसूत्र सुसङ्गत हो पाता है। शब्दज्ञान मात्र से अनुपाती अर्थात् बुद्धि में आ पडने वाला वस्तुशून्य अर्थात् बाह्य अर्थ से रहित विशेष रूप से कल्पित किया जाने वाला विकल्प अर्थात् 'बुद्धि से परिकल्पित' ऐसा इसका अर्थ है। क्योंकि बुद्धिगत अर्थ ही शब्द के द्वारा अभिव्यक्त होता है, इसीलिए ही—

'आकाशकुसुम को शिर पर सजाये हुए, कछुए के दूध के कुण्ड में स्नान किये हुए, खरगोश की सींग के धनुष को धारण किये हुए यह बाँझ का लड़का जाता है।'

यहाँ वन्ध्यासुत आदि का बाह्य अर्थ से रहित होने पर बुद्धि से परिकल्पित वन्ध्यासुत शब्द के वाच्यार्थ को लेकर अर्थवान् होने से प्रातिपदिकत्व है। वैसा न होने पर अर्थवत्ता के अभाव में प्रातिपदिकत्व न रहने से 'सु' आदि की उत्पत्ति नहीं हो पाएगी।

जो कि 'शशश्रृङ्ग' श्रृङ्ग में शश से सम्बद्ध होने का भ्रम होने से ( अर्थवत्ता है ), ऐसा नैयायिकों ने कहा है वह ठीक नहीं है। शश शब्द से वाच्य जो जन्तु (खरगोश) है, उसके दर्शनरूप बाध होने पर 'शशश्रृङ्ग नहीं है' इस वाक्य में 'शशश्रृङ्ग' में प्रातिपदिकत्व की प्राप्ति नहीं होने से।

कहने का आशय यह है कि शब्द के बुद्धिगत अर्थ को लेने पर ही तो योगदर्शन का वह विकल्पसूत्र ठीक बैठता है, जिसमें कहा गया है कि शब्दज्ञान का अनुपात एवं वास्तविक अर्थ से रहित प्रत्यय ही विकल्प होता है। 'वस्तु-शून्य अर्थात् वास्तविक अर्थ से रहित' का आशय यही है कि उसका बाह्य अर्थ तो कुछ नहीं होता, केवल बुद्धि के द्वारा कल्पित अर्थ से ही वह शब्द अर्थवान् होता है। अर्थ का बौद्धत्व मानने पर ही 'वन्ध्यासुत' आदि शब्दों की अर्थवत्ता बन पाती है, क्योंकि उसका बाह्य अर्थ तो कुछ नहीं होता। अर्थवत्ता न होने पर प्रातिपदिकत्व नहीं होगा, जिसके चलते 'सुप्' की उत्पत्ति हो पाती है।

नैयायिक शशशृङ्ग शब्द में शृङ्ग में शश से सम्बद्ध मानने की भ्रान्ति से अर्थवत्ता मानते हैं, किन्तु यह ठीक नहीं है। प्रत्यक्षदर्शन भ्रान्ति का बाधक होता है। जो कोई शृङ्ग में भ्रान्ति से अर्थवत्ता मान भी लेता है, वही जब शश का प्रत्यक्षदर्शन कर लेता है तब उसकी भ्रान्ति तो दूर हो जाती है। फिर 'शशशृङ्गम्' आदि में अर्थवत्ता कैसे रह पाती है? अर्थ के बौद्धत्व को मानने पर ही इसका समाधान हो सकता है।

**(२०) अर्थपदयोस्तादात्म्यात् तत्तदर्थतादात्म्यापन्नः शब्दो भिन्न इति हेतोरर्थभेदाच्छब्दभेद इति व्यवहारः। समानाकारमात्रेण तु एकोऽयं शब्दो बह्वर्थ इति व्यवहारः।**

**व्याख्या**—अर्थपदयोस्तादात्म्ये व्यवहारमाह—**अर्थे**त्यादिना। **अर्थपदयोः** अर्थस्य वाच्यस्य पदस्य तद्वाचकस्य च तयोः। **तादात्म्यात्** तदात्मभावात्। **तत्तदर्थतादात्म्यापन्नः** तैस्तैरर्थैस्तदात्मभावप्राप्तः। **शब्दः** ग्रामादिः। **भिन्नः** पृथगेव। **इति** एतादृशाद् हेतोः कारणात्। **अर्थभेदात्** अर्थे यो भेदो भिन्नता तस्मात्। **शब्दभेदः** शब्देऽपि भिन्नता। **इति** इत्थम्। **व्यवहारः** प्रयोगः। **समानाकारमात्रेण** तुल्यरूपहेतुना। **तु** इति व्यवच्छेदे। **एकः अयम् शब्दः बह्वर्थः** बहव एकाधिका अर्थाः सन्ति अस्येति तादृशः नानार्थवानिति। **इति** इत्थम्। **व्यवहारः** प्रयोग इति।

अयमाशयः—शब्दानां हि स्वस्वविशिष्टार्थेनाभेदरूपेणान्वयात् शब्दो हि शब्दान्तराद् भिद्यते। तेन ह्यर्थवैभिन्न्येन शब्दवैभिन्न्यमुपजायते। एतामर्थकृतभिन्नतामाश्रित्य शब्दानां भिन्नता प्रतीतेः शब्दनानात्ववादः प्रतिष्ठापितः। यथा हि ग्रामशब्दोऽयं बह्वर्थः। ग्रामः शालासमुदायः ग्रामो दग्ध इत्यादौ ग्रामो वात्परिक्षेपः ग्रामं प्रविष्ट इत्यादौ ग्रामो मनुष्याः ग्रामो गत इत्यादौ ग्रामः स्थलं ग्रामो लब्ध इत्यादौ। इत्थं ह्यर्थभिन्नतामाश्रित्य एकस्मिन्नेव शब्देऽपि भिन्नता कल्प्यते।

अन्ये सत्यामपि अर्थवैभिन्नतायां शब्दस्य रूपमाकृतिं वाऽऽश्रित्य शब्दैकत्ववादमावदन्ति। अभेदपक्षेऽस्मिन् एकश्च शब्दो बह्वर्थं इत्याकल्प्यते, यथा अक्ष इति बिभीतके इन्द्रिये रथभागे द्यूते पाशे चार्थे वर्तते। एवमेव हरिशब्दस्तु शुकाहिकपिभेकप्रभृत्यष्टादशार्थेषु वर्तते।

एवमर्थभेदेन शब्दानेकत्वं समानाकृत्या शब्दैकत्त्वञ्चोभयमेव समर्थ्यते पण्डितैः। तदेवाऽऽह हरिरपि—

'कार्यत्वे नित्यतायां वा केचिदेकत्ववादिनः ।
कार्यत्वे नित्यतायां वा केचिन्नानात्ववादिनः ॥' इति ।

( वाक्पदीये १।७० )

न च अर्थकृतशब्दभेदे 'अग्नये त्वा जुष्टं निर्वपामि' इति वाक्ये अग्निशब्दस्य विनियोगकाले सूर्यरूपार्थदर्शनात् शब्दभेदापत्त्या तस्य वेदत्वानापत्तिरिति वाच्यं तादृशानामूहशब्दानां वेदान्तर्गतत्वस्वीकारात् । उक्तमेव हरिणाऽपि—

'मन्त्रास्तु विनियोगेन लभन्ते भेदमूहवत् ।
तान्याम्नायान्तराण्येव पठ्यते कश्चिदेव तु ॥'

इति ज्योत्स्नायां स्पष्टम् ।

हिन्दी—'अर्थ एवं पद के तादात्म्य से उन-उन अर्थों के साथ तदात्मभाव में प्राप्त शब्द भिन्न होता है' इस कारण से अर्थभेद से शब्दभेद होता है, ऐसा व्यवहार देखा जाता है। समान आकार ( रूप ) मात्र से तो 'एक यह शब्द नाना अर्थ वाला है' इस तरह का व्यवहार होता है ।

इसमें दो मतों का उल्लेख है—एक है शब्दनानात्ववाद और दूसरा है शब्दैकत्ववाद । पहला है भेदपक्ष तथा दूसरा अभेदपक्ष है । शब्दनानात्ववाद का आशय यह है कि शब्द अपने-अपने विशिष्ट अर्थों के साथ अभेदरूप से अन्वित होने के कारण दूसरे शब्द से भिन्न होता है, भले ही रूप में समान हो । जैसे—गाँव शब्द । गाँव का अर्थ है—घरों का समूह; जैसे 'गाँव जल गया' आदि में गाँव का अर्थ निश्चित क्षेत्र है । जैसे 'गाँव में प्रविष्ट हो गया' आदि में गाँव का अर्थ मनुष्य है; जैसे 'गाँव चला गया' आदि में । यह हुआ शब्दनानात्ववाद अथवा भेदपक्ष । शब्दैकत्ववाद अर्थात् अभेदपक्ष में एक ही शब्द के नाना अर्थ माने जाते हैं । जैसे अक्ष शब्द के विभीतक, इन्द्रिय, रथ का अंश, जुआ, पाश आदि अर्थ होते हैं ।

आशय यह है कि एक ही शब्द के अनेक अर्थ होते हैं । उसको लेकर शब्द का अर्थकृत भेद मानने वाले अर्थ के अनुसार शब्दों में भेद मानते हैं और अभेदपक्ष मानने वाले एक ही शब्द के अनेक अर्थ मानते हैं ।

( २१ ) सा च शक्तिस्साधुष्विवापभ्रंशेष्वपि शक्तिग्राहकशिरोमणेर्व्यवहारस्य तुल्यत्वात् । व्यवहारदर्शनेन च पूर्वजन्मानुभूतशक्तिस्मरणम् । अत एव बालानां तिरश्चां चान्वयबोधः । न हि तेषां तदैव तत्सम्भवः । यत्तु तार्किकाः—असाधुशब्देन साधुस्मरणद्वाराऽर्थबोध इत्याहुस्तन्न; साधुस्मरणं विनाऽपि बोधानुभवात् तद्वाचकसाधुशब्दमजानतां बोधानापत्तेश्च ।

व्याख्या—इत्थं शक्तिस्वरूपं निरूप्य शक्त्या आश्रयं निरूपयति—सेत्यादिना । सा तथाविधा वाच्यवाचकभावपदबोध्या । च तु । शक्तिः शब्दशक्तिः । साधुषु साधुशब्देषु । इव यथा । अपभ्रंशेषु अपशब्देषु । अपि च । भवतीति शेषः । तत्र हेतुमाह—शक्तीत्यादिना । शक्तिग्राहकशिरोमणेः शक्तेः शब्दशक्तेर्ग्राहक आपादयिता तेषां यः शिरोमणि-

मुख्यस्तस्य । **व्यवहारस्य** आवापोद्वापरूपप्रयोगस्य । **तुल्यत्वात्** समानत्वात् । यथा हि साधुशब्दे शक्तिग्राहकमुख्यहेतुभूतव्यवहारस्तथैवापभ्रंशशब्देष्वपीति न तयोः शक्तिस्वरूपभेदः इति साधुशब्देष्विव अपशब्देष्वपि शक्तिरित्याशयः । यदि व्यवहारदर्शनमेव शक्तिग्राहकं तदा जन्मसमये व्यवहारबोधकशब्दाभावाच्छक्तिग्रहो न स्यात् तदापि इष्टसाधनत्वज्ञानभावेन स्तनपानादौ प्रवृत्तिदर्शनान्न च तदा शक्तिग्रहे प्रमाणभाव एवेत्यत आह—**व्यवहारे**त्यादि । **व्यवहारदर्शनेन** आवापोद्वापरूप-प्रयोगदर्शनेन व्यवहारबोधकशब्दाभावेऽपि **पूर्वजन्मानुभूतशक्तिस्मरणं** पूर्वजन्मनि प्राग्जनुषि अनुभूतानुभवविषयीकृता सैव संस्काररूपेण स्थिता या शक्तिः शब्दशक्तिस्तस्याः स्मरणमभिबोधः । भवतीति शेषः । जन्मान्तरीयव्यवहारदर्शनं हि स्वसंस्कारद्वारा शक्तिस्मारकं भवतीत्याशयः । फलितमाह—**अत** इत्यादिना । अतः पूर्वजन्मानुभूतशक्तिस्मरणात् । **एव** हि । **बालानां** शिशूनाम् । **तिरश्चां** जडानां पश्वादीनाञ्च । **च** अपि । **अन्वयबोधः** अर्थज्ञानमिति । पश्वादीनामपि स्वजात्यनुसारेणैव प्रतिनियता भवति काऽपि प्रतिभाऽतस्तेषामप्यनादिवासनयैव तद्ग्रह इति तिरश्चामित्यस्याशयः । **तेषां** बालानां तिरश्चाञ्च । **तदा** आद्यबोधकाले । **एव** । **न** नैव । **हि** इत्यवधारणे । **तत्सम्भवः** तस्य शक्तिज्ञानस्य सम्भवः, तदानीं तद्ग्राहकसामग्रयभावात् । अत्र हि लघुमञ्जूषायाम् 'इत्यन्ये' इत्यधिकः पाठः । व्याख्यातञ्च 'अन्ये' इति पदं यथा रत्नप्रभायाम्—अनेनारुचिः सूचिता । बालादीनां प्रवृत्तौ इष्टसाधनत्वप्रकारकज्ञानस्यैव प्रयोजकत्वेन जन्मान्तरानुभवजन्योद्वुद्धसंस्कारजन्येष्टसाधनत्वप्रकारकज्ञानेनैव प्रवृत्त्युपपत्तौ पदादिनिष्ठशक्तिस्मरणस्यानुपयोगात् इति । वस्तुतस्तु मतमेवेदं नागेशसम्मतम् ।

तार्किका हि अपभ्रंशशब्देषु व्युत्पन्नानां साधुशब्दस्मरणादव्युत्पन्नानां तु शक्तिभ्रमाद् बोधः किन्तु न तत्र शक्तिरिति यदाहुस्तन्निरासाय प्रकरणमारभमाणः प्रथममाद्यपक्षमनुवदति—**यदि**त्यादिना । **यद्** यदेव । **तु** इति व्यवच्छेदे तद्विपरीतमिति । **तार्किकाः** नैयायिकाः । आहुरित्यनेनान्वयः । **असाधुशब्देन** अपशब्देन । **साधुस्मरणद्वारा** साधुशब्दस्मृत्या । **अर्थबोधः** अन्वयोपपत्तिः अर्थात् असाधुशब्देन साधुशब्दस्मरणं भवति ततो भवत्यर्थबोधो न त्वपशब्दे शक्तिरिति । **इति** इत्थम् । **आहुः** कथयन्ति । तद् दूषयति—**तदि**त्यादिना । **तत्** साधुशब्दस्मरणेनासाधुशब्दादर्थबोध इति कथनम् । **न** नैव **युक्तम्** । तत्र हेतुमाह—**साध्वि**त्यादिना । **साधुस्मरणं** साधुशब्दावधारणम् । **विना** अभावे । **अपि च** । **बोधानुभवात्** बोधस्यार्थज्ञानस्यानुभवात् अनुभूतविषयत्वात् । व्युत्पन्नानामपि साधुशब्दस्मरणाभावेऽपि अपभ्रंशशब्देभ्योऽर्थबोधो भवतीति सर्वेषामनुभवविषयत्वादित्याशयः । तादृशेऽनुभवे किं प्रमाणमित्यत आह—**तदि**त्यादिना । **तद्वाचकसाधुशब्दं** तस्य अपशब्दोपस्थापितार्थस्य वाचको बोधको यः साधुशब्दस्तम् । **अजानताम्** अबोधताम् । **बोधानापत्तेः** बोधस्य शाब्दबोधस्य अनापत्तेरप्राप्तेः । **च** इति समुच्चये । यदि हि साधुशब्दस्मरणेनैवापभ्रंशशब्दाच्छाब्दबोधो भवेत्तदा तद्वाचकसाधुशब्दज्ञानहीनानां कथं बोधो भवेदित्याशयः ।

**हिन्दी**—वह शक्ति साधु शब्दों की तरह अपशब्दों में भी होती है, क्योंकि शक्ति

के ग्राहकों में से मुख्य व्यवहार दोनों में समान होता है। व्यवहार के दर्शन से पूर्वजन्म में अनुभूत शक्ति का स्मरण होता है। इसी कारण बालक एवं पशु-पक्षियों को भी अर्थबोध होता है। उसी समय तो शक्ति के ग्राहक सामग्री का अभाव होने से उनकी शक्ति का ग्रहण करना सम्भव नहीं है।

नैयायिक अपभ्रंश शब्दों में शक्ति न मानकर प्रवुद्ध व्यक्ति को साधु शब्द के स्मरण से, अप्रवुद्धों को शक्ति के भ्रम से अपभ्रंश शब्दों से शाब्दबोध मानते हैं। उसके खण्डन हेतु कहते हैं—

जो कि तार्किक 'साधु शब्द के स्मरण द्वारा असाधु शब्द से अर्थबोध होता है' ऐसा कहते हैं। साधु शब्द के स्मरण के बिना भी असाधु शब्द से बोध का अनुभव होने से और वैसा मानने पर उसके वाचक साधु शब्द को न जानने वाले को बोध न हो पाने से भी वह मत ठीक नहीं है।

आशय यह है कि अपभ्रंश शब्दों में भी साधु शब्दों की तरह वह शक्ति होती है, क्योंकि शक्तिग्राहकों में जो मुख्य व्यवहार है, वह दोनों में समान पाया जाता है। नैयायिक इसे नहीं मानते। उनका मत है कि अपभ्रंश शब्दों में शक्ति नहीं होती। उससे अर्थज्ञान तो प्रवुद्धों को साधु शब्द के स्मरण से और अप्रवुद्धों को शक्ति के भ्रम से होता है। यह कथन ठीक नहीं बैठता कि साधु शब्द के स्मरण से ही असाधु शब्द से अर्थबोध होता है, क्योंकि साधु शब्द के स्मरण के बिना भी अपभ्रंश शब्द से ही बोध का अनुभव होता है। वैसा बोध साधु शब्द के स्मरण तक प्रतीक्षा नहीं करता। दूसरी बात यह भी है कि उसके वाचक साधु शब्द को जो नहीं जानता है उसे तो बोध नहीं हो पाएगा, लेकिन होता है। अतः नैयायिक का यह कथन ठीक नहीं है।

( २२ ) न च 'शक्तिभ्रमाद् बोधोऽसाधुशब्देषु इति वाच्यम्; निस्सन्देहप्रत्ययस्य बाधकं विना भ्रमत्वायोगात्। अत एव स्त्रीशूद्रबालादीनामुच्चारिते साधावर्थसंशये तदपभ्रंशेनार्थनिर्णयः। अत एव 'समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः' इति भाष्यम्, 'वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः।' इति हरिकारिका च सङ्गच्छते।

**व्याख्या**—नैयायिकस्य द्वितीयमपि पक्षमनूद्य दूषयति—**नेत्यादिना**। **न** नैव। **च** हि। **शक्तिभ्रमात्** शक्तिमत्त्वभ्रान्त्या। **असाधुशब्देषु** अपभ्रंशशब्देषु। **बोधः** अर्थज्ञानं भवतीति। **वाच्यं** कथनीयमिति। यद्धि नैयायिका अव्युत्पन्नानां शक्तिभ्रमादपशब्देभ्यः शाब्दबोध इति कथयन्ति, तन्न युक्तमिति। तस्यायुक्तत्वे हेतुमाह—**निस्सन्देहेत्यादिना**। **निस्सन्देहप्रत्ययस्य** संशयरहितबोधस्य। **बाधकं** विपरीतबुद्धिजनकतत्त्वम्। **विना भ्रमत्वायोगात्** भ्रान्त्यनुदयात्। भ्रमत्वं हि तद्वति तदभावप्रकारकं ज्ञानमेव। अत्र तु तन्नास्ति। न हि कश्चिदपि गगरीशब्दश्रवणानन्तरं गगरीशब्दो वाचकत्वाभाववानिति चिन्तयति। **अतः** यतो हि अपभ्रंशशब्दानामपि शक्तत्वं तस्मात् **एव** हि। **स्त्रीशूद्रबालादीनां** स्त्रियः शूद्रा बालाश्च ते आदिपदात् अल्पाधीता वा अनधीता अपि तेषाम्।

उच्चारिते अस्फुटत्वेनोक्ते । **साधौ** साधुशब्दे । **अर्थसंशये** बोधसन्देहे । **तदपभ्रंशेन** तस्य साधुशब्दस्य अपभ्रंशेनापशब्देन । **अर्थनिर्णयः** बोधविचारः असाधुशब्दानामवाचकत्वे तथा न स्यादिति । यच्चास्य साधुशब्दस्य प्रयोगे स्त्रीशूद्रबालादीनामल्पाधीतानाम-पठितानाञ्चार्थसंशये तदपभ्रंशशब्देनार्थनिर्णयः इति व्याख्यायते, तन्न; साधुशब्दज्ञाना-भावात् तदर्थे शक्त्याऽपभ्रंशेन निर्णेतुमशक्यत्वात् इति ज्योत्स्नायां स्पष्टम् । उक्तार्थे भाष्यं प्रमाणयति—**अत** इत्यादिना । **अतः** यतो ह्यपभ्रंशशब्दानां वाचकत्वं तस्मात् । **एव हि । अर्थावगतौ** अर्थस्याभिधेयस्य अवगतौ ज्ञाने । **समानायां** तुल्यायाम् । **शब्दैः** साधुशब्दैः । **अपशब्दैः** अपभ्रंशशब्दैः । **च** इति समुच्चये । **शास्त्रेण** व्याकरणादिना । **धर्मनिर्णयः** धर्मविषयकनियमः । **इति** इति उद्धरणसमाप्तौ । **इति** एतादृशाशयकम् । **भाष्यं** व्याकरणमहाभाष्यम् । उक्तार्थे हरिश्च प्रमाणयति—**वाचकत्वे**त्यादिना । **वाचक-त्वाविशेषे** वाचकत्वस्य शब्दापशब्दयोर्वाचकत्वशक्तौ । **अविशेषे** समाने । **अपि च । पुण्यपापयोः** पुण्यस्य सुकृतस्य पापस्य दुष्कृतस्य च तयोः । **नियमः** व्यवस्था—वाचकत्व-शक्तेरुभयत्र समानत्वेऽपि शब्दप्रयोगे पुण्यमपशब्दप्रयोगे पापमिति शिष्टाचारः । तेन साधव एव प्रयोक्तव्याः शब्दा इति निर्णयः । **इति** इत्थम् । **हरिकारिका** हरिप्रणीत-वाक्यपदीयकारिका । **च** इति समुच्चये । **उभयमेवेति । सङ्गच्छते** सुसङ्गता भवतीति शेषः ।

नैयायिका हि साधुशब्देष्वेवार्थाभिधानशक्तिं समर्थयन्ति । तदनुसारेण व्युत्पन्नानां हि अव्युत्पन्नोच्चारितेऽपशब्दे तद्वाचकसाधुशब्दस्मरणेनैव ज्ञानं भवति अव्युत्पन्नानां तु तत्रैव शक्तिभ्रान्त्याऽपशब्देभ्योऽर्थज्ञानं भवति । अत्र मीमांसका अपि सादृश्यात्साधु-शब्देऽप्यवगते प्रत्ययोऽवकल्पते इति समर्थयन्ति । तदनुसारेण गोशब्दमुच्चारयितुकामेन केनचिदशक्ततया गावी इत्युच्चारितम् । अपरेण ज्ञातं सास्नादिमदस्य विवक्षितः । तदर्थं गौरित्युच्चारयितुकामो गावीत्युच्चारयति । ततः शिक्षित्वाऽपरेऽपि सास्नादिमति विवक्षिते गावीत्युच्चारयन्ति । तेन गाव्यादिभ्यः सास्नादिमानवगम्यते । अनुरूपो हि गाव्यादिर्गोशब्दस्य । ( मीमांसा—शाबरभाष्यम् १।३।२८ )

वैयाकरणास्तन्न मन्यन्ते । तन्मते तु साधवोऽसाधवश्च शब्दाः साक्षादेव वाचकाः । अर्थसंशये यथास्थिति यथापात्रमुभयेनैवार्थनिर्णयः । यत्र हि असाधुशब्दानां परम्परातः प्रचलनं तत्र नैव तस्य साधुशब्दो वाचकोऽपितु अपशब्द एव । तदेवाऽऽह हरिरपि—

'पारम्पर्यादपभ्रंशा निर्गुणेष्वभिधातृषु ।
प्रसिद्धिमागता ये तु तेषां साधुरवाचकः ॥
दैवी वागवकीर्णेयमशक्तैरभिधातृभिः ।
अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः ॥' इति ।

( वाक्य० १।१५५–६ )

समानेऽपि उभयस्यैव वाचकत्वे तत्र साधुशब्दप्रयोगः पुण्यहेतुरपशब्दस्तु पापयोनि-रिति । यथाऽऽह हरिरपि—

'शिष्टेभ्य आगमात्सिद्धाः साधवो धर्मसाधनम् ।
अर्थप्रत्यायनाभेदे , विपरीतास्त्वसाधवः ॥' इति ।

( वाक्य० १।२७ )

पापनियमश्चात्र पुण्याभाव एव न तु साक्षात्पापहेतुत्वम् ।

**हिन्दी**—न तो 'शक्ति के भ्रम से असाधु शब्दों में बोध होता है' ऐसा ही कहना उचित है। जो सन्देह से रहित प्रत्यय है, उसमें बाधक के बिना भ्रमत्व का योग नहीं होता। इसी कारण स्त्री, शूद्र, बालक आदि के द्वारा उच्चारित साधु शब्दों में ( उच्चारण की अस्पष्टता आदि से ) अर्थ में संशय हो तो उसके अपभ्रंश शब्द से उसका अर्थनिर्णय होता है। इसीलिए हि शब्द एवं अपशब्दों से अर्थ का ज्ञान ( दोनों में ) समान रूप से होने पर भी शास्त्र के द्वारा धर्म का निर्णय होता है अर्थात् 'साधु शब्द का प्रयोग ही धर्म्य है' ऐसा भाष्य एवं—

'वाचकत्व शक्ति में कोई विशेष अन्तर न होने पर भी ( शब्द एवं अपशब्द में ) पुण्य तथा पाप का नियम होता है।'

इस आशय की हरि की कारिका भी सुसङ्गत हो जाती है।

आशय यह है कि वाचकत्व तो शब्द एवं अपशब्द दोनों में समान है, फिर भी साधु शब्द का प्रयोग पुण्यजनक होता है, अपशब्द का नहीं।

( २३ ) अत एवार्यम्लेच्छाधिकरणं सङ्गच्छते। तत्र हि यद्यपि आर्या यवशब्दं दीर्घशूके प्रयुञ्जते, म्लेच्छास्तु प्रियङ्गौ प्रयुञ्जते, तमेव च बुध्यन्ते, तथापि आर्यप्रसिद्धेर्बलवत्त्वाद् वेदे दीर्घशूकपरतैवेति सिद्धान्तितम्। तव तु म्लेच्छबोधस्य शक्तिभ्रममूलकत्वेन भ्रान्तिविषयरजतज्ञानस्यैव म्लेच्छप्रसिद्धेर्वस्त्वसाधकतया आर्यम्लेच्छप्रसिद्ध्योः कस्या बलवत्त्वमिति विचारासङ्गतिः स्पष्टैव। साधुत्वञ्च—व्याकरणान्वाख्येयत्वं पुण्यजनकतावच्छेदकधर्मवत्त्वं वा। तद्भिन्नत्वमसाधुत्वम्।

**व्याख्या**—ननु साधुष्विवापशब्देष्वपि शक्तिस्वीकारे कथमार्यम्लेच्छाधिकरणसङ्गतिर्भवति तत्रापभ्रंशानामशक्तत्वसमर्थनादित्यत आह—अत इत्यादिना। अतः यतो ह्यपभ्रंशानामपि वाचकत्वं तस्मात्। एव हि। आर्यम्लेच्छाधिकरणम् आर्याः शिष्टाः म्लेच्छास्तदितरे अधिक्रियते इत्यधिकरणं विषयसन्देहपूर्वपक्षसिद्धान्तप्रतिपादको वेदवाक्यार्थनिर्णायको वाक्यविशेषः आर्यम्लेच्छावधिकृत्य प्रवृत्तमधिकरणमिति आर्यम्लेच्छाधिकरणम् मीमांसादर्शनस्य अशीत्युत्तरनवशताधिकरणेष्वन्यतमं तदाख्यम्। सङ्गच्छते सङ्गतिमाप्नोति। तत्रेत्याशयमनुवदति—तत्रेत्यादिना। तत्र आर्यम्लेच्छाधिकरणे। हि यतः। यद्यपि। आर्याः शिष्टजनाः। यवशब्दं यव इति शब्दम्। दीर्घशूके दीर्घाः लम्बमानाः शूकाः अग्रभागकण्टका येषां तादृशे वस्त्वर्थे। प्रयुञ्जते व्यवहरन्ति। तं दीर्घशूकम्। एव हि। च। बुध्यन्ते जानन्ति। यवशब्दाद् दीर्घशूकमन्नविशेषमेव जानन्ति। म्लेच्छाः आर्येतराः। तु इति व्यवच्छेदे। यवशब्दम्। प्रियङ्गौ

तदाख्येऽन्नविशेषे। तं प्रियङ्गुम्। एव। च। बुध्यन्ते जानन्ति। तथापि तथास्थितावपि। आर्यप्रसिद्धेः आर्येषु शिष्टजनेषु या प्रसिद्धिः ख्यातिः तस्याः। बलवत्त्वात् दार्ढ्यात्। वेदे श्रुतौ। दीर्घशूकपरता यवशब्दस्य दीर्घशूकान्नार्थपरकत्वम्। एव न प्रियङ्गुपरकत्वम्। इति इत्थम्। सिद्धान्तितं प्रपञ्चितम्। अस्यायमाशयः—यवशब्दो वेदे दीर्घशूकेऽर्थे लोके तु प्रियङ्ग्वर्थे प्रसिद्ध इति उभयविधा अप्यर्था विकल्पेन स्वीकार्या न वेति प्राप्ते शास्त्रीयधर्मावबोधे शास्त्रप्रसिद्धिरेव बलीयसीति प्रत्यासन्नत्वादविच्छिन्नपारम्पर्यागतत्वाच्च शास्त्रीयधर्मे दीर्घशूकार्थ एव गृह्यते न तु प्रियङ्ग्वादिरिति। प्रसिद्धेर्बलवत्त्वञ्चार्याणामेव वैदिककर्मण्यधिकारात्। तयोः सादृश्यञ्च पूर्वसस्ये क्षीणे भवन्ति दीर्घशूकाः प्रियङ्गवश्चेति कथ्यत। वस्तुतस्तु मीमांसादर्शनेऽपि म्लेच्छप्रसिद्धिर्न सदा तिरस्क्रियते। यत्र यत्र म्लेच्छप्रसिद्धिरार्यप्रसिद्ध्या विरुध्यात् तत्र तत्रैवार्यप्रसिद्धिर्ग्राह्या तस्याः शास्त्रीयप्रकरणे बलवत्त्वात्। यत्र तु न तयोर्विरोधस्तत्रोभयोरेव प्रामाण्यम्। यथा पिक-नेम-तामरसादयः शब्दाः नह्यार्येषु विशिष्टार्थे प्रसिद्धा इति म्लेच्छप्रसिद्धा एवार्थास्तेषां गृह्यन्ते कोकिलार्द्धकमलाद्याः। इति। यथोक्तं तन्त्रवार्तिके—

'आर्यास्तावद् विशिष्येरन्नदृष्टार्थेषु कर्मसु।
दृष्टार्थेषु तु तुल्यत्वमार्यम्लेच्छप्रयोगिणाम् ॥' इति।

(१।३।४।९)

एतेन साधुष्विवापशब्देष्वपि शक्तिः समर्थिता भवति, तेनापशब्देऽपि शक्तिस्वीकारे एवार्यम्लेच्छाधिकरणं सुसङ्गतं भवतीत्युक्तम्। तदेवोक्तं मीमांसानुक्रमणिकायाम्—'आर्यप्रयोगो बलवान् यवादौ म्लेच्छप्रयोगात्पिकनेमशक्तिः' इति। इत्थं स्वाभीष्टमतं संसाध्य सम्प्रति तत्र नैयायिकमधिक्षिपति—तवेत्यादिना। तव नैयायिकस्य। तु इति व्यवच्छेदे तद्व्यतिरिक्तम्। म्लेच्छबोधस्य आर्येतरज्ञानस्य। शक्तिभ्रममूलकत्वेन शक्तिभ्रान्तियोनित्वात् वस्तुतः शक्त्यभावात्। भ्रान्तिविषयरजतज्ञानस्य—भ्रान्तिविषयं भ्रान्त्या समुत्पन्नं यच्छुक्तौ रजतस्य ज्ञानमवबोधस्तस्य। इव यथा। म्लेच्छप्रसिद्धेः अनार्यख्यातेः। वस्त्वसाधकतया पदार्थानवबोधकतया—यथा हि भ्रान्त्या शुक्तौ रजतज्ञानेऽपि तद्रजतं न पात्राय कल्पते तथैवापशब्दे भ्रान्त्या शक्तिज्ञानेऽपि तन्नार्थावबोधाय प्रभवतीति सिद्धान्तिततत्वात्। आर्यम्लेच्छप्रसिद्ध्योः आर्येषु म्लेच्छेषु च ये प्रसिद्धी ख्याती तयोः। मध्ये। कस्याः आर्यप्रसिद्धेः म्लेच्छप्रसिद्धेर्वा। बलवत्त्वम् प्राधान्यम्। इति इत्थम्। विचारासङ्गतिः विचारस्य विवेकस्य असङ्गतिरसम्भाव्यता। स्पष्टा स्वतः सिद्धा। एव। इति। नैयायिकास्तु अपशब्दे भ्रान्त्या शक्तिस्थितिं मन्यन्तेऽतस्तेषां मते तु आर्यम्लेच्छप्रसिद्ध्योः कतरा बलीयसीति विचार एव असङ्गतो भवत्याशयः। अतो नैयायिकमतं न केवलमस्मन्मतेनापितु मीमांसामतेनाप्यसङ्गतमिति।

असाधूनामपि शक्तत्वे साधुत्वमापद्येत शक्तस्यैव साधुत्वादित्यत आह—साधुत्वमित्यादिना। साधुत्वं शब्दस्य साधुता। च तु। व्याकरणान्वाख्येयत्वं व्याकरणेन शब्दशास्त्रेण अन्वाख्येयत्वं व्युत्पादनमार्गेणानुसन्धेयत्वम्। पुण्यजनकतावच्छेदक-

**धर्मवत्त्वम्**—पुण्यस्य सुकृतस्य या जनकता हेतुत्वं तदवच्छेदकस्तद्विशिष्टो यो धर्मस्तद्वत्त्वम्। वा इति चार्थे शास्त्रपूर्वके प्रयोगेऽभ्युदय इति कथनात्। ये च वा इत्येतस्य विकल्पमर्थं गृह्णन्ति तेषां मते व्याकरणान्वाख्येयत्वाभावेऽपि शिष्टप्रयुक्तत्वात्पुण्यजनकत्वमेव साधुत्वं यथा पृषोदरादीनामिति 'पृषोदरादीनि यथोपदिष्टमि'ति निर्देशात्। **तद्भिन्नत्वं** तस्मात् व्याकरणसिद्धशब्दाद् भिन्नत्वं पार्थक्यम्। **असाधुत्वं** शब्दस्यासाधुतेति। व्याकरणशास्त्रप्रतिपाद्यत्वं पुण्यजनकत्वञ्च साधुत्वं तद्विपरीतत्वमसाधुत्वमित्याशयः।

**हिन्दी**—इसी कारण ही मीमांसादर्शन का आर्यम्लेच्छाधिकरण सुसङ्गत होता है। वहाँ यह कहा गया है कि यद्यपि आर्य 'यव' शब्द का लम्बे नोक वाले अन्न के लिए प्रयोग करते हैं और उसी अर्थ को जानते भी हैं। म्लेच्छ तो 'यव' शब्द प्रियङ्गु के लिए प्रयोग करते हैं और उसी अर्थ को जानते भी हैं। इस तरह एक ही 'यव' शब्द का एक ओर दीर्घशूक अर्थ में तथा दूसरी ओर प्रियङ्गु अर्थ में प्रयोग होने पर भी शास्त्र-प्रकरण में आर्यप्रसिद्धि की ही बलवती होने से वेद में 'यव' शब्द का अर्थ दीर्घशूकपरक ही लेना चाहिए, प्रियङ्गुपरक नहीं, ऐसा सिद्धान्त प्रतिपादित है। आपका ( नैयायिक का ) तो म्लेच्छ के बोध का शक्तिभ्रममूलक होने से भ्रान्ति-विषयक शुक्ति में रजत के ज्ञान की तरह म्लेच्छ-प्रसिद्धि के वस्तु के असाधक होने से आर्य और म्लेच्छ की प्रसिद्धि में कौन बलवती है ? ऐसे विचार की सङ्गति न होना स्पष्ट ही है। व्याकरण के द्वारा व्युत्पाद्य होना एवं पुण्यजनकता से अवच्छेदक जो धर्म है, उससे युक्त होना ही साधुत्व है और उसके विपरीत होना असाधुत्व है।

इसका आशय यह है कि अपशब्दों में शक्ति मानने पर ही मीमांसादर्शन का आर्यम्लेच्छाधिकरण ठीक बैठता है। आर्य और म्लेच्छ की प्रसिद्धियों में कौन-सी बलवती है ? ऐसा प्रश्न तभी सम्भव है जब कि दोनों में शक्ति माना जाय। आर्यप्रसिद्धि शास्त्र का विषय है और म्लेच्छप्रसिद्धि व्यवहार का। शास्त्र के प्रसङ्ग में आर्यप्रसिद्धि बलवती होती है। अतः वेद में 'यव' शब्द दीर्घशूक-परक अर्थ का बोधक है, न कि प्रियङ्गु-परक अर्थ का। जहाँ आर्यम्लेच्छ-प्रसिद्धि में कोई विरोध नहीं है वहाँ यदि वह शब्द आर्य में विशेष अर्थ में प्रसिद्ध न हो तो म्लेच्छ-प्रसिद्ध अर्थ को ले लेना चाहिए। जैसे 'पिक' 'नेम' 'तामरस' आदि शब्द 'कोयल' 'आधा' 'कमल' अर्थ में प्रसिद्ध है। अतः मीमांसादर्शन के अनुसार भी साधु शब्द की तरह अपभ्रंश में भी शक्ति होती है। नैयायिक तो म्लेच्छ शब्दों में शक्तिभ्रम मानते हैं और भ्रान्ति से शुक्ति में रजत का ज्ञान होने पर भी जैसे उससे पात्र आदि नहीं बन सकते, वैसे ही अपशब्दों से वस्तु की सिद्धि नहीं होती; तो फिर कौन-सी प्रसिद्धि बलवती है ? ऐसा विचार ही वहाँ बेकार है।

यहाँ शब्दों का जो साधुत्व एवं असाधुत्व कहा गया है, उसमें यह जानना चाहिए कि केवल शक्ति होना ही साधुत्व का लक्षण नहीं है, लेकिन साधुत्व उसी शब्द में माना जाना चाहिए, जो व्याकरण से व्युत्पाद्य हो और पुण्यजनकधर्म से युक्त हो।

व्याकरण के द्वारा व्युत्पाद्य न होने पर भी शिष्टों के द्वारा प्रयुक्त होने के कारण उसमें पुण्यजनकत्व है; जैसे पृषोदरादि शब्द। पृषोदरादि शब्द यथोपदिष्ट ही लिए जाते हैं, सिद्ध नहीं किये जाते। जिन शब्दों में व्याकरणव्युत्पाद्यत्व ही जिसका प्रयोजन पुण्यजनकत्व अथवा शिष्टप्रयुक्तत्व भी जिसका प्रयोजन है, वही शब्द साधु है, उससे भिन्न शब्द असाधु हैं।

( २४ ) सा च शक्तिस्त्रिधा—रूढिर्योगो योगरूढिश्चेति। शास्त्रकल्पितावयवार्थमानाभावे समुदायार्थनिरूपितशक्ती रूढिर्यथा मणिनूपुरादौ। शास्त्रकल्पितावयवार्थनिरूपिता शक्तिर्योगः, यथा पाचकादौ। शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपिता शक्तिर्योगरूढिर्यथा पङ्कजपदे। तत्र पङ्कजनिकर्तृ पद्ममिति बोधात्। पद्मेऽनुपपत्तिसन्धानं सम्बन्धप्रतिसन्धानञ्च विना न लक्षणावसरः। क्वचित्तात्पर्यग्राहकवशात् केवलरूढ्यर्थस्य केवलयोगार्थस्य च बोधः। 'भूमौ पङ्कजमुत्पन्नं' 'कह्लारकैरवमुखेष्वपि पङ्कजेषु' इत्यादौ। स्पष्टञ्चेदम् 'आर्हाद०' इति सूत्रे भाष्ये।

**व्याख्या**—शक्तेर्विभागं निरूपयति—**सेत्यादिना**। **सा** वाच्यवाचकभावपदबोध्या। **च** हि। **शक्तिः** शब्दस्यार्थाववोधकसामर्थ्यम्। **त्रिधा** त्रिप्रकारा भवतीति। तदाह—**रूढिरित्यादिना**। **रूढिः योगः योगरूढिः**। **च** इति समुच्चये। तत्र रूढिमाह—**शास्त्रेत्यादिना**। **शास्त्रकल्पितावयवार्थमानाभावे**—शास्त्रेण व्याकरणशास्त्रेण कल्पिताः विभाजिता ये अवयवा अङ्गानि तेषामर्थस्य यन्मानमपेक्षा तस्याभावे विरहे। **समुदायनिरूपितशक्तिः** समुदायेन अवयवौघेन निरूपिता निर्द्धारिता या शक्तिः सामर्थ्यम्। **सा रूढिः** रूढिपदवाच्या भवतीति शेषः। तस्या दृष्टान्तमाह—**यथेत्यादिना**। **यथेति** निदर्शने। **मणिनूपुरादौ**—मणिः नूपुरः इत्यादौ। शब्दार्थक-'मण्'धातोरौणादिके इन्प्रत्यये मणिशब्दः सिध्यति। किन्तु सः अवयवलभ्यशब्दकर्तृरूपार्थस्य स्थाने समुदायार्थत्वेन रत्नविशेषं बोधयतीत्यस्य रूढिशक्तत्वम्। एवमेव 'नूपुर' इति स्तुत्यर्थकाद् नू धातोः सम्पदादित्वात् क्विपि नूः अग्रगमनार्थकात् 'पुर' धातोरिगुपधत्वेन कप्रत्यये कित्त्वेन गुणाभावे पुरः नुवः पुरो नूपूर इति सिध्यति। किन्तु स स्तुतिसम्बन्ध्यग्रगमनकत्रर्थकस्य स्थाने भूषणविशेषं समुदायार्थत्वेन बोधयतीति रूढिशक्तत्वमस्य।

योगं व्याख्याति—**शास्त्रेत्यादिना**। **शास्त्रकल्पितावयवार्थनिरूपिता**—शास्त्रेण व्याकरणेन कल्पिता व्युत्पादिता ये अवयवाः भागास्तेषां योऽर्थस्तेन निरूपिता निर्द्धारिता। **शक्तिः** अर्थाववोधकसामर्थ्यम्। **योगः** योगपदेन उच्यत इति शेषः। उदाहरणमाह—**यथेत्यादिना**। **यथा**। **'पाचक'** इत्यादौ। पाकार्थकात् 'पच्' धातोः कर्तरि ण्वुलि वोरकादेशे उपधावृद्धौ 'पाचकः' इति सिद्धः शब्दः पाकक्रियाकर्तृरूपमवयवार्थमेव बोधयति इत्यस्य योगशक्तत्वम्।

योगरूढिं व्याख्याति—**शास्त्रेत्यादिना**। शास्त्रेण व्याकरणेन कल्पिता विभक्ता ये अवयवा भागास्तेषां येऽर्थास्तैरन्वितो विशिष्टः **विशेष्यभूतः** विशेष्यत्वेन गृहीतो योऽर्थ-

स्तेन निरूपिता निर्द्धारिता। **शक्तिः** अर्थावबोधकसामर्थ्यम्। **योगरूढिः** योगरूढिपदवाच्या इति। दृष्टान्तमाह—**यथेत्यादि**। यथा **पङ्कजपदे** 'पङ्कजम्' इति पदे। पङ्के कर्द्दमे जायत उत्पद्यत इति पङ्क+जन् धातोः सप्तम्यन्तोपपदयोगे डप्रत्यये टिलोपे पङ्कजमिति। तत्र शास्त्रकल्पितावयवाः पङ्क+जन्+ड इत्येते। तदर्थः पङ्कजनिकर्तृरूपो योऽर्थस्तदन्वितो यो विशेष्यभूतार्थः पद्मरूपस्तेन निरूपिता शक्तिरत्रेति पङ्कजशब्दस्य योगरूढिशक्तत्वम्। पङ्कजशब्दस्य योगरूढिशक्तत्वे हेतुमाह—**तत्रेत्यादिना**। तत्र पङ्कजपदे **पङ्कजनिकर्तृ** पङ्कः कर्दमो जनिकर्ता उत्पत्तिहेतुर्यस्य तत्। तादृशं **पद्मं** कमलम्। **इति** इत्थम्। **बोधात्** ज्ञानात्। अत्रावयवार्थः पङ्कजनिकर्तृरूपस्तदन्वितविशेष्यभूतार्थः पद्ममित्याशयः।

ननु यत्र पङ्कजशब्दात् कुमुदादिपङ्कजातवस्तुबोधस्तत्रास्तु साधारण्येन शक्तिर्यत्र तु पद्मरूपविशेषबोधस्तत्रास्तु लक्षणेति किं समुदायशक्त्येत्यत आह—'**पद्मे**' इत्यादिना। **पद्मे** पद्मरूपेऽर्थे पङ्कजशब्दस्य **अनुपपत्तिप्रतिसन्धानम्** उपपत्तिरन्वयस्तस्याभावोऽनुपपत्तिस्तस्याः प्रतिसन्धानं मार्गणम्। **सम्बन्धप्रतिसन्धानं** सम्बन्धस्य लक्ष्यार्थस्य मुख्यार्थेन यः सम्बन्धस्तस्य प्रतिसन्धानं भावस्तम्। **च** इति समुच्चये। **विना**। **न** नैव। **लक्षणावसरः** मुख्येतरवृत्त्यवकाशः। अत्र नहि लक्षणावकाशः पङ्कजशब्दस्य पद्मेऽर्थेऽन्वयबाधाभावात् सम्बन्धाभावाच्च। तेनात्र शक्तिरेव। सा च न रूढिमात्रमवयवार्थस्यापि ग्रहणात्, न च योगमात्रं समुदायबोध्यविशिष्टार्थग्रहणात्। अतोऽस्य योगरूढिशक्तत्वमिति। तत्र विशेषमाह—**क्वचिदित्यादिना**। **क्वचित्** कुत्रचित्। **तात्पर्यग्राहकवशात्** तात्पर्यज्ञापकहेतोः। **केवलरूढ्यर्थस्य** रूढिमात्रार्थस्य। **बोधः** ज्ञानम्। क्वचित् तु तात्पर्यज्ञापकवशात् **केवलयोगार्थस्य** योगमात्रार्थस्य। **च** इति समुच्चये। **बोधः** ज्ञानम् इति। तत्राद्यमुदाहरति—**भूमौ** इत्यादिना। **भूमौ** पृथिव्याम्। **पङ्कजं** पद्मम्। **उत्पन्नम्** उद्गतम्। **इत्यादौ** इत्यादिस्थले। अत्र हि पङ्कजशब्दो योगार्थं त्यक्त्वा केवलं रूढ्यर्थमेव बोधयति, भूमौ न तु पङ्के तदुत्पत्तिकथनात्। नात्रावयवार्थावसरः। द्वितीयमुदाहरति—**कह्लारेत्यादिना**। **कह्लारकैरवमुखेषु** कह्लारं सौगन्धिकं ह्रस्वकमलं कैरवं कुमुदं तन्मुखेषु तत्प्रभृतिषु। **अपि**। **पङ्कजेषु** कर्दमोत्पन्नेषु। **इत्यादौ**। अत्र न हि पङ्कजशब्दो रूढिमपेक्षते किन्त्ववयवार्थमात्रम्; कह्लारकैरवादौ रूढ्यनुसारेण कमलत्वाभावात्। वस्तुतो द्विविधा योगरूढिस्तत्राद्या अवयवसमुदायसमुच्चयरूपमर्थं बोधयति; यथा पङ्कजमित्यादौ। अपरा तु रूढिमात्रं योगमात्रं वाऽनुसरति; यथा उपर्युक्तोदाहरणयोः।

उक्तार्थे भाष्यं प्रमाणयति—**स्पष्टमित्यादिना**। **इदं** पूर्वोक्ततथ्यम्; योगरूढ्या तात्पर्यग्राहकवशात् क्वचित् रूढ्यर्थस्य क्वचित्तु केवलयोगार्थस्य बोध इति। **'आर्हद०'** 'आर्हादगोपुच्छसङ्ख्यापरिमाणाट्‌ ठक्' ( ५।१।१९ ) इति सूत्रे पाणिनीयसूत्रे। **भाष्ये** पातञ्जलमहाभाष्ये। अयमाशयः—'आर्हादगोपुच्छसङ्ख्यापरिमाणाट्ठक्' इति सूत्रे सङ्ख्यायाः परिमाणात्पृथग्ग्रहणमन्यत्सङ्ख्या अन्यत्परिमाणमिति ज्ञापनार्थम्। तत्र परिमाणशब्दस्य प्रस्थादिमापविशेषरूढ्यर्थग्रहणे तु सूत्रस्यैवासङ्गत्या तस्य योगरूढि-

शक्तत्वं स्वीकृत्य तत्र केवलयौगिकरूपं परिच्छेदकतामात्रार्थं भाष्ये गृहीतम्। परितो मानं परिमाणमिति। उक्तं यथा रत्नप्रभायाम्—'तत्र हि सर्वतो मानार्थकपरिमाण-शब्दस्य प्रस्थादौ योगरूढिरित्युक्त्वा 'तदस्य परिमाणम्' ( पा० सू० ५।१।५७ ) 'सङ्ख्यायाः संज्ञा' ( पा० सू० ५।१।५८ ) इति सूत्रयोर्विशेष्यविशेषणभावानुपपत्ति-माशङ्क्य 'वचनादीयतो विवक्षा भविष्यति' इत्युक्तम्। रूढिपरित्यागेन परिच्छेदकत्व-मात्रमाश्रयिष्यत इति भावः। इति।

**हिन्दी**—वह शक्ति तीन प्रकार की होती है—रूढि, योग एवं योगरूढि। शास्त्र से कल्पित अवयवों के अर्थ के मान के अभाव में समुदाय के अर्थ से निरूपित शक्ति 'रूढि' है। जैसे—'मणि' 'नूपुर' आदि में। शास्त्रकल्पित अवयवों के अर्थ के द्वारा निरूपित शक्ति योग है। जैसे—पाचक आदि में। शास्त्रकल्पित अवयवों के अर्थ से युक्त विशेष्य-भूत जो अर्थ है, उसके द्वारा निरूपित शक्ति योगरूढ़ि है। जैसे—'पङ्कज' पद में। उसमें 'पङ्क में उत्पन्न होने वाला कमल' ऐसे अर्थ का बोध होता है।

पङ्कज शब्द के पद्म अर्थ में वाच्यार्थ की अनुपपत्ति विचार एवं वाच्यार्थ के साथ उसके सम्बन्ध का विचार किये बिना लक्षणा मानने का कोई अवसर नहीं है। यह कहीं तो तात्पर्य के ग्राहक होने के कारण केवल रूढि अर्थ और कहीं तो केवल योग अर्थ का ज्ञान होता है। जैसे—'भूमि में उत्पन्न पङ्कज और कह्लार, कैरव आदि पङ्कजों के होने पर भी' इत्यादि में। यह 'आर्हाद०' ( ५।१।१९ ) सूत्र के भाष्य में स्पष्ट भी है।

आशय यह है कि अवयवों के अर्थ को छोड़कर समुदाय के अर्थ का बोध जहाँ हो वहाँ रूढि होती है। जैसे—मणि में। मणि शब्द 'शब्द करना' अर्थ वाले 'मन्' धातु से इन् प्रत्यय होने पर बनता है, किन्तु यह 'मन्' (शब्द करना) इन् ( कर्ता ) दोनों अवयवों के अर्थ की उपेक्षा कर समुदाय से बोध्य 'रत्न-विशेष' अर्थ को जताता है, अतः यह रूढ़िशक्त शब्द है। जहाँ अवयवों के अर्थ का ही ग्रहण हो वहाँ योगशक्ति होती है। जैसे—'पाचक' में। यह शब्द पच् ( पकाना ) धातु से कर्त्रर्थ में ण्वुल् प्रत्यय होकर बनना है और दोनों के अर्थ को लेकर चलता 'पच्' पकाना ण्वुल् करने वाला पाचक अर्थात् पकाने वाला। अतः यह शब्द योगशक्त है। जहाँ अवयवों के अर्थ से युक्त विशेष्यभूत अर्थ का बोध हो अर्थात् अवयवों का अर्थ विशेषण हो और समुदाय का अर्थ विशेष्य हो, वहाँ योगरूढि शक्ति काम करती है। जैसे—'पङ्कज' शब्द में। पङ्कज शब्द बनता है—पङ्के जायते इति पङ्क+जन्+ड से; जहाँ पङ्क का अर्थ है कीचड़, जन् का अर्थ हैं जन्म लेना, 'ड' का अर्थ है करने वाला अर्थात् कीचड़ में जन्म लेने वाला। यह हुआ विशेषणभूत अर्थ और उससे विशेष्यभूत अर्थ है 'कमल'। अतः पङ्कज शब्द कमल अर्थ में योगरूढिशक्त है। कोई-कोई पङ्कज शब्द को कैरव आदि अर्थ में योग-शक्त मान कर पङ्कज अर्थ में लक्षणा मानते हैं, लेकिन वह ठीक नहीं है, क्योंकि उसमें पद्म अर्थ में न तो अन्वय की अनुपपत्ति है और न तो उसका वाच्यार्थ से सम्बन्ध ही बैठ पाता है। लक्षणा के लिए उक्त दोनों ही तथ्य आवश्यक हैं, जो कि इसमें नहीं हैं।

यह कहीं तो तात्पर्य के ज्ञापक होने से केवल रूढि अर्थ का, कहीं तो केवल योग अर्थ का पक्षपाती होता है। जैसे 'भूमि में उत्पन्न पङ्कज' में। यहाँ पङ्कज शब्द केवल रूढ अर्थ में प्रयुक्त हुआ है, क्योंकि पङ्कज भूमि में उत्पन्न कहा गया है, न कि पङ्क में। 'कह्लार आदि पङ्कजों में' में पङ्कज शब्द योग अर्थ जताता है, क्योंकि कह्लार आदि कमल में रूढ नहीं हैं।

**( २५ ) अश्वगन्धादिपदमोषधिविशेषे रूढम्। अश्वसम्बन्धिगन्धवत्तया वाजिशालाबोधे यौगिकम्। इदं यौगिकरूढम् इत्युच्यते। एवं मण्डपपदं गृहविशेषे रूढम्, मण्डपानकर्तरि यौगिकम्।**

**व्याख्या**—इत्थं शक्तेस्त्रैविध्यमाख्याय सम्प्रति यौगिकरूढिमुदाहरति—**अश्वगन्धे**त्यादिना। **अश्वगन्धा इति पदम्** अश्वस्य गन्धो यस्याः सा अश्वगन्धा इति यत्पदं तत्। **ओषधिविशेषे** तदाख्यौषध्यर्थे। **रूढं** रूढित्वेन शक्तं, यद्यपि न हि तत्र अश्वगन्धस्य मनागपि संसर्गः। तदेव पदम् **अश्वसम्बन्धिगन्धवत्तया**—अश्वसम्बन्धिनी या गन्धवत्ता तया वाजिगतगन्धयुक्तत्वेन। **वाजिशालाबोधे** वाजिनामश्वानां शाला भवनं तस्याः बोधे ज्ञाने। **यौगिकं** योगशक्तम्, तत्रावयवार्थोपस्थितेः। **इदम्** एतादृशं पदम्। **यौगिकरूढं** यौगिकञ्च तत् रूढञ्चेति एकमेव पदं क्वचिद् यौगिकत्वेन क्वचित्तु रूढत्वेन यत्प्रयुज्यते तदेव यौगिकरूढम्। **इति** इत्थम्। **उच्यते** कथ्यते इति। **एवमेव** एतादृशमेव। **मण्डपपदं** मण्डं पिबतीति विग्रहे 'मण्ड+पा+क' इति सिद्धं मण्डपपदम्। **गृहविशेषे** गृहरूपेऽर्थे। **रूढं** रूढिशक्तं तत्रावयवार्थाबोधनात्। तदेव पदं **मण्डपानकर्तरि** मण्डं यः पिबति तस्य बोधे। **यौगिकं** यौगिकत्वेन शक्तम्, तत्रावयवार्थमात्रबोधात्।

सामान्यतस्तु योगरूढियौगिकरूढयोस्तुल्यविषयत्वं दृश्यते, परन्तु तयोरस्ति वास्तविको भेदः। योगरूढिर्हि योगेन सहिता रूढिः अवयवार्थमादायैव कस्मिंश्चिदेकस्मिन् पदार्थे रूढत्वं प्राप्ता। उक्तमेव यौगिकार्थबुद्धिरूपसहकारिलाभाद्विशिष्टार्थोपस्थापकत्वं रूढेः योगरूढत्वमिति। तद्विपरीतं यौगिकरूढिस्तु यौगिकञ्च तत् रूढिश्चेति तत्रैव भवति यत्र यौगिकरूढचर्थौ स्वातन्त्र्येण प्रयोगे प्रतीतः। योगविशिष्टरूढितया योगरूढिर्हि शक्तेर्भेदः योगस्य रूढेश्च सम्मिलितरूपतया न यौगिकरूढिः पृथक् शक्तिः। न च भूमौ पङ्कजमुत्पन्नमित्यत्र केवलरूढचर्थस्य 'कह्लारकैरवमुखेष्वपि पङ्कजेषु' इत्यत्र केवलयोगार्थस्य बोधनात् पङ्कजपदमपि यौगिकरूढिशक्तमिति वाच्यं तस्य नानार्थकत्वाभावात् उभयत्रापि तस्मात्कमलजातेरेव बोधनात्। रूढेर्योगापहारित्वं प्रकरणाद्यभावे एव बोध्यम्। यत्र चावयवार्थानुसन्धानमूलकयौगिकार्थापेक्षया रूढचर्थस्य प्रथमोपस्थितिस्तत्र रूढचर्थबोधो यत्र तु यौगिकार्थस्य प्रथमोपस्थितत्वं तत्र तस्यैव बलवत्त्वात् यौगिकार्थबोध इति न पङ्कजादिपदात्कुमुदादिबोधवारणाय रूढेः प्रतिबन्धकत्वस्वीकारेऽपि अश्वगन्धाशब्दाद् वाजिशालाबोधे बाधा। प्रकरणाद्यभावे रूढिर्योगापहारिणी सति तु प्रकरणादिके योगार्थबोध इति अश्वगन्धापदस्य यौगिकरूढत्वमिति।

हिन्दी—अश्वगन्धा आदि पद औषधि-विशेष अर्थ में रूढ है, अश्व सम्बन्धी गन्ध से युक्त होने के कारण 'अस्तवल' के बोध में यौगिक है। यही 'यौगिक रूढ' ऐसा कहा जाता है। इसी प्रकार मण्डप पद गृह-विशेष अर्थ में तो रूढ है, किन्तु माँड पीने वाले के अर्थ में तो यौगिक ही है।

आशय यह है कि यदि एक ही पद कहीं तो रूढ अर्थ को जनावे और कहीं तो यौगिक अर्थ को तथा इसके कारण शब्द नानार्थक बन जाय तो वहाँ यौगिकरूढि मानी जानी चाहिए। यदि वैसा होने पर शब्द नानार्थक न हो तो वहाँ योगरूढि ही मान लेनी चाहिए। अश्वगन्धा शब्द रूढचर्थ में औषधि-विशेष को और यौगिक अर्थ में 'अस्तवल' को जताता है, अतः वह यौगिकरूढ अथवा रूढयौगिक है, लेकिन पङ्कज शब्द कहीं रूढ अर्थ को, कहीं योग अर्थ को जताने पर भी दोनों अवस्थाओं में कमल जाति के ही अर्थ का बोध कराता है, अतः वह यौगिक रूढ न होकर योगरूढमात्र है।

योगविशिष्ट रूढिता के कारण योगरूढि तो शक्ति का एक पृथक् भेद है, लेकिन योग एवं रूढि दोनों का सम्मिलित रूप होने के कारण यौगिकरूढि पृथक् शक्तिभेद नहीं है।

( २६ ) सैषा शक्तिः संयोगादिभिर्नानार्थेषु नियम्यते। तदुक्तं हरिणा—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दस्यार्थानवच्छेदे विशेषस्मृतिहेतवः॥ इति।

एते संयोगादयो नानार्थेषु शब्देषु शब्दार्थस्यानवच्छेदे सन्देहे तदपाकरण-द्वारा विशेषार्थनिर्णायका इति तदर्थः।

**व्याख्या**—शक्तेर्नियमनविषयमाह—सेत्यादिना। सा पूर्वोक्तरूपा। एषा त्रिविधा। शक्तिः शब्दस्यार्थावबोधनसामर्थ्यम्। नानार्थेषु एकाधिकार्थबोधकेषु शब्देषु। संयोगादिभिः संयोगविप्रयोगप्रभृतिभिः। नियम्यते एकस्मिन्नर्थे निश्चयीक्रियते। न चार्थभेदाच्छब्दभेदः इति कथं शब्दस्य नानार्थकत्वमिति वाच्यमानुपूर्व्यैक्येन नानार्थकत्वव्यवहारात्। यत्र हि शब्दस्य नानार्थकत्वं तत्र संयोगादिभिः शक्तिरेकत्र स्थिरीक्रियत इत्याशयः। उक्तार्थे हरिमनुवदति—तदित्यादिना। तत् नानार्थकेषु संयोगादिभिरेकत्र शक्तेर्नियमनम्। हरिणा वाक्यपदीयकृता तदाख्येन विपश्चिता। उक्तं कथितमिति। तदाह—संयोग इत्यादिना। संयोगः प्रसिद्धसम्बन्धः। विप्रयोगः विश्लेषः। साहचर्यं सादृश्यम्। विरोधिता मैत्र्यभावः सहानवस्थानञ्च। अर्थः प्रयोजनम्। प्रकरणं बुद्धिस्थत्वम्। लिङ्गं व्यावर्तकधर्मविशेषः। अन्यस्य स्वेतरस्य। शब्दस्य एकार्थमात्रवाचकपदस्य। सन्निधिः समभिव्याहारः। सामर्थ्यं कारणता। औचिती योग्यता। देशः ग्रामादिस्थानम्। कालः दिवसादिसमयः। व्यक्तिः स्त्रीपुंस्त्वादिः। स्वरः उदात्तादिः। इत्येते शब्दार्थस्य शब्दबोध्यार्थस्य। अनवच्छेदे अनिश्चये। विशेषस्मृतिहेतवः विशेषो विवक्षितो योऽर्थस्तस्य स्मृतेर्ज्ञानस्य हेतवः कारणानि। भवन्तीति शेषः।

कारिकांशं व्याख्याति—**एते** इत्यादिना । एते कारिकोक्ताः । **संयोगादयः** संयोगविप्रयोगाद्याः । **नानार्थेषु** एकाधिकार्थवत्सु । **शब्देषु** पदेषु । **शब्दार्थस्य** शब्दबोध्यार्थस्य । **अनवच्छेदे** सन्देहे । **तदपाकरणद्वारा** तस्य सन्देहस्य अपाकरणं दूरीकरणं तद्द्वारा । **विशेषार्थनिर्णायकाः** विशिष्टार्थनिश्चायकाः । **इति** एतादृक् । **तदर्थः** तस्याः कारिकायाः अर्थः आशयः इति ।

यत्र हि नानार्थकेषु शब्देषु तत्र कतमोऽर्थोऽभीष्ट इति सन्देहो जायते तत्र संयोगादिभिरर्थनिर्णयो भवतीत्याशयः । उक्तमपि—

'वाक्यात् प्रकरणादर्थादौचित्याद् देशकालतः ।
शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलात् ॥' इति ।

**हिन्दी**—वैसी यह शक्ति अनेक अर्थ वाले शब्दों में संयोग आदि के द्वारा नियन्त्रित होती है, जैसा कि हरि ने कहा है—संयोग, विप्रयोग, साहचर्य, विरोधिता, अर्थ, प्रकरण, लिङ्ग, दूसरे एकार्थक शब्द का सान्निध्य, सामर्थ्य, औचित्य, देश, काल, व्यक्ति, स्वर आदि नानार्थक शब्दों के अर्थ में सन्देह होने पर अभीष्ट विशेष अर्थ के ज्ञान के कारण होते हैं ।

'ये संयोग आदि नाना अर्थ वाले शब्दों में शब्द के अर्थ का अनवच्छेद अर्थात् सन्देह होने पर उस सन्देह का निराकरणपूर्वक अभीष्ट विशेष अर्थ के निर्णायक होते हैं' ऐसा इस कारिका का अर्थ है ।

( २७ ) संयोगविप्रयोगयोरुदाहरणे सवत्सा धेनुरवत्सा धेनुरिति । साहचर्यस्य रामलक्ष्मणौ इति । साहचर्यं सादृश्यं सदृशयोरेव सहप्रयोग इति नियमात् । रामार्जुनगतिस्तयोरित्यादौ विरोधेन तत् । 'अञ्जलिना जुहोति, अञ्जलिना सूर्यमुपतिष्ठते' इत्यत्र जुहोतीत्यादिपदार्थवशात् अञ्जलिपदस्य तत्तदाकाराञ्जलिपरत्वम् । 'सैन्धवमानय' इत्यादौ प्रकरणेन तत् । 'अक्ताः शर्करा उपदधाति' इत्यादौ 'तेजो वै घृतम्' इति घृतस्तुतिरूपाल्लिङ्गात् अक्ता इत्यस्य घृतसाधनकाञ्जनपरत्वम् । रामो जामदग्न्य इति जामदग्न्यपदसन्निधानात् रामः परशुरामः । 'अभिरूपाय कन्या देया' इत्यादौ अभिरूपतराय इति सामर्थ्यात् प्रतीयते ।

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः ॥

इत्यत्रौचित्यात् परशुना इत्यस्य छेदनार्थत्वम्, मधुसर्पिषा इत्यस्य सेचनार्थत्वम् गन्धमाल्याद्यैरित्यस्य पूजनार्थत्वम् । भात्यत्र परमेश्वर इत्यत्र राजधानीरूपदेशात् परमेश्वरपदं राजबोधकम् । चित्रभानुर्भाति इत्यादौ रात्रौ अग्नौ दिवा सूर्ये । व्यक्तिर्लिङ्गम् । मित्रो भाति, मित्रं भाति इत्यादौ आदौ सूर्योऽन्त्ये सुहृत् । स्थूलपृषतीम् इत्यादौ स्वरात् तत्पुरुषबहुव्रीह्यर्थनिर्णयः ।

इति शक्तिनिरूपणम्

---

**व्याख्या**—संयोगादीनामुदाहरणानि प्रस्तौति—**संयोगे**त्यादिना। संयोगः प्रसिद्ध-सम्बन्धः विप्रयोगस्तदभावस्तयोः। **उदाहरणे** निदर्शने। यथा **सवत्सा** वत्सस्तर्णको गोबालकस्तेन सहिता। **धेनुः** सकृत्प्रसूता गौः। धेनुशब्दो हि नवप्रसूत-गोमहिषी-स्त्र्यादिवाचकस्तस्यानेकार्थस्य वत्ससंयोगेन गवि वाचकत्वं नियम्यते। एवम् अवत्सा गौरित्यत्रापि वत्सविश्लेषेण। इति। **साहचर्यस्य** साहचर्यं सादृश्यं तस्य। उदाहरणं **'रामलक्ष्मणौ'** रामश्च लक्ष्मणश्च तौ इति। अत्र लक्ष्मणसाहचर्येण मेषजामदग्न्यहला-युधासितश्वेतमनोज्ञादिनानार्थकस्य रामशब्दस्य वाचकत्वं राघवेऽर्थे नियम्यते। तथैव सारसदुर्योधनपुत्रसौमित्रिप्रभृतिनानार्थकस्य लक्ष्मणशब्दस्य वाचकत्वं रामसाहचर्येण सौमित्र्यर्थे नियम्यते। साहचर्यं व्याख्याति—**साहचर्यमि**त्यादिना। साहचर्यं हि सादृश्यं न तु सहचरणम्। तथाभूते हेतुमाह—**सदृशयोरि**त्यादिना। सदृशयोः तुल्यार्हयोः। **एव हि**। **सहप्रयोगः** एकत्रव्यवहारः। **इति** इत्थम्। **नियमात्** विधानात्। सदृशयोरेव द्वयोर्वस्तुनो वा प्राणिनोः एकत्र प्रयोगसम्भवो नासदृशयोरिति। विरोधिताया उदाहरणं प्रस्तौति—**रामे**त्यादि। **तयोः** द्वयोः। **रामार्जुनगतिः** रामार्जुनयोः या गतिः सा गतिः **इत्यादौ**। **तत्** वाचकत्वनियमनम्। **विरोधेन** शत्रुभावेन। सिध्यतीति। यथा हि अनेकार्थकस्य रामशब्दस्य अर्जुनविरोधित्वात्परशुरामेऽर्थे विरोधेन वाचकत्वं नियम्यते, एवमेव कार्तवीर्यधनञ्जयवृक्षविशेषप्रभृतिनानार्थकस्य अर्जुनशब्दस्य रामविरोधित्वात् कार्तवीर्येऽर्थे विरोधेन वाचकत्वं नियम्यते। अर्थस्य तदुदाहरति—**अञ्जलिने**त्यादिना। **अञ्जलिना जुहोति**। **अञ्जलिना सूर्यम् उपतिष्ठते** उपास्ते। **इत्यत्र** इति वाक्ययोः। **जुहोतीत्यादिपदार्थवशात् जुहोति** अग्नौ करोति **उपतिष्ठते** उपास्ते इति ये पदे तयोः **अर्थवशात्** अनन्यथासिद्धफलहेतोः। **तत्तदाकाराञ्जलिपरत्वम्**—सः सः आकारो यः अञ्जलिस्तत्परत्वं तद्बोधकपरं वाचकत्वमञ्जलिपदस्येति। आद्ये होमकरणतारूप-सामर्थ्यवशात् अञ्जलिपदस्य वर्तुलगर्तरूपाञ्जल्यर्थे वाचकत्वनियमनम्, द्वितीये तु उपस्थानकरणरूपसामर्थ्यवशात् अञ्जलिपदस्य तथा करतलान्त्यसंयोजनं यथाञ्जलि-र्भवेदित्यर्थे वाचकत्वनियमनम्। तथैव 'स्थाणुं वन्दे भवच्छिदे' इत्यत्र भवच्छेदनरूप-प्रयोजनवशादनेकार्थकस्य स्थाणुशब्दस्य शम्भ्वर्थे वाचकत्वनियमनम्। प्रकरणस्य तदुदाहरति—**'सैन्धवमि**त्यादिना। **सैन्धवम् आनय** आहर **इत्यादौ**। **तत्** तात्पर्य-नियमनम्। **प्रकरणेन** प्रकरणं वक्तृश्रोतृबुद्धिस्थत्वं तेन भवतीति। यथा सैन्धवपदस्य लवणाश्वाद्यनेकार्थकस्य 'सैन्धवमानय' इत्युक्ते भोजनावसरे प्रकरणेन लवणेऽर्थे वाच-कत्वनियमनं यात्राकाले तु तत्प्रकरणेन अश्वेऽर्थे इति। **लिङ्गस्य** तदुदाहरति—**'अक्ता'** इत्यादिना। **अक्ताः** लिप्ताः। **शर्करा उपदधाति** इत्यादौ **'तेजो वै घृतम्'** इति। **घृत-स्तुतिरूपात्** घृतगुणप्रशंसनपरात्। **लिङ्गात्** विशेषसङ्केतात्। **अक्ता इत्यस्य** इति पदस्य। **घृतसाधनकाञ्जनपरत्वम्**—घृतसाधनकं घृतसंसाधितं यद् अञ्जनं लेपस्तत्परत्वं तदवबोधकत्वमिति। अक्ता इत्यस्य लिप्ता इत्यर्थः। लेपस्तु येन केनापि भवति, किन्तु 'तेजो वै घृतम्' इति घृतगुणप्रशंसनपरकाद् लिङ्गात् अक्ता इति घृतेनाक्ता इत्यर्थे अक्ता इत्येतस्य वाचकत्वनियमनमिति। अन्यस्य स्वेतरस्यैकार्थबोधकस्य पदस्य सान्निध्यात्त-

दुदाहरति—**राम** इत्यादिना । '**रामो जामदग्न्यः** जमदग्निसुतः इत्यत्र । **जामदग्न्यपदसन्निधानात्** जामदग्न्य इति यत्पदं तस्य सन्निधानात् सामीप्यात् । **रामः** परशुरामः इति । रामशब्दस्तु नानार्थकः किन्त्वत्र जामदग्न्यपदसान्निध्यादस्य परशुरामेऽर्थे वाचकत्वनियमनमिति । जमदग्निसुतो रामः इति प्रसिद्धेः । अत्र एकार्थकशब्दो जामदग्न्यो यस्य सान्निध्येन वह्न्यर्थको रामशब्दोऽपि परशुरामेऽर्थे नियमितः । सामर्थ्यं कारणता शब्दनिष्ठाऽर्थनिष्ठा वा । शब्दनिष्ठसामर्थ्यस्य तदुदाहरति—**अभिरूपायेत्यादिना** । '**अभिरूपाय कन्या देया**' इत्यादौ **अभिरूपतराय** सर्वतोभावेन योग्याय । **इति** । **सामर्थ्यात्** अभिरूपशब्दनिष्ठसामर्थ्यवशात् । **प्रतीयते** ज्ञायत इति । अभिरूपशब्दो हि कमनीययोग्यानुकूलादि नानार्थकः । अत्र तु अभिरूपपदनिष्ठकन्यादानयोग्यत्वसामर्थ्यवशात् तस्य वाचकत्वमभिरूपतरेऽर्थे वाचकत्वं नियम्यते कन्यादानकरणत्वस्य तत्रैव सत्त्वात् । अर्थनिष्ठसामर्थ्यस्य तत्तु 'मधुना मत्तः कोकिलः' इत्यादौ । अत्र वसन्त एव कोकिलं मादयितुं प्रभवतीति मधुशब्दार्थसामर्थ्यवशान्मधुशब्दस्य वसन्तार्थे नियमितं वाचकत्वमिति । औचित्यं योग्यता तस्य तदुदाहरति—**य** इत्यादिना । निम्बं निम्बवृक्षम् । यः कश्चिदपि । **परशुना** कुठारेण । **एनं** निम्बम् । यः **च** । **मधुसर्पिषा** माक्षिकघृतादिभिः । **एनं यः च** । **गन्धमाल्याद्यैः** चन्दनस्रगादिभिः । **सः** निम्बः । **सर्वस्य** निखिलस्य परशुमधुचन्दनादिप्रयोक्तुः । **कटुः** तिक्तम् । **एव** नान्यथेति । **इति** इत्थम् । **अत्र** वाक्येऽस्मिन् । **औचित्यात्** योग्यतया । **परशुना** इत्यस्य पदस्य **छेदनार्थत्वं** छेदनं खण्डनं तदर्थत्वम् । **मधुसर्पिषा** इत्यस्य । **सेचनार्थत्वम्** अभिषेकार्थत्वम् । **गन्धमाल्याद्यैः** इत्यस्य । **पूजनार्थत्वं** भूषणार्थत्वमिति । अयम्भावः—परशोश्छेदने एव, मधुसर्पिषोः सेचने एव, गन्धमाल्यादीनां पूजने एव योग्यताऽस्तीति परशुना छिनत्ति, मधुसर्पिर्भ्यामभिषिञ्चति गन्धमाल्याद्यैश्च पूजयतीति औचित्यादर्थबोधः । अत्रेदमवधेयं यत्सामर्थ्ये हि कारणता विशिष्यते औचित्यां तु तत्सम्पादनयोग्यता । 'मधुना मत्तः कोकिलः' इत्यत्र मादने वसन्तस्यैव कारणतेति मधुशब्दस्य सामर्थ्यमाश्रित्य वसन्तार्थकत्वं 'पातु वो दयितामुखम्' इत्यत्र तु प्रेयसीसाम्मुख्येनैव प्रियरक्षणमुचितमिति मुखशब्दः साम्मुख्येऽर्थे नियमितः । देशस्य तदुदाहरति—**भातीत्यादिना** । **अत्र** अस्यां नगर्याम् । **परमेश्वरः** । **भाति** शोभते । **राजधानीरूपदेशात्** वह्न्यर्थकमपि **परमेश्वरपदं** **राजबोधकं** नृपार्थपरमिति । परमेश्वरशब्दो नानार्थकः ईश्वरे राजनि सामर्थ्यवति जने च प्रसिद्धः, किन्त्वत्र राजधानीरूपदेशबलात् तदन्वयाय नृपार्थेऽस्यार्थो नियमितः । **कालः** समयस्तस्य तदुदाहरति—**चित्रेत्यादिना** । **चित्रभानुः** चित्रा भानवः किरणाः यस्येति चित्रभानुः । **भाति** शोभते इत्यत्र । **रात्रौ** निशायाम् । **अग्नौ** अग्न्यर्थे । **दिवा** दिवसकाले । **सूर्ये** तपने । **इति** । चित्रभानुपदं हि वह्नौ सूर्ये चाऽर्थे प्रसिद्धं, किन्तु वह्नेः शोभनं रात्रावेव सम्भवति, सूर्यस्य तु दिवैवेति चित्रभानुपदं दिवा सूर्येऽर्थे रात्रौ वह्न्यर्थे नियमितम् । **व्यक्तिः** रिति लिङ्गं स्त्रीपुंस्त्वादि । तस्यास्तदुदाहरति—**मित्र** इत्यादिना । '**मित्रो भाति, मित्रं भाति**' इत्यादौ । **आदौ** प्रथमे । **सूर्यः** आदित्यः । **अन्त्ये** द्वितीये । **सुहृत्** मित्रमिति । 'मित्रो भाति' इत्यत्र मित्रशब्दः पुंसि वर्तते, तेन सः सूर्येऽर्थे नियमितो लिङ्ग-

वशात् । मित्रं भाति इत्यत्र तु मित्रशब्दः क्लीवे वर्तते, तेन तस्य सुहृदर्थे लिङ्गवशाद्वाचकत्वं नियमितम् । स्वर उदात्तादिस्तस्य तदुदाहरति—स्थूलेत्यादिना । स्थूलपृषतीम् इत्यादौ । स्वरात् उदात्तादिस्वरवशात् । तत्पुरुषबहुव्रीह्यर्थनिर्णयः तत्पुरुषः—स्थूला चासौ पृषती इति, बहुव्रीहिस्तु—स्थूलानि पृषन्ति यस्याम् इति, अर्थनिर्णयः अर्थविवेकः । अत्र पूर्वपदप्रकृतिस्वरेण बहुव्रीह्यर्थनिर्णयः, 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' ( ६।२।१ ) इति सूत्रात् । अन्तोदात्तत्वे तु तत्पुरुषार्थनिर्णयः 'समासस्य' ( ६।१।२२३ ) इति सूत्रात् ।

स्वरादयः इत्यत्र पठितादादिपदात् षत्वसत्वणत्वनत्ववक्तृवोद्धव्यवैशिष्टचप्रतिभादिसहकारादिभिरपि अर्थनिर्णयः इति लघुमञ्जूषायाम् । यथा सुसिक्तमित्यत्र 'सुः पूजनार्थः, सुः पूजायाम्' ( १।४।९४ ) इति पूजार्थे सोः कर्मप्रवचनीयसंज्ञात्वेनोपसर्गत्वाभावान्न उत्तरवर्ति सस्य षत्वमिति । सुषिक्तमित्यत्र तूपसर्गस्य पूजातिरिक्तार्थः । प्रणायक इति णत्वेन प्रणयनक्रियाकर्ता अनायक इत्यस्य तु प्रगतनायकदेशबोधो णत्वाभावात् । इति ।

सुतः परशुरामस्य विष्णुमायासुकुक्षिजः ।
व्याख्याल्लोकमणिर्विप्र आद्यं शक्तिनिरूपणम् ॥ १ ॥
यथा प्रकाशका भानोः किरणाः शशिनस्तु ते ।
आह्लादकाः स्यादुभयस्वभावा किरणावली ॥ २ ॥

---

हिन्दी—संयोग एवं विप्रयोग के उदाहरण हैं—सवत्सा धेनु और अवत्सा धेनु । साहचर्य का—रामलक्ष्मणौ । साहचर्य सादृश्य ही है । सदृशों के ही साथ में प्रयोग होना चाहिए, ऐसा नियम है । उन दोनों की गति 'रामार्जुनगति' में विरोध से वह अर्थात् अर्थ का नियमन होता है । 'अञ्जलि से हवन करता है, अञ्जलि से सूर्य का उपस्थान करता है' इसमें हवन करता है इत्यादि पदों के अर्थ के कारण अञ्जलि पद का उन-उन आकार की अञ्जलि अर्थ होता है । 'सैन्धव लाओ' इत्यादि में प्रकरण से अर्थनिर्णय होता है । अक्त अर्थात् चुपड़े हुए कंकरों को वेदी के पास रखता है, में 'घृत ही तेज है' इत्यादि जो घृत की स्तुति है, उस रूप के लिङ्ग ( विशेष सङ्केत ) से 'अक्त' इसका घृत से सिद्ध अञ्जनपरक अर्थ होता है । 'जामदग्न्य राम' में जामदग्न्य पद के सन्निधान से राम का अर्थ परशुराम है । 'अभिरूप को कन्या देनी चाहिए' इत्यादि में अभिरूप से अभिरूपतर अर्थ सामर्थ्य से प्रतीत होता है । जो नीम को परशु से, जो इसको शहद एवं घी से, जो इसको गन्ध-माल्य आदि से वह सभी के लिए तीता ही होता है ।

इसमें औचित्य से 'परशु से' इसका छेदन अर्थ, 'शहद एवं घी से' इसका सेचन अर्थ, 'गन्ध-माल्य आदि से' इसका पूजन अर्थ होता है । 'यहाँ परमेश्वर शोभते हैं' इसमें राजधानी रूप देश के कारण परमेश्वर पद राजा का बोधक है । 'चित्रभानु शोभित

होते हैं' इत्यादि में चित्रभानु शब्द से रात्रि में अग्नि का दिन में सूर्य का बोध होता है। व्यक्ति का अर्थ स्त्री-पुत्र आदि लिङ्ग है। 'मित्रो भाति' 'मित्रं भाति' इत्यादि में पहले में पुंल्लिङ्ग होने से मित्र शब्द का अर्थ सूर्य और दूसरे में नपुंसकलिङ्ग होने से सुहृद है। 'स्थूलपृषतीम्' आदि में स्वर से तत्पुरुष एवं बहुव्रीहि का अर्थनिर्णय होता है।

इस प्रकार शक्ति-निरूपण समाप्त हुआ।

---

## ( २ ) अथ लक्षणानिरूपणम्

(२८) ननु लक्षणा कः पदार्थ इति चेत्, अत्र तार्किकाः—स्वशक्यसम्बन्धो लक्षणा। सा च द्विविधा—गौणी शुद्धा च।

स्वनिरूपितसादृश्याधिकरणत्वसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका गौणी। तदतिरिक्तसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका शुद्धा।

**व्याख्या**—इत्थं हि सभेदां शक्तिं सप्रपञ्चं निरूप्य सम्प्रति वृत्तेरपरभेदत्वेन लक्षणां निरूपयितुमुपक्रमते—**नन्वित्यादिना**। **नन्विति** प्रश्ने। **लक्षणा** शक्तिलक्षणाव्यञ्जनाभेदाद् वृत्तेस्त्रैविध्यं यदुक्तं तत्र लक्षणेति। **कः** कतमः। **पदार्थः** वस्तु। **इति** इत्थम्। **चेत्** यदि आकाङ्क्षाऽस्ति तदा। अत्रोच्यते इति शेषः। लक्षणावृत्तिः किं स्वरूपा इत्यत्र व्याख्यायते इत्याशयः। तत्रादौ प्रत्याख्यानाय नैयायिकमतमनुवदति—**अत्रेत्यादिना**। **अत्र** विषयेऽस्मिन्। **तार्किकाः** तर्कशास्त्रोपजीविनो नैयायिकाः। अस्य आहुरित्यनेनान्वयः। **स्वशक्यसम्बन्धः** स्वस्य स्वसम्बन्धस्य शक्यस्य शक्त्युपस्थापितार्थस्य सम्बन्धः सामीप्यसादृश्यसमवायवैपरीत्यक्रियायोगादिः कश्चन यथायोग्यसम्बन्धः। **लक्षणा** लक्षणावृत्तिविषय इति। तेन शक्यार्थसम्बद्धत्वमेव लक्षणाया लक्षणम्। अत्र ज्योत्स्नाकृतः—'यादृशानुपूर्व्यवच्छिन्नं नाम यद्धर्मविशिष्टयन्निरूपितशक्तिशून्यत्वे सति यद्धर्मविशिष्टयन्निरूपितसम्बन्धवन्निरूपितशक्तिनिरूपकं तद्धर्मप्रकारकतद्विशेष्यकबोधे तादृशानुपूर्व्यवच्छिन्नं नाम लक्षकमिति लक्षणार्थः' इति। तेन शक्तं पदं तत्परम्परासम्बन्धो लक्षणेति। तस्या भेदमाहुस्तस्या नानात्वात्—**सेत्यादिना**। **सा** शक्यपरम्परासम्बन्धरूपा लक्षणा। **च** अपि। **द्विविधा** द्विप्रकारा। **गौणी** गुणाधारिता। **शुद्धा** तदनपेक्षिका चेति। तत्र गौणीं व्याख्यान्ति—**स्वेत्यादिना**। **स्वनिरूपितसादृश्याधिकरणत्वसम्बन्धेन**—स्वं लाक्षणिकत्वेनाभिमतं पदं तेन निरूपितं निर्दिष्टं यत् सादृश्याधिकरणत्वं सादृश्यस्य गुणसाम्यस्य यद् अधिकरणत्वमाधारत्वं तस्य सम्बन्धस्तेन। **शक्यसम्बन्ध्यर्थप्रतिपादिका**—शक्यसम्बन्धी वाच्यार्थसम्बद्धो योऽर्थस्तस्य प्रतिपादिका बोधयित्री। **गौणी** गौण्याख्यभेदः। गुणसादृश्यसम्बन्धेन यः शक्यार्थसम्बन्धस्तस्य प्रतिपादिका गौणीत्याशयः। यथा 'सिंहो माणवकः'। अत्र हि सिंहपदस्य शक्यार्थो मृगेन्द्रः। अत्र स्वपदेन सिंहपदमेवाभिप्रेतम्। सिंहे ये हि शौर्यादयो गुणा विद्यन्ते तत्सदृशा एव शौर्यादयो गुणा माणवकेऽपि सन्ति। अतोऽत्र माणवके सिंहनिरूपितसादृश्यमस्ति। तत्सादृश्यस्याधिकरणं माणवकः। अतः एतादृशसादृश्याधिकरणत्वरूपसम्बधेन माणवकस्यार्थबोधो लक्षणयैव भवति। सैषा गुणसादृश्याश्रितत्वेन गौणीत्युच्यते। उक्तमेव 'सादृश्यात्तु मता गौणी' ( सा० द० २।१४ ) 'लक्ष्यमाणगुणैर्योगाद् वृत्तिरिष्टा तु गौणता'। अत्र केचित् स्वार्थसहचारिणो गुणाः शौर्यादयो लक्षणया लक्ष्यमाणाः अपि सिंहशब्दस्य माणवकार्थाभिधाने प्रवृत्तिनिमित्तमुपयान्ति अर्थात् सिंहशब्दस्य

शक्त्या सिंहत्वं प्रवृत्तिनिमित्तम्। तेन सिंहशब्दात्प्रथमं लक्षणया सिंहगतशौर्यादिगुणोपस्थितिस्ततोऽभिधया तस्मान्माणवकबोध इति वदन्ति। परे तु तन्न मन्यन्ते। तन्मते स्वार्थसहचारिगुणाभेदेन सिंहगता गुणा एव लक्ष्यन्ते न तु सिंहपदान्माणवकार्थोऽभिधीयत इति। परे तु साधारणगुणाश्रयत्वेन सिंहपदान्माणवकार्थ एव लक्ष्यते इति। तेन शौर्यादिगुणविशिष्टे लक्षणा भवतीति तन्मतम्। अतो न सामानाधिकरण्यानुपपत्तिरिति। द्वितीयभेदं व्याख्यान्ति--तदित्यादिना। **तदतिरिक्तसम्बन्धेन**--तस्मात् सादृश्याद् अतिरिक्तो भिन्नो यः सम्बन्धः सामीप्यादिस्तेन। **शक्यसम्बन्ध्यर्थप्रतिपादिका**--शक्यसम्बन्धी वाच्यसम्बद्धो योऽर्थस्तस्य प्रतिपादिका बोधयित्री। **शुद्धा** शुद्धाख्येति। शुद्धायां कार्यकारणभावादिसम्बन्धोऽपेक्षितो भवति। उपचारामिश्रणादेषा शुद्धेति। यथा 'आयुर्घृतम्' इत्यत्र घृतस्यायुर्वृद्धिकारणत्वेन कार्यकारणभावसम्बन्धमाश्रित्य घृतशब्दस्तत्सम्बद्धायुषं लक्षणया बोधयति।

**हिन्दी**--इस प्रकार वृत्ति के प्रथम भेद शक्ति का निरूपण कर अब दूसरे भेद लक्षणा का विवेचन करते हैं। तो फिर लक्षणा कौन-सी वस्तु है? ऐसी आकांक्षा हो तो; इस पर नैयायिक ( कहते हैं )--

अपने शक्य अर्थ का सम्बन्ध ही लक्षणा है। वह दो प्रकार की होती है--गौणी और शुद्धा। अपने शक्य अर्थ के द्वारा निरूपित सादृश्य के अधिकरण रूप सम्बन्ध से शक्यार्थ से सम्बन्धित अर्थ का प्रतिपादन करने वाली गौणी है। सादृश्य के अतिरिक्त अन्य ( कार्यकारणभाव ) आदि सम्बन्धों से शक्यार्थसम्बन्धी अर्थ का प्रतिपादन करने वाली शुद्धा है।

शक्य अर्थात् मुख्यार्थ से सम्बन्धित दूसरे अर्थ का प्रतिपादन करने वाली वृत्ति लक्षणा है। अर्थात् शक्ति के द्वारा उपस्थापित जो अर्थ है, उसका जो सामीप्य, सादृश्य आदि सम्बन्ध है, वही लक्षणा है। उसमें भी सादृश्यसम्बन्ध के द्वारा शक्यसम्बन्ध का प्रतिपादन करने वाली गौणी है। सादृश्य के अतिरिक्त अन्य सम्बन्ध से शक्यसम्बन्ध का प्रतिपादन करने वाली शुद्धा है। गौणी में उपचार का आरोप होता है और शुद्धा में नहीं। मीमांसक गौणी को लक्षणा का भेद नहीं मानते। उनके मत में वृत्ति का जो नियामक सम्बन्ध है, उसके रहने पर ही लक्षणा हो सकती है। जैसे कि दण्ड के संयोग से चैत्र को दण्डी कहा जाता है, वैसे ही सादृश्यसम्बन्ध से 'सिंहवान् माणवकः' ऐसी विशिष्ट बुद्धि नहीं होती। नैयायिक इसे नहीं मानते। उनके मत में विशिष्ट बुद्धि का नियामकत्व ही लक्षणा का आधार नहीं है। विपरीत लक्षणा जहाँ होती है वहाँ अपने शक्यार्थ के द्वारा निरूपित विरोध का जो अधिकरणत्व सम्बन्ध है, उसके रहने पर भी लक्षणा मानी जाती है। आलङ्कारिक भी गौणी को लक्षणा का ही भेद मानते हैं।

गौणी लक्षणा का उदाहरण है--'लड़का शेर है' और शुद्धा लक्षणा का--'घृत ही आयु है'। पहले में लड़के में शेर के उपचार का आरोप है और दूसरे में कार्यकारणभाव मात्र।

इसमें भी मत-मतान्तर हैं। कोई कहते हैं कि 'लड़का शेर है' में लक्षणा के द्वारा शेर के शौर्य आदि गुण का उपस्थापन होता है, तब अभिधा अथवा शक्ति शेर शब्द का लड़का अर्थ जनाता है। दूसरे कहते हैं कि लक्षणा तो केवल स्वार्थ के सहचारी जो गुण हैं, उनके अभेद से लड़के के गुण बतलाये जाते हैं, न कि लड़का अर्थ ही। और कुछ लोग कहते हैं कि सजातीय गुणों के आश्रय के रूप में शेर शब्द लड़का अर्थ का ही प्रतिपादन करता है। वस्तुतः इसका अर्थ होता है—'शेर में रहने वाले शौर्य आदि गुणों से युक्त विशिष्ट बालक'।

'घृत ही आयु है' में आयु की वृद्धि कार्य है और घृत उसका कारण है। दोनों में कार्यकारणभाव सम्बन्ध के होने से उसका अर्थ होता है—घृत से सम्बद्ध आयु।

(२९) प्रकारान्तरेणापि सा द्विविधा—अजहत्स्वार्था जहत्स्वार्था च। स्वार्थसंवलितपरार्थाभिधायिका अजहत्स्वार्था। तेन 'छत्रिणो यान्ति' 'कुन्तान् प्रवेशय' 'यष्टीः प्रवेशय' 'काकेभ्यो दधि रक्ष्यताम्' इत्यादौ छत्रिसहितसेना-कुन्तास्त्रसहितपुरुष-यष्टिसहितपुरुष-काकसहितसर्वदध्युपघातकबोधः। स्वार्थ-परित्यागेनेतरार्थाभिधायिकाऽन्त्या। तत्परित्यागश्च शक्यार्थस्य लक्ष्यार्थान्व-यिनाऽनन्वयित्वम्। तेन 'गां वाहीकं पाठय' इत्यादौ गोसदृशलक्षणायामपि न गोस्तदन्वयिपाठनक्रियान्वयित्वम्।

**व्याख्या**—गौणशुद्धभेदवत्या लक्षणायाः पुनर्भेदान्तरमाहुः—**प्रकारे**त्यादिना। **सा** गौणी शुद्धा चेति द्विविधा लक्षणा। **प्रकारान्तरेण** अन्येनापि प्रकारेण। **द्विविधा** द्विप्रकारा। **अजहत्स्वार्था** यत्र पदानि स्वमर्थं न जहति सा न जहति स्वमर्थं येति विग्रहात्। ज्योत्स्नायां जहति परित्यजन्ति स्वानि पदानि यमर्थं स जहत्स्वः जहत्स्वोऽर्थो यस्यां लक्षणायां सा जहत्स्वार्था, जहत्स्वार्था न भवति इत्यजहत्स्वार्था इति। **जह-त्स्वार्था** यत्र पदानि स्वार्थं जहति सा; जहाति स्वमर्थं येति विग्रहात्। आद्यां व्याख्यान्ति—**स्वार्थे**त्यादिना। **स्वार्थसंवलितपरार्थाभिधायिका**—स्वार्थेन स्वशक्यार्थेन संवलितो मिश्रितो यः परार्थः अन्यपदार्थस्तस्याभिधायिका बोधयित्री या सा। **अजह-त्स्वार्था** अनपेक्षितमुख्यार्था। लक्षणेति शेषः। यत्र शक्यार्थलक्ष्यार्थयोरुभयोः क्रियाया-मन्वयो भवति साऽजहत्स्वार्था। 'स्वसिद्धये पराक्षेपः' इत्यालङ्कारिकाः। तद्विषयमाहु-**स्तेने**त्यादिना। **तेन** लक्षणायाः अजहत्स्वार्थप्रकृतिकत्वेन। **'छत्रिणो यान्ति'** छत्रिणः छत्रावृताः छत्रयुक्ता वा यान्ति गच्छन्ति इत्यत्र। **'कुन्तान् प्रवेशय'** कुन्तान् अस्त्र-विशेषान् प्रवेशय आभ्यन्तरमानय इत्यत्र। **यष्टीः प्रवेशय** यष्टीः दण्डान् प्रवेशय अन्तरानय। **'काकेभ्यो दधि रक्ष्यताम्'** 'काकेभ्यः सर्वेभ्यः काकेभ्यः दधि रक्ष्यताम्' इत्यत्र च। छत्रीत्यादि छत्रिण इत्यस्मात् **छत्रिसहितसेना** छत्रधारि वाहिनी कुन्ता इत्यस्मात् **कुन्तास्त्रसहितपुरुषाः** कुन्ताख्यास्त्रधारि वीराः यष्टीः इत्येतस्मात् **यष्टि-सहितपुरुषाः** यष्टिसन्नद्धयष्टिवीराः काकेभ्य इत्येतस्मात् **काकसहितसर्वदध्युपघातकाः** काकप्रभृतिसर्वविधदधिदूषकपशुपक्षिणः इत्येतेषां बोधः ज्ञानमिति। जहत्स्वार्था

व्याख्यान्ति—**स्वार्थेत्यादिना**। **स्वार्थपरित्यागेन** स्वार्थस्य स्वशक्यार्थस्य परित्याग उपेक्षा तेन। **इतरार्थाभिधायिका**—इतरोऽपर एव किन्तु सम्बद्धो योऽर्थस्तस्य अभिधायिका बोधयित्री। **अन्त्या** जहत्स्वार्थेति। **तत्परित्यागः** तस्य स्वार्थस्य परित्याग उपेक्षणम्। **च** तु। **शक्यार्थस्य** शक्तिबोध्यार्थस्य **लक्ष्यार्थान्वयिना**—लक्ष्यार्थस्य येन अर्थेन सहान्वयो योगस्तेन सह। **अनन्वयित्वम्** अननुगामित्वम्, द्वयोः क्रियाया-मेकत्रान्वयाभाव इति। **तेन** तस्माद्धेतोः। **'गां वाहीकं पाठय'** इत्यादौ। **गोसदृशलक्षणायाम्**—वाहिकस्य गोगतजडत्वमान्द्यादिगुणसादृश्येऽर्थे लक्षणायामपि। **गोः** गोशब्दस्य। **न नैव**। **तदन्वयिपाठनक्रियान्वयित्वं** तेन वाही तेन सह अन्वयिनी या पाठनक्रिया तस्या अन्वयित्वमनुसारित्वमिति। न हि गौः पाठ्यतेऽपितु गोसदृशजडबुद्धिर्वाहीक एवेत्य-न्वयाभाव उक्तः। अत एवोक्तमारोपितगोत्वस्यान्वयित्वेऽपि वास्तविकस्यानन्वया-दनन्वयित्वमुक्तं शक्यस्य। 'परार्थे स्वसमर्पणम्' इति जहत्स्वार्थालक्षणम्।

**हिन्दी**—दूसरे प्रकार से भी वह लक्षणा दो प्रकार की होती है—अजहत्स्वार्था एवं जहत्स्वार्था। अपने अर्थ से संवलित दूसरे अर्थ की जो अभिधायिका है, वह अजहत्स्वार्था है। इसमें वाच्यार्थ लक्ष्यार्थ का विशेषण न होकर दोनों अर्थों का क्रिया में अन्वय होता है। जैसे 'छातावाले जाते हैं' 'कुन्तों को प्रवेश कराओ' 'लाठियों को प्रवेश कराओ' 'काकों से दही बचाई जाय' इत्यादि में छत्रियों के सहित सेना, कुन्तास्त्र सहित पुरुष, लाठी सहित पुरुष एवं काक सहित दही को बिगाडने वाले सभी पशु एवं पक्षी का बोध होता है।

अपने अर्थ का परित्याग कर दूसरे के अर्थ की अभिधायिका लक्षणा जहत्स्वार्था है। उस शक्य अर्थ का जो परित्याग है, वह शक्य अर्थ एवं लक्ष्य अर्थ का जिसके साथ अन्वय होता है, उसके साथ अन्वय नहीं होना है। इस कारण 'गां वाहीकं पाठय' (बैल वाहीक को पढाओ') इत्यादि में गौ के सदृश गुण वाले अर्थ में लक्षणा होने पर भी उसके साथ अन्वय होने वाले पाठन क्रिया के साथ गौ का अन्वय नहीं होता।

यहाँ यह ध्यान देना आवश्यक है कि अजहत्स्वार्था में शक्य अर्थ अपनी सिद्धि के लिए दूसरे अर्थ का आक्षेप करता है और इसमें शक्य एवं लक्ष्य दोनों अर्थों का क्रिया के साथ अन्वय होता है। जैसे 'कुन्ताः प्रविशन्ति'। कुन्त शब्द का अस्त्र-विशेष शक्य अर्थ अपने निर्जीव होने के कारण प्रवेश कार्य के असम्भव होने से उसमें समा-नता लाकर अपनी सिद्धि के लिए उसको धारण करने वाले पुरुष का आक्षेप करता है और दोनों मुख्य अर्थ 'कुन्त' एवं लक्ष्य अर्थ 'पुरुष' का प्रवेश क्रिया के साथ अन्वय होता है। इसके विपरीत जहत्स्वार्था में शक्य अर्थ दूसरे की सिद्धि के लिए अपने को समर्पित कर देता है और इसमें जिस क्रिया के साथ लक्ष्य अर्थ का अन्वय होता है, उसके साथ शक्य अर्थ का अन्वय नहीं होता। अन्वय होता है तो आरो-पित का ही, लेकिन वास्तविक का नहीं। इसीलिए शक्ततावच्छेदक आरोप होने पर भी स्वार्थ परित्याग सम्भव होता है।

प्रयोजन

( ३० ) सा च लक्षणा तात्स्थ्यादिनिमित्तिका। तदाह—

तात्स्थ्यात् तथैव ताद्धर्म्यात् तत्सामीप्यात् तथैव च।
तत्साहचर्यात् तादर्थ्याज्ज्ञेया वै लक्षणा बुधैः॥' इति।

तात्स्थ्यात् 'मञ्चा हसन्ति' 'ग्रामः पलायितः'। ताद्धर्म्यात् 'सिंहो माणवकः' 'गौर्वाहीकः'। तत्सामीप्याद् 'गङ्गायां घोषः' तत्साहचर्याद् 'यष्टीः प्रवेशय'। तादर्थ्याद् 'इन्द्रार्था स्थूणा इन्द्रः'।

**व्याख्या**—इत्थं लक्षणाभेदं निरूप्य सम्प्रति लक्षणानिमित्तं निरूपयन्ति—**सेत्या**दिना। **सा** पूर्वोक्तरूपा चतुष्प्रकारा। **च** अपि। **लक्षणा** तदाख्यवृत्तिः। **तात्स्थ्यादिनिमित्तिका**—तात्स्थ्यप्रभृतिकारणा। भवतीति शेषः। तात्स्थ्यं हि तत्र शक्यार्थबोध्यवस्तुनि तिष्ठतीति तत्स्थस्तस्य भाव इति। तात्स्थ्यादिनिमित्ते सत्येव लक्षणा भवति नान्यथेत्याशयः। **तत्** तात्स्थ्यादिनिमित्तम्। **आह** कथयति। तदनुवदन्ति—**तात्स्थ्यादि**त्यादिना। **तात्स्थ्यात्** तत्र शक्यार्थे तिष्ठतीति तत्स्थस्तस्य भावस्तात्स्थ्यं तस्मात्। **तथैव** एवमेव। **ताद्धर्म्यात्** तस्य शक्यार्थस्य धर्म इव धर्मो यस्य तद्धर्मस्तस्य भावस्ताद्धर्म्यं तस्मात्। **तत्सामीप्यात्** तस्य शक्यार्थस्य सामीप्यं नैकटचं तस्मात्। **तथैव** एवमेव। **तत्साहचर्यात्** तस्य शक्यार्थस्य साहचर्यं सहस्थितिस्तस्मात्। **तादर्थ्यात्** तस्य शक्यार्थस्यार्थः प्रयोजनं तदर्थस्तस्य भावस्तादर्थ्यं तस्मात्, तस्मै इदं तदर्थं तस्य भावो वा। **च** इति समुच्चये। एतेष्वन्यतमभावे। **बुधैः** विपश्चिद्भिः। **वै** इति निश्चयेन। **लक्षणा** शक्यसम्बन्धवृत्तिः। **ज्ञेया** बोध्या इति। अन्यत्राऽप्युक्तम्—

'अभिधेयेन सामीप्यात्सारूप्यात्समवायतः।
वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता॥' इति।

तदुदाहरति—**तात्स्थ्यादि**त्यादिना। **तात्स्थ्यात्** यथा **'मञ्चाः हसन्ति' 'ग्रामः पलायितः'**। अत्र हि हसनं पलायनञ्च सचेतनधर्मस्तस्य निर्जीवे मञ्चे ग्रामे चाभावान्मुख्यार्थस्य वाक्येऽन्वयाभावेन मञ्चस्थजने ग्रामनिवासिजने चार्थे लक्षणा भवति तात्स्थ्यनिमित्तेन। **ताद्धर्म्यात्** यथा **'सिंहो माणवकः' 'गौर्वाहीकः'** इत्यत्र माणवकेन सह सिंहपदशक्यार्थमृगेन्द्रस्य वाहीकेन सह गोपदशक्यार्थस्यान्वयाभावेन ताद्धर्म्यात् सिंहपदस्य तत्सहजातशौर्यादिगुणे गोपदस्य तत्सहजातजाडचाद्यवगुणेऽर्थे लक्षणा येन शौर्यादिगुणविशिष्टस्य माणवकस्य जाडचाद्यवगुणविशिष्टस्य वाहीकस्य च बोधः। **तत्सामीप्यात्** तस्य शक्यार्थस्य सामीप्यं नैकत्येनावस्थानं तस्माद्यथा **'गङ्गायां घोषः'** इत्यत्र गङ्गापदशक्यार्थप्रवाहे घोषासम्भवाद्वाक्ये तस्यान्वयाभावेन तत्समीपवर्तिनि तटेऽर्थे लक्षणा तत्सामीप्यात्। **तत्साहचर्यात्** यथा **यष्टीः प्रवेशय** इत्यत्र यष्टिपदशक्यार्थदण्डस्य प्रवेशनकार्यासम्भवेन वाक्येऽन्वयाभावात्तत्साहचर्येण तद्धारिपुरुषे लक्षणा। **तादर्थ्यात्** **'इन्द्रार्था स्थूणाः इन्द्रः'** इत्यत्र 'स्थूणपदशक्यार्थस्तम्भस्य इन्द्रपदेन सहान्वयाभावात् तादर्थ्यात् निमित्तकेऽर्थे लक्षणा।

**हिन्दी**—वह लक्षणा तात्स्थ्य आदि निमित्तों से होती है। उसे कहा गया है—

तात्स्थ्य, ताद्धर्म्य, तत्सामीप्य, तत्साहचर्य एवं तादर्थ्य निमित्तों से लक्षणा होती है—यह विद्वानों को जान लेना चाहिए।

तात्स्थ्य अर्थात् शक्य अर्थ में स्थित होने से; जैसे 'मञ्च हँसते हैं' 'गाँव भाग गया'। ताद्धर्म्य अर्थात् वाच्य अर्थ के धर्म से युक्त होने से; जैसे 'बालक शेर है' 'वाहीक बैल है'। तत्सामीप्य अर्थात् वाच्य अर्थ के निकट होने से; जैसे 'गङ्गा में गाँव है'। तत्साहचर्य अर्थात् शक्यार्थ के साथ रहने से; जैसे 'लाठियों को अन्दर भेजो'। तादर्थ्य अर्थात् वाच्य अर्थ के लिए होना; जैसे 'इन्द्र के लिए बनाया गया स्तम्भ इन्द्र है'।

किसी न किसी निमित्त को लेकर ही लक्षणा होती है। ऐसे निमित्त पाँच गिनाये गये हैं—तात्स्थ्य, ताद्धर्म्य, तत्सामीप्य, तत्साहचर्य एवं तादर्थ्य। इनके उदाहरण इस प्रकार हैं। शक्यार्थ में स्थित होने से; जैसे 'मञ्च हँसते हैं' 'गाँव भाग गया' आदि में निर्जीव होने से मञ्च का हँसना और गाँव का भागना असम्भव है, अतः मुख्यार्थ का बाध हो जाने से तात्स्थ्य निमित्त से मञ्च शब्द का 'मञ्च के ऊपर रहने वाले लोग' एवं गाँव शब्द का 'गाँव के सभी निवासी' अर्थ लक्षणा से जाना जाता है, जिसका कि वाक्य में अन्वय हो पाता है। ताद्धर्म्य निमित्त से लक्षणा का उदाहरण है—'बालक शेर है' और 'वाहीक बैल है'। इसमें बालक एवं शेर तथा बैल एवं वाहीक का अन्वय न हो पाने से उसमें स्थित शौर्य, जाड्य आदि गुणों एवं अवगुणों को लेकर उससे विशिष्ट बालक एवं वाहीक अर्थ में लक्षणा होती है। शक्यार्थ के सामीप्य को निमित्त बना कर लक्षणा जैसे 'गङ्गा में गाँव है' में है। इसमें गङ्गा शब्द का प्रवाह रूप शक्य अर्थ का गाँव के साथ अन्वय न हो पाने के कारण गङ्गा पद का तट अर्थ में लक्षणा होती है। शक्यार्थ के साहचर्य को निमित्त बना कर लक्षणा जैसे 'लाठियों को भेजो' में है। लाठी तो खुद भीतर नहीं आ सकती, अतः उसका भेजना क्रिया से अन्वय न हो पाने से उसकी लाठी लेने वाले पुरुष अर्थ में लक्षणा हो गई। तादर्थ्य से लक्षणा का उदाहरण है—'इन्द्र के निमित्त स्तम्भ इन्द्र है'। यहाँ स्तम्भ और इन्द्र का अन्वय न हो पाने से स्तम्भ का अर्थ इन्द्र के लिए स्तम्भ लक्षणा से जाना जाता है।

( ३१ ) अन्वयानुपपत्तिप्रतिसन्धानञ्च लक्षणाबीजम्। वस्तुतस्तु तात्पर्यानुपपत्तिप्रतिसन्धानमेव तद्बीजम्। अन्यथा 'गङ्गायां घोषः' इत्यादौ घोषादिपदे एव मकरादिलक्षणापत्तिस्तावताऽप्यन्वयानुपपत्तिपरिहारात्। 'गङ्गायां पापी गच्छति' इत्यादौ गङ्गापदस्य नरके लक्षणापत्तेश्च। अस्माकं तु भूतपूर्वपापावच्छिन्नलक्षकत्वे तात्पर्यान्न दोषः। 'नक्षत्रं दृष्ट्वा वाचं विसृजेत्' इत्यत्रान्वयसम्भवेऽपि तात्पर्यानुपपत्त्यैव लक्षणास्वीकारात्। एकानुगमकस्वीकारेण निर्वाहे अनेकानुगमकस्वीकारे गौरवाच्च।

**व्याख्या**—इत्थं लक्षणानिमित्तं प्रतिपाद्य सम्प्रति लक्षणाबीजं निरूपयन्ति—अन्वयेत्यादिना। **अन्वयानुपपत्तिप्रतिसन्धानम्** अन्वयस्य वाक्ये शक्यार्थोपयुक्ततायाः अनुपपत्तिरसङ्गतिस्तस्याः प्रतिसन्धानं विचारः। **च** एव। **लक्षणाबीजम्**—लक्षणायाः

तदाख्यद्वितीयवृत्तेर्बीजं मूलं ज्ञापकं वा। यदा वाक्ये शक्यार्थो हि नान्वयं लभते तदैव लक्षणाविषय उदेति इत्याशयः। यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदस्य प्रवाहरूप-शक्यार्थो घोषेण नान्वयं लभते, प्रवाहे घोषावस्थानासम्भवात्तेनात्र लक्षणया गङ्गापदात् तत्समीपवर्तितटबोधः इति। कथञ्चिद् दूरीकृतायामपि लक्षणायां न ह्यन्वयानुपपत्तिस्तद्-बीजमर्थान्तरेणाऽपि उपपत्तेः साध्यत्वादिति तत्र स्वाभीष्टमतमाह—**वस्तुत** इत्यादिना। **वस्तुतः** यथार्थतः। **तु** इति व्यवच्छेदे तद्विपरीतमिति। **तात्पर्यानुपपत्तिप्रतिसन्धानम्**—तात्पर्यस्य वक्तुराशयस्य अनुपपत्तिरसङ्गतिस्तस्याः प्रतिसन्धानं विचारः। **एव** इत्ययोगव्यवच्छेदः नान्य इति। **तद्बीजं** तस्या लक्षणायाः बीजं ज्ञापकमिति। **न** ह्यन्वयानुपपत्तिमात्रं लक्षणाबीजमपितु तात्पर्यानुपपत्तिरेव तदिति। तत्र तथाभवने हेतुमाह—**अन्यथे**त्यादिना। **अन्यथा** तात्पर्यानुपपत्तिस्थले अन्वयानुपपत्तिस्वीकारे लक्षणाबीजत्वेन। **'गङ्गायां घोषः' इत्यादौ** इति पदे। **घोषादिपदे** घोष इति पदे। उभयत्र आदिपदमेतादृशोदाहरणान्तरग्राहकम्। **एव** न तु गङ्गापदे। **मकरादिलक्षणा-पत्तिः** नक्रार्थे लक्षणायाः सम्भावना। **तावता** मकरार्थलक्षणया। **अपि हि**। **अन्वयानुपपत्तिपरिहारात्**—अन्वयस्य शक्यार्थस्य वाक्ये उपयोगितायाः अनुपपत्ति-रसङ्गतिरप्राप्तिर्वा तस्याः परिहारात् निराकरणात्। गङ्गायां घोष इत्यत्र गङ्गापदस्य प्रवाहरूपार्थस्य घोषपदेऽन्वयानुपपत्तौ घोषपदे एव मकरार्थे लक्षणा सम्भवति, यदि हि अन्वयानुपपत्तिरेव लक्षणाबीजत्वेन गृह्यते चेत्, यतो हि घोषपदे मकरलक्षणायामपि अन्वयोपपत्तिर्भवत्येव प्रवाहेऽपि मकरसम्भवात्, किन्तु तेन यत्प्रयोजनमादाय लक्षणा समुपास्यते सत्यपि वाचके शब्दे तेन तन्न संसूचितं भवति। घोषपदे मकरलक्षणाऽपि सामीप्यसम्बन्धेनैव। **तथैव 'गङ्गायां पापी गच्छति' इत्यादौ** इत्यादिवाक्ये। **गङ्गापदस्य नरके** नरकेऽर्थे। **लक्षणापत्तेः** लक्षणाविषयोदयात्। **च** अपि तावताप्यन्वयोपपत्तेरिति। **अस्माकं** तात्पर्यानुपपत्तिरेव लक्षणाबीजमिति समर्थकानाम्। **तु** इति व्यवच्छेदे त्वद्विपरीतम्। **भूतपूर्वपापावच्छिन्नलक्षकत्वे** भूतपूर्वं पूर्वमेवाचरितं यत्पापं दुष्कृतं तेन अवच्छिन्ने विशिष्टे लक्षकत्वे लक्षणाविषयत्वे। **तात्पर्यात्** आशयात्। **न नैव**। **दोषः** त्रुटिरिति। अत्र पापीपदस्य पूर्वाचरितदुष्कृते जने तात्पर्यात् तत्प्रायश्चित्ताय स गङ्गायां गच्छतीति आशयेन न गङ्गापदे नरकलक्षणासम्भवः। तदेवोदाहरणान्तरेण प्रतिपादयति—**नक्षत्र**मित्यादिना। **नक्षत्रम्** ऋक्षम्। **दृष्ट्वा** विलोक्य। **वाचं** गिरम्। **विसृजेत्** त्यजेत्। वदेदित्याशयः। **इत्यत्र** इति वाक्ये। **अन्वयसम्भवे** शक्यार्थस्य वाक्येऽन्वयोपपत्तौ। **अपि च**। **तात्पर्यानुपपत्त्या** रात्रौ इति तात्पर्यस्यालाभेन। **एव हि**। **लक्षणास्वीकारात्** लक्ष्यार्थादानात्। यदा कदा दिवाऽपि नक्षत्रदर्शनं सम्भवति खग्राससूर्यग्रहणादौ, किन्तु मौनभङ्गस्तु रात्रावेव निर्दिष्टोऽतः 'नक्षत्रं दृष्ट्वा' इत्येतस्य रात्रौ इति तात्पर्यं लक्षणया गृह्यते। न चात्रान्वयानुपपत्तिः किन्तु तात्पर्यानुपपत्तिरेवेति।

न हि सर्वत्र तात्पर्यानुपपत्तेर्लक्षणाबीजत्वे किञ्चिन्मानं तेन यत्र तात्पर्यानुपपत्ति-स्तत्र तदेवास्तु अन्यत्र तु अन्वयानुपपत्तिरपि तत्स्यादित्याकाङ्क्षायामाह—**एके**त्यादिना। **एकानुगमकस्वीकारेण**—एकमेवानुगमकं ज्ञापकं तस्य स्वीकारेण ग्रहणेन। **निर्वाहे**

कार्यसिद्धौ। **अनेकानुगमकस्वीकारे**—अनेकस्य एकाधिकस्य अनुगमकस्य ज्ञापकस्य स्वीकारे समर्थने। **गौरवात्** श्रमाधिक्यात्। **च** इति। **अयमाशयः**—नैयायिका हि अन्वयानुपपत्तिप्रतिसन्धानमेव लक्षणाबीजं मन्यन्ते, परे तु तात्पर्यानुपपत्तिप्रतिसन्धानमेव तद्बीजं मन्यन्ते। तन्मते यदि हि अन्वयानुपपत्तिप्रतिसन्धानमेव लक्षणाबीजं स्यात्तदा 'गङ्गायां घोषः' इत्यत्र घोषपदे मकरादिलक्षणयाऽपि तत्सिद्धिः स्यान्न च तेन तात्पर्योपलब्धिः। एवमेव 'गङ्गायां पापी गच्छति' इत्यत्र पूर्वपक्षमात्रग्रहणे तु गङ्गापदे नरकलक्षणा स्यात्तावताऽप्यन्वयोपपत्तेः। तात्पर्यग्रहणे तु पापिपदस्य पूर्वोपात्तपापे जने लक्षणया न तथाऽऽपत्तिः। तथैव 'नक्षत्रं दृष्ट्वा वाचं विसृजेदि'त्यत्र यदा कदा दिवाऽपि नक्षत्रदर्शनसम्भवादन्वयलाभेऽपि तेन रात्राविति यत्तात्पर्यं तस्यालाभेनेव तत्र लक्षणा भवति।

केचिद्वदन्ति यन्न हि सर्वत्र तात्पर्यानुपपत्तिरपि। 'आयुर्वै घृतम्' 'यजमानः प्रस्तरः' इत्यादौ न हि तात्पर्यानुपपत्तिरपितु अन्वयानुपपत्तिरेव। तेन अन्वयतात्पर्यान्यतरानुपपत्तिर्हि लक्षणाबीजत्वेन स्वीकार्येति तेषां पक्षः। तत्र तात्पर्यानुपपत्तिरूपैकानुगमकस्वीकारेणैव निर्वाहसम्भवात् अनेकानुगमकस्वीकारे गौरवाच्च तात्पर्यानुपपत्तिरेव लक्षणाबीजत्वेन ग्राह्येति ग्रन्थकृदाशयः। एतदेवोक्तं ज्योत्स्नाकृता—'एतदेव मनसि निधाय वस्तुतस्त्वित्यादिना गौरवाच्चेत्यन्तेनोक्तं महाविदुषा नागेशभट्टेन।' इति।

**हिन्दी**—शक्यार्थ का वाक्य में अन्वय न हो पाने का विचार ही लक्षणा का बीज है। यथार्थ तो यह है कि शक्य अर्थ का वाक्य में तात्पर्य ( आशय ) की उपपत्ति न हो पाने का विचार ही लक्षणा का बीज है। यदि ऐसा न हो तो 'गङ्गा में घोष हैं' में घोष पद में मकर अर्थ में लक्षणा हो जाय, क्योंकि उतने से भी अन्वय की अनुपपत्ति का तो परिहार हो जाता है। इसी तरह 'गङ्गा में पापी जाता है' में केवल अन्वय की अनुपपत्ति की लक्षणा का बीज मानने पर गङ्गापद का नरक अर्थ में लक्षणा हो सकती है, लेकिन यह वक्ता को कथमपि अभीष्ट न होगा। तात्पर्य की अनुपपत्ति को लक्षणा का बीज मानने वाले हम लोगों के मत में तो पापी पद का पहले पाप किये व्यक्ति के अर्थ में तात्पर्य होने से दोष नहीं है। 'नक्षत्र को देखकर मौन तोड़े' इसमें कभी-कभी दिन में नक्षत्र का देखना सम्भव होता है, अतः अन्वय की अनुपपत्ति तो एकदम नहीं है, वहाँ रात्रि का जो तात्पर्य है उसकी अनुपपत्ति से ही लक्षणा को मानना पड़ेगा।

कुछ लोग कहते हैं कि तात्पर्य की अनुपपत्ति भी सर्वत्र सम्भव नहीं है। 'घृत ही आयु है' में तात्पर्य की अनुपपत्ति न होने पर भी अन्वय की अनुपपत्ति मात्र से लक्षणा मानी जाती है। अतः अन्वय एवं तात्पर्य में से किसी एक की अनुपपत्ति को लक्षणा का बीज मानना पड़ेगा। इस पर ग्रन्थकार का कहना है कि एक ही ( तात्पर्य रूप ) के स्वीकार से निर्वाह हो जाने के कारण अनेक ज्ञापकों का स्वीकार करना गौरव पड़ता है। अतः तात्पर्य की असङ्गति के विचार को ही लक्षणा का बीज माना जाना चाहिए।

( ३२ ) विशिष्टार्थबोधकशब्दस्य पदार्थैकदेशे लक्षणायां जहदजहल्लक्षणेति व्यवहरन्ति वृद्धाः। वाच्यार्थे किञ्चिदंशत्यागः कञ्चिदंशपरिग्रहश्च। अत्र ग्रामैकदेशे पटैकदेशे च दग्धे 'ग्रामो दग्धः' 'पटो दग्धः' इति व्यवहारः। 'तत्त्वमसि' इत्यत्र सर्वज्ञत्वाल्पज्ञत्वयोस्त्यागः, शुद्धचैतन्ययोरभेदान्वयः।

**व्याख्या**—लक्षणायास्तृतीयमपि भेदं निरूपयति प्राचां मतमनुसृत्य—**विशिष्टे**त्यादिना। **विशिष्टार्थबोधकशब्दस्य**—विशिष्टो वस्तुविशेषसम्बद्धो योऽर्थोऽभिधेयस्तस्य बोधको वाचको यः शब्दस्तस्य। **पदार्थैकदेशे**—पदार्थस्य पदबोधितार्थस्य एकदेशे कस्मिंश्चिद्भागे। **लक्षणायां** लक्षणावृत्तिविषयत्वे। **जहदजहल्लक्षणा**—जहति अजहति च पदानि स्ववाच्यार्थं यस्यां सा जहति अजहति च स्वानि यं सः तादृशोऽर्थो यस्यां सा वा तादृशी या लक्षणा सा तदाख्यलक्षणाभेदः। **इति** इत्थम्। **वृद्धाः** प्राञ्चो विशेषेण वेदान्तिनः। वदन्तीति शेषः। तदेव व्याख्याति—**वाच्यार्थे** इत्यादिना। **वाच्यार्थे** शक्यार्थे। **किञ्चिदंशत्यागः** एकदेशत्यागः। **किञ्चिदंशपरिग्रहः** अन्यदेशग्रहणम्। चेति। तन्निदर्शयति—**अत्रे**त्यादिना। **अत्र** प्रसङ्गेऽस्मिन्। **ग्रामैकदेशे** ग्रामस्य एकभागे। **पटैकदेशे** पटस्य एकभागे। **च** हि। **दग्धे** अग्निसाद्भूते। **ग्रामो दग्धः। पटो दग्धः। इति। व्यवहारः** प्रयोगः। अत्र हि ग्रामस्य पटस्य च यावान् भागो दग्धस्तावतो ग्रहणमवशिष्टभागस्य त्याग इति जहदजहल्लक्षणाऽत्र। अत एवोक्तं शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधजनिका जहदजहल्लक्षणेति। एवमेव **तत्त्वमसि** ( तत् त्वम् असि ) **इत्यत्र** इति महावाक्ये। **सर्वज्ञत्वाल्पज्ञत्वयोः** तदित्येतस्य सर्वज्ञचैतन्यरूपे शक्यार्थे सर्वज्ञत्वरूपैकांशस्य त्वमित्येतस्य अल्पज्ञचैतन्यरूपे शक्यार्थे अल्पज्ञत्वरूपैकांशस्य च तयोः। **त्यागः** हानम्। **शुद्धचैतन्ययोः**—उभयगतसर्वज्ञत्वाल्पज्ञत्वावशिष्टभागभूततद्रहिततत्पदत्वं पदार्थभूतशुद्धचैतन्ययोः। **अभेदान्वयः** उभयोरेवाभेदेन अन्वयः।

अयमाशयः—केचित्प्राञ्चो विशेषेण वेदान्तिनः खलु लक्षणायाः जहदजहत्स्वार्थाख्यं तृतीयमपि भेदं समर्थयन्ति। तदनुसारेण तत्त्वमसि इति महावाक्ये तत्पदस्य ब्रह्मगतसर्वज्ञत्वचैतन्यरूपः शक्यार्थः त्वमिति पदस्य जीवगताल्पज्ञत्वचैतन्यरूपः शक्यार्थः। तत्र अर्थैकदेशभूतयोः सर्वज्ञत्वाल्पज्ञत्वयोस्त्यागः उभयगतशुद्धचैतन्ययोः जीवब्रह्मणोर्ग्रहणम्। एवमेव पटैकदेशे दग्धे पटो दग्धः, ग्रामैकदेशे दग्धे ग्रामो दग्ध इति व्यवहारः। तत्र उभयत्र अग्निसाद्भूतभागस्य ग्रहणमवशिष्टभागस्य त्याग इति। इयमेव भागलक्षणा इत्यप्युच्यते।

अन्ये त्वेतादृशस्थले लक्षणां न मन्यन्ते। यथा हि 'घटोऽनित्यः' इत्यत्र अनित्यत्वस्य घटवाच्यार्थैकदेशघटत्वेन सहान्वयाभावेऽपि विशेष्यभूतघटव्यक्तौ अन्वयस्तथैव तत्त्वमसि इत्यत्र विशिष्टचैतन्ययोरभेदान्वयाभावेऽपि शक्यार्थभूतविशेष्यरूपचैतन्ययोः परस्परमन्वयः। अतो नायं लक्षणाया विषय इति। महाभाष्यकृदपि समुदायेषु प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्ते इति नैतादृशस्थले लक्षणामनुमन्यते। तदनुसारेण 'ग्रामो दग्धः' इत्यत्र दग्धपदे दग्धोऽस्यास्तीति अर्शआदित्वादचं मत्वा दग्धभागसहितो ग्राम इत्यर्थं इति। अन्ये तु 'तत्त्वमसि' इत्यत्र जहदजहल्लक्षणायाः सत्त्वेऽपि 'ग्रामो दग्ध' इत्यादौ

जहल्लक्षणैव निर्वाहः, स्वाकदेशत्यागेऽपि स्वार्थैर्थत्यागस्य सत्त्वात्। अजहल्लक्षणया तु न निर्वाहो नञः प्रतियोगितावच्छेदकावच्छिन्नाभावबोधकत्त्वादिति।

हिन्दी—विशिष्ट अर्थ का बोधक शब्द का पदार्थ के एक भाग में लक्षणा होने पर जहदजहल्लक्षणा का वृद्ध जन व्यवहार करते हैं। इसमें वाच्य अर्थ में कुछ अंश का त्याग होता है और कुछ अंश का ग्रहण भी। इसमें गाँव का एक भाग जलने पर, कपड़े का एक भाग जलने पर—'गाँव जल गया' 'कपड़ा जल गया' ऐसा व्यवहार होता है। इसी तरह 'तत्त्वमसि' ( वह तुम ही हो ) में सर्वज्ञत्व एवं अल्पज्ञत्व का त्याग एवं शुद्धचैतन्यों का अभेद रूप से अन्वय होता है।

इसका आशय यह है कि कुछ पुराने विद्वान् खाशकर वेदान्ती जहदजहल्लक्षणा नामक लक्षणा के एक तीसरे भेद को भी मानते हैं। इसमें शक्यार्थ का कुछ अंश का ग्रहण होता है और कुछ अंश का त्याग। जैसे गाँव के एक भाग के जलने पर 'गाँव जल गया' और कपड़े के एक भाग के जलने पर 'कपड़ा जल गया' ऐसा व्यवहार होता है। इसमें जले हुए भाग का ग्रहण एवं अवशिष्ट भाग का त्याग होता है। 'तत्त्वमसि' में तत् का अर्थ है—सर्वज्ञत्व चैतन्य एवं त्वम् का अर्थ है—अल्पज्ञत्व चैतन्य। 'तत्' से सर्वज्ञत्व का और 'त्वम्' से अल्पज्ञत्व का जो अंश है, उसे छोड़ दिया जाता है और दोनों में शुद्ध चैतन्य का ही ग्रहण कर दोनों का अभेद अन्वय मानकर ब्रह्म एवं जीव को अभेद माना जाता है।

अन्य विद्वान् इसे नहीं मानते। उनका कहना है कि 'तत्त्वमसि' में विशिष्ट चैतन्य में अभेदान्वय न हो पाने पर भी वाच्यार्थरूप विशेष्यभूत चैतन्यों में परस्पर अन्वय शक्ति से ही हो पाता है। जैसे 'घट अनित्य है' में पद के जातिरूप अर्थ घटत्व के साथ अनित्यत्व का अन्वय न हो पाने पर भी विशेष्यभूत घट व्यक्ति में तो अन्वय हो पाता है। अतः ऐसे स्थलों में लक्षणा का कोई प्रयोजन नहीं है। 'गाँव जल गया' में भी समुदाय अर्थ वाले शब्द अवयव को भी कहने के लिए प्रयुक्त होते हैं। जैसे घृत शब्द का प्रयोग एक-एक बूंद के लिए भी होता है और समुदाय के लिए भी। पञ्चाल शब्द का प्रयोग एक प्रदेश के लिए होता है और उसके एक भाग के लिए भी। अतः 'गाँव जल गया' का अर्थ होगा—जले हुए भाग से युक्त गाँव।

मीमांसक

( ३३ ) स्वबोध्यसम्बन्धो लक्षणा इति केचित्। गभीरायां नद्यां घोष इत्याद्यनुरोधात्। तथाहि—न तावद् गभीरपदं तीरलक्षकम्, नद्यामित्यनन्वयापत्तेः। न हि तीरं नदी। अत एव न नदीपदेऽपि, गभीरपदार्थानन्वयात्। न हि तीरं गभीरम्। न च प्रत्येकं पदद्वये सा, विशिष्टनदीबोधानापत्तेः। तस्मात् समुदायबोध्यगभीरत्वविशिष्टनदीपदार्थः तत्सम्बन्धो लक्षणेति।

**व्याख्या**—ननु स्वशक्यसम्बन्धो लक्षणा इत्युक्तं शक्तत्वं तु पदस्यैव भवति, न तु वाक्यस्येति। वाक्यार्थस्य वाक्यबोध्यत्वेन वाक्यार्थेऽपि लक्षणाविषयत्वापादकं मीमांसकमतमनुवदति—**स्वेत्यादिना**। **स्वबोध्यसम्बन्धः** स्वस्य शक्तपदस्य तादृशपदसमुदाय-

रूपवाक्यस्य च बोध्यो बोधविषयः पदार्थो वाक्यार्थो वा तेन सह यः सम्बन्धः सामीप्यादिस्थितिः। सः **लक्षणा** लक्षणावृत्तिविषयः इति। **इति** इत्थम्। **केचित्** केचन विचारकाः, विशेषेण मीमांसकाः वेदान्तिनश्च। वदन्तीति शेषः। **गभीरायां** निम्नायाम्। **नद्यां** सरिति। **घोषः** ग्रामः। **इत्याद्यनुरोधात्** इत्यादिवाक्ये तदावश्यकत्वात्। तदेव प्रतिपादयितुमुपक्रमते तन्मतमनुसृत्य—**तथाहि** इति। व्याख्यानेऽत्र। **तावत्** प्रथमम्। **गभीरपदम्**। **न**। **तीरलक्षकं** तीरेऽर्थे लक्षणाविषयमिति। तत्र हेतुमाह—**नद्यामित्यादिना**। नद्याम् इति सप्तम्यन्तपदेन सह। **अनन्वयापत्तेः**—अन्वयासम्भवात् तीरभिन्ना नदीति बोधापत्तेस्तीरनद्योरभेदस्यासम्भवात्। **न**। **हि** च। **तीरं** तटमेव। **नदी** सरित्। **अतः** नद्यास्तीरत्वाभावेन। **नदीपदे अपि न** नैव तद्विषयता। **गभीरपदार्थानन्वयात्**—गभीरपदस्य योऽर्थस्तस्यान्वयासम्भवात्। **न**। **हि** च। **तीरं** तटम्। **गभीरं** निम्नं भवति। **न** नैव। **च**। **पदद्वये** तीरपदे नदीपदे च। **प्रत्येकम्**। **सा** लक्षणा। तथा सति **विशिष्टनदीबोधानापत्तेः**—विशिष्टा गभीराभिन्ना या नदी इति बोधस्यानापत्तेरप्राप्तेः तथा सति तु गभीरतीराभिन्नं यन्नदीतीरमित्येव बोधात्। **तस्मात्** तत्तत्पदे लक्षणाया असम्भवात्। **समुदायबोध्यगभीरत्वविशिष्टनदीपदार्थः**—गभीरनदीपदयोः यः समुदायस्तेन बोध्यः ज्ञाप्यः गभीरत्वविशिष्टा निम्नत्वधर्मपरिचायिता नदी एव पदार्थः पदस्यार्थः **तत्सम्बन्धस्तेन** गभीरत्वविशिष्टनदीपदार्थेन सह सम्बन्धः। **लक्षणा** लक्षणाविषय इति।

**अयमाशयः**—स्वशक्यसम्बन्ध एव लक्षणेति स्वीकारे तस्य पदमात्रविषयत्वेन न हि वाक्यार्थे कथमपि लक्षणा स्यात्तत्र शक्तेरभावात्। तथा सति गभीरायां नद्यां घोषः इत्यत्र लक्षणाविषयत्वं नापद्येत। किञ्च 'गभीरत्वविशिष्टा या नदी तत्तीरे घोषः' इत्यर्थस्तत्राभीष्टः। स च पदलक्षणया कथमपि नाप्तुं शक्यते। यतो हि यदि नदीपदे तीरलक्षणा क्रियते तदा गभीरे नदीतीरे घोष इति बोधः स्यात् किन्तु न हि तीरं गभीरम्। यदि हि गभीरपदे तीरलक्षणा क्रियते तदापि तीराभिन्ना नदीति बोधापत्तिः स्यात्, साऽप्यसङ्गतैव तीरनद्योरभेदस्य बाधात्। पदद्वये एव प्रत्येकं लक्षणास्वीकारेऽपि न कार्यसिद्धिः गभीरपदस्य गभीरतीरे नदीपदस्य नदीतीरे लक्षणा स्याद्येन 'गभीरतीराभिन्ननदीतीरे घोषः' इत्यर्थबोधः स्याद्यो हि नाभीष्टः। यत्तु गभीरपदं नदीपदञ्चोभयमपि गभीरत्वविशिष्टनदीतीरलक्षकं तदा एकपदादर्थप्रत्ययेऽपरपदं तात्पर्यग्राहकमिति चेन्न, कस्य लक्षकत्वं कस्य वा तात्पर्यग्राहकत्वमिति विनिगमनाविरहात्। न च नदीपदस्य द्रव्यवाचकतया साक्षात्सम्बन्धानुरोधेन तत्रैव सेति वाच्यं, गभीरपदस्याऽपि नित्यं गुणिवाचकतया तेनाऽपि साक्षात्सम्बन्धस्यैव सत्त्वात्। अतः समुदाये एव लक्षणा स्वीकार्या। तेन स्वबोध्यसम्बन्धो लक्षणेति स्वीकार्यैवेति।

**हिन्दी**—किसी-किसी के मत में अपने पद एवं पदसमुदाय से बोध्य जो अर्थ है, उसके साथ सम्बन्ध ही लक्षणा है। ऐसा (गहरी) 'नदी में घोष ( गाँव ) है' इत्यादि वाक्य के अनुरोध से होता है। जैसे कि यहाँ पहले तो गभीर पद में तीरलक्षणा नहीं मानी जा सकती, ऐसा करने पर 'तीर से अभिन्न नदी' ऐसा बोध होने लगेगा और

गभीर पद का नदी के साथ अन्वय नहीं हो पाएगा। न तो तीर नदी है। इस कारण नदी पद में भी ( वह होगा ), गभीर पद के अर्थ के साथ अन्वय न हो पाने से। न तो तीर गभीर (गहरा) होता है और न तो दोनों पदों में प्रत्येक में ही लक्षणा मानी जा सकती है। वैसा करने पर गभीरत्व-विशिष्ट नदी का वोध नहीं हो पाएगा। इस कारण समुदाय से वोध्य 'गभीरत्वविशिष्ट नदी' ही पदार्थ है और उसके साथ का सम्बन्ध लक्षणा है।

इसका आशय यह है कि केवल शक्यसम्बन्ध को ही लक्षणा मानने पर 'गभीरायां नद्यां घोषः' आदि में लक्षणा नहीं हो पाएगी, क्योंकि शक्तता तो पद में ही रहती है, न कि पदसमुदाय अर्थात् वाक्य में भी। यदि पद-पद में लक्षणा मानी जाय तो उससे इस वाक्य में अभीष्ट 'गभीरत्वविशिष्ट नदी' ऐसा अर्थ प्राप्त न होगा। यदि गभीर पद में तीर-लक्षणा की जाय तो इसका अर्थ होगा 'तीर से अभिन्न नदी'। यह ठीक नहीं होगा, क्योंकि तीर और नदी का अभेद नहीं हो पाएगा। यदी नदी पद में तीर-लक्षणा की जाय तो उसका अर्थ होगा—'गभीर से अभिन्न तीर' जो कि ठीक नहीं है, क्योंकि तीर तो गहरा नहीं होता। यदि गभीर पद का गभीरतीर में तथा नदी पद का नदीतीर में लक्षणा मानी जाय तो 'गभीरतीर से अभिन्न जो नदीतीर है' ऐसा अर्थ होगा। यह भी ठीक नहीं लगता। अतः तत्तत् पदों में लक्षणा के सम्भव न होने से समुदाय में अर्थात् 'गभीरायां नद्याम्' में लक्षणा होती है, जिससे कि गभीराभिन्न नदी का वोध हो जाने पर उसमें लक्षणा से 'गभीर से अभिन्न जो नदी है, उसके तीर में घोष है' ऐसा अर्थ प्राप्त होगा, जो कि अभीष्ट है। यहाँ स्ववोध्य हुआ 'गभीराभिन्न नदी' उससे जो सम्बन्ध है, वही लक्षणा है।

**( ३४ ) द्विरेफपदस्य स्वलक्ष्यभ्रमरशब्दवाच्यार्थे लक्षणायां लक्षित-लक्षणेति व्यवहारः। स्वबोध्यपदवाच्यत्वं सम्बन्धः।**

**व्याख्या**—प्राचीननैयायिकसम्मतं लक्षणाया अपरमपि लक्षितलक्षणाख्यं वृत्तिभेद-मनुवदति—द्विरेफेत्यादिना। **द्विरेफपदस्य** द्विरेफ इति यत्पदं तस्य। **स्वलक्ष्यभ्रमरशब्द-वाच्यार्थे**—स्वस्य द्विरेफपदस्य यो लक्ष्यो लक्षणाविषयो भ्रमरशब्दस्तस्य वाच्यार्थे मधुपेऽर्थे। **लक्षणाय** लक्षणाविषयोदये। **लक्षितलक्षणा**—लक्षितस्य पूर्वं लक्षणाविषयतां प्रापितस्य लक्षिते वा लक्षणा इति तदाख्या वृत्तिरिति। **इति। व्यवहारः** क्वचित् प्रयोगः। तत्र हि लक्षितलक्षणायां **स्वबोध्यपदवाच्यत्वं** स्वेन बोध्यं लक्षितत्वेन ज्ञाप्यं यत्पदं तस्य वाच्यत्वं शक्यत्वम्। **सम्बन्धः** इति।

अस्यायमाशयः—द्विरेफ इति यत्पदं तद् द्वौ रेफौ यत्रेति व्युत्पत्त्या योगार्थत्वेन प्रथमं रेफद्वययुक्तपदं बोधयति ततश्च लक्षणया रेफद्वययुक्तत्वेन भ्रमरपदं लक्षयति। लक्षिते चेत्थं द्विरेफपदाद् भ्रमरशब्दे तस्य वाच्यार्थभूतमधुपार्थं बोधयति। तेन लक्षिते लक्षितस्य वा लक्षणेत्यत्र लक्षितलक्षणा। इयं हि शक्यार्थस्य परम्परासम्बन्धरूपेति विपश्चितः। द्विरेफस्य शब्दकर्तृत्वान्वयानुपपत्त्या प्रथमं भ्रमरशब्दबोधस्ततस्तद्वाच्यार्थ-भूतमधुपार्थबोध इति स्वबोध्यपदवाच्यत्वमत्र यत्र स्वं द्विरेफपदं तद्बोध्यं भ्रमरपदं

तद्वाच्यत्वं भ्रमररूपार्थे इति । भ्रमरपदे लक्षणाया अभावे तु तदर्थस्य द्विरेफपदनिष्ठ-वृत्त्याऽनुपस्थापितत्वेन 'द्विरेफं पश्य' इत्यादौ कर्मत्वान्वय एव न स्यादिति द्विरेफपदस्य लक्षितलक्षणावृत्तिः। तेन न लक्षितेन भ्रमरपदेन शक्त्यैव बोधसम्भवाद् व्यर्थं लक्षणा-कल्पनमिति वाच्यम् । केचित्तु रेफपदस्य स्वशक्यद्वयघटितभ्रमरपदशक्यत्वरूपपरम्परा-सम्बन्धेन द्विरेफपदलक्षणयैव बोधसम्भवाल्लक्षितलक्षणारूपं वृत्त्यन्तरं नाङ्गीकुर्वन्ति । वैयाकरणास्तु द्विरेफपदेन रथन्तरवत् रूढिशक्त्यैव भ्रमरार्थो बोध्यते यद्वा पदनिष्ठरेफ-द्वयस्वार्थे आरोपात्तत्सम्बन्धित्वेनैव तेन भ्रमरबोध इत्यामनन्ति । इत्थं रूढिशक्त्या योगशक्त्या वा द्विरेफपदाद् भ्रमरार्थबोधः इति तन्मतम् । तदनुसृत्यैव कोशेष्वपि द्विरेफ-शब्दो भ्रमरपर्यायवाचित्वेन पठितः 'द्विरेफपुष्पलिड्भृङ्गः' इत्यादौ । ( अमर० २।५।२९ ) ।

हिन्दी—द्विरेफ पद का अपने लक्ष्य अर्थ भ्रमर शब्द के भ्रमर रूप वाच्य अर्थ में लक्षणा होने पर लक्षितलक्षणा होती है, ऐसा व्यवहार है । अपना जो बोध्य पद है, उसका वाच्यत्व ( वाच्य होना ) ही सम्बन्ध है ।

कुछ नैयायिक 'द्विरेफ' पद में लक्षितलक्षणा वृत्ति से अर्थबोध मानते हैं । उनके अनुसार द्विरेफ पद, जो कि 'दो रेफ ( रकार ) हैं जिसमें' इस प्रकार की व्युत्पत्ति से बना है, में शब्दकर्तृत्व धर्म के न होने से पहले दो रेफों से युक्त भ्रमर शब्द में लक्षणा होती है और उस लक्षित भ्रमर शब्द के वाच्यार्थ मधुप अर्थ में फिर लक्षणा होती है, तब द्विरेफपद से भ्रमर का बोध होता है । लक्षित पद में फिर लक्षणा होने से यह लक्षितलक्षणा है । इसमें स्वबोध्यपदवाच्यत्व में स्व है द्विरेफ पद, उसका बोध्य अर्थात् लक्ष्य पद है भ्रमर शब्द और उसका वाच्य है भ्रमर । यही इसका सम्बन्ध है ।

कुछ लोग द्विरेफ पद से भ्रमर शब्द में लक्षणा मानकर उस लक्षित शब्द से शक्ति के द्वारा अर्थबोध मानते हैं । कुछ तो द्विरेफ में भी पदलक्षणा ही मानते हैं । वैयाकरण तो रूढि अथवा योग से ही इससे अर्थबोध मानते हैं । कोशकार भी ऐसा ही मानते हैं, अतः द्विरेफ शब्द को भ्रमर के पर्यायवाचक शब्दों में पढ़ा गया है ।

( ३५ ) प्रकारान्तरेण पुनर्लक्षणा द्विविधा । तथाहि—

'प्रयोजनवती रूढा च लक्षणा द्विविधा मता' । इति । असति प्रयोजने शक्यसम्बन्धो निरूढलक्षणा । 'त्वचा ज्ञातम्' इत्यादौ यथा त्वचस्त्वगिन्द्रिये । इयं तु शक्यपरपर्यायैवेति बोध्यम् । 'गङ्गायां घोषः' इत्यत्र तीरे गङ्गागत-शैत्यपावनत्वादिप्रतीतिः प्रयोजनम् । गौर्वाहीकः इत्यत्र सादृश्यं लक्ष्यतावच्छे-दकं गवाभेदप्रत्ययः प्रयोजनम् । 'कुन्ताः प्रविशन्ति' इति भीतिपलायमानवाक्ये कुन्तविशिष्टपुरुषे कुन्तगततैक्ष्ण्यप्रतीतिः प्रयोजनमित्याहुः ।

व्याख्या—लक्षणाया भेदान्तरमप्याहुः—प्रकारेत्यादिना । सा पूर्वोक्तस्वरूपबीज-विशिष्टा । लक्षणा लक्षणावृत्तिः । पुनः पूर्वोक्तातिरिक्तमपि । प्रकारान्तरेण अन्येन प्रकारेण । द्विविधा द्विप्रकारा । तथाहि इति तत्कथने । प्रयोजनवती यदुद्दिश्य सत्यपि

वाचकशब्दे लक्षणा समुपास्यते तत्प्रयोजनं तदस्त्यस्यामिति प्रयोजनसहिता। **रूढा** प्रयोजनविनैव परम्परावशात्तथा प्रयुक्ता। **च इति लक्षणा। द्विविधा** द्विप्रकारा। **मता। इति।** तत्र रूढां व्याख्याति—**असति** इत्यादिना। **प्रयोजने** तत्साध्यविशिष्टफले। **असति** अविद्यमाने। **शक्यसम्बन्धः** वाच्यार्थेन सह यः सम्बन्धः सः। **निरूढलक्षणा** परम्परासिद्धलक्षणावृत्तिः। तन्निदर्शनमाह—**त्वचेत्यादिना। त्वचा ज्ञातम्**—त्वचा चर्मणा। **ज्ञातम्** अवगतम्। **इत्यादौ** इत्यादिवाक्ये। **यथा** येन विधिना। **त्वचः** त्वगित्येतस्य। **त्वगिन्द्रिये** स्पर्शगुणयुक्तेन्द्रिये। **लक्षणेति।** अयमाशयः—त्वचा ज्ञातमित्यत्र त्वचि चैतन्याभावेन ज्ञानक्रियायारनन्वयान्मुख्यार्थबाधेन रूढया स्पर्शगुणयुक्तत्वगिन्द्रिये लक्षणा भवतीति। तत्र स्वाभिमतमाह ग्रन्थकृत्—**इयमित्यादिना। इयं निरूढलक्षणा। तु** भेदान्तरव्यतिरिक्तम्। **शक्त्यपरपर्याया** शक्तिरभिधा अपरोऽन्यः पर्यायः समानार्थबोधकशब्दो यस्याः सा तादृशी शक्तेरेवापरपर्याया। **एव नान्या। इति** इत्थम्। **बोध्यं** ज्ञेयम्। निरूढलक्षणा हि शक्तेरेवान्या संज्ञा न तु पृथक्स्वरूपेति। प्रयोजनवतीं व्याख्याति—**गङ्गायामित्यादिना। गङ्गायां घोषः इत्यत्र** इति वाक्ये तीरवाचकशब्दे सत्यपि गङ्गापदे या लक्षणा क्रियते तस्याः **तीरे** तटे। **गङ्गागतशैत्यपावनत्वादिप्रतीतिः**—गङ्गागतं गङ्गासम्बद्धं यत् शैत्यपावनत्वं शैत्यं शीतलता पावनत्वं पवित्रता च आदिपदात्पापनाशनादिकग्रहणं तेषां प्रतीतिः अवभासनम्। **प्रयोजनं** फलम्। सत्यपि तीरस्य वाचके शब्दे तदुपेक्ष्य गङ्गापदे लक्षणायास्तटे गङ्गासम्बद्धशीतलतापावनतादिप्रतीतये एव। इदमेव तत्र लक्षणायाः प्रयोजनम्। तच्च व्यञ्जनया बोध्यत इत्यन्यत्र विस्तरः। **अत्र सामीप्यं** लक्ष्यतावच्छेदकम्। एवमेव **गौर्वाहीकः इत्यत्र** इति वाक्ये। **सादृश्यं** गोवाहीकयोः समानजाडयमान्द्यादिधर्मवत्त्वम्। **लक्ष्यतावच्छेदकत्वं** लक्ष्यतायां लक्षणाविषयस्य अवच्छेदकं निरूपकम्। **गवाभेदप्रत्ययः** गोरभिन्नत्वेन प्रतीतिः। **प्रयोजनं** फलम्। 'गौर्वाहीकः' इत्यत्र गोपदस्य वाहीकपदेनान्वयाभावात् उभयोर्जाडयमान्द्यादिधर्मसादृश्येन लक्षणा भवति, यस्याः प्रयोजनं वाहीकस्य गवाभेदप्रत्यय एवेति। **'कुन्ताः प्रविशन्ति'। इति** एतादृशे। **भीतिपलायमानवाक्ये**—भीत्या भयेन पलायमानानामपसरतां वाक्ये वचने। **कुन्तविशिष्टपुरुषे**—कुन्तेन विशिष्टः सुसज्जितो यः पुरुषो वीरस्तस्मिन्। **कुन्तगततैक्ष्ण्यप्रतीतिः**—कुन्तगतं यत् तैक्ष्ण्यं तीव्रता तस्य प्रतीतिः प्रत्ययः। **प्रयोजनं** फलम्। **इति** इत्थम्। **आहुः** कथयन्ति तार्किका इत्यनेनान्वयः।

पुनश्च लक्षणा द्विविधोक्ता—निरूढा प्रयोजनवती चेति। तत्र रूढिः प्रसिद्धिस्तामाश्रित्य या भवति सा निरूढा, या तु किञ्चिदपि प्रयोजनमाश्रित्य भवति सा प्रयोजनवती इति। रूढौ लक्षणा यथा 'त्वचा ज्ञातम्' इत्यत्र त्वचस्त्वगिन्द्रिये लक्षणा तस्य चैतन्याभावेन ज्ञानक्रिययाऽन्वयाभावात्। वैयाकरणमते तु निरूढलक्षणा शक्तेरेव नामान्तरमात्रम्, न तु तद्भिलक्षणा। यथा हि शक्तिरनादितात्पर्यवशात्कमप्यर्थं बोधयति तथैव निरूढलक्षणाऽपि अनादितात्पर्यवशादेव तत्तदर्थान् प्रकटयति। यथा हि 'त्वक्' शब्दः चर्मणि अर्थे प्रसिद्धस्तथैव त्वगिन्द्रियेऽपि। तेनैषा शक्तेः पर्यायैव।

प्रयोजनवती तद्भिलक्षणा। तत्र सत्यपि वाचकशब्दे किमपि प्रयोजनमाश्रित्य तत्सिद्धये शब्दो लाक्षणिकत्वेन प्रयुज्यते। यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदे तीर-लक्षणा तीरे गङ्गागतशैत्यपावनत्वादिप्रतीतये एव। न च तत्प्रतीतिः केवलात्तीरपदा-दवगम्यते तीरमात्रे तदभावात्। 'गङ्गातटे घोषः' इति कथनेऽपि न प्रयोजनसिद्धिः गङ्गायाः सुदूरवर्तिनि तटे शैत्यपावनत्वाद्यभावात्। गौर्वाहीकः इत्यत्र वाहीके गवाभेदेन जाडचमान्द्यातिशयप्रतीतिर्लक्षणायाः प्रयोजनम्। 'कुन्ताः प्रविशन्ति' इत्यत्र कुन्त-धारिणि कुन्तगततैक्ष्ण्यप्रतीतये लक्षणोपास्यते। प्रयोजनञ्च व्यञ्जनया ज्ञानविषयी-क्रियते। यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदस्य प्रवाहरूपमर्थमभिधाय निवृत्तायां शक्तौ तस्य घोषेऽन्वयाभावेन तात्पर्यानुपपत्त्या वा तटमर्थं लक्षयित्वा लक्षणाऽपि निवर्तते। ततश्च व्यञ्जनया शैत्यपावनत्वादिप्रयोजनं व्यज्यते। न च पुनः शक्त्या तत्क्रियते सङ्केताभावात्। न च पुनर्लक्षणा प्रवर्तते मुख्यार्थबाधादिहेत्वभावात्। न च लक्ष्यार्थो मुख्यो न च तस्य बाधः न च प्रयोजनस्य प्रयोजनं सम्भवति। तेन यन्निमित्त-मुपादाय लक्षणा समुपास्यते तद्धि व्यञ्जनयैव व्यज्यते न तु शक्त्या लक्षणया वेति दिक्।

हिन्दी—दूसरे ढङ्ग से भी फिर लक्षणा दो प्रकार की होती है। जैसे कि—प्रयो-जनवती और निरूढा के भेद से लक्षणा दो प्रकार की मानी गई है।

किसी भी प्रयोजन के अभाव में शक्यार्थ से सम्बन्ध ही निरूढलक्षणा है। 'त्वक् ( चमड़े ) ने जान लिया' इत्यादि में जैसे त्वक् का त्वगिन्द्रिय में। यह शक्ति का ही दूसरा पर्याय है, यह जान लेना चाहिए।

'गङ्गा में वस्ती' इसमें तीर में गङ्गा में रहे शीतलता, पावनता आदि की प्रतीति प्रयोजन है। 'वाहीक बैल है' इसमें बैल एवं वाहीक का जाडच आदि धर्मों का सादृश्य ही लक्षणा का आधार है और वाहीक की बैल से अभिन्न रूप में प्रतीति ही प्रयोजन है। 'कुन्त प्रवेश करते हैं' इस डर से भागते हुए लोगों के इस वाक्य में 'कुन्त से सज्जित पुरुष में कुन्तगत तीक्ष्णता की प्रतीति प्रयोजन है' ऐसा कहते हैं।

कहने का आशय यह है कि लक्षणा रूढि एवं प्रयोजन में से किसी एक को आधार मानकर ही प्रवृत्त होती है, अतः लक्षणा के रूढा एवं प्रयोजनवती के नाम से दो भेद और हैं। रूढि का अर्थ है—प्रसिद्धि। जहाँ किसी भी प्रयोजन के बिना प्रसिद्धि के आधार पर ही लक्षणा होती है, वहाँ निरूढा लक्षणा मानी जाती है। जैसे 'त्वचा ज्ञातम्' ( चमड़े ने जान लिया ) में जानना सचेतन का कार्य है, त्वक् के सचेतन न होने से शक्यार्थ का ज्ञान क्रिया के साथ अन्वय न हो पाने पर रूढि के आधार पर त्वक् का त्वगिन्द्रिय अर्थ में लक्षणा होती है। वैयाकरण के मत में यह शक्ति का ही दूसरा पर्याय है, उससे भिन्न नहीं। शक्ति भी अनादितात्पर्यवश अर्थ जनाती है और निरूढलक्षणा भी। दोनों का आधार प्रसिद्धि ही है। इससे भिन्न प्रयोजनवती किसी प्रयोजन को लेकर चलती है, जो कि उसके बिना सिद्ध नहीं होता। जैसे 'गङ्गा में घोष है' में गङ्गागत शीतलता एवं पावनता की प्रतीति प्रयोजन है। वह शक्यार्थ

से प्राप्त नहीं होता। 'तट में घोष' मात्र कहने से तट में शीतलता, पावनता आदि नहीं होते और यदि 'गङ्गातट में घोष' ऐसा भी कहे तो भी यह सिद्ध नहीं होगा, क्योंकि गङ्गा से अत्यन्त दूर पड़े तट में भी वह नहीं पाया जाता। अतः गङ्गा पद में ही तटलक्षणा करनी पड़ेगी, जिससे कि तट में गङ्गागत शीतलता आदि आ जायें। 'वाहीक बैल है' में वाहीक में जड़ता एवं मन्दता का अतिशय प्रयोजन है, जो कि उसके बैल से अभिन्न प्रतीति से ही प्राप्त होता है। 'कुन्त प्रवेश करते हैं' यह डर से भागते हुए लोगों का कथन है और इसमें कुन्तधारियों में कुन्तगत तीक्ष्णता की प्रतीति प्रयोजन है। खण्डनपक्ष (वैयाकरण)

( ३६ ) तन्न। सति तात्पर्ये 'सर्वे सवार्थवाचकाः' इति भाष्याल्लक्षणाया अभावात्, वृत्तिद्वयावच्छेदकद्वयकल्पने गौरवात्, जघन्यवृत्तिकल्पनाया अन्याय्यत्वाच्च। कथं तर्हि गङ्गादिपदात् तीरादिप्रत्ययः ? भ्रान्तोऽसि। सति तात्पर्ये 'सर्वे सर्वार्थवाचकाः' इति भाष्यमेव गृहाण। तथा हि—शक्तिर्द्विविधा—प्रसिद्धाऽप्रसिद्धा च। आमन्दबुद्धिवेद्यात्वं प्रसिद्धात्वम्। सहृदयहृदयमात्रवेद्यात्वमप्रसिद्धात्वम्। तत्र गङ्गादिपदानां प्रवाहादौ प्रसिद्धा शक्तिस्तीरादौ चाप्रसिद्धा इति किमनुपपन्नम्।

व्याख्या—इत्थं लक्षणाविषये नैयायिकमतं सप्रपञ्चमनूद्य सम्प्रति तद् दूषयितुमुपक्रमते—तदित्यादिना। तत् लक्षणाविषये पूर्वं यदुक्तं तत्। न नैवोपयुक्तमिति। तत्र हेतुमाह—सतीत्यादिना। तात्पर्ये आशये। सति विद्यमाने। सर्वे सर्वविधशब्दाः। सर्वार्थवाचकाः सर्वविधार्थबोधकाः। इति इत्थम्। भाष्यात् भाष्यवचनात्। लक्षणायाः लक्षणाख्यवृत्तेः। अभावात् अविद्यमानत्वात्। वृत्तिद्वयावच्छेदकद्वयकल्पने—वृत्तिद्वयस्य शक्तेर्लक्षणायाश्च अवच्छेदकद्वयं हेतुद्वयं तस्य कल्पने विवेके। गौरवात् श्रमाधिक्यात्। जघन्यवृत्तिकल्पनायाः मुख्यवृत्त्यैव कार्यसिद्धौ गौणवृत्तिविचारस्य। अन्याय्यत्वात् अनुपयुक्तत्वात्। चकारः सर्वेषां समुच्चये। यदि लक्षणा नैव स्वीक्रियते तर्हि तदा। कथं केन प्रकारेण। गङ्गादिपदात् गङ्गाप्रभृतिपदात्। गङ्गायां घोष इत्यादौ तीरादिप्रत्ययः तटादिप्रतीतिः। इति चेच्छृणु। भ्रान्तः यथार्थात् विचलितः। असि वर्तसे। तात्पर्ये सति सर्वे शब्दाः सर्वविधार्थवाचकाः इति भाष्यम् भाष्यवचनम्। एव हि। गृहाण व्यवहर। तथाहि शक्तिः अर्थविबोधवृत्तिः। द्विविधा द्विप्रकारा। प्रसिद्धा सामान्या। अप्रसिद्धा असामान्या च। तत्र आमन्दबुद्धिवेद्यात्वं मन्दबुद्धिः मन्दा अल्पा बुद्धिर्मतिर्येषां तदारभ्य सर्वेषामेव वेद्यात्वं ज्ञेयात्वम्। प्रसिद्धात्वं प्रसिद्धशक्तिधर्मः। सहृदयहृदयमात्रवेद्यात्वं सहृदयानां विचक्षणानां हृदयैरेव वेद्यात्वम्। अप्रसिद्धात्वम् अप्रसिद्धशक्तिधर्मः। तत्र 'गङ्गायां घोषः' इत्यादौ। गङ्गादिपदानां गङ्गाप्रभृतीनां पदानाम्। प्रवाहादौ प्रवाहरूपेऽर्थे। प्रसिद्धा शक्तिः सर्ववेद्यत्वात्। तीरादौ तटाद्यर्थे। च तु। अप्रसिद्धा शक्तिः सहृदयहृदयमात्रवेद्यत्वात्। इति इत्थं सिद्धे। किं किं नाम। अनुपपन्नम् असिद्धमपितु सर्वं सिद्धमेवेति।

यदुच्यते लक्षणाभाव इति तन्न साम्प्रतम् । कथमिति चेदित्थम् । तात्पर्ये सति सर्वं एव शब्दाः सर्वविधार्थवाचका भवन्तीति भाष्यवचनात् लक्षणाया अभावः स्पष्ट एव । एकयैव वृत्त्या कार्यसिद्धौ वृत्तिद्वयकल्पने तदवच्छेदकद्वयस्य कल्पनमावश्यकं तच्च गौरवमेव मुख्ययैव वृत्त्या कार्यसिद्धौ गौणवृत्तिकल्पनमपि नितान्तमनुपयुक्तमिति । गङ्गापदात् तीरप्रतीतिस्तु तात्पर्ये सति शक्त्यैव भवति । यतो हि प्रसिद्धाप्रसिद्धभेदेन द्विविधा शक्तिर्यत्र सामान्यजनस्याऽपि विषया प्रसिद्धा सहृदयमात्रविषयाऽप्रसिद्धा । गङ्गापदस्य प्रवाहेऽर्थे प्रसिद्धा तटेऽर्थेऽप्रसिद्धा शक्तिरिति सर्वमुपपन्नमेवेति ।

हिन्दी—नैयायिकों का यह कथन ठीक नहीं है। वैसे तात्पर्य के रहने पर 'सभी शब्द सभी अर्थ के वाचक होते हैं'। इस प्रकार के भाष्य के वचन से लक्षणा का अभाव होने से दो वृत्तियों के दो ही अवच्छेदकों ( हेतुओं ) की कल्पना करने में गौरव होने से गौणवृत्ति की कल्पना की उपयुक्तता न होने से भी ( लक्षणा को स्वीकार करना ठीक नहीं है )।

तो फिर गङ्गा आदि पद से तीर आदि की प्रतीति कैसे होती है ? भटक गये हो। वैसा तात्पर्य होने पर 'सभी शब्द सभी प्रकार के अर्थ के वाचक होते हैं' भाष्य के इस वचन को ही ले लो। जैसे कि शक्ति दो प्रकार की होती है—प्रसिद्ध एवं अप्रसिद्ध। कम बुद्धि वालों के भी ज्ञान का विषय होना प्रसिद्धात्व है और सहृदयों के हृदय मात्र से जानी जाने वाली अप्रसिद्धा है। उसमें अर्थात् 'गङ्गायां घोषः' में गङ्गा आदि पद का प्रवाह आदि में प्रसिद्धा शक्ति है और तीर आदि में अप्रसिद्धा। इस तरह अब क्या बेठीक हुआ ?

आशय यह है कि तात्पर्य होने पर 'सभी शब्द सभी प्रकार के अर्थ के वाचक होते हैं' यह भाष्य का वचन है और इससे लक्षणा का अभाव स्पष्ट ही है। जब एक ही वृत्ति से काम चलता है तो उस पर दो-दो वृत्तियों की कल्पना करके उनके अवच्छेदकों की कल्पना में गौरव पड़ता है और यह भी कि मुख्य वृत्ति से ही काम चलने पर गौण वृत्ति की कल्पना करना ठीक भी नहीं है। 'गङ्गा में घोष है' में गङ्गा पद से तीर की प्रतीति तो वैसा तात्पर्य होने से शक्ति से ही हो जाती है। शक्ति दो प्रकार की होती है—प्रसिद्धा एवं अप्रसिद्धा। जिसे कम बुद्धि वाले भी जाने वह प्रसिद्धा है और जिसे सहृदय ही जान सकें, वह अप्रसिद्धा है। गङ्गा पद में प्रवाह अर्थ में प्रसिद्धा शक्ति है और तट अर्थ में अप्रसिद्ध शक्ति। अतः अलग से लक्षणा वृत्ति मानने की कोई आवश्यकता नहीं है।

(३७) ननु सर्वे सर्वार्थवाचका इति चेद् ब्रूषे तर्हि घटपदात् पटप्रत्ययः किं न स्यादिति चेन्न; सति तात्पर्ये इत्युक्तत्वात् तात्पर्याभावादिति गृहाण। तात्पर्यश्चात्र ऐश्वरं देवतामहर्षिलोकवृद्धपरम्परातोऽस्मदादिभिर्लब्धमिति सर्वं सुस्थम् ।

इति लक्षणानिरूपणम् ।

---

**व्याख्या**—सर्वेषां सर्वार्थवाचकत्वे व्यभिचारमाशङ्क्य दूषयति—**नन्वित्यादिना**। **ननु** इति प्रश्ने। **सर्वे** सर्वविधाः **शब्दाः**। **सर्वार्थवाचकाः** सर्वविधार्थबोधकाः। **इति** इत्थम्। **ब्रूषे** कथयसि। **चेत्**। **तर्हि** तदा। **घटपदात्** घटत्वार्थकघटपदात् **पटप्रत्ययः** पटत्वार्थकप्रतीतिः। **किं** किमिति। **न** नैव। **स्यात्**। **इति** इत्थमाशङ्क्यते **चेत्**। **न** न तत्कथनमुपयुक्तम्। तत्र हेतुमाह—**सतीत्यादिना**। **तात्पर्ये** आशये। **सति** विद्यमाने। **इति** इत्थम्। **उक्तत्वात्** कथितत्वात्। **तात्पर्याभावात्** घटपदे पटतात्पर्यविरहात्। इति घटपदान्न पटप्रतीतिरिति। **गृहाण** अवेहि। **अत्र** प्रसङ्गेऽस्मिन्। **तात्पर्यं** घटपदाद् घटत्वावच्छिन्नवस्तुन एव पटपदात्पटत्वावच्छिन्नवस्तुन एव तात्पर्यम्। **च** तु। **ऐश्वरम्** ईश्वरसङ्केतितम्, इदम्पदमेतदर्थविषयकबोधजनकमिति। **देवतामहर्षिलोकवृद्धपरम्परातः** देवताश्च ताभ्यो महर्षयस्तेभ्यो लोकवृद्धाः शिष्टजना इति तत्तत्परम्परातः। **अस्मदादिभिः** अस्माभिर्भवद्भिश्च। **लब्धं** प्राप्तम्। **इति** इत्थम्। **सर्वं** पूर्वोक्तं समग्रमेव। **सुस्थं** साम्प्रतमिति सुरूढं वा।

सर्वेषामेव सर्वार्थवाचकत्वे तु घटपदात्पटप्रत्ययोऽपि स्याद्येन व्यभिचार आपद्येत इति चेन्न। सति तात्पर्ये एव शब्दानां वाचकत्वं तेन तादृशतात्पर्याभावान्न घटपदात्पटसम्प्रत्ययो न च कश्चिद् व्यभिचारः। इदम्पदमेतदर्थविषयकबोधजनकमिति तात्पर्यं तु ईश्वरादेवागतं यदस्माभिर्देवमुनिशिष्टादिपरम्परातो ज्ञातमिति सर्वं सुरूढमेवेति।

अत्र विचार्यते। ग्रन्थे लक्षणोच्छेदे हेतुत्रयमुक्तम्। तच्च यथा सति तात्पर्ये सर्वे सर्वार्थवाचका इति गङ्गापदं यथा प्रवाहे शक्तं तथैव सति तात्पर्ये तीरेऽपि शक्तम्। तात्पर्यस्य शक्तिसङ्कोचकत्वेन न व्यभिचार इत्येकः। एकयैव वृत्त्या शक्त्या कार्यसिद्धौ वृत्तिद्वयं परिकल्प्य तस्याप्यवच्छेदकद्वयकल्पने महद्गौरवं भवतीति शक्त्या एव वृत्तित्वकल्पनं तत्त्वस्यैव तदवच्छेदकत्वकल्पनमिति शक्तिकल्पनापक्षे लाघवमिति द्वितीयः। पूर्वोपस्थापितशक्तिसम्बन्धस्य वृत्तित्वकल्पनमतिक्रम्य अनन्तरोपस्थिततद्घटितसम्बन्धस्य वृत्तित्वकल्पनाया अनुचितत्वमिति तृतीयः। लघुमञ्जूषायां तु 'ननु सर्वेषां सर्वार्थवाचकत्वे लक्षणोच्छेद' इति चेन्न, योगिनां सर्वार्थवाचकत्वज्ञाने सत्यस्मदादीनां तदभावात्। किञ्चान्वयाद्यनुपपत्तिज्ञानपूर्वकं शक्यत्वेन गृहीतार्थसम्बन्धज्ञानेनोद्बुद्धशक्तिसंस्कारतो बोधे लक्षणेति व्यवहारात्। इत्यादिप्रसङ्ग उपस्थापितोऽस्ति। तत्र सिंहावलोकनन्यायेन लक्षणां निरूपयति इति कलाटीकाकृतः। वस्तुतस्तु लक्षणोच्छेदे येऽपि तर्का उपस्थापिताः वैयाकरणभूषणादावपि तेषां ससारत्वेऽपि व्यवहारे लक्षणाया उपयोगित्वं नैव प्रत्याख्यातुं शक्यते यथार्थतः। अप्रसिद्धशक्तिलक्षणयोर्न तथा वस्तुगतभेदो दृश्यते। आलङ्कारिकैरपि महता प्रयासेन सभेदोपभेदा लक्षणा प्रतिपादिताऽस्ति। यथा काव्यप्रकाशे—

'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया॥' इति। (२१)

वैयाकरणनैयायिकमतयोरपि इदम्पदमेतदर्थविषयकबोधजनकमिति शक्तिज्ञानेन सामान्यतः कार्यकारणभावकल्पनेऽपि तेषां तेषामर्थानां भेदेनानन्तकार्यकारणभावकल्पनं

तत्रापि च व्यभिचारनिरासायाव्यवहितोत्तरत्वनिवेशनञ्चेति समानमेव गौरवं तथापि नैयायिकमते एतत्सर्वातिरिक्तस्याधिकस्य लक्षणाघटितकार्यकारणभावगौरवस्य सत्त्वेन शाब्दिकमत एव लाघवमिति तत्त्वमिति ज्योत्स्नायां स्पष्टम् ।

प्रसादात् शेषराजस्य गुरोश्चरणयोः शिवात् ।
लक्षणाभागसम्पृक्ता समाप्ता किरणावली ॥

---

हिन्दी—यदि आप 'सभी शब्द सभी अर्थ के वाचक होते हैं' ऐसा कहते हैं तो घट पद से पट की प्रतीति क्यों नहीं होती ? ऐसा कहते हो तो वह कथन ठीक नहीं है। 'तात्पर्य के होने पर' ऐसा कहा गया है, अतः तात्पर्य के न रहने के कारण वैसा नहीं होता। यही मान लो। जो तात्पर्य है, वह यहाँ ईश्वर से आगत है और वह देवता, महर्षि, लोक, वृद्ध आदि परम्परा से हम लोगों ने पाया है। अतः यह सब सही है।

इस प्रकार लक्षणा-निरूपण समाप्त हुआ।

---

## ( ३ ) अथ व्यञ्जनानिरूपणम्

( ३८ ) ननु व्यञ्जना कः पदार्थः ? उच्यते । मुख्यार्थबाधनिरपेक्षबोधजनको मुख्यार्थसम्बद्धासम्बद्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना ।

**व्याख्या**—यथा हि वैयाकरणा लक्षणोच्छेदे कृतव्रतास्तथैव नैयायिका ही व्यञ्जनोच्छेदेऽतो व्यञ्जनानिरूपणप्रकरणमारभमाणो ग्रन्थकृत्तत्पक्षेण शङ्कते—**नन्वित्यादिना** । **ननु** इति प्रश्ने । **व्यञ्जना** भवदभिमता तदाख्या वृत्तिः । **कः** कतमो हि । **पदार्थः** वस्तु इति । ननु लक्षणयैव कार्ये सिद्धे किमिदं व्यञ्जनाख्यं नवीनं वृत्तितत्त्वं यद्भवान् अधिवदसि इति । तदाख्यातुमुपक्रमते—**उच्यते** इत्यनेन । **उच्यते** कथ्यते, लक्षणातिरिक्तमेव व्यञ्जनाया औचित्यं प्रतिपाद्यते इति । तदेवाह—**मुख्येत्यादिना** । **मुख्यार्थबाधनिरपेक्षबोधजनकः**—मुख्यस्य शक्यस्य अर्थस्य बाधोऽन्वयानुपपत्त्या तात्पर्यानुपपत्त्योभयविधानुपपत्त्या वा वाक्येऽनन्वयस्तात्पर्याग्राहको वा तन्निरपेक्षस्यासम्बद्धस्य बोधस्य ज्ञानस्य जनको हेतुः । लक्षणा तु मुख्यार्थबाधे एव भवति, व्यञ्जना तु तन्नैरपेक्ष्येणेति । **मुख्यार्थसम्बद्धासम्बद्धसाधारणः**—मुख्यार्थेन वाच्यार्थेन सम्बद्धः सम्पृक्तोऽसम्बद्धोऽसम्पृक्तश्च यौ अर्थौ तयोः साधारणः समानः । लक्षणायां तु मुख्यार्थसम्बद्धताऽपरिहार्या भवति, व्यञ्जनायां तु उभयत्र सामान्यमेव; सम्बद्धत्वासम्बद्धत्वयोः सम्बद्धो यथा—गङ्गायां घोष इत्यादौ शैत्यपावनत्वादिः; असम्बद्धश्च यथा 'निःश्वासान्ध इवादर्शः' इत्यादौ । लघुमञ्जूषायां तु मुख्यार्थसम्बद्धासम्बद्धसाधारणप्रसिद्धाप्रसिद्धार्थविषयकः इत्येकमेव पदं व्याख्यातञ्च यथा रत्नप्रभायां मुख्यार्थेन सम्बद्धासम्बद्धौ यौ अर्थौ तदुभयसाधारणौ यौ प्रसिद्धाप्रसिद्धार्थौ तौ विषयौ यस्य सः इति । ज्योत्स्नायामियमेवाक्षरशो गृहीताऽस्ति । एतावता लक्षणामूला व्यञ्जना परिभाषिता । **प्रसिद्धाप्रसिद्धार्थविषयकः**—प्रसिद्धः शक्यत्वेन सर्वज्ञातोऽप्रसिद्धो लक्ष्यत्वेन सहृदयैरेव गृहीतश्च योऽर्थस्तयोरन्यतरो विषयो यस्य सः प्रसिद्धाप्रसिद्धान्यतरविषयः । **वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः**—वक्ता यो वक्ति सः आदिपदात् बोद्धव्यकाकुवाक्यवाच्यान्यसन्निधिप्रस्तावदेशकालादीनां ग्रहणम् । यथोक्तम्—

'वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ।
प्रस्तावदेशकालानां वैशिष्ट्यात् प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा' ।। इति ।।

यत्र वक्ता कविस्तन्निबद्धश्च बोद्धव्यः प्रतिपादनीयो जनः काकुः शोकभीत्यादिभिर्ध्वनेर्विकारः वाक्यं वक्तुः कथनं वाच्यः शब्दशक्योऽभिप्रेतार्थः अन्यसन्निधिः अन्यो वक्तृबोद्धव्यभिन्नस्तस्य सन्निधिः सामीप्यम्, प्रस्तावः प्रकरणं देशो विजनादिः कालो वसन्तादिः आदिना चेष्टालीलादिहावपरिग्रहः, तस्य वक्त्रादेर्वैशिष्ट्यं वैलक्षण्यमन्य-

व्यावृत्तो धर्मस्तस्य यज्ज्ञानं तच्च प्रतिभा बुद्धिवैशद्यञ्च आदिपदान्नैपुण्यमपि तैरुद्बुद्धः जागरितः । **संस्कारविशेषः** भावनाविशेषः । अत्र संस्कारो हि प्रतिभोद्बुद्धः वक्त्रादिवैशिष्टयज्ञानञ्च प्रतिभासहकारि । तेन वक्त्रादिवैशिष्टयज्ञानसहकारेण वासनाविशेषरूपा प्रतिभा संस्कारविशेषमुद्बोधयति, व्यञ्जनायाः प्रतिभाजुषामेव विषयत्वं जन्मान्तरगृहीतत्वञ्च । स एव व्यञ्जना तदाख्यवृत्तिः । सङ्क्षेपतस्तु प्रतिभोद्बुद्धोऽर्थविषयकः संस्कारविशेषो व्यञ्जनेति । संस्कारविशेषश्च मुख्यार्थनिरपेक्षबोधजनकः मुख्यार्थसम्बद्धासम्बद्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयकः वक्त्रादिवैशिष्टयज्ञानप्रतिभाद्युद्बुद्धश्च । तेन व्यञ्जना न लक्षणया गतार्था । लक्षणा तु मुख्यार्थानुपपत्तावेव प्रवर्तते; यथा 'गङ्गायां घोषः' इत्यादौ । व्यञ्जना तु तन्निरपेक्षमेव प्रवर्तते; यथा 'निःशेषच्युतचन्दनं स्तनतटम्''' इत्यादौ मुख्यार्थबाधाभावेऽपि अधमपदपर्यालोचनया रन्तुमेव गताऽसीति व्यङ्ग्यार्थप्रतीतिः । लक्षणा मुख्यार्थसम्बद्धा, व्यञ्जना तु क्वचिदसम्बद्धाऽपि यथा गङ्गायां घोष इत्यत्र शैत्यपावनत्वादि गङ्गापदस्य प्रवाहरूपमुख्यार्थसम्बद्धः व्यञ्जनाविषयः 'निःश्वासान्ध इवादर्शः' इत्यत्रासम्बद्धः अप्रकाशत्वरूपव्यङ्ग्यार्थस्तद्विषयः । एतेन व्यञ्जना लक्षणाभिन्नैव न तया गतार्थेति स्पष्टमेव । न च व्यञ्जना शक्तिः । शक्तिः प्रसिद्धार्थविषया, व्यञ्जना प्रसिद्धाप्रसिद्धार्थविषया; यथा 'राजत्युमावल्लभः' इत्यत्र उमावल्लभत्वं शङ्करस्यापि प्रसिद्धमेव यद्धि व्यञ्जनाया विषयः । अप्रसिद्धार्थश्च वक्त्रादिवैशिष्टयज्ञानोत्पन्नः प्रतिभाशालिनामेवावगम्यः यथा 'दक्षिणं नयनं हरेरि'त्यत्र हरेर्दक्षिणनेत्रस्य तूर्यात्मकत्वमर्थः । अभिधा हि सामान्यजनविषयः, व्यञ्जना तु प्रतिभाशालिजनविषय इति । उक्तञ्चान्यत्र—

'विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः ।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ॥' इति ।
'यस्य प्रतीतिमादातु लक्षणा समुपास्यते ।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥'
... ... ...
'योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ।' इति च ।

**हिन्दी**—व्यञ्जना नाम की कौन-सी वस्तु है ? कहा जाता है—शक्य अर्थ की अनुपपत्ति की अपेक्षा किये विना ही वोध कराने वाला शक्य अर्थ से सम्बद्ध एवं असम्बद्ध दोनों स्थितियों में समान रूप से रहने वाला प्रसिद्ध एवं अप्रसिद्ध दोनों अर्थों का बोधक वक्ता आदि की विशिष्टता के ज्ञान की सहकारिता से प्रतिभा आदि के द्वारा उद्बुद्ध होने वाला संस्कार-विशेष ही व्यञ्जना है ।

नैयायिक व्यञ्जना को नहीं मानते । उनका कहना है कि व्यञ्जना लक्षणा से गतार्थ हो जाती है । उसका खण्डन कर व्यञ्जना वृत्ति की स्थापना का प्रयास यहाँ किया गया है । प्रतिभा, निपुणता आदि से उद्बुद्ध अर्थ-विषयक संस्कार-विशेष ही व्यञ्जना है । वह संस्कार-विशेष मुख्य अर्थ के अनुपपत्ति की परवाह किये विना ही अर्थबोध कराने वाला है, जब कि मुख्यार्थ की अनुपपत्ति के विना लक्षणा नहीं आती ।

वह मुख्य अर्थ सम्बद्ध भी हो सकता है और नहीं भी हो सकता है, लेकिन लक्षणा तो शक्यसम्बन्ध ही है। वह प्रसिद्ध एवं अप्रसिद्ध दोनों अर्थों का बोध कराता है। लेकिन शक्ति केवल प्रसिद्ध अर्थ का ही बोध करा पाती है और लक्षणा उसी की अनुगामिनी है। शक्ति एवं लक्षणा दोनों तो शब्दनिष्ठ वृत्तियाँ है। ये पहले शब्द में होती है, व्यञ्जना तो सहृदयों के हृदय में रहने वाली वृत्ति है और शब्द में तो परम्परया ही रहती है। यह तो वक्ता आदि के वैशिष्टच के ज्ञान की सहकारिता से प्रतिभा, निपुणता आदि से उद्‌बुद्ध होकर शक्य एवं लक्ष्य अर्थ से भिन्न तीसरे अर्थ का बोधक है। अतः इसे 'अर्थस्यान्यार्थधीहेतुः' कहा गया है। अतः व्यञ्जना न लक्षणा से और नहीं व्यञ्जना से गतार्थ होती है, अपितु यह पृथक् वृत्ति है, जो उन दोनों से भिन्न अर्थ का ही बोध कराती है।

( ३९ ) अत एव निपातानां द्योतकत्वं स्फोटस्य व्यङ्गचता च हर्यादिभिरुक्ता। द्योतकत्वञ्च स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वमिति। वैयाकरणानामप्येतत्स्वीकार आवश्यकः। एषा च शब्दतदर्थपदपदैकदेशवर्णवाक्यरचनाचेष्टादिषु सर्वत्र, तथैवानुभवात्। वक्त्रादिवैशिष्टचज्ञानं च व्यङ्गचविशेषबोधे सहकारीति न सर्वत्र तदपेक्षेत्यन्यत्र विस्तरः। यत्तु तार्किका 'लक्षणयैव गतार्था व्यञ्जनेति न सा स्वीकार्ये'त्याहुस्तन्न; लक्षणाया मुख्यार्थबाधपूर्वकलक्ष्यार्थबोधकत्वात्, मुख्यार्थसम्बद्धार्थस्यैव लक्षणाया बोधकत्वात्। व्यञ्जनाया अतथात्वेन तदनन्तर्भावाच्चेति दिक्।

इति व्यञ्जनाविचारः।

---

**व्याख्या**—व्यञ्जनायाः सद्भावे निदर्शनमाह—**अत** इत्यादिना। **अतः** व्यञ्जनायाः स्वीकारात्। **एव** हि। **निपातानां** चादिनाम्। **द्योतकत्वम्** अर्थस्य प्रकाशकत्वं न तु वाचकत्वं, केवलानां निपातानां प्रयोगादर्शनात्तेषां मुख्यार्थाभावेन लक्षणाया असम्भवाद् द्योतकतैवेति भावः। **स्फोटस्य** स्फोटात्मकशब्दस्यार्थस्य च। **व्यङ्गचता** प्रतीयमानत्वम्। **च**। **हर्यादिभिः** हरिप्रभृतिविचक्षणैः। **उक्ता** प्रतिपादिता। निपाता द्योतकाः केचित् 'व्यङ्गचव्यञ्जकभावेन तथैव स्फोटनादयोः' इत्यादिकथनेन। निपातानां द्योतकत्वं यथा 'प्रजपति' इत्यत्र प्रकृष्टजपबोधकत्वम्। **द्योतकत्वं** प्रकाशकत्वम्। **च** हि। **स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वम्**—स्वेन सह समभिव्याहृतं पूर्वं वा पश्चादव्यवहितत्वेन। क्वचित्तु व्यवहितत्वेनापि यथा 'आ त्वा जिघर्मि' इत्यादौ। उच्चरितं यत्पदं तन्निष्ठा तत्र विद्यमाना या शक्तिः अर्थाभिधानसामर्थ्यं तस्याः व्यञ्जकत्वं प्रत्यायकत्वम्। इति। **वैयाकरणानां** शाब्दिकानाम्। **अपि च**। **एतत्स्वीकारः** एतस्याः व्यञ्जनायाः स्वीकारः समर्थनम्। **आवश्यकः** अपरिहार्यः, निपातानां द्योतकत्वस्य तदैव सम्भवादिति। कतिपये हि प्राचीनवैयाकरणा व्यञ्जनावृत्तिं नाङ्गीकुर्वन्तीति तद्धृदये कृत्वा

कथनमिदम्। यदि हि व्यञ्जना नाङ्गीक्रियते तदा निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यता च नैव सिध्येयाताम्। वृत्त्यन्तराद् व्यञ्जनाया वैलक्षण्यं प्रतिपादयति—एषेत्यादिना। एषा व्यञ्जनाख्यवृत्तिः। शब्दतदर्थपदपदैकदेशवर्णरचनाचेष्टादिषु—शब्दः सार्थकवर्णसमूहो यथा घन इत्यादिः; तदर्थः तस्य शब्दस्यार्थः यथा घनत्वं पदं सुप्तिङन्तं यथा वनं पदैकदेशः पदस्यैकभागो यथा प्रकृतिप्रत्ययादिः वर्णा अक्षराणि रचना वाक्यं प्रबन्धश्च चेष्टा इङ्गितानि सात्त्विकाश्च भावास्तत्प्रभृतिषु। सर्वत्र सर्वव्यापिका। तथैव तस्याः सर्वगतत्वेनावस्थितेः। अनुभवात् अनुभूतिविषयत्वात्। तत्र नियन्त्रितार्थ-बोधिका शब्दव्यञ्जना संयोगाद्यैः यथा 'सशङ्खचक्रो हरिः' इत्यत्र शङ्खचक्रसंयोगेन हरिशब्दस्यानेकार्थकस्य विष्ण्वर्थे नियन्त्रणम्। वक्त्रादिवैशिष्ट्यमूलाया अन्यार्थधियो हेतुव्यापाररूपाऽर्थव्यञ्जना शब्दार्थयोर्व्यञ्जकत्वे परस्परं सहकारिता तयोः पृथग्व्यञ्ज-कत्वं तु प्राधान्यापेक्षयैव। यत्रैकस्यैव पदस्य प्राधान्येन व्यञ्जकत्वमन्येषां तु सहकारिता तत्र पदव्यञ्जना, यत्र प्रकृतिप्रत्यययोरन्यतरप्राधान्येन व्यञ्जकत्वमन्येषां सहकारित्वं तत्र पदैकदेशव्यञ्जना। एवमन्यत्रापि। वक्त्रादिवैशिष्ट्यज्ञानं वक्तृबोद्धव्यादिवैशिष्ट्य-स्य यज्ज्ञानं तत्। व्यङ्ग्यविशेषबोधे व्यङ्ग्यविशेषस्य न तु व्यङ्ग्यमात्रस्य बोधे ज्ञाने। सहकारि सहयोगे। इति हेतोः। न। सर्वत्र व्यङ्ग्यमात्रे। तदपेक्षा तदपरि-हार्यता। इति हेतोः। अन्यत्र ग्रन्थान्तरे। विस्तरः सप्रपञ्चं निरूपणमिति नात्रेति। वक्त्रादिवैशिष्ट्यज्ञानमर्थव्यञ्जकतायामेव सहकारि न सर्वत्रेति नात्र तस्य विस्तर इति।

व्यञ्जनामधिकृत्य नैयायिकानां मतमनूद्य दूषयितुमुपक्रमते—यदित्यादिना। यद् यदेव। तु हि। तार्किकाः नैयायिकाः। व्यञ्जना तदाख्यवृत्तिः। लक्षणया शक्यसम्बन्धेन। एव हि। गतार्था सिद्धा। सा व्यञ्जना। न नैव। स्वीकार्या अङ्गीकर्तुं योग्या। इति इत्थम्। आहुः कथयन्ति। नैयायिका हि व्यञ्जनां शक्तिलक्षणाऽनुमानेष्वन्तर्भावयन्ति तां पृथग्वृत्तित्वेन न गृह्णन्ति। यत्र नानार्थकस्थले शब्दशक्तिमूला व्यञ्जना सा शक्त्यैव गतार्था यथा 'दूरस्था भूधरा रम्याः' इत्यत्र भूधरस्य पर्वतार्थं इव भूपार्थोऽपि शक्त्यैवोपस्थाप्यते। लक्षणामूला व्यञ्जनाऽपि लक्षणयैव गतार्था यथा गङ्गायां घोषः इत्यादौ शैत्यपावनत्वाद्यपि लक्षणयैव बोध्यते। अर्थशक्तिमूला व्यञ्जनाऽनुमानेऽन्त-र्भवति। तेन व्यञ्जनाख्या काचित् पृथग्वृत्तिरिति तन्मतम्। तद् दूषयति—तदित्या-दिना। तत् व्यञ्जनायाः शक्त्यादिष्वन्तर्भावनम्। न नोपयुक्तम्। वृत्तेर्विरम्य व्यापारा-भावान्न 'दूरस्था भूधरा रम्याः' इत्यत्र पर्वतार्थमुपस्थाप्य निवृत्तया शक्त्या पुनः राजार्थोपस्थापनम्। अनुमानस्य व्याप्त्यधीनत्वान्न तस्यार्थव्यञ्जकतायां प्रामाणिक उपयोगः, लक्षणायां तस्या अन्तर्भावोऽपि न, यतः लक्षणया शक्यसम्बन्धेन। मुख्यार्थ-बाधपूर्वकलक्ष्यार्थबोधकत्वात् मुख्यार्थस्य शक्यार्थस्य बाधोऽनुपपत्तिः तत्पूर्वकस्य लक्ष्यार्थस्य शक्यसम्बद्धार्थस्य बोधकत्वाद् उपस्थापकत्वात्। मुख्यार्थसम्बद्धार्थस्य शक्यार्थसम्बद्धमात्रस्यार्थस्य। एव हि न तदितरस्य। लक्षणया तदाख्यवृत्त्या। बोधक-त्वात् ज्ञापकत्वात्। व्यञ्जनायाः व्यञ्जनावृत्त्याः। अतथात्वेन मुख्यार्थबाधपूर्वकप्रवृत्ति-र्मुख्यार्थसम्बद्धार्थज्ञापकत्वञ्चेत्युभयलक्षणविलक्षणत्वेन। तदनन्तर्भावात् तत्र लक्षणाया-

मनन्तर्भावात् असमायोजनात्। च इति समुच्चये हेतूनाम्। इति। दिक् सङ्क्षेपतो व्याख्यानमिति। विस्तरस्त्वन्यत्र द्रष्टव्य इति।

न हि लक्षणायां व्यञ्जनाऽन्तर्भवितुमर्हति। मुख्यार्थबाधे सति तत्सम्बद्धार्थबोधिका हि लक्षणा रूढिं प्रयोजनं वाऽऽश्रित्य। व्यञ्जना तु न तत्प्रकृतिका, किन्तु तद्विलक्षण-स्वरूपा। सा हि न मुख्यार्थबाधमपेक्षते, न च शक्यार्थसम्बद्धमात्रार्थबोधकत्वं तत्र। यथा हि 'गङ्गायां घोषः' इत्यत्र शक्तिर्हि गङ्गापदस्य प्रवाहरूपशक्यार्थमुपस्थाप्य निवर्तते। निवृत्ता सा विरम्य व्यापाराभावान्न पुनस्तत्र प्रवर्तते। न च गङ्गागत-शैत्यपावनत्वादि सङ्केतार्थ एव। निवृत्तायां शक्तौ शक्यार्थस्य घोषेऽनन्वयात्तात्पर्या-नुपपत्तेश्च तद्बाधेन शैत्यपावनत्वादिप्रयोजनमाश्रित्य लक्षणा प्रवर्तते बोधयति च तटरूपं सामीप्यसम्बन्धेन मुख्यार्थभूतप्रवाहसम्बद्धार्थम्। ततः साऽपि निवर्तते। ततश्च व्यञ्जनया शैत्यपावनत्वादिप्रयोजनं व्यज्यते। न हि तल्लक्षणयोपस्थापयितुं शक्यते हेत्वभावात्। न हि तटरूपलक्ष्यार्थो मुख्यो न च तद्बाधः न च प्रयोजनमेव तत्र तत्प्रवृत्तेः। प्रयोजनस्य प्रयोजनं न सम्भवति। न च शब्दः स्खलद्गतिरिति वाचक-शब्दे सत्यपि यस्य प्रतीतिमाधातुं शब्दो हि लाक्षणिकत्वेन प्रयुज्यते तद्धि तेन व्यञ्जन-यैव व्यज्यत इति।

न च व्यञ्जनाऽनुमाने एवान्तर्भवति तत्र हेतूनामाभासत्वात्, न च स्मृतिमात्रेण सा सिध्यति इति सिद्धं व्यञ्जनाया अपि पृथगेव वृत्तित्त्वम्।

ध्यात्वा शम्भोश्चरणयोः श्रीलोकमणिना कृता।
व्यञ्जनाभागसम्बद्धा सम्पूर्णा किरणावली॥

---

हिन्दी—यह व्यञ्जना शब्द अर्थ पद, पद का एक भाग वर्ण, रचना, चेष्टा आदि में सर्वत्र पायी जाती है, क्योंकि वैसा ही अनुभव होता है। वक्ता आदि के वैशिष्टय का ज्ञान तो व्यङ्गय-विशेष ( अर्थव्यञ्जकता से सम्बद्ध ) के बोध में ही सहकारी है। इस हेतु उन सब की सभी स्थानों में अपेक्षा नहीं होती। इस कारण उसका विस्तृत विवेचन अन्यत्र ( ग्रन्थान्तर ) में देखें।

जो कि नैयायिक यह कहते हैं कि व्यञ्जना तो लक्षणा से ही गतार्थ होती है, इस हेतु वह स्वीकार करने योग्य नहीं है; वह ठीक नहीं है। लक्षणा से मुख्य अर्थ की अनुपपत्तिपूर्वक ही लक्ष्य अर्थ का बोध होता है और लक्षणा से मुख्यार्थ से सम्बद्ध अर्थ का ही बोध होता है। व्यञ्जना में इन लक्षणों के न होने से ( न तो उसे मुख्यार्थबाध की आवश्यकता है और न तो उससे मुख्य अर्थ से सम्बद्ध अर्थ का ही बोध

होता है। ) लक्षणा में उसका अन्तर्भाव नहीं होता। इस प्रकार संक्षेप से व्यञ्जना का निरूपण किया गया।

जो व्यञ्जना वृत्ति को पृथक् वृत्ति के रूप में स्वीकार नहीं करते वे शक्तिमूला व्यञ्जना को शक्ति में, लक्षणामूला व्यञ्जना को लक्षणा में, आर्थीव्यञ्जना को अनुमान में अन्तर्भावित करना चाहते हैं। वस्तुतः यह उपयुक्त नहीं है। यह तीनों से एकदम विलक्षण है। अतः इसका अन्तर्भाव उनमें से किसी में भी नहीं हो सकता।

इस प्रकार व्यञ्जना-विचार समाप्त हुआ।

## ( ४ ) अथ स्फोटनिरूपणम्

( ४० ) ननु कोऽयं वृत्त्याश्रयः शब्दः ? वर्णाः प्रत्येकमिति चेन्न; द्वितीयादि-वर्णोच्चारणवैयर्थ्यापत्तेः । नाऽपि वर्णसङ्घातः; उच्चरितप्रध्वंसित्वेन यौगपद्या-सम्भवात् । अभिव्यक्तेरुत्पत्तेर्वा क्षणस्थायित्वात् क्षणात्मककालस्य प्रत्यक्षा-योग्यत्वेन तदवच्छिन्नवर्णस्याप्यप्रत्यक्षत्वात् । उच्चारणाधिकरणकालोत्तर-कालवृत्तिध्वंसप्रतियोगित्वमुच्चरितप्रध्वंसित्वम् । 'इको यणचि' इत्यादौ तस्मिन्निति परिभाषोपस्कृतवाक्यार्थेऽयं पूर्वोऽयं पर इति नष्टस्य प्रत्यक्षविषयेदं-शब्देन पौर्वापर्यव्यवहारायोगाच्च ।

नत्वा स्फोटायनं व्याडिं शेषं भर्तृहरिं तथा ।
भट्टोजिकौण्डनागेशान् शेषराजञ्च मण्डनम् ॥१॥
व्याख्या स्फोटविचारस्य तन्मते किरणावली ।
बालम्भट्टमनुसृत्य दुर्बलञ्च सभापतिम् ॥२॥

**व्याख्या**—वृत्तिनिरूपणानन्तरं तदाश्रयशब्दनिरूपणाय प्रकरणमारभते—**नन्वित्या-दिना** । **ननु** इति प्रश्ने । **कः** कतमः । **अयम्** एषः सर्वत्र चर्चितः । **वृत्त्याश्रयः** वृत्तीनां शक्त्यादीनां व्यापाराणामाश्रय आधारभूतः । **शब्दः** ? तत्र प्रथमं वर्णस्फोटवादिनां मीमांसकानां मतमनूद्य दूषयितुमुपक्रमते—**वर्णा** इत्यादिना । **वर्णाः** शब्दगताक्षराणि । **प्रत्येकम्** एकैकं वृत्तेराश्रयः । **इति** इत्थम् । उच्यते चेत् न तद्धि न युक्तम् । वर्णनित्य-वादिनो मीमांसका हि वर्णानां प्रत्येकमर्थस्य वाचकत्वेन गृह्णन्ति । तन्मते गौरित्यत्र गकारौकारविसर्जनीयाः शब्दः । तत्र वर्णानां प्रत्येकं वाचकत्वं नोपयुक्तमिति कथने हेतुमाह—**द्वितीयेत्यादिना** । **द्वितीयादिवर्णोच्चारणवैयर्थ्यापत्तेः**—**द्वितीयः** आद्यात्पर आदिपदात्तृतीयादेरपि ग्रहणं द्वितीय आदिर्येषान्ते तादृशा ये वर्णाः शब्दगताक्षराणि यथा गौरित्यत्र औकारविसर्जनीयौ तेषामुच्चारणस्य ग्रहणस्य वैयर्थ्यं निरर्थकता तस्य आपत्तेः प्राप्तेः । यदि हि वर्णानां प्रत्येकं वाचकत्वं तदा गौरित्यत्र गकारस्योच्चारणे-नैवार्थबोधादौकारविसर्जनीयाद्युच्चारणं व्यर्थमेव स्यादिति न प्रत्येकं वर्णानां वाचकत्व-मिति । यदि प्रत्येकं वर्णानां वाचकत्वं न सम्भवति तदा वर्णसमुदायस्य तत्स्यादित्य-त्राह—**नेत्यादिना** । **न** नैव च । **वर्णसङ्घातः** वर्णानां शब्दगताक्षराणां सङ्घातः समुदाय एव वृत्त्याश्रय इति । तत्र हेतुमाह—**उच्चरितेत्यादिना** । वर्णानाम् **उच्चरितप्रध्वंसित्वेन** उच्चरितस्य वैखरीविषयत्वमाप्तस्य वर्णस्य प्रध्वंसित्वं नाशशीलत्वं तेन । **यौगपद्या-सम्भवात्** यौगपद्यं युगपदुपस्थितिस्तस्य असम्भवात् । यौगपद्यं हि तदैव सम्भवति यदि वर्णानां युगपदेवोपस्थितिः स्यात् । तद्विपरीतं वर्णास्तु उच्चारणसमनन्तरमेव नाशवन्तः । न च युगपदेव एकाधिकवर्णानामुच्चारणं सम्भवति । एकैकवर्णवर्तिनो वाङ् न द्वौ वर्णौ युगपदुच्चारयति । यथा गौरित्यत्र यावद् वाग् गकारे वर्तते न तावदौकारविसर्ज-

नीययोः। यावत्सा औकारे न तावद् गकारविसर्जनीययोः। न च यावद् विसर्जनीये तावद् गकारौकारयोरिति न हि तेषां यौगपद्यं सम्भवति, प्रणष्टोपस्थितानागतानां तदसम्भवात्। तेन न वर्णसङ्घातोऽपि वृत्त्याश्रय इति। यौगपद्यासम्भवे हेतुमाह— **अभिव्यक्तेरित्यादिना। अभिव्यक्तेः** मीमांसकमते वर्णा नित्यास्ते च ध्वनिनाभिव्यज्यन्ते न तूत्पाद्यन्ते तेषां सततोपस्थितेरिति तन्मते वर्णाभिव्यक्तेः। **उत्पत्तेः** नैयायिका हि वर्णानामनित्यत्वं मन्यमाना वर्णा उत्पाद्यन्ते इति कथयन्ति। तन्मते वर्णानामुत्पत्तेः। **वा** इति विकल्पे। **क्षणस्थायित्वात्** क्षणमुच्चारणकालव्यापिकालमात्रं स्थायित्वात् स्थिरत्वात्। वर्णानां मीमांसकमतेनाभिव्यक्तिरेवास्तु वा नैयायिकमतेन उत्पत्तिर्वा उभयत्र वर्णानां क्षणमात्रस्थायित्वादिति। **क्षणात्मककालस्य** क्षणः कालस्य परमापकर्षावधिर्यथा पृथिव्याः परमाणुः तदात्मकस्य तावन्मात्रावध्यवच्छिन्नस्य कालस्य समयस्य। **प्रत्यक्षायोग्यत्वेन** प्रत्यक्षं साक्षाद्दर्शनमनुभवो वा तस्य अयोग्यत्वेनानर्हत्वेन। **तदवच्छिन्नवर्णस्य** तेन प्रत्यक्षायोग्यक्षणात्मककालेन अवच्छिन्नो निरूपितो यो वर्णस्तस्य। **अपि च। अप्रत्यक्षत्वात्** प्रत्यक्षानर्हत्वात्। अभिवक्तो वोत्पन्नोऽपि वर्णः क्षणमात्रस्थायी। यथा हि क्षणः कालस्य परमापकर्षावधिस्तेन प्रत्यक्षायोग्यस्तथैव तदवच्छिन्नो वर्णोऽपि प्रत्यक्षायोग्य इति प्रत्यक्षायोग्यानां वर्णानां समुदाय एव न सम्भवतीति तस्य वृत्त्याश्रयत्वमपि न सम्भवतीति। उच्चरितप्रध्वंसित्वपदं व्याख्याति— **उच्चारणेत्यादिना। उच्चारणाधिकरणकालान्तरकालवृत्तिध्वंसप्रतियोगित्वम्**—उच्चारणस्य वर्णोच्चारस्य यः अधिकरणकालः आधारकालः यस्मिन् काले वर्णं उच्चार्यते स तस्याधिकरणकाल इति तस्माद्य उत्तरकालोऽव्यवहितानन्तरवर्तिकालस्तस्मिन् वृत्तिध्वंसः स्थितिनाशस्तस्य प्रतियोगित्वमनुरूपत्वं प्रतिरूपत्वं वा। **उच्चरितप्रध्वंसित्वम्** इति। वर्णा हि उच्चारणकालाव्यवहितोत्तरवर्तिकालविनाशिनः। तेषामयं स्वभाव एव उच्चरितप्रध्वंसिपदेन संसूच्यते। उच्चरितप्रध्वंसितत्वमिति न उच्चारणकाले एव विनाशित्वं यथा क्षणिकवादिनो वदन्ति, अपि तु क्रियायाः क्रमिकत्वनियमेनोच्चारणप्रध्वंसयोर्यौगपद्यमयुक्तमेव। **'इको यणचि'** (६।१।७७) इकः इति इकः स्थाने 'षष्ठी स्थानेऽयोगा' इति निर्देशात् इग्ग्रहणे सवर्णस्यापि ग्रहणमनुदेशित्वात् यण् स्याद्, अचि इति अचि परे इत्यादौ। **तस्मिन्निति निर्दिष्टे पूर्वस्य** (पा० सू० १।१।६६) तस्मिन्निति सप्तमीनिर्देशेन यथा 'इको यणचि' इत्यत्र अचि इति क्रियमाणं कार्यं यथा तत्र यणादेशः ततोऽव्यवहितपूर्वस्य स्थाने भवतीति। इति इत्थम्। **परिभाषोपस्कृतवाक्यार्थे** परिभाषया नियमकारिवाक्येन उपस्कृतः स्पष्टीकृतो यो वाक्यार्थः अचि परे ततोऽव्यवहितपूर्वस्य इकः स्थाने यण् भवतीति तस्मिन् **अयम् पूर्वः अयम् परः** कश्च पूर्वः कश्च परः। **इति** इत्थम्। **नष्टस्य** ध्वंसितस्य। **प्रत्यक्षविषयेदंशब्देन** प्रत्यक्षो विषयो यस्य सः प्रत्यक्षविषयः प्रत्यक्षबोधको य इदम् शब्दः अयमित्यस्य प्रकृतिस्तेन **पौर्वापर्यव्यवहारायोगात्** पूर्वः प्राग्वर्ती अपरः पश्चादवर्ती च तौ तयोर्भावः पौर्वापर्यं प्राक्पश्चाद्वर्तित्वं तस्य व्यवहार उपयोगस्तस्य अयोगात् अप्राप्तेः प्रक्रियोच्छेदापत्तिरिति। युगपत्स्थितयोरेवायं ज्येष्ठोऽयं मध्यम इति व्यवहारस्य सम्भवः। न च पूर्ववर्णस्थितिकाले द्वितीयवर्णोत्पत्तिः

पूर्ववर्णनाशोत्तरं यत्नान्तरेण वर्णान्तरोत्पत्तेः। नष्टविद्यमानयोः सम्बन्धिनोरव्यवहितोत्तरत्वस्य सम्बन्धताया वक्तुमशक्यत्वात् नापि वर्णसङ्घातः वृत्त्याश्रय इति।

अयमाशयः—मीमांसका हि वर्णानां नित्यत्वं मन्यन्ते, तेषामेवार्थस्य वाचकत्वञ्च। तेन तन्मते वर्णानामेव वृत्तेराश्रयत्वमापद्यते। अत्रोच्यते तथा सति किं वर्णानां प्रत्येकं वाचकत्वमथवा वर्णसङ्घातस्येति निर्णयः कर्तव्यः। न हि वर्णानां प्रत्येकं वाचकत्वं सम्भवति तथा सति द्वितीयप्रभृतिवर्णोच्चारणस्य व्यर्थत्वात्। यदि गौरित्यत्र गकारस्यैव वाचकत्वं तदा औकारविसर्जनीययोरुच्चारणं व्यर्थमेव। वर्णसङ्घातस्यापि न वाचकत्वं सम्भवति उच्चारणकालव्यवहितोत्तरकाले एव प्रध्वंसिनां क्षणमात्रस्थायिनां वर्णानां सङ्घात एव कुतः। सङ्घातस्तु समकालोपस्थितानामेव भवति। न च पूर्ववर्णस्थितिकाले द्वितीयवर्णोत्पत्तिः पूर्ववर्णनाशोत्तरं यत्नान्तरेणैव द्वितीयवर्णोत्पत्तेः। न च नष्टविद्यमानयोः पौर्वापर्यनियमः सम्भवति। तथा सति 'इको यणचि' इति सूत्रे 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति परिभाषया अचि परे तदव्यवहितपूर्वस्य इको यण् स्यादिति वाक्यार्थोऽप्यसङ्गतः स्यात्पौर्वापर्यानियमेन येन प्रक्रियाया एव उच्छेद आपद्येत। न च वर्णाः क्षणमात्रं तु स्थायिन एव। तेन तेषां सङ्घाते काऽऽपत्तिरिति वाच्यं क्षणस्य कालपरमापकर्षावधित्वेनाग्राह्यत्वाद्यथा पृथिव्यादेः परमाणुरिति। तेन न प्रत्येकं वर्णाः न च वर्णसङ्घात एव वृत्त्याश्रय इति सिद्धम्।

हिन्दी—वृत्तियों का आश्रयभूत यह शब्द क्या है? यदि प्रत्येक वर्ण को वृत्ति का आश्रय माना जाय तो वह ठीक नहीं है। तब तो दूसरे आदि वर्णों का उच्चारण ही बेकार हो जाएगा। न तो वर्णसमुदाय ही वृत्ति का आश्रय बन सकता है। उच्चरित वर्णों के नष्ट होने वाले स्वभाव के कारण उनका समुदाय बनना सम्भव नहीं होता। वर्णों की चाहे अभिव्यक्ति हो अथवा उत्पत्ति—दोनों ही क्षणमात्र ही स्थायी होते हैं। क्षणात्मक काल की प्रत्यक्ष होने की योग्यता न होने से उसके द्वारा अवच्छिन्न वर्ण भी अप्रत्यक्ष ही होते हैं। 'उच्चरित वर्णों के नष्ट होने वाला स्वभाव' का आशय यह है कि उच्चारण के आधारभूत काल के उत्तरकाल में उस वर्ण का नष्ट हो जाना। ऐसे वर्णों के समुदाय को वृत्ति का आश्रय मानने पर पाणिनि के 'इको यणचि' सूत्र के 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इस परिभाषा-सूत्र के द्वारा परिष्कृत वाक्यार्थ 'अच् के परे रहने से उससे अव्यवहित रूप में पूर्ववर्ती इक् के स्थान में यण् हो' में 'यह पूर्व का और यह परे का' ऐसा प्रणष्ट का प्रत्यक्ष विषय वाले 'यह' शब्द से पौर्वापर्य का व्यवहार सिद्ध नहीं होता।

इसका आशय यह है कि मीमांसक वर्ण को नित्य मानते हैं, वर्ण को ही अर्थ का वाचक भी। लेकिन यह ठीक नहीं है, क्योंकि यदि शब्द का प्रत्येक वर्ण वाचक होता तो फिर दूसरे वर्ण का उच्चारण ही बेकार हो जाएगा। 'गौः' में यदि गकार ही गाय का वाचक हो तो फिर औकार आदि की क्या आवश्यकता? लेकिन ऐसा नहीं होता। न तो वर्णों का समुदाय ही वृत्ति का आश्रय बन सकता है। क्योंकि उच्चारण काल के अव्यवहित बाद में आने वाले काल में ही नष्ट होने वाले एवं एक क्षणमात्र स्थायी

वर्णों का समुदाय नहीं बन सकता। एक ही काल में एक से अधिक वर्ण उच्चरित नहीं होते। दूसरे वर्ण के उच्चारण के पूर्व ही पहले उच्चरित वर्ण नष्ट हो जाते हैं और नष्ट एवं विद्यमान का समुदाय ही नहीं होता। क्षण काल की सबसे छोटी इकाई है और वह प्रत्यक्ष नहीं हो पाती और उससे अवच्छिन्न वर्ण भी प्रत्यक्ष नहीं हो पाते। प्रणष्ट एवं विद्यमान का पौर्वापर्य भी नहीं हो पाता। अतः वर्णसमुदाय भी वृत्ति का आश्रय नहीं बन पाता।

(४१) यत्तु तार्किकाः वर्णानामनित्यत्वेऽपि उत्तरोत्तरवर्णे पूर्वपूर्ववर्णवत्त्वमव्यवहितोत्तरत्वसम्बन्धेन संस्कारवशाद् गृह्यत इति पदस्य प्रत्यक्षत्वाच्छाब्दबोधः। यद्वा पूर्वपूर्ववर्णजाः शब्दाः शब्दजशब्दन्यायेन चरमवर्णप्रत्यक्षपर्यन्तं जायमाना एव सन्तीति न पदप्रत्यक्षानुपपत्तिः। यद्वा पूर्वपूर्ववर्णानुभवजन्यसंस्कारसध्रीचीनचरमवर्णानुभवतः शाब्दबोध इत्याहुः।

व्याख्या—इत्थं हि वर्णवाचकत्वमतं युक्त्या निरास्य सम्प्रति एतद्विषये नैयायिकमतमनुवदति खण्डनाय—यदित्यादिना। यद् यदेव। तु हि। तार्किकाः नैयायिकाः आहुरित्यनेनान्वयः। वर्णानां कखादीनाम्। अनित्यत्वे उत्पत्त्यनन्तरमेव नाशशीलत्वेन क्षणस्थायित्वे। अपि च। उत्तरोत्तरवर्णे पश्चादुच्चार्यमाणवर्णे। पूर्वपूर्ववर्णवत्वम् प्रागुच्चरितवर्णयुक्तत्वम्। अव्यवहितोत्तरत्वसम्बन्धेन अव्यवहितोत्तरत्वं नान्येनान्तरितत्वेन पश्चाद्वर्तित्वं तस्य सम्बन्धेन। संस्कारवशात् पूर्वानुभवजन्यस्मृतिः संस्कारस्तद्वशात्। गृह्यते प्रत्यक्षतामायाति। इति हेतोः। पदस्य। प्रत्यक्षत्वात् प्रत्यक्षविषयत्वात्। शाब्दबोधः अर्थज्ञानमिति। अयमाशयः—यदा हि कश्चिच्छब्द उच्चार्यते श्रोत्रा येषां येषां वर्णानामुच्चारणं श्रुतं तेषां तेषां वर्णानां संस्कारस्तद्बुद्धौ सञ्जायते येन पश्चाद्वर्तिवर्णानामुच्चारणकालेऽपि पूर्वपूर्वोच्चारितवर्णा गृहीता भवन्ति अव्यवहितोत्तरत्वसम्बन्धेन। एवमुत्तरोत्तरवर्णैः सह पूर्वपूर्ववर्णानां गृहीतत्वेन पदं प्रत्यक्षतामायाति यतः शाब्दबोधः सम्भवति। अव्यवहितोत्तरत्वसम्बन्धेनैव वर्णानां कश्चिद्विशिष्टः क्रमो बुद्धौ उपस्थितो भवति, येन सरो रसः नदी दीनः इत्यान्यन्योन्यविपरीतक्रमशब्दानां न हि समानः शाब्दबोध इति। पक्षान्तरमाह—यदित्यादिना। यद्वा अथवा। पूर्वपूर्ववर्णजाः पूर्वपूर्वोच्चरितवर्णसम्बद्धास्तदुत्पन्नाः। शब्दाः। शब्दजशब्दन्यायेन यथा हि भेर्यादिजः शब्दः स्वविनाशात्पूर्वमेव शब्दान्तरमुत्पादयति यथा वोत्पन्ना वीचिः स्वप्रलयात् प्रागेव वीच्यन्तरमुत्पादयति तथैव शब्दात् शब्दान्तरोत्पत्तिरिति न्यायेन। चरमवर्णप्रत्यक्षपर्यन्तं चरमोऽन्तिमो यो वर्णस्तस्य प्रत्यक्षपर्यन्तं प्रत्यक्षज्ञानं यावत्। जायमानाः उत्पद्यमानाः। एव हि। सन्ति तिष्ठन्ति। इति हेतोः। न नैव। पदप्रत्यक्षानुपपत्तिः पदानां प्रत्यक्षस्य अनुपपत्तिरसिद्धिः। अयमाशयः—यथा हि भेर्यादिभिरुत्पादितः कश्चिच्छब्दः स्वप्रलयात्प्रागेव शब्दान्तरमुत्पादयति सजातीयं तथैव पूर्वपूर्वोच्चरितवर्णास्तावत्पर्यन्तं स्वसजातीयध्वनिमुत्पादयन्ति यावत्पर्यन्तं श्रोता चरमवर्णं न शृणोति। इत्थं चरमवर्णश्रवणकालपर्यन्तं पूर्वपूर्वोच्चरितवर्णानामुत्पद्यमानत्वात्समग्रमेव पदं प्रत्यक्षतामायाति।

वर्णा हि चरमवर्णोत्पत्तिपर्यन्तं परम्परया सजातीयवर्णानुत्पादयन्त एव तिष्ठन्तीति युगपदेव सर्ववर्णोपलब्धिर्यतः पदप्रत्यक्षसम्भव इति। तृतीयं पक्षमाह—यद्वेत्यादिना। यद्वा अथवा। पूर्वपूर्ववर्णानुभवजन्यसंस्कारसध्रीचीनचरमवर्णानुभवतः—पूर्वपूर्ववर्णानां प्रागुच्चरितवर्णानां योऽनुभवः साक्षाज्ज्ञानं तज्जन्यस्तदुत्पन्नो यः संस्कारः स्मृतिरूपस्तस्य सध्रीचीनः सहचरो यश्चरमोऽन्तिमो वर्णस्तस्यानुभवः साक्षाज्ज्ञानं तस्मात्। शाब्दबोधः अर्थज्ञानम्। भवतीति शेषः। पूर्वपूर्ववर्णश्रवणोत्पन्नो यः संस्कारस्तेन सहान्तिमवर्णश्रवणात्पदप्रत्यक्षत्वेन शाब्दबोध इत्याशयः।

अत्र हि नैयायिकमतसम्बद्धाः शाब्दबोधविषये त्रयः पक्षा उपस्थापिताः, यत्राद्यो वर्णानामनित्यत्वेऽपि पूर्वपूर्वोच्चरितवर्णश्रवणजन्यसंस्कारद्वारा उत्तरोत्तरवर्णोच्चारणसमयेऽपि पूर्वपूर्वोच्चरितवर्णानां ग्रहणं भवति तेषामव्यवहितोत्तरत्वसम्बन्धेन येन पदस्य प्रत्यक्षत्वं सम्भवति यतः शाब्दबोध इति। द्वितीयस्तु उच्चरितवर्णाश्चरमवर्णोत्पत्तिपर्यन्तं परम्परया सजातीयवर्णानुत्पादयन्तस्तिष्ठन्तीति युगपदेव सर्ववर्णोपलब्धेर्न पदप्रत्यक्षानुपपत्तिः। यथा हि भेर्यादिजशब्दाः स्वजातीयशब्दानुत्पादयन्ति तथैवात्रापि वर्णाः स्वसजातीयवर्णानुत्पादयन्तीति। तृतीयस्तु पूर्वपूर्ववर्णश्रवणोत्पन्नसंस्कारसहचरान्तिमवर्णश्रवणात्पदप्रत्यक्षत्वेन शाब्दबोध इति। यथोक्तम्—तत्तद्वर्णसंस्कारसहितचरमवर्णोपलम्भेन तद्व्यञ्जकेनैवोपपत्तेरिति।

हिन्दी—जो कि नैयायिक ( कहते हैं ) 'वर्णों के अनित्य होने पर भी उत्तर-उत्तर वर्ण का पूर्व-पूर्व वर्णों से युक्त होना जो है, वह अव्यवहित उत्तरकालिकता के सम्बन्ध से संस्कार के द्वारा ग्रहीत होता है और उसके पद के प्रत्यक्ष होने से शाब्दबोध होता है।'

अथवा 'पूर्व-पूर्व वर्णों से उत्पन्न शब्द शब्दजशब्दन्याय ( शब्द से सजातीय शब्द उत्पन्न होने का न्याय ) से अन्तिम वर्ण प्रत्यक्ष होने तक जायमान ही रहते हैं, जिससे पद की प्रत्यक्षता में कोई बाधा नहीं होती।'

अथवा 'पूर्व-पूर्व वर्णों के अनुभव से उत्पन्न संस्कार के सहचर चरम वर्ण के अनुभव से शाब्दबोध होता है' ऐसा कहते हैं।

(४२) तन्न। आद्येऽयम्पूर्वोऽयम्परः इत्यभिलाषासम्भवेनाव्यवहितोत्तरत्वसम्बन्धायोगात्। नष्टविद्यमानयोरव्यवहितोत्तरत्वसम्बन्धस्य वक्तुमशक्यत्वाच्च। द्वितीये शब्दजशब्दन्यायेन पदप्रत्यक्षोपपादनेऽपि पदस्याविद्यमानत्वेन तत्र शक्त्याश्रयत्वस्य ग्रहानुपपत्तेः। अविद्यमाने आश्रयत्वाङ्गीकारे 'नष्टो घटो जलवान्' इत्याद्यापत्तेश्च। तृतीये येन क्रमेणानुभवस्तेनैव क्रमेण तत्संस्कारस्थितिरित्यत्र विनिगमकाभावात् 'सरो रसः' 'नदी दीनः' इत्यादौ विपरीतसंस्कारोद्बोधेन प्रत्येकमन्यार्थप्रत्ययापत्तेः। उत्पत्तिविनाशवद्वर्णसमुदायरूपपदस्य मनुष्यादिवद् भेदे 'एक इन्द्रः शब्दः क्रतुशते प्रादुर्भूतो युगपत् सर्वयागेष्वङ्गं भवति' इति भाष्यविरोधापत्तेश्च। प्रादुर्भूतोऽभिव्यक्तः।

**व्याख्या**—तत्प्रत्याख्याति—**तदित्यादिना**। **तत्** नैयायिकैः पदप्रत्यक्षताविषये यदुक्तं तत्। **न** नोपयुक्तम्। प्रत्याख्याने हेतुमाह—**आद्ये** इत्यादिना। **आद्ये** उत्तरोत्तरवर्णे पूर्वपूर्ववर्णवत्त्वमव्यवहितोत्तरत्वसम्बन्धेन संस्कारवशाद् गृह्यत इति प्रथमे विकल्पे। **अयं पूर्वः** प्राग्वर्ती। **अयं परः** उत्तरवर्ती। **इति** इत्थम्। **अभिलाषासम्भवेन** व्यवहारासम्भवात्। **अव्यवहितोत्तरत्वसम्बन्धायोगात्** अव्यवहितो व्यवधानरहित यः उत्तरत्वसम्बन्धः पश्चाद्वर्तित्वसम्बन्धस्तस्य अयोगादनुपपत्तेः। **नष्टविद्यमानयोः** अतीतवर्तमानयोः। **अव्यवहितोत्तरत्वसम्बन्धस्य**। व्यवधानरहितपश्चाद्वर्तित्वसम्बन्धस्य। **वक्तुं** प्रतिपादयितुम्। **अशक्यत्वात्** असाध्यत्वात्। **चेति**। **द्वितीये** द्वितीयविकल्पे। **शब्दजशब्दन्यायेन** यथा हि भेर्यादिजशब्दाः स्वसजातीयशब्दमुत्पादयन्ति तथैव उच्चरितवर्णाश्चरमवर्णप्रत्यक्षपर्यन्तं परम्परया जायमाना एव तिष्ठन्तीति न्यायेन। **पदप्रत्यक्षोपपादने** पदप्रत्यक्षतासाधने। **अपि**। **पदस्य** वर्णस्यानित्यत्वात्तद्घटितपदस्याऽपि। **अविद्यमानत्वेन** स्थितिरहितत्वेन। **तत्र** तादृशेऽविद्यमाने पदे। **शक्त्याश्रयत्वस्य** शक्तेः वाच्यार्थबोधकवृत्तेराश्रयत्वस्याधारत्वस्य। **ग्रहानुपपत्तेः** ग्रहणासिद्धेः। **अविद्यमाने** अस्तित्वहीने। **आश्रयत्वाङ्गीकारे** शक्तेराश्रयरूपेण स्वीकारे। **'नष्टो घटो जलवान्' नष्टः** भग्नः **घटः** कुम्भः **जलवान्** वारिपूरितः। **इत्याद्यापत्तेः** इत्यादेरपि प्राप्तेः। **च** इति समुच्चये। अयम्भावः—यद्यपि नैयायिका हि शब्दजशब्दन्यायमाश्रित्य पदस्य प्रत्यक्षतां साधयन्ति तथापि वर्णानां वस्तुतोऽभावेन वर्णसमुदायरूपपदस्याप्यविद्यमानतैव। अतस्तादृशस्य वस्तुतोऽस्तित्वहीनस्य न शक्यते शक्तेराश्रयत्वं स्वीकर्तुम्। तथाकृते सति प्रणष्टस्य घटस्य जलवत्त्वमपि स्वीकर्तव्यं भवेद्यद्धि नितान्तमसङ्गतमिति। **तृतीये** पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहचरचरमवर्णानुभवतः पदप्रत्यक्षतेति विकल्पे। **येन** येनैव। **क्रमेण** पौर्वापर्येण। **अनुभवः** साक्षाज्ज्ञानम्। **तेनैव** तादृशेनैव। **क्रमेण** व्यवस्थया। **तत्संस्कारस्थितिः** तस्यानुभवस्य तज्जन्यस्येति संस्कारस्य स्थितिरवस्थानम्। भवतीति। **इति** इत्थम्। **अत्र** प्रसङ्गेऽस्मिन्। **विनिगमकाभावात्** विनिगमकं निश्चायकहेतुस्तदभावात्तद्विरहात्। **सरो रसः नदी दीनः इत्यादौ** इत्यादिपदे। **विपरीतसंस्कारोद्बोधेन** विपरीतस्य व्यतीतक्रमस्य संस्कारस्य उद्बोधेनोपस्थित्या। **प्रत्येकं** प्रतिपदमेव। **अन्यार्थप्रत्ययापत्तेः** अन्यस्याभीष्टेतरस्यार्थस्य प्रत्ययो बोधस्तस्यापत्तेः प्राप्तेः। अयमाशयः—पूर्वपूर्ववर्णजन्यसंस्कारविशिष्टचरमवर्णानुभवेन शाब्दबोध इति मतेऽपि वर्णक्रमेणैव संस्कारक्रम इति निश्चायकहेतोरभावात्क्रमस्य विपरीतबोधेन ततोऽनभीष्टार्थोऽप्यापद्येत 'नदी दीनः' इत्यादौ। यत्र **नदी** सरित्, **दीनः** दुःखी। तथैव **सरः** पुष्करिणी, **रसः** सारः इत्यर्थे रसस्य स्थाने सरसः सरसः स्थाने रसस्य च बोधः सम्भवेदित्यादि। यदि भवानत्र क्रमहीनतादोषस्य सम्भावनामुद्भावयति किं न तत्स्फोटसिद्धान्ते भवत्सम्मते? अन्ततस्तु भवानपि प्राकृतध्वनिरूपवर्णेभ्य एव स्फोटस्याभिव्यक्तिं मन्यन्ते इति चेदुच्यते न हि स्फोटसिद्धान्ते स दोषः। स्फोटो हि सर्वथा निरवयवोऽखण्डश्च। तत्र क्रमिकता तु तदभिव्यञ्जकवर्णक्रमिकतयाऽऽभासिता भवति। यदि स्फोटोऽखण्डस्तदा शब्दस्य प्रथमेनैव वर्णेन तदभिव्यक्तिः सम्भवतीति द्वितीयादि-

वर्णानां ग्रहणं व्यर्थमेवेति चेदित्थम्। यद्यपि स्फोटस्य निरवयवत्वेनाखण्डत्वेन च तदभिव्यक्तिः प्रथमेनैव वर्णेन सम्भवति, तथापि न हि तत एव पूर्णतः स्पष्टरूपेण तस्याविर्भावः द्वितीयादिवर्णानां पुनः पुनरावृत्त्या स्फोटस्य पूर्णतया अभिव्यक्तिर्भवतीति न द्वितीयादिवर्णानां वैयर्थ्यम्। यथा हि पुनः पुनरावृत्त्या श्लोकः पूर्णतया स्मृतो भवति तथैवात्रापि। येन क्रमेण चित्ते स्फोटस्य विशिष्टक्रमसंस्कारस्तेनैव क्रमेण व्यञ्जकध्वनीनामपि स्फोटाभिव्यञ्जकत्वमिति न स्फोटे क्रमहीनतादोषः। नैयायिकमते तु स्फोटस्याखण्डत्वानङ्गीकारेण उक्तदोष इति स्पष्टमन्यत्र। यथोक्तं लघुमञ्जूषायाम्—'येन क्रमेण चित्ते संस्कारस्तेनैव व्यञ्जकरूपरूपिता तस्येति स्वीकारान्न सरो रस इत्यनयोरविशेषः' इति। तर्हि 'अकारो वासुदेवः स्यात्' इत्यादौ एकवर्णात्मके शब्दे एकेनैव वर्णेन कथं स्फोटस्य पूर्णतोऽभिव्यक्तिस्तत्रावृत्त्यभावादिति चेदुच्यते, तादृशे शब्दे वर्णान्तरापेक्षाभावात् तत्सम्भवतीति।

नैयायिकमते भाष्यासङ्गतिं दर्शयति—उत्पत्ति इत्यादिना। उत्पत्तिविनाशवद्वर्णसमुदायरूपपदस्य उत्पत्तिविनाशधर्मयुक्तवर्णसङ्घातात्मकपदस्य। मनुष्यादिवत् यथा हि मनुष्य आकृत्या प्रत्येकं भिद्यते तथैव। भेदे भेदस्वीकारे। एक इन्द्रः शब्दः क्रतुशते प्रादुर्भूतः युगपत् सर्वयागेषु अङ्गं भवति एक एव इन्द्रशब्दः क्रतूनां यज्ञानां शतं तस्मिन् प्रादुर्भूतः अभिव्यक्तः। युगपत् एकवारमेव। सर्वयागेषु सर्वेषु एव यज्ञेषु। अङ्गं साधनं भवति सम्पद्यते इति। भाष्यविरोधापत्तेः भाष्यवचनेन विरोधोपस्थितेः। च। भाष्यवचने प्रादुर्भूत इति शब्दस्य अभिव्यक्त इत्यर्थो न तूत्पन्न इति। अयमाशयः—उत्पत्तिविनाशधर्मयुक्तवर्णसमुदायस्य पदत्वस्वीकारे यावद्वारं शब्द उच्चार्यते तावत्सङ्ख्याका एव भिन्न-भिन्नशब्दाः सम्भवन्ति। यदि शतवारमिन्द्रशब्द उच्चार्यते तदा शतमेव इन्द्रशब्दाः स्वीकर्तव्याः। इत्थमुच्चारणभेदेन शब्दवैभिन्यस्वीकारे भाष्यकारस्य एक एवेन्द्रशब्दः क्रतुशते साधनं भवतीति कथनेन विरोध आपद्यते इति। वस्तुतस्तु उच्चारणभेदेन भिन्नेभ्यः शब्देभ्योऽर्थज्ञानं न सम्भवति तेषामानन्त्याद् व्यभिचाराच्चेति।

हिन्दी—वह कथन ठीक नहीं है। पहले विकल्प में 'यह पूर्व है' 'यह पर है' इस प्रकार के व्यवहार के सम्भव न होने से व्यवधानरहित उत्तरकालिकता का सम्बन्ध ही नहीं बन पाता, नष्ट एवं विद्यमान के बीच व्यवधानरहित उत्तरकालिकतासम्बन्ध प्रतिपादित नहीं किया जा सकता। दूसरे विकल्प में शब्दजशब्दन्याय से पद की प्रत्यक्षता का उपपादन करने पर भी पद के अविद्यमान रहने से उसमें शक्ति के आश्रयत्व का ग्रहण सिद्ध नहीं होता। अविद्यमान में भी शक्ति की आश्रयता के स्वीकार किये जाने पर 'टूटा हुआ घड़ा जल से पूर्ण है' इत्यादि व्यवहार होने लगेगा, जो कि अनुचित है। तीसरे विकल्प में जिस क्रम से अनुभव होगा ठीक उसी क्रम से उसके संस्कार की स्थिति होती है। इस तरह किसी निश्चायक हेतु का अभाव होने से सर रस, नदी दीन इत्यादि में विपरीत संस्कार के उद्बोध से प्रत्येक में अभीष्ट से भिन्न अर्थ की प्रतीति हो सकती है। उत्पत्ति एवं विनाश धर्म से युक्त वर्णों का समुदाय रूप पद का मनुष्य आदि की तरह भेद मानने पर 'एक ही इन्द्र शब्द सौ यज्ञों में अभिव्यक्त

हुआ, एक वार ही सभी यज्ञों में अङ्ग अर्थात् साधन बन जाता है' इस आशय का भाष्यकार के वचन से विरोध भी होता है। भाष्यवचन में प्रादुर्भूत पद का अर्थ अभिव्यक्त है, न कि उत्पन्न।

इसका आशय यह है कि नैयायिकों का 'वर्णों के अनित्य होने पर भी अव्यवहित उत्तरत्वसम्बन्ध के नाते उत्तर-उत्तर वर्णों में पूर्व-पूर्व वर्णों से युक्तता संस्कार के द्वारा गृहीत होती है, अतः पदप्रत्यक्ष हो जाता है'। यह कथन ठीक नहीं है, क्योंकि ऐसा मानने पर 'यह पूर्व है और यह पर है' ऐसे व्यवहार के सम्भव न होने से अव्यवहित उत्तरत्वसम्बन्ध भी नहीं बन पाता और नष्ट एवं विद्यमान के बीच का अव्यवहित उत्तरत्वसम्बन्ध कहा भी नहीं जा सकता।

नैयायिकों का दूसरा विकल्प— 'पूर्व-पूर्व वर्णों से उत्पन्न शब्द शब्दजशब्द ( उत्पन्न-ध्वनि अपने सदृश शब्द का उत्पादन करती है ) न्याय से अन्तिम वर्ण के प्रत्यक्ष होने तक जायमान ही रहते हैं, अतः पद की प्रत्यक्षता में कोई अनुपपत्ति नहीं है'—भी युक्ति-युक्त नहीं है, क्योंकि शब्दजशब्दन्याय से पद के प्रत्यक्षत्व का उपपादन होने पर भी वस्तुतः पद के विद्यमान न रहने से उसको शक्ति के आश्रय के रूप में नहीं लिया जा सकता। यदि अविद्यमान को ही आश्रय के रूप में लिया जाय तो टूटे हुए घडे को जल का आधार मानने के बराबर होगा, जो कि असङ्गत है।

नैयायिकों का तीसरा विकल्प—'पूर्व-पूर्व वर्णों के अनुभवजन्य संस्कार के सहचर अन्तिम वर्ण के अनुभव से शाब्दबोध होता है'—भी ठीक नहीं है, क्योंकि जिस क्रम से अनुभव होगा—ठीक उसी क्रम से उसके संस्कार की भी स्थिति होती है, ऐसा कोई निश्चायक हेतु का अभाव होने से सर-रस, नदी-दीन आदि में विपरीत संस्कार के उद्-बोध से प्रत्येक में दूसरे ही अर्थ की प्रताति भी हो सकती है, जो कि अभीष्ट नहीं है।

इस प्रकार उत्पत्ति एवं विनाश धर्म वाले वर्णों के समूह को पद मानने से एक शब्द का जितनी बार उच्चारण होता है—उतने ही भिन्न शब्द मानने होंगे और उच्चारण-भेद से भिन्न-भिन्न इन शब्दों से शक्तिग्रह भी सम्भव नहीं होता, क्योंकि इसमें आनन्त्य एवं व्यभिचार दोष आ जाते हैं। साथ ही इन्द्र शब्द को एक मानकर 'एक ही इन्द्र शब्द सौ यज्ञों में अभिव्यक्त होकर सब यज्ञों का अङ्ग बन जाता है'—ऐसे भाष्यवचन से इसका विरोध भी होता है।

यद्यपि वैयाकरण के स्फोटसिद्धान्त में भी प्राकृतध्वनि रूप वर्ण ही स्फोट के अभिव्यञ्जक माने जाते हैं, फिर भी स्फोट के निरवयव एवं अखण्ड होने से उसमें क्रमहीनता दोष नहीं आता। शब्द के प्रथम वर्ण से स्फोट की अभिव्यक्ति होती है और दूसरे आदि वर्णों से वह पूर्ण एवं स्पष्ट होता है। चित्त में जिस विशिष्ट क्रम से संस्कार होता है ठीक उसी क्रम से ही ध्वनिरूप वर्णों के द्वारा उसकी अभिव्यक्ति होती है। अतः उसमें क्रमहीनता की सम्भावना नहीं रहती। नैयायिकमत में स्फोट को सावयव एवं सखण्ड मानने के कारण यह दोष आ जाता है।

(४३) ननु कस्तर्हि वृत्त्याश्रयः शब्दः ? स स्फोटात्मक इति गृहाण। ननु कोऽयं स्फोटः ? उच्यते। चतुर्विधा हि वागस्ति—परा, पश्यन्ती, मध्यमा वैखरी च। तत्र मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परा वागुच्यते। नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता मनोगोचरीभूता पश्यन्ती वागुच्यते। एतद्द्वयं वाग्ब्रह्म योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषय इत्युच्यते। ततो हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता तत्तदर्थवाचकशब्दस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिर्ग्राह्या मध्यमा वागुच्यते। तत आस्यपर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रामता च मूर्धानमाहत्य परावृत्य च तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणाऽपि ग्राह्या वैखरी वागुच्यते।

**व्याख्या**—इत्थं वर्णवादिनां मीमांसकानां पदवादिनां नैयायिकानां वृत्त्याश्रयविषये मतं प्रत्याख्याय सम्प्रति स्वाभीष्टमतस्थापनायोपक्रमते—**नन्वित्यादिना**। **ननु** इति प्रश्ने। **तर्हि** यदि तथा वर्णस्य पदस्य च न वृत्त्याश्रयत्वं तदा। **वृत्त्याश्रयः** वृत्त्याधारभूतः। **शब्दः**। **कः** ? कीदृशोऽसौ शब्दो यो हि वृत्तेराश्रयो भवितुमर्हति भवन्मते इति। तदाह—**स** इत्यादिना। **सः** वृत्त्याश्रयः शब्दः। **स्फोटात्मकः** स्फोटः अन्तर्नाद आत्मा स्वरूपं यस्य सः स्फोटस्वरूपः। **इति** इत्थम्। **गृहाण** अवगमेति। पृच्छति—**नन्वि**त्यादिना। **ननु** इति प्रश्ने जिज्ञासायाञ्च। **अयम्** भवदुक्तः वृत्त्याश्रयत्वेन भवत्सम्मतः। **स्फोटः**। **कः** किंस्वरूपः ? तदाह—**उच्यते** इत्यादिना। **उच्यते** कथ्यते स्फोटस्वरूपमिति। तदेवाह—**चतुर्विधे**त्यादिना। **वाक्** वाणी। **चतुर्विधा** चतुर्विधस्वरूपा। **अस्ति** विद्यते। एकाऽपि वागाश्रयभेदेन चतुष्प्रकारेति। **परा, पश्यन्ती, मध्यमा वैखरी** चेति। तत्र परास्वरूपमाह—**तत्रे**त्यादिना। **तत्र** चतुर्विधासु वाक्षु। **मूलाधारस्थपवनसंस्कारीभूता** मूलाधारः 'पाय्वन्ताद् द्वयङ्गुलादूर्ध्वं लिङ्गाच्च द्वयङ्गुलादधः। मध्यमेकाङ्गुलं यच्च देहमध्यं प्रचक्षते ॥' इति गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम्। अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे। इत्यपि च निर्दिष्टो देहभागस्तत्स्थो यः पवनो वायुः तत्रैव पवनस्याऽप्युत्पत्तेः, तेन संस्कारीभूता इच्छया जातेन प्रयत्नेन सह मूलाधारस्थपवनसम्बन्ध एव तत्संस्कारस्तेनोन्मुखीकृता। **मूलाधारस्था** गुदलिङ्गान्तरगतचतुर्दलचक्रगता। **शब्दब्रह्मरूपा**—'अनादिनिधनं ब्रह्मशब्दतत्त्वं यदक्षरम्। विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥' इति परिभाषितम् अद्वितीयस्य ब्रह्मणः क्रीडाया अभावादिच्छोत्पद्यते सैव मायापदेनोच्यते। ततो बिन्दुरूपमव्यक्तं त्रिगुणं जायते। भिद्यमानात्तस्माद् बिन्दोरव्यक्तात्मको रव उत्पद्यते। स एव शब्दब्रह्मेति कथितञ्च शब्दब्रह्म तद्रूपा। **स्पन्दशून्या** स्पन्दः सञ्चरणं क्रिया वा तच्छून्या तद्रहिता। **बिन्दुरूपिणी** परमेश्वरस्य सिसृक्षात्मकमायावृत्तेर्बिन्दुरूपमव्यक्तं त्रिगुणे जायते। इदमेव शक्तितत्त्वम्। तस्य बिन्दोरचिदंशो बीजम्, चिदचिन्मिश्रोंऽशो नादः, चिदंशो बिन्दुरिति व्याख्यातो बिन्दुस्त्रिदंशस्तत्स्वरूपा। कारणबिन्दुरूपेत्याशयः। **वाक्** वाणी। **परा** इति परापदेन। **उच्यते** कथ्यते। परा हि अत्यन्तसूक्ष्मत्वेनाग्राह्यत्वात्सूक्ष्मा इत्यप्युच्यते। उक्तमेव—

'स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी'। इति।

पश्यन्तीं व्याचष्टे—**नाभीत्यादिना**। **नाभिपर्यन्तं** मूलाधारतो नाडीमार्गेण नाभिप्रदेशपर्यन्तम्। **आगच्छता** प्राप्नुवता। **तेन** मूलाधारोत्थितेन। **वायुना** पवनेन। **अभिव्यक्ता** प्रकटीकृता। **मनोगोचरीभूता** मनसो विषयत्वमागता। **वाक्** वाणी। **पश्यन्ती इति** इत्थम्। **उच्यते** कथ्यते। **एतद् द्वयं** परारूपं पश्यन्तीरूपञ्च। **वाग्ब्रह्म** शब्दब्रह्म। **योगिनां** योगसिद्धानाम्। **समाधौ**—'सोऽहं ब्रह्म न संसारी न मत्तोऽन्यत्कदाचन।' इति विद्यात्स्वमात्मानं स समाधिरित्युक्तरूपे समाधीयते पूर्णतया निगृह्यते मनोऽस्मिन्निति समाधिः प्रमाणादिसर्ववृत्तिनिरोधावस्था वृत्त्यन्तरनिरोधपूर्वकात्मगोचरधारावाहिकचित्तवृत्तिर्वा तस्मिन्। **निर्विकल्पकसविकल्पकज्ञानविषयः** निर्गतो विशेष्यविशेषणभावो यस्मादिति निर्विकल्पकं वैशिष्ट्यानवगाहि चिन्मात्रविषयकं ज्ञातृज्ञानज्ञेयविकल्पानवभासनपुरःसरं सविकल्पकं विशेष्यविशेषणभावयुक्तं व्यवसायात्मकं घटोऽयमित्याकारकं समवायेन घटत्वविशिष्टं च यज्ज्ञानमवबोधस्तस्य विषयः। **इति** इत्थम्। **उच्यते** कथ्यते इति। उभेऽप्येते व्यवहारातीते तत्राप्याद्या तु न कस्यापि गम्या द्वितीया हि योगिनां समाधौ गम्या। मध्यमां व्याख्याति—**तत** इत्यादिना। **ततः** नाभिप्रदेशात्। **हृदयपर्यन्तं** हृत्प्रदेशपर्यन्तम्। **आगच्छता** प्राप्नुवता। **तेन** मूलाधारोत्थेन। **वायुना** पवनेन। **अभिव्यक्ता** प्रकटिता। **तत्तदर्थवाचकशब्दस्फोटरूपा** तेषां तेषां सम्बद्धानामर्थानां वाचकः अवबोधको यः शब्दस्फोटः सूक्ष्मशब्दस्तद्रूपा। **श्रोत्रग्रहणायोग्यत्वेन** श्रोत्रस्य श्रोत्रेन्द्रियस्य ग्रहणाय विषयत्वाय अयोग्यत्वेन अनुपयुक्तत्वेन। **सूक्ष्मा** अत्यन्तसूक्ष्मविग्रहा। **जपादौ** जपादिकर्मणि। **बुद्धिनिर्ग्राह्या** बुद्ध्या प्रज्ञया एव निर्ग्राह्या ग्रहणयोग्या। **वाक्** वाणी। **मध्यमा इति** उच्यते। वैखरीं व्याचष्टे—**तत** इत्यादिना। **ततः** हृत्प्रदेशात्। **आस्यपर्यन्तं** मुखप्रदेशपर्यन्तम्। **आगच्छता** प्राप्नुवता। **तेन** मूलाधारोत्थेन। **वायुना** पवनेन। **ऊर्ध्वम्** ऊर्ध्वप्रदेशम्। **आक्रामता** हरता। **च**। **सता**। **मूर्धानं** शिरोदेशम्। **आहत्य** प्रहृत्य। **परावृत्य** निवृत्य। **च** इति क्रियासमुच्चये। **तत्तत्स्थानेषु** तेषु तेषु तात्वादिषु स्थानेषु उच्चारणावयवेषु। **अभिव्यक्ता** स्पष्टीकृता। **परश्रोत्रेण** परकीयश्रोत्रेन्द्रियेण। **अपि च**। **ग्राह्या** ग्रहणयोग्या श्राव्येति। **वाक्** वाणी। **वैखरी इति** उच्यते इति।

षण्णवत्यङ्गुलो देहायामः। तत्राङ्गुलार्धसहितं सप्तचत्वारिंशदङ्गुलात्मकमधः उपरि च परित्यज्यैकाङ्गुलपरिमितं मध्यं मूलाधारः। उक्तञ्च—'गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम्' इति। उक्तञ्च—'पायवन्ताद् द्व्यङ्गुलादूर्ध्वं मेहनाद् द्व्यङ्गुलादधः। मध्यमेकाङ्गुलं यच्च देहमध्यं प्रकीर्तितम्'॥ इति। तत्रैव मूलप्रकृत्यात्मिका कुण्डलिनी महदादिभिर्वेष्टिता सर्पवत्तिष्ठति। मूलाधारादुत्थितः पवनः नाडीद्वारेण कार्याणि करोति। मूलाधारे एव। प्राणिनां मूलाधारे वर्णादिविशेषरहिता चेतनाभिधा सृष्ट्युपयोगिनी जगदुपादानकारणभूता कुण्डलिनीरूपेण वर्तते। कुण्डलिन्याः प्राणवायुसंयोगे परा व्यज्यते। निष्पन्देयं कारणबिन्दुरूपा सूक्ष्मस्फोटाख्या। पश्यन्त्याद्या अस्या एव विवर्ताः। परमात्मनः सिसृक्षात्मकमायावृत्तेः त्रिगुणं बिन्दुरूपमव्यक्तं जायते यद्धि

शक्तितत्त्वमित्युच्यते। तस्य बिन्दोरचिदंशो वीजं चिदचिन्मिश्रांशो नादश्चिदंशो बिन्दुः। तस्माद् बिन्दोः शब्दब्रह्मापरनामधेयं वर्णादिविशेषरहितं ज्ञानप्रधानं चेतनमिश्रं नादमात्र-मुत्पद्यते। एतदेव 'रवः परा' इत्यादिशब्दैर्व्यवह्रियते। ज्ञातमर्थं विवक्षोः पुंसः इच्छया जातेन प्रयत्नेन योग एव मूलाधारस्थपवनसंस्कारस्तदभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठितया निष्पन्दं परा वागित्युच्यते। यथोक्तम्—

'भिद्यमानात्पराद् बिन्दोरव्यक्तात्मा ततोऽभवत्।
शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः॥' इति।

सा हि परा ब्रह्मणो मायाशक्तेरवस्थाविशेषः सादिः सान्ता च परमतत्त्वेतरा। एषा हि निरवयवा व्यवहारायोग्या योगिनामप्यगम्या सर्वविधविकाररहितप्रकृतिरूपा।

ततो नाभिदेशमागता वाक् पश्यन्ती। एषा तु लोकव्यवहारातीता मनसो विषया निरवयवैव किन्तु योगिनां तु तत्रापि प्रकृतिप्रत्ययविभागावगतिरस्ति। अत्र हि पदार्था अवभासिता भवन्ति शब्दार्थाभिन्नत्वेन। पदार्थानां प्रकाशिकेत्येषा पश्यन्ती।

हृत्प्रदेशसम्बद्धा मध्यमा यत्र शब्दो विशिष्टक्रममाश्रित्य बुद्धौ प्रत्यवभासते। एषैव स्फोटात्मिका स्फोटव्यञ्जिका च। एषाऽपि परश्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा। अत्रैव बुद्धिरर्थस्य कृते शब्दनिश्चयं करोति।

कण्ठदेशगा सा वैखरी। एषा व्यक्तवर्णसमुच्चारणा प्रसिद्धसाधुभावा भ्रष्टसंस्कारा चाप्युक्ता अपरिमितभेदा च। एषा परश्रोत्रग्राह्या।

**हिन्दी**—तब तो शक्तियों का आश्रयभूत शब्द कौन है? 'वह शब्द स्फोटात्मक है' ऐसा जान लो। तो फिर यह स्फोट क्या है? कहा जाता है। चार प्रकार की वाणी होती हैं—परा, पश्यन्ती, मध्यमा और वैखरी। उनमें मूलाधारचक्र में रहने वाली वायु के संस्कार से युक्त मूलाधार में ही रहने वाली शब्दब्रह्मरूप क्रियाओं से रहित एवं कारणबिन्दु रूप वाणी 'परा' कही जाती है। नाभिप्रदेश तक आने वाले उस वायु से अभिव्यक्त केवल मन का विषय बनने वाली वाणी पश्यन्ती है। ये दोनों वाग्ब्रह्म योगियों की समाधि की स्थिति में निर्विकल्पक एवं सविकल्पक ज्ञान के विषय माने जाते हैं। उसके बाद हृत्प्रदेश तक आने वाली वायु से अभिव्यक्त उन-उन अर्थों के वाचक शब्दों का स्फोट रूप दूसरे के कान से ग्रहण करने योग्य न होने के कारण सूक्ष्म जप आदि में बुद्धि के द्वारा ही ग्रहण करने योग्य वाणी मध्यमा है। उसके बाद मुख पर्यन्त आने वाली ऊपर की ओर जाती हुई उस वायु से मुख के ऊपरी भाग से टकरा कर और फिर लौट कर उन-उन तालु आदि स्थानों में अभिव्यक्त दूसरे के श्रोत्रेन्द्रिय द्वारा भी ग्रहण करने योग्य वाणी वैखरी कही जाती है।

इसका आशय यह है कि गुदद्वार से दो अङ्गुल ऊपर और लिङ्गप्रदेश से दो अङ्गुल नीचे बीच का एक अङ्गुल भाग मूलाधार कहा जाता है। वही देहमध्य भी मानी जाती है। यह चार दल वाला चक्र है और कुण्डलिनी शक्ति भी यही रहती है। यही मूलाधार प्राणवायु का भी उत्पत्तिस्थल है।

वाणी चार प्रकार की होती है—परा, पश्यन्ती, मध्यमा और वैखरी। इनमें से परा वाणी मूलाधार में रहती है। यह लोक-व्यवहार से अतीत अत्यन्त सूक्ष्म निरवयव एवं अनपायिनी है। परावाक् योगियों की समाधि अवस्था में निर्विकल्पक ज्ञान का कारण है। इसी को ही शब्दब्रह्म कहा जाता है। सृष्टि के लिए तत्पर परमेश्वर की माया से त्रिगुणात्मक विन्दु की उत्पत्ति हुई है। उसी विन्दु का चिदंश ही शब्द-ब्रह्म है। यह माया से उत्पन्न विन्दु के कारण जन्य कार्य होने के कारण सादि और सान्त है, फिर भी यह अनपायी है और कल्पान्त तक स्थायी है। यह मूलाधारस्थ वायु से संस्कारीभूत होकर वाणी के रूप में अभिव्यक्त होता है। जब वायु से प्रेरित होकर नाभिप्रदेश तक आ जाती है तव वह पश्यन्ती कही जाती है। यह भी व्यवहार के योग्य नहीं है। योगियों की समाधि अवस्था में यह प्रकृति-प्रत्यय आदि विभाग से युक्त होकर सविकल्पक ज्ञान का विषय वन जाती है। नाभिप्रदेश से भी वायु से प्रेरित होकर हृदयप्रदेश पर पहुँचने के बाद वह वाणी मध्यमा कहलाती है और इस स्थिति में इसमें विवक्षित अर्थ का वाचक शब्द निश्चित हो जाता है। वस्तुतः परावाक् ही स्फोट है, लेकिन इसके व्यवहारायोग्य होने के कारण यह केवल योगियों की भी समाधि अवस्था में गम्य नहीं है। अतः मध्यमा का नाद ही स्फोट है और स्फोट का व्यञ्जक भी। हृत्प्रदेश से वायु के द्वारा जव यह वाणी कण्ठप्रदेश तक पहुँचती है और विभिन्न उच्चारणस्थानों से होकर वाहर निकलती है तव यह सर्वश्राव्य वन जाती है। नाद तो मध्यमा और वैखरी दोनों में होता है, लेकिन मध्यमा का नाद परश्रोत्रग्राह्य नहीं होता। अतः वास्तविक अर्थ एवं शब्द का सम्बन्ध निर्धारित करने वाली वाणी मध्यमा ही है। व्यक्ति जव ज्ञात अर्थ को प्रकट करना चाहता है तव वह अर्थ मूलाधार से नाभिप्रदेश होकर हृदयप्रदेश तक पहुँचने के वाद ही अपने वाचक शब्द से सम्वद्ध हो जाता है। अतः परावाक् आत्मा का विषय है, क्योंकि मूलाधार ही 'चित्' 'आत्मा' 'संवित्' आदि नामों से जाना जाता है। पश्यन्ती वाणी मन का विषय है, क्योंकि यह मन का अवस्थान है। मध्यमा बुद्धि का विषय है, क्योंकि इस अवस्था में पहुँचने के वाद ही अर्थ बुद्धिगोचर होता है और उसके वाचक शब्द का निर्धारण होता है कि उस अर्थ को किस शब्द के माध्यम से व्यक्त किया जाय।

वस्तुतः स्फोट की अभिव्यक्ति मध्यमा नाद से ही होती है और वैखरी का नाद तो उसे परश्रोत्रग्राह्य बनाने वाला मात्र है।

(४४) तदाह—

परा वाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥ इति।
वैखर्या हि कृतो नादः परश्रवणगोचरः।
मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते॥ इति च।

युगपदेव मध्यमावैखरीभ्यां नाद उत्पद्यते। तत्र मध्यमानादोऽर्थवाचकः

स्फोटात्मकशब्दव्यञ्जकः। वैखरीनादो ध्वनिः सकलजनश्रोत्रग्राह्यो भेर्यादिनादवन्निरर्थकः। मध्यमानादश्च सूक्ष्मतरः कर्णपिधाने जपादौ च सूक्ष्मतरवायुव्यङ्ग्यः शब्दब्रह्मरूपस्फोटव्यञ्जकश्च। तादृशमध्यमानादव्यङ्ग्यः शब्दः स्फोटात्मको ब्रह्मरूपो नित्यश्च।

व्याख्या—उक्तार्थं प्रमाणयति—तदित्यादिना। तत् तदेव पूर्वोक्तमर्थम्। आह कथयति। तमर्थमाह—परेत्यादिना। परा परस्वरूपा शब्दब्रह्मरूपा निर्विकल्पकज्ञानकारणं या सा। वाक् वाणी। मूलचक्रस्था मूलाधारचक्रगता। भवतीति शेषः। पश्यन्ती एतदाख्यं वाग्ब्रह्म सविकल्पकज्ञानकारणं योगिनामपि समाध्यवस्थायामेव प्राप्या। वाक् वाणी। नाभिसंस्थिता नाभिप्रदेशगताऽत एव मनोमात्रदृश्या। मध्यमा एतदाख्या स्फोटात्मिका स्फोटाभिव्यञ्जिका च। हृदिस्था हृत्प्रदेशगता बुद्धिनिर्ग्राह्या। ज्ञेया अवबोध्या। वैखरी तदाख्या परश्रोत्रग्राह्या नादात्मिका। वाक्। कण्ठदेशगा कण्ठप्रदेशसम्बद्धा। इति इति उद्धरणसमाप्तौ।

नादस्तु मध्यमावैखरीभ्यामुभाभ्यामेव समुत्पाद्यते इति तयोः को विशेष इत्यतस्तद्व्याख्यानाय प्रथमं कारिकामवतारयति—वैखर्या इत्यादिना। वैखर्याः तदाख्यवाण्या। कृतः उत्पादितोऽभिव्यक्तः। नादः ध्वनिः। परश्रवणगोचरः स्वेतरश्रोत्रेन्द्रियग्राह्यः। हि एव। मध्यमया मध्यमाख्यवाण्या। कृतोऽभिव्यक्तः। नादः ध्वनिः। तु तद्व्यतिरिक्तम्। स्फोटव्यञ्जकः स्फोटस्यार्थवाचकसूक्ष्मशब्दस्य, व्यञ्जकः प्रकाशकः। उच्यते कथ्यते इति। तदेव व्याख्याति—युगपदित्यादिना। मध्यमावैखरीभ्यां तत्तदाख्यवाणीभ्याम्। वाणीभ्यामुभाभ्यामेव। युगपदेव समकालमेव। नादः ध्वनिः। उत्पद्यते अभिव्यज्यते। तत्र तयोर्नादयोः। मध्यमानादः मध्यमाकृतध्वनिः। अर्थवाचकस्फोटात्मकशब्दव्यञ्जकः अर्थस्य वाचकोऽवबोधको यः स्फोटात्मकः स्फोटस्वरूपः शब्दस्तस्य व्यञ्जकः प्रकाशकः। वैखरीनादः वैखरीकृतनादः। ध्वनिः शब्दः। एवम्। सकलजनश्रोत्रग्राह्यः सर्वश्रोत्रेन्द्रियग्रहणयोग्यः। भेर्यादिनादवत् भेरीप्रभृतिजनितो यो नादः शब्दस्तद्वत्। निरर्थकः अर्थशून्य इति। मध्यमानादः मध्यमाकृतध्वनिः। च तु। सूक्ष्मतरः वैखरीकृतनादापेक्षया सूक्ष्मः। कर्णपिधाने कर्णयोः श्रोत्रयोः पिधाने आवरणे। जपादौ मानसोपांशुस्वरूपजपकर्मणि। च इति समुच्चये। सूक्ष्मतरवायुव्यङ्ग्यः सूक्ष्मः परश्रोत्राग्राह्यो यो वायुस्तेन व्यङ्ग्योऽभिव्यक्तः। शब्दब्रह्मरूपस्फोटव्यञ्जकः शब्दब्रह्मरूपस्य स्फोटस्य स्फुटयते अभिव्यज्यते वर्णैरिति स्फोटोऽर्थस्तस्य स्फुटत्यर्थोऽस्मादिति स्फोटः शब्दस्तस्य च अर्थनिष्ठविषयताप्रयोजकशक्तिमत्त्वं स्फोटत्वमिति व्यञ्जकः प्रकाशकः। च अपि उभयसमुच्चये। तादृशमध्यमानादव्यङ्ग्यः तादृशस्तथाविधः सूक्ष्मतरः वाय्वात्मको यो मध्यमानादः मध्यमाकृतरवस्तेन व्यङ्ग्यः प्रकाश्यः। शब्दः वाचकत्वधर्मविशिष्टशब्दः। स्फोटात्मकः स्फोटस्वरूपः। ब्रह्मरूपः ब्रह्मस्वरूपः। नित्यः अनपायी। चेति।

मध्यमया हि वाण्योत्पन्नो नादो हि स्फोटाख्यार्थावबोधकशब्दस्याभिव्यञ्जकः वैखरीनादस्तु निरर्थकः। मध्यमानादो हि सूक्ष्मः स्वश्रोत्रमात्रग्राह्यः किन्तु वैखरीनाद-

स्तु स्थूलः परश्रोत्रेणाऽपि ग्राह्यः। मध्यमानादेनार्थाभिव्यञ्जकशब्दोऽभिव्यज्यते, वैखरीनादेन तु स एव परश्रोत्रविषयीक्रियते इति।

हिन्दी—जैसे कि कहा गया है—

'परा वाणी मूलाधार चक्र में रहती है, नाभिप्रदेश में प्राप्त वाणी पश्यन्ती है, हृत्प्रदेश में रहने पर वही मध्यमा नाम से जानी जाती है और वैखरी कण्ठदेश से सम्बद्ध वाणी है।'

वैखरी के द्वारा किया गया नाद दूसरों के श्रोत्रेन्द्रिय का विषय होता है और मध्यमा के द्वारा किया गया नाद स्फोट का व्यञ्जक होता है।

मध्यमा एवं वैखरी के द्वारा एक ही बार नाद उत्पन्न होता है। उनमें से मध्यमा का नाद अर्थ के वाचक स्फोटात्मक शब्द का व्यञ्जक है। वैखरी का नाद केवल ध्वनि है और वह सभी के श्रोत्रेन्द्रिय से ग्राह्य है और भेरी आदि के शब्द जैसे निरर्थक भी है। मध्यमानाद तो सूक्ष्मतर है, कान के बन्द करने पर और जप आदि में भी सूक्ष्मतर वायु से अभिव्यक्त एवं शब्दब्रह्मरूप स्फोट का व्यञ्जक भी है। उस तरह के मध्यमा कृत नाद से अभिव्यक्त शब्द स्फोटात्मक ब्रह्मरूप एवं नित्य भी है।

इसका आशय यह है कि नाद तो मध्यमा एवं वैखरी दोनों से उत्पन्न होता है, लेकिन मध्यमा का नाद अर्थ एवं उसके अभिव्यञ्जक शब्द स्फोट का व्यञ्जक है। सूक्ष्म स्वश्रोत्रमात्रग्राह्य है और वैखरी का नाद ध्वनि मात्र है और परश्रोत्रग्राह्य एवं निरर्थक है। मध्यमानादव्यङ्ग्य शब्द स्फोट रूप एवं नित्य होता है, किन्तु वैखरी का नाद स्फोट का वाहक एवं अनित्य व निरर्थक होता है।

( ४५ ) तदाह हरिः—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ इति।

व्याख्या—उक्तार्थे हरिं प्रमाणयति—तदित्यादिना। तद् तदेव। आह कथयति। हरिः वाक्यपदीयकृद् भर्तृहरिः। तदुद्धरति—अनादीत्यादिना। अनादिनिधनम् अक्षरं यद् ब्रह्म यतः अर्थभावेन जगतः प्रक्रिया विवर्तते तत् शब्दतत्त्वम् इत्यन्वयः। अनादिनिधनं न विद्यते आदिः प्रादुर्भावः निधनं समाप्तिश्च यस्य तत्तादृशम् अक्षरं विकाररहितम्। यद् यदेव विभु। ब्रह्म परमतत्त्वम्। यतः यस्माद् ब्रह्मणः। अर्थभावेन अर्थोपस्थापनेन। जगतः विश्वस्य। प्रक्रिया प्रवृत्तिः। विवर्तते प्रसरति, तदर्थरूपतया प्रतीयते इति। तद् ब्रह्म शब्दतत्त्वं शब्दात्मकमिति। विकाराणां प्रकृत्यन्वयाच्छब्दत्वोपपत्तेर्न शब्दतत्त्वत्वेन ब्रह्मणः सर्वविकल्पातीततत्त्वक्षतिः। यथा हि घटकुण्डलादयो विकारा मृत्सुवर्णादिप्रकृत्यन्वितास्तथैवात्रापि। एकमपि तच्छक्तिव्यपाश्रयाच्छक्तितोऽपृथक्त्वेऽपि पृथक्त्वेनावभासते इति शब्दस्य नानात्वेऽपि न परमतत्त्वस्यैकत्वे क्षतिः। शब्दतत्त्वं ह्यनादिनिधनमाद्यन्तरहितमक्षरनिमित्तत्वादक्षरं ब्रह्म एव एतः प्रत्यक्चैतन्ये निवेशितस्य परबोधार्थमभिव्यक्तेरर्थभावेन जगतः प्रक्रिया विवर्तते तत्त्वादप्रच्युतमप्येकं भेदानुकारेण शक्त्यानेकरूपतां प्रतिपद्यते रज्जूरगवत्। कारणस्वरूपाविरोधेन कार्यप्रतिभासाद् ब्रह्मणो

विकारित्वाभावेन न नित्यत्वहानिरिति व्याख्यातारः। स्थितिप्रवृत्तिविभागादिशब्देनैव क्रियते इति न शब्दतत्त्वस्य ब्रह्मण इवापरिमितशक्तिमत्त्वे क्षतिः—

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥'

इत्युक्तेश्चेति। एतेन मध्यमानादव्यङ्ग्यस्य स्फोटात्मकस्य शब्दस्य ब्रह्मरूपत्वं नित्यत्वञ्च सिध्यति।

हिन्दी—जैसे कि हरि ने कहा है—

यह जो शब्दतत्त्व है, वह अनादि, अनन्त, निर्विकार एवं अविनाशी ब्रह्म ही है, जिससे अर्थ के रूप में जगत् की प्रक्रिया विवर्तित होती है। अर्थात् तत्त्व से अप्रच्युत एक भी भेदों के अनुकार से शक्ति से अनेकरूपता में प्राप्त होती है।

(४६) स च यद्यप्येकोऽखण्डश्च तथापि पदं वाक्यं जपाकुसुमादिलौहित्य-पीतत्वादिव्यञ्जकोपरागवशाल्लोहितः पीतः स्फटिक इति भानवद् वर्णादि-व्यङ्ग्यो वर्णरूपः पदरूपो वाक्यरूपश्च। यथा च मुखे मणिकृपाणदर्पण-व्यञ्जकोपाधिवशाद्दैर्घ्यवर्तुलत्वादिभानं तद्वत्। तदुक्तम्—

'पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन॥' इति।

व्याख्या—अष्टविधस्फोटानां सङ्गतिसमर्थनाय प्रकरणमारभते—स इत्यादिना। सः मध्यमानादव्यङ्ग्यः स्फोटः। च हि। यद्यपि वस्तुतस्तु। एकः अखण्डः निरवयवः। च। तथापि तथाभूते सत्यपि। पदं सार्थकवर्णसङ्घातः। वाक्यम् अर्थसमापकपदसमूहः। इति। जपाकुसुमादिलौहित्यपीतत्वादिव्यञ्जकोपरागवशात् जपाकुसुमादिः जपापुष्प-प्रभृतिर्यः लौहित्यपीतत्वादिव्यञ्जकोपरागः लोहितपीतवर्णप्रकाशकसंसर्गस्तद्वशात् तद्धेतुना। स्फटिकः स्वच्छवर्णविशिष्टस्फटिकः। लोहितः लोहितवर्णः रक्तवर्ण इति। पीतः पीतवर्णः। इति इत्थम्। भानवत् अवभासनम् इव। वर्णादिव्यङ्ग्यः वर्णादिभिः वर्णपदवाक्यैः व्यङ्ग्यः प्रकाश्यः एकोऽप्यखण्डोऽपि च स्फोटः। वर्णरूपः पदरूपः वाक्य-रूपः। च अपि। निदर्शनान्तरमाह—यथेत्यादिना। यथा। च। मुखे वदने। मणि-कृपाणदर्पणव्यञ्जकोपाधिवशात् मणिः उज्ज्वलरत्नविशेषः कृपाणोऽसिविशेषः दर्पणं मुकुरः इत्यादिव्यञ्जकोपाधिवशात् व्यञ्जकोपकरणाद्यारेण। दैर्घ्यवर्तुलत्वादिभानं दीर्घतावर्तुलताद्यवभासनम्। तद्वत् तथैव, स्फोटस्यापि व्यञ्जकोपाधिवशात् पृथक्त्वेनाव-भासनमिति। यथा हि स्वच्छवर्णः स्फटिकव्यञ्जकसंसर्गेण लोहितवत्पीतवद्वाऽव-भासते यथा वा एकाकृति मुखं व्यञ्जकोपकरणवशाद् दीर्घं वर्तुलं वा दृश्यते तथैवा-प्येकोऽपि स्फोटोऽखण्डोऽपि वर्णपदवाक्याधारेण तत्तत्स्फोटरूपेणावभासते किन्तु नात्र काचिद्यथार्थता स्फोटस्यानेकत्वस्य। उक्तार्थे हरिं प्रमाणयति—तदित्यादिना। तत् तदेव तत्त्वम्। उक्तं कथितम्, हरिणेति शेषः। तदुद्धरति—पदे इत्यादि। पदे वर्णाः न विद्यन्ते वर्णेषु अवयवाः च न वाक्यात् पदानां कश्चन प्रविवेकः अत्यन्तं न इत्यन्वयः। पदे

वर्णसङ्घातत्वेन स्मृते। **वर्णाः** कखादयः। **न** नैव। **विद्यन्ते** सन्ति। वर्णेषु कखादिषु। **अवयवाः** क+अ प्रभृतिभागाः। **च** अपि। **न** नैव। सन्ति। एवमेव वाक्यात् पदसमूहो वाक्यमर्थपरिसमाप्ताविति परिभाषितात्। **पदानां** तदवयवत्वेन स्मृतानां वर्णौघानाम्। **कश्चन** कोऽपि। **प्रविवेकः** पार्थक्यम्। **च**। **अत्यन्तं** नितान्तमेव। **न** नास्तीति।

अयमाशयः—वस्तुतस्तु एक एव स्फोटोऽखण्डश्च स तु व्यञ्जकधर्ममाश्रित्य विभिन्नवत्प्रतिभाति, यथा हि संयोगिसन्निकर्षात्श्वेतमपि वस्त्रं रक्तवत्प्रतिभाति, यथा वा मण्यादौ एकमपि रूपमनेकधा दृश्यते, तथैव ध्वनिषु स्फोट एक एव विभिद्यते। वस्तुतस्तु न वाक्ये पदानि, न च पदेषु वर्णाः न च वर्णेष्ववयवा एव भवन्ति। एतत्तु ज्ञानोपायमेव शास्त्रकारैः प्रकल्पितमेवेति।

**हिन्दी**—वह स्फोट यद्यपि एक है और अखण्ड भी, तथापि पद और वाक्य कहा जाता है। जपा पुष्प आदि लाल एवं पीले रंगों के व्यञ्जकों के सम्पर्क के कारण स्फटिक लाल है, पीला है आदि भान होने के समान वर्ण आदि से प्रकाश्य स्फोट वर्णरूप, पदरूप एवं वाक्यरूप माना जाता है। जैसे कि मुख में मणि, तलवार, दर्पण आदि व्यञ्जक के सम्पर्क के कारण लम्बाई, गोलाई आदि का भान होता है, उसी तरह स्फोट में भी व्यञ्जक के धर्मों की प्रतीति होती है। जैसे कि कहा गया है—

'पद में न तो वर्ण होते हैं, न तो वर्णों में अवयव ही होते हैं और न तो वाक्य से पदों का कोई पार्थक्य ही सम्भव है।

(४७) किञ्च व्यञ्जकध्वनिगतकत्वगत्वादिकं स्फोटे भासते। बिम्बगतधर्मवैशिष्ट्येनैव प्रतिबिम्बस्य लोकेऽवधारणात्, व्यञ्जकनिरूपितस्यैव स्फटिकादेर्भानाच्च। यथा चैकस्याकाशस्य घटाकाशो महाकाश इत्यौपाधिको भेदो यथा चैकस्यैव चेतनस्यौपाधिको जीवेश्वरभेदो जीवानाञ्च परस्परभेदः। एवं स्फोटे व्यञ्जकध्वनिगतकत्वादिभानात् ककारो बुद्ध इत्यौपाधिको भेदव्यवहारः। औपाधिको भेद इत्यत्रोपाधिः घटकत्वादिर्भिन्न उपधेयस्तु आकाशस्फोटादिरेक एवेति तात्पर्यम्। पदवाक्ययोस्सखण्डत्वपक्षे त्वन्तिमवर्णव्यङ्ग्यः स्फोट एक एव। पूर्वपूर्ववर्णस्तु तात्पर्यग्राहको न्यायनये चित्रगुरित्यादौ चित्रादिपदवत्।

**व्याख्या**—कथं कत्वादिवर्णानां धर्माः स्फोटेऽवभासन्ते इत्यपेक्षायामाह—**किञ्चे**त्यादिना। **किञ्च** एतदतिरिक्तमपि। **व्यञ्जकध्वनिगतकत्वगत्वादिकं** व्यञ्जकः स्फोटप्रकाशको यो ध्वनिर्नादः तद्गतं तद्वृत्ति यत् कत्वगत्वादिकं कगप्रभृतिवर्णधर्माः तत्। **स्फोटे**। **भासते** आभासते। **बिम्बगतधर्मवैशिष्ट्येन** बिम्बं व्यञ्जकं तद्गतो तत्स्थो यो धर्मस्तस्य वैशिष्ट्यं विशेषता तेन। **एव** हि। **लोके** व्यवहारे **प्रतिबिम्बस्य** व्यङ्ग्यस्य। **अवधारणात्** ज्ञानात्। **व्यञ्जकरूपितस्य** व्यञ्जकप्रकाशितस्य। **एव** हि। **स्फटिकादेः** स्फटिकप्रभृतिवस्तुनः। **भानात्** अवभासनात्। **चेति**। तत्र निदर्शनमाह—**यथे**त्यादिना। **यथा**। **च** अपि। **एकस्य** अद्वितीयस्य। **आकाशस्य** गगनस्य। **घटाकाशः** घट-

सम्बद्धाकाशः। **महाकाशः** स्थूलाकाशः। **इति** इत्थम्। **औपाधिकः** उपाधिर्विशेषणं तत्सम्बद्धः। **भेदः** विभागः। **यथा च** यथा वा। **एकस्य** अद्वितीयस्य। **एव** हि। **चैतन्यस्य** चितः। **औपाधिकः** उपाधिकृतः। **जीवेश्वरभेदः** जीवस्य ईश्वरस्य च भेदः विभागः। जीवानां शरीररूपोपाधिकृतः। **च**। **परस्परभेदः** अन्योन्यभेदः। **एवम्** एवमेव। **स्फोटे** वस्तुतस्तत्र तदभावेऽपि। **व्यञ्जकध्वनिगतकत्वगत्वादिभानात्** व्यञ्जकध्वनिवर्णादिस्तद्गतं यत्कत्वगत्वादिस्तस्य भानादवभासनात्। **ककारः**। **बुद्धः** ज्ञातः। **इति** इत्थम्। **औपाधिकः** उपाधिकृतः। **भेदव्यवहारः**। **औपाधिको भेदः**। **इत्यत्र** इति कथने। **उपाधिः इति तु**। **घटकत्वादिः** घटाकाशदृष्टया घटः करूपस्फोटदृष्टया कत्वं गरूपस्फोटदृष्टया गत्वञ्च। **भिन्नः** पृथक्पृथगेव। **उपधेयः** उपधिव्यङ्ग्यः। **तु**। **आकाशस्फोटादिः** पटस्याकाशो वर्णादेः स्फोटः। **एकः** भेदरहितः। **एव न तु** भिन्नः। **इति** इत्थम्। **तात्पर्यम्** आशयः।

पदवाक्ययोः सखण्डत्ववादिमते व्यवस्थामाह—पदेत्यादिना। **पदवाक्ययोः** पदस्य वाक्यस्य च। **सखण्डत्वपक्षे** सखण्डस्फोटवादिमते। **तु** च। **अन्तिमवर्णव्यङ्ग्यः** पूर्वपूर्ववर्णसंस्कारसध्रीचीनचरमवर्णव्यङ्ग्यः। **स्फोटः**। **एकः** भेदरहितः। **एव** हि। **तत्र पूर्वपूर्ववर्णः** चरमवर्णप्राग्वर्तिवर्णः। **तु**। **तात्पर्यग्राहकः** तात्पर्यनिरूपक एव न तु प्रत्येकं वर्णस्य व्यञ्जकतेति। **न्यायनये** नैयायिकमते। **'चित्रगुः' इत्यादौ**। **चित्रादिपदवत्** यथा हि गोपदं चित्रगोस्वामिबोधकं चित्रपदं तु गोपदविशिष्टार्थस्य द्योतकमेवेति व्यपेक्षावादिमतं तदनुसारेण चित्रपदवदिति। पूर्वपूर्ववर्णानां द्योतकत्वमात्रमिति। तेन तन्मतेऽपि स्फोटस्यैकत्वमेवेति।

अयमाशयः—वस्तुतस्तु स्फोटस्याखण्डत्वेन नास्ति तत्र कत्वं गत्वं वा। तत्र यत्तदवभासते तद्व्यञ्जकधर्मस्यावभासनमात्रम्। स्फोटो हि व्यङ्ग्यं वर्णादिस्तद्व्यञ्जकः। व्यञ्जकधर्मो व्यङ्ग्ये प्रतिभासते एव। तेन व्यञ्जकध्वनिगतकत्वादीनां स्फोटे तद्व्यङ्ग्यत्वेनावभासनं युक्तमेव। यथा ह्येक एवाकाश उपाधिभेदेन तत्तद्धर्मयुक्तः भिन्नत्वेनावभासते घटाकाशो महाकाश इत्यादौ यथा वा एकस्यैव चैतन्यस्य शरीरब्रह्माण्डाद्युपाधिवशात् तत्तद्धर्मविशिष्टस्य जीवेश्वरभेदो यथा वा एकत्वेऽपि जीवस्य शरीरमाश्रित्य भेदस्तथैव एकोऽप्यखण्डोऽपि च स्फोटः उपाधिवशात् कत्वाद्यनेकरूपेण विभक्त इव प्रतिभाति।

ये हि खलु पदवाक्ययोः सखण्डत्वं समर्थ्य स्फोटस्य सखण्डत्वं मन्यन्ते तेषां कृतेऽपि स्फोटस्यैकत्वं तु न विहन्यते तस्य चरमवर्णव्यङ्ग्यत्वात्पूर्वपूर्ववर्णानां तु 'चित्रगुरि'त्यत्र चित्रपदवद् द्योतकमात्रत्वात्। नैयायिका हि समासे व्यपेक्षावादमाश्रयन्ति। ते हि वैयाकरणानां विपरीतं समासे शक्तिं न मन्यन्ते तेन तन्मते पृथक्पृथक्पदानां तत्रापि पृथक्पृथगेवार्थः। अर्थाल्लक्षणावृत्त्या अवयवभूतपदैरेव समस्तपदार्थः प्रकाश्यते इति। चित्रगुरिति पदे चित्रा गौर्यस्येति विग्रहे समानाधिकरणबहुव्रीहिसमासः। तत्र पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति न्यायेन गोपदस्य चित्रगुस्वाम्यर्थे लक्षणा यत्र चित्रपदं तद्विशिष्टार्थद्योतकमात्रमेव। तथैव व्यङ्ग्यत्वं चरमवर्णस्यैव तत्प्राग्वर्तिवर्णानां

तु द्योतकत्वं तात्पर्यग्राहकत्वमेवेति पदवाक्यसखण्डत्ववादिमतेऽपि स्फोटस्यैकत्वमव्याहतमेवेति ।

हिन्दी—इसके अलावा व्यञ्जक ध्वनि में स्थित कत्व, गत्व आदि स्फोट में अवभासित होते हैं, क्योंकि बिम्वगत धर्म की विशेषता से ही लोक में प्रतिबिम्ब का ज्ञान होता है। व्यञ्जक के रूप से युक्त ही स्फटिक आदि का भान होता है। जैसे कि एक ही आकाश का घटाकाश, महाकाश इत्यादि औपाधिक अर्थात् विशेषण से किये गये भेद होते हैं। जैसे कि एक ही चैतन्य का उपाधि के कारण जीव-ईश्वर भेद होते हैं और जीवों के भी परस्पर भेद माने जाते हैं। इस प्रकार स्फोट में व्यञ्जकध्वनि के कत्व आदि के भान होने से 'ककार जाना गया' ऐसे औपाधिक भेद का व्यवहार होता है। 'औपाधिक भेद' में उपाधि घट एवं कत्व आदि तो भिन्न-भिन्न हैं, उपधेय आकाश स्फोट आदि तो एक ही है—ऐसा तात्पर्य है। पद एवं वाक्य के सखण्डत्व पक्ष में अन्तिम वर्ण से व्यङ्ग्य स्फोट एक ही है। पहले-पहले के वर्ण तो तात्पर्य के ग्राहक मात्र हैं। जैसे कि न्यायमत में 'चित्रगु' आदि पदों में चित्र आदि पद है।

कहने का आशय यह है कि स्फोट तो एक एवं अखण्ड है फिर भी उसमें जो क, ग आदि ध्वनियों का अवभासन होता है वह व्यञ्जक ध्वनियों के संसर्ग से है। लोक में यह देखा गया है कि बिम्ब-धर्म की विशेषता से ही प्रतिबिम्ब का ज्ञान होता है। जैसे व्यञ्जक के रूप से युक्त स्फटिक का भान होता है। आकाश एक है, फिर भी उसके उपाधि अर्थात् घट आदि के चलते घटाकाश, महाकाश आदि भेद माने जाते हैं। चैतन्य तो एक है और उसका भी शरीर एवं ब्रह्माण्ड आदि उपाधियों के संसर्ग से जीव एवं ईश्वर ऐसे भेद माने जाते हैं और एक ही जीव के भी शरीर के चलते अनेक भेद माने जाते हैं। उसी तरह स्फोट में व्यञ्जक ध्वनि के कत्व आदि के भान से 'ककार जाना गया' ऐसा भेद-व्यवहार होता है। उपाधि बने घट एवं कत्व आदि तो भिन्न-भिन्न होते हैं, लेकिन उपधेय अर्थात् उपाधि के व्यङ्ग्यभूत आकाश एवं स्फोट आदि तो एक ही हैं। जो पदों एवं वाक्यों का सखण्डत्व मानते हैं, उनके पक्ष में भी स्फोट एक ही है। उसमें भी स्फोट तो केवल चरम वर्ण का ही व्यङ्ग्य है, न कि सभी वर्णों का। चरम वर्ण से पूर्ववर्ती जो वर्ण हैं, वे तो केवल तात्पर्य के ग्राहक मात्र है, न कि स्फोट के व्यञ्जक। जैसे कि 'चित्रगु' पद में नैयायिक मत से चित्र पद। इसका आशय यह है कि वैयाकरण समास में शक्ति मानते हैं और उसमें अवयवों के अर्थ को छोड़ देते हैं। उनका कहना है कि 'ब्राह्मणकम्बल' शब्द में ब्राह्मण पद का कोई पृथक् अर्थ नहीं है। उसी तरह वाक्यों में देवदत्त आदि का कोई अर्थ नहीं है। नैयायिक इसे नहीं मानते। उनका विचार है कि समास में कोई शक्ति नहीं है। उसमें तो अवयवभूत पदों का अर्थ ही लक्षणा से अवभासित होता है। कुछ नैयायिक कहते हैं कि 'चत्रगु' पद में 'गौ' पद की गोस्वामी अर्थ में लक्षणा मानकर 'गो' पद में चित्र पद का अभेद सम्वन्ध से अन्वय करते हैं। दूसरे नैयायिक 'पदार्थ पदार्थ से ही अन्वित हो सकता है, न कि पद के एक भाग से' इस न्याय से गो पद से ही चित्र-

गोस्वामी अर्थ का बोध मानकर चित्र पद को उस विशिष्ट अर्थ का द्योतक मात्र मानते हैं। उसी तरह केवल चरम वर्ण ही स्फोट का व्यञ्जक है और पूर्व-पूर्व वर्ण के तात्पर्यग्राहक मात्र होने से पद सखण्डत्व एवं वाक्य सखण्डत्व को मानने वालों के मत में भी स्फोट एक ही है।

( ४८ ) ध्वनिस्तु द्विविधः—प्राकृतो वैकृतश्च। प्रकृत्या अर्थबोधनेच्छया स्वभावेन वा जातः स्फोटव्यञ्जकः प्रथमः प्राकृतः। तस्मात् प्राकृताज्जातो विकृतिविशिष्टश्चिरस्थायी निवर्तको वैकृतिकः। हरिरप्याह—

'शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।'
'शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते॥' इति।

शब्दस्याभिव्यक्तेरूर्ध्वं वैकृतां ध्वनयो जायन्ते इति शेषः। वृत्तिभेदे इति—

'अभ्यासार्थे द्रुता वृत्तिर्मध्या वै चिन्तने तथा।
शिष्याणामुपदेशार्थं वृत्तिरिष्टा विलम्बिता॥' इति

तिसृषु वृत्तिषु समुपोहन्ते कारणानि भवन्ति स्फोटस्तु तैर्न भिद्यते इति तदर्थः।

**व्याख्या**—ध्वनेर्भेदनिरूपणपुरःसरं तत्स्वरूपनिरूपणाय प्रकरणमारभते—**ध्वनिरि**-त्यादिना। **ध्वनिः** शब्दः। **तु** हि। **द्विविधः** द्विप्रकारकः। **प्राकृतः वैकृतः च** इति। प्राकृतवैकृतभेदेन ध्वनिर्द्विविध इत्याशयः। तत्राद्यं व्याख्याति—**प्रकृत्ये**त्यादिना। **प्रकृत्या** इति **अर्थबोधनेच्छया** विवक्षितार्थबुबोधयिषया। **स्वभावेन** आत्माभिव्यक्ती-च्छया। **वा** इति विकल्पे। विवक्षितार्थबोधनाय स्वभावेन वा। **जातः** उत्पन्नः। **स्फोटव्यञ्जकः** स्फोटप्रकाशकः। **प्रथमः** आद्यो मध्यमानादविषयः। **प्राकृतः** तदाख्यो ध्वनिरिति। वैकृतध्वनिं व्याख्याति—**तस्मादि**त्यादिना। **तस्मात्** तथाविधात्। **प्राकृतात्** प्रकृतिसम्बद्धाद् ध्वनेः। **जातः** उत्पन्नः। **विकृतिविशिष्टः** विकारैर्युक्तः। **चिरस्थायी** ध्वन्य-न्तरापेक्षया चिरकालपर्यन्तास्तित्ववान्। **निवर्तकः** प्रत्यावर्तनशीलः **वैकृतिकः** तदाख्य-ध्वनिः। उक्तार्थे हरिं प्रमाणयति—**हरि**रित्यादिना। **हरिः** वाक्यपदीयकृत् तदाख्यः। **अपि च**। **आह** कथयति। तदुद्धरति—**स्फोटस्ये**त्यादिना। स्फोटस्य ग्रहणे हेतुः प्राकृतः ध्वनिः इष्यते इत्यन्वयः। **स्फोटस्य** अर्थावबोधकसूक्ष्मशब्दस्य। **ग्रहणे** अवबोधने। **प्राकृतः** अर्थबोधनेच्छयाऽभिव्यक्तः। **ध्वनिः** नादः। **हेतुः** कारणम्। **इष्यते** कथ्यते इति। कथ-नान्तरमुद्धरति—**शब्दस्ये**त्यादिना। शब्दस्य अभिव्यक्तेः ऊर्ध्वम् वैकृता ध्वनयः ( जायन्ते ) वृत्तिभेदे तु समुपोहन्ते तैः स्फोटात्मा न भिद्यते इत्यन्वयः। **शब्दस्य** अर्थव्यञ्जकस्फोटात्मकशब्दस्य। **अभिव्यक्तेः** प्राकृतध्वनिना प्रकाशनात्। **ऊर्ध्वम**न-न्तरम्। **वैकृताः** विकृतियुक्तास्तत्प्रसारकाः। **ध्वनयः**। **जायन्ते** उत्पद्यन्ते इति शेषः। **वृत्तिभेदे तु समुपोहन्ते**—वृत्तिभेदे तस्य स्फोटात्मकशब्दस्य द्रुतमध्यविलम्बिताद्या वृत्तय-स्तासां भेदे। **तु** तद्विपरीतम्। **समुपोहन्ते** कारणानि भवन्ति। **तैः स्फोटात्मा न**

भिद्यते—तैः वैकृतध्वनिभिः स्फोटात्मा अर्थव्यञ्जकस्फोटात्मकशब्दः। न नैव। भिद्यते भेदत्वमाप्नोति इति। कारिकां व्याख्याति—शब्दस्येत्यादिना। शब्दस्य स्फोटात्मकशब्दस्य। अभिव्यक्तेः प्रकाशनात्। ऊर्ध्वमनन्तरम्। वैकृताः तदाख्याः। ध्वनयः। जायन्ते उत्पद्यन्ते। इति शेषः इति यावत्। कारिकागतं वृत्तिभेदे इति पदं व्याख्याति—वृत्तीत्यादिना। वृत्तिभेदे वृत्तीनां भिन्नतायाम्। इति तु। कारिकामुद्धरति—अभ्यासेत्यादिना। अभ्यासार्थे द्रुता वृत्तिः चिन्तने वै मध्या स्मृता शिष्याणाम् उपदेशार्थं विलम्बिता वृत्तिः इष्टा इत्यन्वयः। अभ्यासार्थं पुनः पुनरावृत्त्या बुद्धिस्थीकरणमभ्यासस्तदर्थम्। द्रुता शीघ्रपाठ्या। वृत्तिः व्यापारः। चिन्तने तत्त्वविचारणे। वै तु। मध्या नातिद्रुता नातिविलम्बिता च। वृत्तिः। स्मृता उक्ता। शिष्याणां छात्राणामुपदेश्यानाम्। उपदेशार्थम् उपदेशः शिक्षणं तदर्थम्। विलम्बिता मन्दगतिका। वृत्तिः। इष्टा प्रतिपादितेति। कारिकाशयं व्याचष्टे—इतीत्यादिना। इति इत्थम्। तिसृषु त्रिसङ्ख्याकासु द्रुतमध्यविलम्बितासु। वृत्तिषु व्यापारेषु। समुपोहन्ते कारणानि भवन्ति हेतवः सम्पद्यन्ते। इति। अवशिष्टमूलकारिकाशयमाह—स्फोट इत्यादिना। स्फोटः तु तैः ध्वनिभिः। न भिद्यते नैव भेदत्वं भजते। इति एतत्प्रकारकः। तदर्थः तस्याः कारिकायाः अर्थः आशयः। इति।

अयमाशयः—ध्वनिर्द्विविधः—प्राकृतो वैकृतश्च। तत्र प्रकृत्या विवक्षितार्थबुबोधयिषया जात उत्पन्नः प्राकृतः स्फोटाभिव्यक्तये वक्त्रा समुत्पादितः प्राकृतः। तेन स्फोट एव प्राकृतध्वनिरूपेणाभिव्यक्तो भवति। येन विनाऽनभिव्यक्तं स्फोटरूपं न परिच्छिद्यते स ध्वनिः प्राकृत इति। वैकृतस्तु येनाभिव्यक्तिः स्फोटरूपा पुनः पुनरविच्छेदेन प्रचिरतरं कालमुपलभ्यते। उक्तञ्च यथा ध्वनिस्फोटयोः पृथक्त्वेनानुपलम्भात् तं स्फोटं तस्य ध्वनेः प्रकृतिमिव मन्यन्ते। तत्र भवः प्राकृतः। तदुत्तरकालभावी तस्माद् विलक्षण एवोपलभ्यते इति विकारापत्तिरिव स्फोटस्येति वैकृत उच्यते। इति प्राकृतध्वनिं विना स्फोटस्य श्रवणं न सम्भवतीति अयमेव स्फोटस्वरूपेण गृहीतो यत्र ह्रस्वादिधर्मा आरोपिताः। यथोक्तम्—

'स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु।
प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते॥' इति।

इदमप्यवधेयं यत्स्फोटाभिव्यक्तेरनन्तरं स्वविकारैः सह वैकृतध्वनिरुपतिष्ठते। प्राकृतवैकृतध्वन्योर्भेदादेव वैकृतध्वनेर्धर्माः स्फोटे नैवाध्यारोप्यन्ते। यथोक्तम्—'तस्मादुपलक्षितव्यतिरेकेण वैकृतेन ध्वनिना सम्प्रयुज्यमानोऽपि स्फोटात्मा ताद्रूप्यस्यानध्यारोपाच्छास्त्रे ह्रस्वादिवत्कालभेदव्यवहारं नावतरति' इति।

हिन्दी—ध्वनि दो प्रकार की होती है—प्राकृत एवं वैकृत। प्रकृति अर्थात् अर्थज्ञापन की इच्छा से अथवा स्वभाव से उत्पन्न स्फोट का व्यञ्जक पहली ध्वनि प्राकृत है। उस प्राकृत से उत्पन्न विकारों से विशिष्ट अपेक्षाकृत चिरस्थायी और निवर्तक ध्वनि वैकृत है। जैसे कि हरि ने कहा है—

'स्फोट की अभिव्यक्ति में प्राकृत ध्वनि ही कारण है।' 'शब्द की अभिव्यक्ति के

वाद वैकृत ध्वनियाँ उत्पन्न होती हैं।' वृत्तियों के भेद में ये ही कारण होते हैं। उनके कारण स्फोट के स्वरूप में कोई भिन्नता नहीं आती।

शब्द की अभिव्यक्ति के उपरान्त वैकृत ध्वनियाँ उत्पन्न होती हैं—यह आशय है। वृत्तियों का भेद तो अभ्यास के लिए द्रुत वृत्ति चिन्तन में मध्या वृत्ति शिष्यों के उपदेश में विलम्बिता वृत्ति अभीष्ट है।'

इस तरह की तीनों वृत्तियों में (वैकृत ध्वनियाँ) कारण होती हैं। स्फोट तो उनके चलते भिन्न नहीं होता, ऐसा इसका अर्थ है।

(४९) अत्रेदं बोध्यम्—केनचिद् 'घटमानय' इति वैखरीनादः प्रयुक्तः। स केनचिच्छ्रोत्रेन्द्रियेण गृहीतः। स नादः इन्द्रियद्वारा बुद्धिहृद्गतः सन् अर्थबोधकं शब्दं स्वनिष्ठकत्वादिना व्यञ्जयति तस्मादर्थबोधः। स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या स्फोटः। उच्चारयितुस्तु युगपदेव मध्यमावैखरीभ्यां नाद उत्पद्यते। तत्र वैखरीनादो वह्नेः फूत्कारादिवन्मध्यमानादोत्साहकः। मध्यमानादः स्फोटं व्यञ्जयतीति शीघ्रमेव ततोऽर्थबोधः, परस्य विलम्बेनानुभवसिद्धत्वात्। अत एव श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलितः आकाशदेशः शब्द इत्याकरग्रन्थः सङ्गच्छते। कत्वादिना श्रोत्रोपलब्धित्वं स्फोटात्मकपदादिरूपेण तु बुद्धिनिर्ग्राह्यत्वम्। स च प्रयोगेण वैखरीरूपेणाभिज्वलितः स्वरूपरूपितः कृत इति तदर्थः। तत्रापि शक्यत्वस्येव शक्ततावच्छेदिकाया वर्णपदवाक्यनिष्ठजातेर्वाचिकत्वम्। तदुक्तम्—

'अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता।' इति।

तस्मादष्टविधस्फोटात्मकः शब्दो वृत्त्याश्रयः। वस्तुतस्तु वाक्यस्फोटो वाक्यजातिस्फोट एव वा वृत्त्याश्रयः। तत एव लोकेऽर्थबोध इत्याद्युक्तत्वादिति सर्वं सुस्थम्।

इति स्फोटनिरूपणम्।

---

**व्याख्या**—इत्थं स्फोटं निरूप्य सम्प्रति तस्य वाचकत्वरीतिं व्याचष्टे—**अत्रेत्यादिना**। **अत्र** प्रकरणेऽस्मिन्। **इदं** वक्ष्यमाणतथ्यम्। **बोध्यम्** अवधेयम्। **केनचित्** केनापि जनेन। **'घटम् आनय'** इति इत्थम्। **वैखरीनादः** वैखर्याख्यध्वनिः। **प्रयुक्तः** प्रकटितः। **सः** तथाविधो नादः। **केनचित्** केनापि श्रोतृणा। **श्रोत्रेन्द्रियेण** श्रवणेन्द्रियेण। **गृहीतः** अवधारितः। श्रावणप्रत्यक्षविषयतां नीतः। **सः** श्रावणप्रत्यक्षविषयतां प्राप्तः। **नादः** ध्वनिः। **इन्द्रियद्वारा** श्रोत्रेन्द्रियद्वारेण। **बुद्धिहृद्गतः** बुद्धि मतिं हृदं हृत्प्रदेशञ्च गतः प्राप्तः हृत्प्रदेशं प्राप्तः सन् बुद्धिविषयो भूत्वा। **सन्**। **स्वनिष्ठकत्वादिना** स्वस्मिन् वैखरीनादे निष्ठा स्थितिर्यस्य तत्तादृशं यत्कत्वादिकं तेन स्वस्थितकत्वादिवर्णधर्मेण। **अर्थबोधकं** अर्थज्ञापकं स्फोटरूपम्। **शब्दम्** मध्यमानादव्यङ्ग्यमिति। **व्यञ्जयति** प्रकाशयति। **तस्मात्** वैखरीनादव्यक्तात् अर्थज्ञापकशब्दात्। **अर्थबोधः** अर्थज्ञानमिति।

प्रसङ्गेऽस्मिन् स्फुटति प्रकाशितो भवति। अर्थः विवक्षितार्थः। अस्मात्। इति व्युत्पत्त्या विग्रहेण। स्फोटः शब्दः इति।

एतावता श्रोतृविषय उक्तः। वक्तृपक्षे तमाह—उच्चारयितुरित्यादिना। उच्चारयितुः नादोत्पादयितुः। तु तद्व्यतिरिक्तम्। युगपत् समकालम्। एव हि। मध्यमावैखरीभ्यां तत्तद्वाणीभ्यां हृत्कण्ठसम्बद्धाभ्याम्। नादः शब्दः। उत्पद्यते व्यक्तीभवति। तत्र मध्यमावैखरीनादयोः। वैखरीनादः वैखरीकृतनादः। वह्नेः अग्नेः। फूत्कारादिवत् फूत्कारेण यथाऽग्निज्वाला वर्धते तद्वत्। मध्यमानादोत्साहकः मध्यमानादस्य स्फोटाभिव्यञ्जकस्य उत्साहकः प्रेरकः। मध्यमानादः मध्यमाकृतनादः। स्फोटम् अर्थावबोधकशब्दम्। व्यञ्जयति प्रकटयति। इति हेतोः। ततः ताभ्यामुभाभ्याम्। शीघ्रम् अविलम्बेन। एव हि। अर्थबोधः अर्थज्ञानं भवतीति शेषः। परस्य वक्तृभिन्नस्य श्रोतुस्तु। विलम्बेन किञ्चित्कालान्तरितत्वेनैव। अनुभवसिद्धत्वात् साक्षाज्ज्ञातत्वादिति। उक्तार्थे प्रमाणग्रन्थं सङ्गमयति—अत इत्यादिना। अतः यतः शब्दः श्रोत्रेन्द्रियग्राह्यस्तस्मात् स्फोटस्य स्वीकारादेव च। एव हि। श्रोत्रोपलब्धिः श्रोत्रे श्रोत्रेन्द्रिये उपलब्धिः प्रापणं यस्य तादृशः बुद्धिनिर्ग्राह्यः बुद्धिर्निश्चयात्मिका वृत्तिस्तया निर्ग्राह्यः ग्रहणयोग्यः। प्रयोगेण इति प्रयोगेण उच्चारणेन। अभिज्वलितः अभिव्यक्तः। आकाशदेशः कर्णशष्कुल्यवच्छिन्नं नभ एव श्रोत्रमाकाशदिशोरैक्येन देशशब्दप्रयोग इति ज्योत्स्नायाम्। आकाशदेश इत्याकाशस्थानीयः। शब्दः। इति इत्याशयकः। आकरग्रन्थः भाष्यम्। सङ्गच्छते सुसङ्गतो भवतीति। तदेव व्याख्याति—कत्वेत्यादिना। कत्वादिना कत्वादिध्वनिरूपेण। श्रोत्रोपलब्धित्वं श्रोत्रेन्द्रियग्राह्यत्वं स्फोटस्येति। स्फोटात्मकपदादिरूपेण स्फोटरूपं यत्पदमादिपदाद्वाक्यमपि तद्रूपेण पदस्फोटवाक्यस्फोटरूपेण। तु तद्व्यतिरिक्तम्। बुद्धिनिर्ग्राह्यत्वं बुद्धिद्वारा ज्ञेयत्वम्। सः स्फोटः। च। वैखरीध्वनिरूपेण प्रयोगेण वैखरीध्वनिरूपव्यवहारेण। अभिज्वलितः अभिव्यक्त इति स्वरूपरूपितः कत्वादिस्वरूपप्रकटितः। कृतः विहितः। इति इत्थमाशयकः। तदर्थः तस्य भाष्यवचनस्यार्थः आशयः। तत्रापि पदस्फोटवाक्यस्फोटयोरपि। शक्यत्वस्य शक्यजातेः। इव यथा। यथा ह्यर्थगतजातेः शक्यत्वं तथैव। शक्ततावच्छेदिकायाः शक्ततानिरूपिकायाः। वर्णपदवाक्यनिष्ठजातेः वर्णपदवाक्यादिगतजातेः वर्णजातेः पदजातेः वाक्यजातेः। वाचकत्वम् अर्थावबोधकत्वम्। तत्र शिष्टं प्रमाणयति—तदित्यादिना। तत तेन। उक्तं कथितम्। तदुद्धरति—अनेकेत्यादि। अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता इत्यन्वयः। अनेकव्यक्त्यभिव्यङ्ग्या—अनेकाभिः विविधाभिर्या व्यक्तयो घटपटरूपास्ताभिरभिव्यङ्ग्या अभिव्यक्ता। जातिः पदार्थप्राणप्रदधर्मो घटत्वपटत्वरूपः। स्फोटः। इति इत्थम्। स्मृता कथिता। इति। प्रकरणपर्यवसितमाह—तस्मादित्यादिना। तस्मात् यतो हि वर्णादीनां हि व्यञ्जकत्वं ततः। अष्टविधस्फोटात्मकः वर्णव्यक्ति-वर्णजाति-पदव्यक्ति-पदजाति-वाक्यव्यक्ति-वाक्यजाति-अखण्डपद-अखण्डवाक्यरूपेणाष्टविधः यः स्फोटस्तदात्मकस्तत्स्वरूपः। शब्दः। वृत्त्याश्रयः वृत्तेः शक्त्यादेराश्रय आधारः। आश्रयानामनेकत्वेऽपि स्फोटस्यैकत्वं न विहन्यत इत्याह—वस्तुत इत्यादिना।

वस्तुतः परमार्थतः। तु हि। वाक्यस्फोटः स्फोटेषु वाक्याभिव्यङ्ग्यस्फोटः तत्रापि वाक्यजातिस्फोटः वाक्यस्फोटेष्वपि वाक्यजातिस्फोटः। एव नान्यः। वृत्त्याश्रयः वृत्त्याश्रयत्वेनार्थबोधकः। लोके व्यवहारे। ततः वाक्यजातिस्फोटात्। एव हि। अर्थबोधः अर्थज्ञानम्। इत्याद्युक्तत्वात् इत्यादिप्रतिपादितत्वात्। इति इत्थम्। सर्वं यत्पूर्वोक्तं तन्निखिलमेव। सुस्थन् व्यवस्थितमिति।

अयमाशयः—वक्ता हि युगपदेव मध्यमावैखरीभ्यां नादमुत्पादयति यत्र वैखरीनादो मध्यमानादग्राहको मध्यमानादस्तु स्फोटव्यञ्जक इति ततोऽर्थबोधः शीघ्रमेव भवति। श्रोता तु वक्तृभिन्न इति तस्य विलम्बेनानुभवात् स प्रथमं श्रोत्रेन्द्रियेण वैखरीनादं गृह्णाति यो हि हृद्गतो बुद्धिविषयत्वमवाप्य स्वगतकत्वादिनाऽर्थबोधकं शब्दं व्यञ्जयतीति ततोऽर्थबोधः। शब्दस्य हि कत्वादिना श्रोत्रविषयत्वं स्फोटात्मकपदादिरूपेण बुद्धिविषयत्वम्। अत्र हि अर्थगतजातेः शक्यत्वं यथा तथा शक्ततावच्छेदकवर्णादिगतजातेर्वाचकत्वं न तु व्यक्तेः। तत्रापि वाक्यजातिस्फोटस्यैव यथार्थतो वाचकत्वमिति स एव वृत्त्याश्रयः शब्दो लोके तत एवार्थबोधानुभवादिति।

व्याख्यायां किरणावल्यां गतं स्फोटनिरूपणम्।
स्तुत्याः कलाकृतो रत्नप्रभाज्योत्स्नाकृतश्च ते॥

---

हिन्दी—ध्वनि दो प्रकार की होती है—प्राकृत एवं वैकृत। प्रकृति अर्थात् अर्थज्ञापन की इच्छा से या स्वभाव से ही उत्पन्न स्फोट का व्यञ्जक पहली ध्वनि प्राकृत कहलाती है। उस प्राकृत से उत्पन्न विकारों से युक्त अपेक्षाकृत देर तक रहने वाली और निवर्तक ध्वनि वैकृत है। जैसे कि हरि ने भी कहा है—

'स्फोट की अभिव्यक्ति में प्राकृत ध्वनि ही कारण होती है।'

शब्द की अभिव्यक्ति के बाद वैकृत ध्वनियाँ उत्पन्न होती हैं। वृत्तिभेद में ये ही ध्वनियाँ कारण हुआ करती हैं। स्फोटात्मा शब्द उनसे भेद को प्राप्त नहीं होता। (शब्द की अभिव्यक्ति के बाद वैकृत ध्वनियाँ उत्पन्न होती हैं, यह शेष अर्थ है।)

'वृत्तिभेद में' यह—

"अभ्यास के लिए द्रुत (जल्दी-जल्दी पढ़ना आदि) वृत्ति चिन्तन में मध्य वृत्ति और शिष्यों के उपदेश में विलम्बित वृत्ति अभीष्ट है।"

इस प्रकार तीनों वृत्तियों में (वैकृत ध्वनियाँ) कारण होती हैं। स्फोट तो उनसे भेदयुक्त नहीं होता। उसमें भी जैसे कि घट आदि अर्थों में घटत्व आदि जाति की ही वाच्यता रहती है, वैसे ही शक्तता की अवच्छेदक वर्णनिष्ठ, पदनिष्ठ एवं वाक्यनिष्ठ जाति का ही वाचकत्व होता है। जैसे कि कहा गया है—

"अनेक व्यक्तियों से अभिव्यक्त जाति ही स्फोट है।"

इस कारण आठ प्रकार का स्फोटात्मक शब्द ही वृत्ति का आश्रय है। वास्तव में तो वाक्यस्फोट अर्थात् वाक्यजातिस्फोट ही वृत्ति का आश्रय है। उससे ही लोक में अर्थबोध होता है, इत्यादि कहा ही जा चुका है। अतः स्फोट को ही वृत्ति का आश्रय मानने पर सब ठीक रहता है।

इस प्रकार स्फोट-निरूपण समाप्त हुआ।

---

## ( ५ ) अथाकाङ्क्षाविचारः

( ५० ) अथ शाब्दबोधसहकारिकारणानि आकाङ्क्षायोग्यताऽऽसत्तितात्पर्याणि। वाक्यसमयग्राहिका आकाङ्क्षा। सा चैकपदार्थज्ञाने तदर्थान्वययोग्यार्थस्य यज्ज्ञानं तद्विषयेच्छा 'अस्यान्वय्यर्थः कः' इत्येवंरूपा पुरुषनिष्ठैव। तथापि तस्याः स्वविषयेऽर्थे आरोपः। अयमर्थोऽर्थान्तरमाकाङ्क्षतीति व्यवहारात्। इदमेवाभिधाना पर्यवसानमित्युच्यते। पदे तु नारोपः अर्थबोधोत्तरमेवाकाङ्क्षोदयात्। पदं साकाङ्क्षमिति तु साकाङ्क्षार्थबोधकमित्यर्थकम्। तदुक्तं समर्थसूत्रे भाष्ये—'परस्परव्यपेक्षां सामर्थ्यमेके। का पुनश्शब्दयोर्व्यपेक्षा ? न ब्रूमः शब्दयोरिति किं तर्हि अर्थयोरि'ति। ईदृशजिज्ञासोत्थापकं चैकपदार्थेऽपरपदार्थव्यतिरेकप्रयुक्तस्यान्वयबोधाजनकत्वस्य ज्ञानमिति तद्विषये तादृशान्वयबोधाजनकत्वेऽप्याकाङ्क्षेति व्यवहारः।

**व्याख्या**—एवं शाब्दबोधे वृत्तिज्ञानस्य मुख्यकारणत्वं युक्त्या प्रतिपाद्य तत्सहकारिकारणानि विवेचयितुमुपक्रमते—**अथेत्यादिना**। **अथ** इत्यनन्तरार्थे। **शाब्दबोधसहकारिकारणानि** शाब्दबोधे शब्दजन्यप्रतीतौ सहकारीणि सहयोगीनि कारणानि हेतवः उच्यन्त इति शेषः। प्रथमं सहकारिकारणभेदानाह—**आकाङ्क्षेत्यादिना**। तानि च चत्वारि—**आकाङ्क्षायोग्यताऽऽसत्तितात्पर्याणि** आकाङ्क्षा योग्यता आसत्तिः तात्पर्यञ्च तानि। एतानि हि यथावसरं व्याख्यास्यन्ते। आकाङ्क्षां निरूपयति—**वाक्येत्यादिना**। **वाक्यसमयग्राहिका** वाक्यस्य अर्थसमापकपदसमूहस्य एकार्थकबोधकाखण्डस्य वा यः संयमः सङ्केतस्तस्य ग्राहिका बोधजनयित्री। **आकाङ्क्षा** तदाख्यशाब्दबोधसहकारिकारणमिति। इच्छारूपाया आकाङ्क्षायाः कथं सङ्केतग्राहिकात्वमित्यत आह—**सेत्यादिना**। ( यद्यपि ) **सा** आकाङ्क्षा। **च** हि। **एकपदार्थज्ञाने** एकस्य कस्यचिदेकस्य पदस्य अर्थस्य ज्ञाने अवबोधे। सति। तावन्मात्रेण प्रतीतिपर्यवसानाभावात्। **तदर्थान्वययोग्यार्थस्य** तस्य पदादिपदस्य योऽर्थस्तस्य अन्वययोग्यः अन्वेतुमुपयुक्तो योऽर्थस्तस्य। **यत्** यदेव। **ज्ञानम**वबोधः। **तद्विषयेच्छा** तस्य ज्ञानस्य यो विषयस्तस्येच्छा जिज्ञासा। **अस्य** विदितार्थस्य। **अन्वयी** अनुगामी। **अर्थः**। **कः** कतमः। **इति**। **एवंरूपा** एवंविधा। **सा**। **पुरुषनिष्ठा** आकाङ्क्षाया इच्छारूपत्वादिच्छाया आत्मनो धर्मत्वेन प्रतिपादितत्वात् पुरुषसम्बद्धा। **एव** हि। आकाङ्क्षाया आत्मनो धर्मत्वं नैयायिकमते एव वेदान्तिमते तु तस्या अन्तःकरणधर्मत्वमेवेति ज्योत्स्नायां स्पष्टम्। **तथापि** आकाङ्क्षायाः पुरुषनिष्ठत्वेऽपि। **तस्याः** आकाङ्क्षायाः। **स्वविषये** आकाङ्क्षाविषये। **अर्थे** समवायसम्बन्धेन। **आरोपः** कल्पनं विषयतासम्बन्धेन त्वर्थे आकाङ्क्षा तु वर्तत एव। तस्य वृत्त्यनियामकत्वेन नारोपविषयत्वम्। तत्र हेतुमाह—**अयमित्यादिना**। **अयं** ज्ञातः। **अर्थः**। **अर्थान्तरं** स्वान्वययोग्यमपरमर्थम्। **आकाङ्क्षति** अपेक्षते। **इति**

इत्थम् । व्यवहारात् प्रयोगानुभवात् । इदम् अर्थान्तरापेक्षत्वम् । एव हि । अभिधाना-पर्यवसानम् अभिधानस्यार्थस्य विवक्षितस्य अपर्यवसानमसमाप्तिः । इति इत्थम् । उच्यते कथ्यते । पदे । तु तद्व्यतिरिक्तम् । न । आरोपः उपचारः । तत्र हेतुमाह—अर्थेत्यादिना । अर्थबोधोत्तरम् अर्थज्ञानान्तरम् । एव हि । आकाङ्क्षोदयात् आकाङ्क्षायाः प्रादुर्भावात् । पदं साकाङ्क्षम् आकाङ्क्षाविशिष्टम् । इति इत्थम् । तु हि यदुच्यते तत् । साकाङ्क्षार्थबोधकम् आकाङ्क्षाविषयो योऽर्थस्तस्य बोधकं ज्ञापकम् । इत्यर्थकम् एतादृशार्थयुक्तमिति । उक्तार्थे भाष्यं प्रमाणयति—तदित्यादिना । तत् तदेव । उक्तं कथितम् । समर्थसूत्रे 'समर्थः पदविधिः' (पा० सू० २।१।१) इति सूत्रे । भाष्ये पातञ्जल-महाभाष्ये । तदुद्धरति—परस्परेत्यादिना । परस्परव्यपेक्षा परस्परस्यान्योन्यस्य व्यपेक्षा आकाङ्क्षा । सामर्थ्यम् । इति इत्थम् । एके केचन । कथयन्ति इति शेषः । तन्मते पदसम्बन्धी यो विधिः स परस्परव्यपेक्षयोरेव बोध्य इति सूत्रार्थः । का । पुनः । शब्दयोः व्यपेक्षा आकाङ्क्षा ? कथं तर्हि शब्दयोराकाङ्क्षा सम्भवति ? न । ब्रूमः कथयामः । शब्दयोः । इति । न हि शब्दयोः परस्परव्यपेक्षा सम्भवति । किं तर्हि ? तदा कयोर्व्यपेक्षापेक्ष्यते ? अर्थयोः । अर्थयोरेव परस्परव्यपेक्षा सम्भवतीति । राज्ञः पुरुषः इत्युक्ते राजा पुरुषमपेक्षते ममायमिति पुरुषो राजानमपेक्षतेऽहमस्येति शब्दानां वाच्यार्थं प्रति विशेषणत्वादर्थबोधोत्तरमेव जिज्ञासोदयाच्चार्थे आरोपो न पदे इति ज्योत्स्नायां स्पष्टम् । यच्च नैयायिकाः घटमित्यत्र आधेयतासम्बन्धेन घटप्रकारककर्मताविशे-ष्यकं घटनिष्ठकर्मत्वमिति बोधं प्रति अव्यवहितोत्तरत्वसम्बन्धेन 'अम्' पदे घटवत्त्वं घट-पदे वाऽव्यवहितपूर्वत्वसम्बन्धेन अम्पदवत्त्वमेवाकाङ्क्षा यत्स्मरणं शाब्दबोधे कारण-मिति कथयन्ति तन्न; अर्थयोरेवाकाङ्क्षासम्भवादिति तत्रैव स्पष्टम् । फलितमाह—ईदृशेत्यादिना । ईदृशजिज्ञासोत्थापकम् ईदृशी अस्यार्थस्यात्वय्यर्थः क इत्येवंरूपा या जिज्ञासा आकाङ्क्षा तस्या उत्थापकं प्रेरकम् । एकपदार्थे यथा गामानय इत्यत्र गामि-त्येतस्मात् सास्नादिमत्पदार्थे ज्ञाते सति । अपरपदार्थव्यतिरेकप्रयुक्तस्य अपरोऽन्यो यः पदार्थः आनयपदार्थस्तस्य यो व्यतिरेक आनयपदार्थविषयकज्ञानाभावस्तत्प्रयुक्तस्य सत्प्रेरितस्य । अन्वयबोधाजनकत्वस्य अन्वयबोधस्य सम्बन्धज्ञानस्य अजनकत्वस्य अनु-त्पादकस्य अभावस्येति । ज्ञानं बोधः, यद्धि एकपदार्थेऽपरपदार्थज्ञानाभावप्रयुक्तसम्बन्धा-नुत्पादकस्थितिबोध एव आकाङ्क्षाया हेतुरित्याशयः । इति हेतोः । तद्विषये सम्बन्ध-बोधाजनकतारूपज्ञानविषये तादृशान्वयबोधाजनकत्वे तादृशस्य अन्वयबोधस्य सम्बन्ध-ज्ञानस्य अजनकत्वे अनुत्पादकरूपे अपि च । आकाङ्क्षा । इति । व्यवहारः । तेनैवोक्तं येन विना यस्यान्वयाननुभावकत्वं तेन सह तस्याकाङ्क्षेति ।

अयमाशयः—सहकारिकारणानि मुख्यकारणोत्पाद्यकार्यजनकान्यपि भवन्ति मुख्य-कारणभिन्नान्येव । शाब्दबोधे हि वृत्तिज्ञानं हि मुख्यं कारणमाकाङ्क्षादिसहकारिकारि-कारणानीति । तत्र वाक्यसङ्केतग्राहिकाऽऽकाङ्क्षा । एकपदार्थे ज्ञाते सति तन्निरूपित-तात्पर्यविषयीभूतसंसर्गेण योग्यस्यार्थस्य यज्ज्ञानं तद्विषयिणी इच्छैवाकाङ्क्षेत्यस्याशयः । आकाङ्क्षाया इच्छारूपत्वादिच्छाया आत्मनो धर्मत्वेन पुरुषनिष्ठत्वेऽपि आकाङ्क्षायाः

तथापि तस्याः समवायसम्बन्धेन स्वविषयेऽर्थे आरोपः विषयतासम्बन्धेन त्वर्थे त्वाकाङ्क्षाऽस्त्येव । न त्वाकाङ्क्षायाः पदे आरोपसम्भवोऽर्थज्ञानानन्तरमेव तस्या उत्पत्तेः । साकाङ्क्षार्थबोधकत्वेनैव पदं साकाङ्क्षमित्युच्यते । व्यपेक्षाऽर्थयोरेव भवति न तु शब्दयोः । आकाङ्क्षा तदैवोदेति यदा श्रोता एकस्य पदस्य श्रवणानन्तरं तदर्थं जानाति किन्तु तत्सम्बद्धापरार्थबोधकपदं नैव शृणोति । ज्ञातार्थस्य पदस्यान्वयबोधाजनकत्वज्ञानमेव आकाङ्क्षाया हेतुः । यथा हि गामानय इत्यत्र गामिति पदाद् गोव्यक्तेर्बोधस्तु भवति किन्तु यावदानयपदं नैवोच्चार्यते तावद् गामित्येतस्मादर्थज्ञानाभावेन गोपदे नान्वयबोधजनकत्वमिति यज्ज्ञायते तज्ज्ञानमेवाकाङ्क्षां जनयति । तेन हि पदं साकाङ्क्षार्थबोधकं वाक्यं तु तद्विलक्षणमेव । अत एवोक्तं पदस्य पदान्तरप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा पदार्थानामन्योन्यजिज्ञासाविषयत्वयोग्यत्वं वा । न तु निराकाङ्क्षपदसमूहस्य वाक्यत्वमिति ।

**हिन्दी**—अब शाब्दबोध में सहकारी कारण बतलाये जाते हैं । वृत्ति का ज्ञान ही शाब्दबोध में मुख्य कारण है और उसके सहकारी कारण हैं—आकाङ्क्षा, योग्यता, आसत्ति एवं तात्पर्य । उनमें से वाक्य के सङ्केत का बोध कराने वाली आकाङ्क्षा होती है । वह आकाङ्क्षा एक पद के अर्थ का ज्ञान होने पर उस अर्थ के योग्य अर्थ का जो ज्ञान है, उस विषय की इस अर्थ का अन्वयी । अन्वययोग्य कौन है ? इस प्रकार की इच्छा यद्यपि पुरुषनिष्ठ होती है तथापि उसका अपने विषय से सम्बन्धित अर्थ में आरोप किया जाता है । यह अर्थ दूसरे अर्थ की आकाङ्क्षा रखता है, ऐसा व्यवहार देखा जाता है । इसी को ही अभिधान की असमाप्ति कहा जाता है । पद में तो आकाङ्क्षा का आरोप नहीं हो पाता, क्योंकि अर्थबोध के बाद ही आकाङ्क्षा का उदय होता है । जो यह कहा जाता है कि पद सापेक्ष है, उसका यही अर्थ है कि पद साकाङ्क्ष अर्थ का बोधक है । जैसे कि 'समर्थः पदविधिः' ( पा० सू० २।१।१ ) सूत्र के भाष्य में कहा गया है—कुछ आचार्यों के मत में परस्पर की अपेक्षा ही सामर्थ्य है । शब्दों की कैसी अपेक्षा होती है ? शब्दों की (अपेक्षा) नहीं कहेंगे । तो फिर किसकी ? अर्थों की । इस प्रकार की जिज्ञासा का उत्थापक एक पदार्थ में दूसरे पदार्थ के अभाव से प्रयुक्त जो अन्वयबोध का अजनकत्व है, उसका ज्ञान ही है । अतः इस विषय में उस प्रकार के अन्वय के बोध के अजनकत्व में भी आकाङ्क्षा का व्यवहार होता है ।

कहने का आशय यह है कि शाब्दबोध में मुख्य कारण तो वृत्तिज्ञान ही है, किन्तु उसके सहकारी कारण भी होते हैं । ऐसे कारण चार गिनाये गये है—आकाङ्क्षा, योग्यता, आसत्ति एवं तात्पर्य । उनमें से आकाङ्क्षा वह है, जो वाक्य के सङ्केत का बोध कराती है । वह एक पद के अर्थ का ज्ञान होने पर उससे अन्वित दूसरे अर्थ को जानने की इच्छा है और इच्छा के आत्मा के धर्म होने के कारण आकाङ्क्षा पुरुषनिष्ठ ही है, फिर भी उसका स्वविषयक अर्थ में आरोप किया जाता है । यह अर्थ अपने से अन्वित दूसरे अर्थ की अपेक्षा रखता है, ऐसा व्यवहार ही इस आरोप का कारण है । यही कथन की असमाप्ति है । अर्थबोध के बाद ही आकाङ्क्षा के उदय

होने के कारण पद में आकाङ्क्षा का कोई आरोप नहीं होता। पद की साकाङ्क्षता तो उसके साकाङ्क्ष अर्थ जनाने से सम्बन्धित है। आकाङ्क्षा वहीं होती है जहाँ एक पदार्थ में दूसरे पदार्थ के अभाव से प्रयुक्त अन्वयबोध के अभाव का ज्ञान होता है। अतः उस विषय में उस प्रकार के अन्वयबोध का न हो पाना भी आकाङ्क्षा है।

(५१) यद्वा उत्थापकताविषयतान्यतरसम्बन्धेनोभयसम्बन्धेन वाऽर्थान्तरजिज्ञासाऽऽकाङ्क्षा। आद्यं 'पश्य मृगो धावति' इत्यत्र दर्शनार्थस्य कारकधावनाकाङ्क्षोत्थापकत्वं धावनं तु तद्विषय एव। अन्त्यं तु 'पचति तण्डुलं देवदत्तः' इत्यादौ क्रियाकारकयोर्द्वयोरपि परस्परं तदुत्थापकत्वात्तदविषयत्वाच्च। अतः 'घटः कर्मत्वमानयनं कृतिः' इत्यतो घटमानय इतिवन्नान्वयबोधः। आकाङ्क्षाविरहात्। घटमानयेति विभक्त्यन्ताख्यातान्तयोरेव साकाङ्क्षत्वाच्च।

**व्याख्या**—आकाङ्क्षायाः पक्षान्तरमाह—**यदित्यादिना**। **यद्वा** इति पक्षान्तरे। **उत्थापकताविषयतान्यतरसम्बन्धेन** उत्थापकता पदार्थस्य आकाङ्क्षाया उत्थापकता जनकत्वं **विषयता** प्रतिपाद्यत्वञ्च तयोरन्यतरसम्बन्ध उत्थापकतासम्बन्धो विषयतासम्बन्धश्च तयोः केनाऽप्येकेन सम्बन्धेन। **उभयसम्बन्धेन** तदुभयसम्बन्धद्वारा। **वा** इति पक्षान्तरे। **अर्थान्तरजिज्ञासा** अन्योऽर्थोऽर्थान्तरमपरोऽर्थस्तस्य जिज्ञासा ज्ञातुमिच्छा। 'आकाङ्क्षा' भवतीति शेषः। प्रथमप्रकारं निदर्शनमुखेन व्याचष्टे—**आद्यमित्यादिना**। **आद्यं** प्रथमम् उत्थापकताविषयतान्यतरसम्बन्धेनेति। **पश्य मृगो धावति** पश्य विलोकय। **मृगः** हरिणः। **धावति** जवति। **इत्यत्र** वाक्येऽस्मिन्। पश्येत्यस्य **दर्शनार्थस्य** विलोकनार्थस्य। **कारकधावनाकाङ्क्षोत्थापकत्वं** कारकस्य पश्येति क्रियायाः कर्मकारकस्य धावनस्य वेगेन गत्याः आकाङ्क्षायाः उत्थापकत्वं प्रेरकत्वम्। **धावनं** जवनम्। **तु** तद्व्यतिरिक्तम्। **तद्विषयः** तस्य दर्शनार्थस्य विषयः। **एव** हि। पश्येति पदस्य दर्शनार्थः कर्मकारकधावनस्य आकाङ्क्षाया उत्थापक इति तत्रोत्थापकतासम्बन्धेनाकाङ्क्षेति। अपरं व्याचष्टे—**अन्त्यमित्यादिना**। **अन्त्यं** चरमम्। **तु**। **पचति तण्डुलं देवदत्तः इत्यादौ** इत्यादिकथने। तत्र वैशिष्टचमाह—**क्रियेत्यादिना**। **क्रियाकारकयोः** पाकक्रियायाः कर्मकारकस्य च तयोः। **द्वयोरुभयोः**। **अपि च**। **परस्परम्** अन्योन्यम्। **तदुत्थापकत्वात्** तस्याः आकाङ्क्षायाः उत्थापकत्वात् प्रेरकत्वात् क्रियायाः कर्मणः कर्मणः क्रियायाश्च परस्परमुत्थापकत्वादिति। उभयोरेव **तद्विषयत्वात्** तस्या आकाङ्क्षायाः विषयत्वात् क्रियायाः कर्मणो विषयत्वं कर्मणश्च क्रियाया इति उभयसम्बधेनाकाङ्क्षेति। नैयायिकमतं दूषयन् फलितमाह—**अत इत्यादिना**। **अतः** यतो हि उक्तरूपाया एवाकाङ्क्षायाः शाब्दबोधे हेतुत्वं तस्मात्। एव हि। **'घटः कर्मत्वम् आनयनं कृतिः'** **इत्यतः** इत्येतस्मात्। **'घटमानय' इतिवत्** यथा घटमानयेत्यत्र भवति तथा। **न** नैव। **अन्वयबोधः** शाब्दबोध इति। तत्र हि **आकाङ्क्षाविरहात्** आकाङ्क्षाया अभावात्। कर्मत्वमिति पदेनोपस्थापितो योऽर्थः कर्मत्वज्ञाने तदन्वययोग्यमानयनरूपार्थज्ञानमिति तज्ज्ञानविषय-

केच्छारूपाकाङ्क्षायाः सत्त्वेऽपि कर्मत्वस्यानयनज्ञानस्योत्थापकत्वाभावात्तद्विषयत्वाभावाच्च नात्राकाङ्क्षेति। घटमानयेत्यत्र तु घटमित्येतस्य आनयनज्ञानस्योत्थापकत्वात्तस्य आनयनविषयत्वाच्चोभयसम्बन्धेनात्राकाङ्क्षेति ततः शाब्दबोधः। तदेवाह—**घटमि**त्यादिना। **घटमानय इति** इत्यत्र। **विभक्त्यन्ताख्यातान्तयोः** घटमित्यत्र द्वितीयाविभक्त्यन्तस्य आनयेत्यत्र सि इत्याख्यातान्तस्य च तयोः। **एव हि। साकाङ्क्षत्वात्** आकाङ्क्षायुक्तत्वात्। **चकारः** समुच्चयार्थः।

अयमाशयः—इच्छारूपत्वेन पुरुषनिष्ठायाः आकाङ्क्षायाः समवायेनार्थे आरोपे गौरवमाकलय्यारोपं विनैवाकाङ्क्षायाः पदार्थनिष्ठत्वसाधनाय प्रकरणमिदमारभ्यते। एतदनुसारेण हि पदार्थयोरुत्थापकताविषयतान्यतरसम्बन्धेनोभयसम्बन्धेन वा याऽर्थान्तरजिज्ञासा साऽऽकाङ्क्षा। यथा पश्य मृगो धावति इत्यत्र पश्येत्यस्य दर्शनार्थः कर्मकारकरूपधावनस्योत्थापकः धावनं तु दर्शनविषय एव। तेनात्रोत्थापकतासम्बन्धेनाकाङ्क्षा 'पचति तण्डुलं देवदत्तः' इत्यादौ तु पाकक्रियायास्तण्डुलरूपकर्मणश्च परस्परमुत्थापकत्वं विषयत्वञ्चेति उभयसम्बन्धेनात्राकाङ्क्षा। एतादृश्या एवाकाङ्क्षायाः शाब्दबोधे हेतुत्वात् यथा घटमानयेत्यत्र घटपदार्थः आनयनपदार्थस्य जिज्ञासायाः उत्थापकं तद्विषयश्च न तथा घटः कर्मत्वम् आनयनं कृतिरित्यत्र कर्मत्वस्यानयनज्ञानस्यानुत्थापकत्वादतद्विषयत्वाच्च। तेन नैतादृशे शाब्दबोध आकाङ्क्षाविरहात्। सुबन्ततिङन्तयोरेव साकाङ्क्षत्वं सम्भवति न तद्विभक्त्योरिति फलितोऽर्थः।

हिन्दी—यह भी है कि उत्थापकता एवं विषयता में से किसी एक सम्बन्ध से अथवा उभय सम्बन्ध से दूसरे अर्थ की जिज्ञासा ही आकाङ्क्षा है। अर्थात् आकाङ्क्षा वहीं मानी जाय जहाँ एक पदार्थ दूसरे पदार्थ का उत्थापक हो या विषय हो। पहला जैसे 'देखो मृग दौड़ता है' इसमें दर्शन अर्थ में कर्मकारकभूत दौड़ने की आकाङ्क्षा का उत्थापकत्व है और दौड़ना तो उस दर्शन अर्थ का विषय ही है। अन्तिम जैसे 'पकाता है चावल देवदत्त' इत्यादि में क्रिया एवं कारक दोनों के ही परस्पर में उत्थापकत्व एवं विषयत्व हैं।

आकाङ्क्षा के शाब्दबोध में हेतु होने से 'घट कर्मत्व आनयन कृति' इस तरह के कथन से जो कि कुछ लोग कहते हैं 'घटमानय' ( घडा को लाओ ) से जिस तरह शाब्दबोध होता है उस तरह शाब्दबोध नहीं होता, क्योंकि उसमें आकाङ्क्षा का अभाव है। 'घटमानय' में तो विभक्त्यन्त एवं आख्यातान्त दोनों के ही साकाङ्क्ष होने से शाब्दबोध सम्भव होता है।

कहने का तात्पर्य यह है कि पुरुषनिष्ठ आकाङ्क्षा को समवाय सम्बन्ध से पदार्थ में आरोप कर देने से एक तो गौरव पड़ जाता है और दूसरी बात इससे स्थिति भी स्पष्ट नहीं होती। अतः आकाङ्क्षा की परिभाषा इस प्रकार की जानी चाहिए। एक अर्थ का उत्थापकता अथवा विषयता में से कोई एक अथवा दोनों सम्बन्धों से दूसरे अर्थ की जिज्ञासा ही आकाङ्क्षा है। अर्थात् एक अर्थ दूसरे अर्थ का या तो उत्थापक बने या तो—विषय अथवा दोनों ही, तभी आकाङ्क्षा मानी जाय। 'पश्य मृगो धावति'

में जो देखना अर्थ है, वह धावन का उत्थापक है, धावन देखना अर्थ का विषय तो है ही। 'पचति तण्डुलं देवदत्तः' में पाकक्रिया एवं कर्मकारक (तण्डुल) एक दूसरे के उत्थापक एवं विषय भी हैं। 'घटमानय' में घट अर्थ आनयन अर्थ का उत्थापक है और विषय भी। किन्तु जो 'घट कर्मत्व आनयन कृति' ऐसा कहा जाता है, उसमें आकाङ्क्षा के न होने से उससे शाब्दबोध नहीं हो पाएगा। कर्मत्व का अर्थ आनयन अर्थ का न तो उत्थापक है, न ही आनयन कर्मत्व अर्थ का विषय ही। अतः वे ही पद साकाङ्क्ष हो सकते हैं, जिसके अन्त में विभक्ति अथवा आख्यात चिह्न हों।

आकाङ्क्षाविषयेऽभीष्टं ग्रन्थे यत्प्रतिपादितम्।
तद्व्याख्यातं यथाबुद्धि भवानीशौ प्रसीदताम्॥
श्रीपर्शुरामपुत्रेण श्रीलोकमणिना कृता।
आकाङ्क्षा भागसम्बद्धा समाप्ता किरणावली॥

इस प्रकार आकांक्षा-विचार समाप्त हुआ।

---

## ( ६ ) अथ योग्यताविचारः

( ५२ ) योग्यता परस्परान्वयप्रयोजकधर्मवत्त्वम्। तेन 'पयसा सिञ्चति' इति वाक्यं योग्यम्। अस्ति च सेकान्वयप्रयोजकद्रवद्रव्यत्वं योग्यता जले। करणत्वेन जलान्वयप्रयोजकार्द्रीकरणत्वं योग्यता सेकक्रियायाम्। अत एव 'वह्निना सिञ्चति' इति वाक्यमयोग्यम्, वह्नेः सेकान्वयप्रयोजकद्रवद्रव्यत्वाभावात्।

**व्याख्या**—शाब्दबोधसहकारिकारणेषु द्वितीयं योग्यतां निरूपयति—**योग्यतेत्यादिना**। पदार्थयोः **परस्परान्वयप्रयोजकधर्मवत्त्वं** परस्परमन्योन्यं योऽन्वयोऽन्वितिस्तस्य यः प्रयोजकः प्रेरको धर्मस्तद्वत्त्वं तेन युक्तत्वम्। **योग्यता** तदाख्यशाब्दबोधसहकारिकारणम्। परस्परसम्बन्धे बाधाभाव एव योग्यतेति। **तेन** योग्यतायाः शाब्दबोधे करणत्वात् **'पयसा सिञ्चति' इति** कथनम्। **योग्यमुपयुक्तम्**। तद्धेतुं निरूपयति—**अस्तीत्यादिना**। **जले** पयसि। **सेकान्वयप्रयोजकद्रवद्रव्यत्वम्**—सेकस्य सेचनक्रियायाः अन्वयस्यान्वितेः यत्प्रयोजकं प्रयोजनसाधकं द्रवद्रव्यत्वं रसवस्तुत्वम्। **अस्ति** विद्यते। **करणत्वेन** साधकतमत्वेन। **जलान्वयप्रयोजकार्द्रीकरणत्वं** जलेन सह योऽन्वयस्तस्य प्रयोजकं यदार्द्रीकरणत्वं तत्। **योग्यता** उपयुक्तता। **सेकक्रियायां** सिञ्चतीति सेचनक्रियायाम्। **अस्तीति**। आकाङ्क्षा तूभयसम्बन्धेन विद्यते एव। **अतः** योग्यतायाः शाब्दबोधे कारणत्वात् तस्याश्च अर्थयोः परस्परान्वयप्रयोजकधर्मवत्त्वेन। **एव** हि। **'वह्निना सिञ्चति' इति वाक्यम्**। **अयोग्यमनुपयुक्तम्**। तत्र हेतुमाह—**वह्नेरित्यादिना**। **वह्नेरग्नेः**। **सेकान्वयप्रयोजकद्रवद्रव्यत्वाभावात्** सेकेन सह योऽन्वयस्तस्य प्रयोजकं यद् द्रवद्रव्यत्वं तस्याभावात् सेकक्रियायां करणत्वेन वह्न्यन्वयप्रयोजकदहनत्वाद्यभावाच्च।

अयम्भावः—अर्थयोरन्योन्यान्वयप्रयोजकधर्मवत्त्वं योग्यता। साऽपि शाब्दबोधसहकारिकारणेष्वन्यतमम्। यथा 'जलेन सिञ्चती'त्यत्र जलसेकयोः परस्परान्वयप्रयोजकधर्मवत्त्वस्य भावेन योग्यताऽस्ति सेकान्वयोत्पादकरसद्रव्यकत्वं जले जलान्वयप्रयोजकार्द्रीकरणत्वं सेकक्रियायामिति वह्निना सिञ्चति' इत्यत्र तु वह्नौ सेकान्वयप्रयोजकद्रवद्रव्यत्वस्य सेकक्रियायां वह्न्यन्वयप्रयोजकदहनत्वादिधर्मस्य चाभावान्न योग्यता न चैतादृशस्य वाक्यत्वमपीति।

**हिन्दी**—अर्थों का जो परस्पर के सम्बन्ध का प्रयोजक धर्म है, उससे युक्त होना ही योग्यता है। इस कारण 'जल से सेचन करता हैं' ऐसा वाक्य ठीक है, क्योंकि जल में सेचन करना रूप क्रिया में अन्वय का प्रयोजक धर्म गीलापन है और करण रूप से जल में अन्वय का प्रयोजक धर्म 'गीला करना' रूप योग्यता सेक क्रिया में भी है। इस कारण 'आग से सेचन करता है' ऐसा वाक्य अयोग्य है, क्योंकि न तो आग में सेक के साथ अन्वय का प्रयोजक धर्म गीलापन ही है और न ही सेक क्रिया में

आग के अन्वय के प्रयोजक धर्म जलाना आदि ही है। पदार्थों के परस्पर के सम्बन्ध में बाधा का अभाव ही योग्यता है। अतः 'जल से सींचता है' तथा 'आग से जलाता है' ऐसे वाक्य तो ठीक हैं, लेकिन 'जल से जलाता है' और 'आग से सींचता है' ऐसे वाक्य ठीक नहीं हैं।

(५३) एतादृशस्थलेषु नान्वयबोधः किन्तु प्रत्येकं पदार्थबोधमात्रमिति नैयायिकाः। तन्न। बौद्धार्थस्यैव सर्वत्र बोधविषयत्वेन बाधस्याभावात्। हरिरप्याह—

'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति च'। इति।

अतो वन्ध्यासुतादिशब्दानामपि प्रातिपदिकत्वम्। 'वह्निना सिञ्चतीत्यतो बोधाभावे तद्वाक्यप्रयोक्तारं प्रति 'अद्रवेण वह्निना कथं सेकं ब्रवीषि' इत्युपहासानापत्तेश्च। वाक्यार्थबोधे जाते बुद्धार्थविषये प्रवृत्तिस्तु न भवति, बुद्धार्थेऽप्रामाण्यग्रहादित्यन्यत्र विस्तरः।

इति योग्यताविचारः।

---

व्याख्या—योग्यताभावस्थलेऽपि अन्वयबोधप्रतिपादनाय प्रकरणमारभते—**एतादृशे**त्यादिना। **एतादृशस्थलेषु** वह्निना सिञ्चतीत्यादिषु योग्यताभावस्थलेषु। **न**। **अन्वयबोधः** अर्थयोः परस्परसम्बन्धज्ञानम्। **किन्तु**। **प्रत्येकं** प्रतिपदम्। **पदार्थबोधमात्रं** पदार्थज्ञानमात्रम्। भवतीति **नैयायिकाः** तार्किकाः। वदन्तीति शेषः। **तत्** तादृशं कथनम्। **न** नैवोपयुक्तम्। तत्र हेतुं व्याचष्टे—**बौद्धार्थस्ये**त्यादिना। **सर्वत्र** सर्वविधेषु योग्यताभावाभावस्थलेषु। **बौद्धार्थस्य** बुद्धिसम्बद्धार्थस्य। **बोधविषयत्वेन** ज्ञानविषयत्वात्। **बोधस्य** अन्वयबोधबाधकतत्त्वस्य। **अभावात्** विरहात्। उक्तार्थे हरिं प्रमाणयति—**हरिरि**त्यादिना। **हरिः** वाक्यपदीयकृत् तदाख्यः। **अपि च**। **आह** कथयति। तदुद्धरति—**अत्यन्ते**त्यादिना। अर्थे अत्यन्तासति अपि शब्दः ज्ञानं करोति च इत्यन्वयः। **अर्थे** शाब्दे। **अत्यन्तासति** - नितान्तमेवाविद्यमाने। **अपि च**। **शब्दः**। **ज्ञानम्** अवबोधः। **करोति** विदधाति। **च** एव। **इति**। इति उद्धरणसमाप्तौ। **अतः** यतो हि अविद्यमानेऽपि बाह्यार्थे शब्दस्य ज्ञानसाधकत्वं तस्मात्। **वन्ध्यासुतादिशब्दानां** वन्ध्यासुतप्रभृतयो बाह्यार्थशून्या ये शब्दास्तेषाम्। **प्रातिपदिकत्वं** बौद्धार्थवत्त्वेन प्रातिपदिकसंज्ञा। **'वह्निना सिञ्चति'** इत्यतः इत्येतस्मात्। **बोधाभावे** ज्ञानविरहे। **तद्वाक्यप्रयोक्तारं** तादृशवाक्यवक्तारम्। **प्रति** उद्दिश्य। **अद्रवेण** द्रवत्वविरहितेन। **वह्निना** अग्निना। **कथं** केन प्रकारेण। **सेकं** सेचनम्। **ब्रवीषि** कथयसि। **इति** इत्थम्। **उपहासानापत्तेः** उपहासाप्राप्तेः। **च** हि। यदि हि वह्निना सिञ्चतीत्येतस्मादर्थबोधोऽन्वयबोधो न स्यात्तर्हि कथं तस्य योग्यायोग्यत्वमपि निर्णीयेतेति। **वाक्यार्थबोधे** वाक्यार्थज्ञाने। **जाते** समुत्पन्ने। **बुद्धार्थविषये** ज्ञातार्थविषये। **प्रवृत्तिः** प्रवर्तनम्। **तु**। **न**। **भवति** जायते। **बुद्धार्थे** ज्ञातार्थे बाह्यार्थाभावेन **अप्रामाण्यग्रहात्** प्रमाणशून्यत्वेन स्वीकारात्। **इति**। **अन्यत्र** ग्रन्थान्तरे। **विस्तरः** विस्तृतप्रपञ्चः।

८ प०

अयमाशयः—यदुच्यते तार्किकैर्यद् वह्निना सिञ्चतीत्यादौ योग्यताज्ञानाभावेन नान्वयबोधः, केवलं प्रत्येकं पदार्थबोधमात्रमिति तन्नोपयुक्तं तत्रापि बौद्धार्थस्य सत्त्वात् तस्यैव सर्वत्र बोधविषयत्वेनान्वयबोधे बाधाभावात्। तादृशस्थले यदि नान्वयबोधः स्वीक्रियते तदा तु बाह्यार्थाभावेन वन्ध्यासुतप्रभृतिशब्दानां प्रातिपदिकत्वमपि न स्यात् किन्तु भवत्येव। तथा च यदि नामैतादृशान्नान्वयबोधस्तदा वह्निना सिञ्चतीत्युक्ते कथमद्रवेण वह्निना सेक इति प्रश्न एव नोदीयेत। तेनैतादृशस्थलेऽपि वाक्यार्थबोधस्तु भवत्येव किन्तु तत्र बाह्यार्थाभावेन प्रामाण्याभावात् प्रवृत्तिस्तु न सम्भवति, प्रवृत्तौ ज्ञानमात्रस्य न वस्तुसत्तायाः नियामकत्वमपितु प्रामाण्यस्यापि। तेन वाक्यार्थबोधे यथा नैयायिकमते योग्यताया अपरिहार्यत्वं न तथा वैयाकरणमते। अर्थस्य बौद्धत्वादयोग्येनापि वाक्येनार्थबोधस्तु भवत्येव, किन्तु तस्याप्रामाणिकत्वादयथार्थत्वात् केवलं बौद्धिकत्वाच्च न तत्र प्रवृत्तिरिति।

---

हिन्दी—इस प्रकार के स्थलों में अन्वयबोध नहीं होता, किन्तु प्रत्येक से पदार्थों का बोध होता है—ऐसा नैयायिक मानते हैं। यह ठीक नहीं है, क्योंकि सभी जगह बौद्ध अर्थ के ही बोध के विषय होने से अर्थबोध का अभाव रहता है। जैसे कि हरि ने भी कहा है—

'अर्थ के एकदम न रहने पर भी शब्द ज्ञान तो कराता ही है।'

इसी कारण से ही वन्ध्यासुत आदि शब्दों की प्रातिपदिकता बन पाती है। 'वह्निना सिञ्चति' इससे यदि बोध न हो तो ऐसे वाक्य के प्रयोक्ता के प्रति द्रवता रहित आग से कैसे सेक की बात करते हो' ऐसे उपहास की प्राप्ति नहीं होगी। वाक्यार्थबोध हो जाने पर ऐसे ज्ञात अर्थ के विषय में प्रवृत्ति तो नहीं होती, क्योंकि बुद्धार्थ में प्रामाणिकता नहीं रहती आदि का ग्रन्थान्तर में विस्तार से विवेचन किया गया है।

इस प्रकार योग्यता-विचार समाप्त हुआ।

---

## ( ७ ) अथासत्तिविचारः

( ५४ ) प्रकृतान्वयबोधाननुकूलपदाव्यवधानमासत्तिः 'गिरिरग्निमानि'-त्यासन्नम्। अनासन्नश्च 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इति। आसत्तिरपि मन्दबुद्धेरविलम्बेन शाब्दबोधे कारणम्। अमन्दबुद्धेस्त्वासत्त्यभावेऽपि पदार्थोपस्थितावाकाङ्क्षादितोऽविलम्बेनैव बोधो भवतीति न बोधे तस्याः कारणत्वम्। ध्वनितञ्चेदं 'न पदान्त' सूत्रे भाष्ये।

स्थाल्यामोदनं पचतीत्यादौ स्थाल्यामित्यस्यौदनपदेन व्यवधाने सत्यपि प्रकृतान्वयबोधानुकूलत्वादासन्नत्वाक्षतिः।

इत्यासत्तिनिरूपणम्

---

निरूप्य योग्यताकाङ्क्षे सम्प्रत्यासत्तिरुच्यते।
आसत्तिर्बुद्ध्यविच्छेदः प्रकृतान्वयसाधकः।

**व्याख्या**—आसत्तिं व्याचष्टे—**प्रकृतेत्यादिना**। **प्रकृतान्वयबोधाननुकूलपदाव्यवधानत्वम्**—प्रकृतेन सह योऽन्वयः सम्बन्धस्तस्य बोधो ज्ञानं तस्य अननुकूलं प्रतिकूलं व्यवधायकं वा यत्पदं तेन अव्यवधानत्वं व्यवधानाभावः। **आसत्तिः** इति। यथा **गिरिरग्निमान्** गिरिः पर्वतः **अग्निमान्** वह्नियुक्तः। इति इत्यादौ। **आसन्नम्** आसत्तियुक्तत्वं, तत्र प्रकृतस्यान्वयबोधाननुकूलपदव्यवधानाभावात्। **अनासन्नम्** आसत्तिरहितत्वम्। **च** तु। **गिरिर्भुक्तमग्निमान् देवदत्तेन इति** इत्यादौ। अत्र अनासत्तिर्हि गिरिपदाग्निमत्पदयोः प्रकृतान्वयबोधाननुकूलेन युक्तमिति पदेन व्यवधानात्। परे तु आसत्तिर्बुद्ध्यविच्छेदः इति आसत्तेः परिभाषां कृत्वा बुद्धिविच्छेदेऽपि वाक्यत्वे इदानीमुच्चरितस्य देवदत्तशब्दस्य दिनान्तरोच्चारितेन गच्छतीति पदेन सङ्गतिः स्यात् इति वदन्ति। एकेनैव पुंसा अविलम्बेनोच्चारितत्वं पदस्य सन्निधानमिति चासत्तेरितरसम्मते लक्षणे। आसत्तेर्विषयं व्याचष्टे—**आसत्तिरित्यादिना**। **आसत्तिः** आसन्नत्वम्। **अपि च**। **मन्दबुद्धेः** अल्पमतेः। **अविलम्बेन** शीघ्रमेव। **शाब्दबोधे** अर्थज्ञाने। **कारणं** हेतुः। **अमन्दबुद्धेः** तीक्ष्णमतेः। **तु** तद्व्यतिरिक्तम्। **आसत्त्यभावे** अनासन्नत्वे। **अपि च**। **पदार्थोपस्थितौ** पदार्थावबोधे। **आकाङ्क्षादितः** आकाङ्क्षायोग्यतावशात्। **अविलम्बेन** शीघ्रमेव। **बोधः** ज्ञानम्। **भवति** सम्पद्यते। **इति** हेतोः। **बोधे** ज्ञाने। **तस्याः** आसत्तेः। **न** नैव। **कारणत्वं** हेतुत्वमिति। उक्तार्थे भाष्यं प्रमाणयति—**ध्वनितमित्यादिना**। **इदं** पूर्वोक्ततथ्यम्। **न पदान्त इति सूत्रे**—'न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु' ( पा० सू० १।१।५८ ) इति सूत्रसम्बद्धे। **भाष्ये** महाभाष्यग्रन्थे। **ध्वनितम्** संसूचितमिति। तत्रोक्तं यदनानुपूर्व्येणापि सन्निविष्टानां यथेष्टमभिसम्बन्धो भवतीति। उदाहृतश्च तत्र 'अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि

साचीनमभिधावन्तमद्राक्षीः' इति । अस्याभीष्टसम्बन्धश्च तत्रैवोक्तो यथा 'उदहारि भगिनि या त्वं कुम्भं हरसि शिरसा अनड्वाहं साचीनमभिधावन्तमद्राक्षीः' इति । व्यवधानेऽपि व्यवधायकस्य प्रकृतान्वयबोधानुकूलत्वे न क्षतिरित्युदाहरणमुखेन व्याचष्टे—**स्थाल्यामि-त्यादिना** । **'स्थाल्यामोदनं पचति'** इत्यादौ **स्थाल्यामित्यस्य** स्थाल्यामिति पदस्य पच-तीत्यनेन सहान्वयांय **ओदनपदेन** आदेनमिति पदेन । **व्यवधाने** अन्तरा स्थित्वा बाधो-पस्थापने । **अपि च** । **प्रकृतान्वयबोधानुकूलत्वात्** प्रकृतः स्वाभाविको योऽन्वयबोधः प्रकृतस्य अन्वयबोधो वा तस्यानुकूलत्वात् साधकत्वात् **आसन्नत्वाक्षतिः** आसन्नत्वस्या-सत्तेरक्षतिर्हान्यभावः इति ।

अयमाशयः—शाब्दबोधे आसत्तेरपि सहकारिकारणत्वं मन्यन्ते तज्ज्ञाः । तत्र तार्किकाः । पदानामविलम्बेनोच्चारितत्वमासत्तिरिति कथयन्ति सन्निधानं पदस्य वा । आलङ्कारिकास्तु आसत्तिर्बुध्यविच्छेद इति परिभाषन्ते । प्राचीनास्तु प्रकृतान्वयबोधा-ननुकूलपदाव्यवधानमासत्तिरिति मन्यन्ते । प्रासङ्गिकान्वयज्ञानाय प्रतिकूलं यत्पदं तादृशस्य पदस्य व्यवधानाभाव एव आसत्तिरित्यस्यार्थः । आसन्नस्योदाहरणं गिरि-रग्निमानिति, अनासन्नस्य तु गिरिर्भुक्तमग्निमान् देवदत्तेनेति । वस्तुतस्तु अल्पबुद्धेरेव शाब्दबोधायासत्तेः कारणत्वं तीक्ष्णबुद्धेस्तु आकाङ्क्षावशाच्छाब्दबोधेन न तस्यास्तत्र हेतुत्वम् । भाष्यकृताऽपि अनानुपूर्व्येण सन्निविष्टानामपि यथेष्टमभिसम्बन्धो भवतीति कथनेन तदेव समर्थितं दृश्यते । पदान्तरेण व्यवधानेऽपि तस्य प्रकृतान्वयबोधानुकूलत्वे तु नासन्नताहानिर्यथा 'स्थाल्यामोदनं पचति' इत्यत्र ओदनपदेन व्यवधानेऽपि तस्य प्रकृतान्वयबोधानुकूलत्वान्नासत्तिक्षतिरिति ।

श्रीपर्शुरामपुत्रेण शेषशिष्येण निर्मिता ।
आसत्तिभागसम्बद्धा समाप्ता किरणावली ।

---

हिन्दी—प्रासङ्गिक जो अन्वय है, उसके ज्ञान के प्रतिकूल होनेवाले पद से व्यव-हित न होना आसत्ति है । 'गिरिरग्निमान्' यह आसन्न है और अनासन्न है 'गिरिर्भुक्त-मग्निमान् देवदत्तेन' इत्यादि । आसत्ति मन्द बुद्धि वालों के लिए शीघ्र ही अर्थज्ञान में कारण होती है । तीक्ष्ण बुद्धिवालों के लिए तो आसत्ति के अभाव में भी पदार्थ की उपस्थिति हो जाने पर आकाङ्क्षा आदि से अविलम्ब ही अर्थबोध हो जाता है । अतः शाब्दबोध में आसत्ति का वहाँ कारणत्व नहीं रहता । यही बात 'न पदान्त' ( पा० सू० १।१।१८ ) सूत्र के भाष्य में सूचित की गई है । 'स्थाल्यामोदनं पचति' इत्यादि में 'स्थाल्याम्' पद का 'ओदनम्' पद से व्यवधान होने पर भी उसके प्रकृत के अन्वय-बोध के अनुकूल होने से यहाँ आसत्ति की क्षति नहीं है ।

**इस प्रकार आसत्ति-निरूपण समाप्त हुआ ।**

---

## ( ८ ) अथ तात्पर्यविचारः

( ५५ ) एतद् वाक्यं पदं वा एतदर्थंबोधायोच्चारणीयमितीश्वरेच्छा तात्पर्यम्। अत एव सति तात्पर्ये 'सर्वे सर्वार्थवाचकाः' इति शाब्दिकनये घटशब्दात्पटप्रत्ययो नेत्याद्युक्तम्। नानार्थस्थले लोके तात्पर्यं तु एतत्पदं वाक्यं वा एतदर्थः प्रत्ययाय मयोच्चार्यते इति प्रयोक्तुरिच्छारूपम्। तात्पर्यनियामकञ्च लोके प्रकरणादिकमेव। अतो भोजनप्रकरणे सैन्धवमानयेत्युक्ते सैन्धवपदेन लवणप्रत्ययो युद्धावसरेऽश्वप्रत्ययः। वेदवाक्ये चैश्वरतात्पर्यादर्थबोधः।

ननु प्रकरणादीनां शक्तिनियामकत्वे शक्त्यैव निर्वाहे किं तात्पर्येणेति चेन्न; अस्माच्छब्दादर्थद्वयविशेष्यको बोधो जायतेऽर्थद्वये शक्तिसत्त्वात्, तात्पर्यं तु क्वेति न जानीम इत्याद्यनुभवविरोधात्। अत एव च 'पय आनय' इत्युक्तेऽप्रकरणज्ञस्य 'दुग्धं जलं वाऽऽनेयम्' इति प्रश्नः सङ्गच्छते।

इति तात्पर्यविचारः।

---

आकाङ्क्षायोग्यतासत्तीः सप्रपञ्चं निरूप्य वै।
निरूप्यते हि तात्पर्यं वक्तुरिच्छैव तत्स्मृतम्॥
एकाधिकार्थके शब्दे क्व तात्पर्यमिति ब्रुवन्।
लोकः प्रमाणं तत्सत्त्वे नाऽस्य शक्तिर्निरूपिका॥
तेनैव सति तात्पर्ये सर्वे सवार्थवाचकाः।
तदभावाद् घटपदात् पटसम्प्रत्ययो न हि॥
तथा प्रकरणादिभ्यस्तात्पर्यं तु नियम्यते।
सैन्धवं लवणं भोज्ये यात्रादावश्वबोधकम्॥
वेदवाक्ये तु तात्पर्यमीश्वरेच्छैव केवलम्।
तदन्यत्र प्रयोक्त्रिच्छा नान्यथार्थो घुभादिके॥

तात्पर्यं निरूपयति—एतदित्यादिना। एतत् प्रकरणगतम्। वाक्यम् अर्थसमापकपदसमूहोऽखण्डं वा। वा इति विकल्पे। पदं घटादि। एतदर्थबोधाय एतादृशार्थज्ञापनाय। उच्चारणीयं कथनीयम्। इति इत्थम्। ईश्वरेच्छा ईश्वरस्य जगत्स्रष्टुस्तत्प्रेरणया तत्प्रयोक्तुश्च इच्छा ईहा। तात्पर्यं तदाख्यशाब्दबोधसहकारिकारणमिति। ईश्वरेच्छा तु वस्तुतो वेदवाक्ये एव व्यवहारे तु प्रयोक्तुरेव साऽन्यथा पारिभाषिकपदेष्वीश्वरेच्छाया अभावात्ततोऽर्थबोधो न स्यात्। अतः यतो हि प्रयोक्तुरिच्छैव तात्पर्यं तस्मात्। एव हि। तात्पर्ये आशये। सति विद्यमाने। सर्वे सर्वविधा एव शब्दाः। सर्वार्थवाचकाः सर्वविधार्थज्ञापकाः। इति इत्थम्। शाब्दिकनये शाब्दिका हि वैयाकरणास्तेषां नये न्याये। घटशब्दात् घटत्वविशिष्टवस्तुबोधतात्पर्येण प्रयुक्तात्

घटपदात् । पटप्रत्ययः पटत्वविशिष्टवस्तुप्रतीतिः । न नैव भवति तथातात्पर्याभावात् । इत्यादि । उक्तम् पूर्वमेव प्रतिपादितमिति । लोके व्यवहारे । नानार्थस्थले एकाधिकार्थ-क्षेत्रे । तात्पर्यम् । तु । एतत् ममोच्चार्यमाणम् । पदम् । वा । वाक्यम् । एतदर्थप्रत्ययाय एतस्य विवक्षितस्य अर्थस्य । प्रत्ययाय प्रतीतये । मया वक्त्रा । उच्चार्यते शब्दविषयी-क्रियते । इति इत्थम् । प्रयोक्तुः व्यवहर्तुः । इच्छारूपम् ईहास्वरूपम् । लोके व्यवहारे । तात्पर्यनियामकम् अर्थान्तरनिवृत्तिपूर्वकतात्पर्यविषयीभूतमात्रार्थज्ञापकम् । च । प्रकरणादिकं शब्दार्थानवच्छेदे विशेषस्मृतिहेतुशब्दार्थानवच्छेदे विशेषार्थस्मारक-प्रकरणादि । एव । अतः यतो हि प्रकरणादेस्तात्पर्यनियामकत्वं तस्मात् । भोजनप्रकरणे भोजनप्रसङ्गे 'सैन्धवमानय' इति । उक्ते कथिते । सैन्धवपदेन सैन्धवमित्यनेन । लवण-प्रत्ययः लवणस्य सैन्धवलवणस्य । प्रत्ययः अवबोधः । युद्धावसरे रणप्रसङ्गे यात्रादौ च । अश्वप्रत्ययः अश्वस्य घोटकस्य प्रत्ययः प्रतीतिः । वेदवाक्ये श्रुतिगतवाक्ये । च तु । ईश्वरतात्पर्यात् ईश्वरेच्छारूपतात्पर्याद् देवतामहर्षिलोकवृद्धपरम्परया अस्मदादि-भिर्ज्ञाताद् । अर्थबोधः अर्थप्रतीतिः । तत्र प्रयोक्तुरिच्छाया अप्राधान्यात् ।

यदि तात्पर्यस्यापि प्रकरणादिनियामकत्वं तदा शक्त्यैव तदाश्रित्यार्थबोधः स्यात्किं तात्पर्येणेति आशङ्क्य समाधत्ते—नन्वित्यादिना । ननु इति प्रश्ने । प्रकरणादीनां प्रकरणप्रभृतीनाम् । शक्तिनियामकत्वे शक्त्याः नियामकत्वं नानार्थस्थले विशेषार्थबोध-कत्वं तस्मिन् । सति । शक्त्या शक्तिवृत्त्या । एव हि । निर्वाहे कार्यसिद्धौ । तात्पर्येण तदितरतात्पर्यस्वीकारेण । किं कोऽर्थः । इति इत्थम् । चेत् । न न तद्युक्तम् । तत्र हेतुमाह—अस्मादित्यादिना । अस्मात् पठितात् श्रुताद्वा । शब्दात् । अर्थद्वयविशेष्यकः द्विविधार्थविशेष्यभूतः । बोधः ज्ञानम् । जायते उत्पद्यते । अर्थद्वये द्विविधे एवार्थे । शक्तिसत्त्वात् शक्तेः सत्त्वाद्विद्यमानत्वात् । तात्पर्यं वक्तुरिच्छा । तु । क्व कस्मिन्नर्थे । इति । न । जानीमः विद्मः । इति । अनुभवविरोधात् । अनुभवस्य साक्षाज्ज्ञानस्य सकलप्रमाणशिरोमणेः विरोधात् प्रातिकूल्यात् । अतः तात्पर्यानभिज्ञानात् । एव । च । 'पयः आनय' इति । उक्ते कथिते । अप्रकरणज्ञस्य प्रकरणज्ञानरहितस्य । दुग्धं क्षीरम् । पयः जलम् । वा । आनेयम् उपस्थाप्यम् । इति इत्थम् । प्रश्नः ऊहापोहः । सङ्गच्छते सुसङ्गतो भवति । इति ।

अयमाशयः—वेदप्रसङ्गे एतत्पदं वाक्यं वैतदर्थबोधायोच्चारणीयमिति ईश्वरेच्छा लोके तु तथैव प्रयोक्तुरिच्छैव तात्पर्यम् । नानार्थस्थले प्रयोक्तुरिच्छयैवाभीष्टार्थबोधः । तात्पर्यमपि प्रकरणादिभिरेव नियम्यते । एतत्प्रकरणमेव यत्सैन्धवमानय इत्युक्ते भोजन-प्रसङ्गे सैन्धवपदस्य लवणार्थं युद्धादावश्वार्थकं बोधयति यदा शक्तिस्तु उभावेवार्थावुप-स्थापयति । प्रकरणानभिज्ञो हि 'पय आनय' इत्युक्ते दुग्धं जलं वा किमानेयमिति निर्णेतुं न प्रभवति, शक्तिरस्तु पयस उभावेवार्थौ प्रस्तौति । तेन प्रकरणादीनां शक्ति-नियामकत्वेऽपि न हि तात्पर्यं विनाऽर्थबोधो विशेषेण नानार्थस्थले । तेन हि तात्पर्यज्ञानं शाब्दबोधे प्रामाण्यनिश्चायकं भवति । तात्पर्यं तु वाक्यविषयकमेव नानार्थस्थले तु पदविषयकमपि ।

तात्पर्यभागसम्बद्धा समाप्ता किरणावली ।
श्रीपर्शुरामतनय श्रीलोकमणिनिर्मिता ॥

---

हिन्दी—'यह वाक्य अथवा पद इस अर्थ के ज्ञान के लिए उच्चारित हो' ऐसी ईश्वर की इच्छा से तात्पर्य है। इस कारण तात्पर्य के रहने पर 'सभी शब्द सभी प्रकार के अर्थ के वाचक होते हैं' इस प्रकार के वैयाकरणों के न्याय में घट पद से पट अर्थ की प्रतीति नहीं होती है—इत्यादि पहले ही कहा गया है। लोक में जहाँ शब्द के एक से अधिक अर्थ होते हैं, उसमें जो तात्पर्य है 'यह पद अथवा वाक्य इस अर्थ की प्रतीति के लिए हमसे उच्चारित किया जाता है' इस तरह की प्रयोक्ता की इच्छा ही है। लोक में तात्पर्य के नियामक प्रकरण आदि ही होते हैं। इस कारण भोजन के प्रकरण में 'सैन्धव लाओ' कहने पर सैन्धव पद से नमक अर्थ की प्रतीति होती है और युद्ध के अवसर में अश्व अर्थ की प्रतीति होती है। वेदवाक्यों में तो ईश्वर से सम्बद्ध तात्पर्य से ही अर्थबोध होता है। यदि प्रकरण आदि का शक्ति के नियामक होने के कारण शक्ति से काम चल जाने से तात्पर्य क्यों लिया जाय' इस तरह कहा जाता है तो ऐसा कहना ठीक नहीं है, क्योंकि 'इस शब्द से दो अर्थ विशेष्य वाला बोध होता है, क्योंकि दोनों ही अर्थों में शक्ति है, लेकिन तात्पर्य किस अर्थ से है ? यह जानते नहीं हैं' इत्यादि अनुभव के विरुद्ध हो जाता है। इसी कारण ही 'पय आनय' कहने पर प्रकरण न जानने वाले को दूध अथवा पानी में कौन लाया जाय ? यह प्रश्न स्वाभाविक होता है।

कहने का आशय यह है कि 'यह पद इस अर्थ के बोध के लिए प्रयुक्त है' इस तरह की वक्ता की इच्छा ही तात्पर्य है और तात्पर्य भी शाब्दबोध में कारण होता है। तात्पर्य मूलतः वाक्य में, नानार्थ वाले शब्दों में और पदों में भी होता है। प्रकरण आदि ही तात्पर्य के नियामक होते हैं।

इस प्रकार तात्पर्य-विचार समाप्त हुआ।

---

## ( ९ ) अथ धात्वर्थनिरूपणम्

( ५६ ) अथ सकलशब्दमूलभूतत्वाद् धात्वर्थो निरूप्यते । तत्र फलानुकूलो यत्नसहितो व्यापारो धात्वर्थः । फलत्वञ्च तद्धात्वर्थजन्यत्वे सति कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वम् । विभागजन्यसंयोगादिरूपे पतत्यादिधात्वर्थे विभागसंयोगयोः फलत्ववारणायोभयम् । कर्मप्रत्ययसमभिव्याहारे तु फलस्य विशेष्यता । व्यापारत्वञ्च धात्वर्थफलजनकत्वे सति धातुवाच्यत्वम् । अनुकूलत्वं संसर्गः । अनुकूलत्वञ्च फलनिष्ठजन्यतानिरूपितजनकत्वम् । 'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' इति निरुक्तोक्तेर्व्यापारमुख्यविशेष्यको बोधः । तत्र तिङ्वाच्यं सङ्ख्याविशिष्टकारकम् । कालश्च व्यापारविशेषणम् ।

शाब्दबोधप्रकरणं निरूप्याथो सयुक्तिकम् ।
निरूप्यतेऽत्र धात्वर्थः फलव्यापारयोः स हि ॥
फलानुकूलो व्यापारो धात्वर्थो यत्नसंयुतः ।
फलं धात्वर्थजन्यं हि व्यापारस्तस्य साधकः ॥

**व्याख्या**—धात्वर्थनिरूपणप्रकरणमारभते—अथेत्यादिना । अथ शाब्दबोधनिरूपणानन्तरम् । सकलशब्दमूलभूतत्वात् सकलानां समस्तानां हि शब्दानां मूलभूतत्वात् प्रकृतित्वात् । धात्वर्थः धातुर्हि क्रियावाची भ्वादिस्तस्यार्थः । निरूप्यते सप्रपञ्चं निर्द्धार्यते । शाब्दिकेषु हि केचिद्विशेषेण शाकटायनादयः सर्वानपि शब्दान् व्युत्पन्नानत एव धातुजान् मन्यन्ते । उक्तं यथा निरुक्ते—'नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च' इति । ( १।१२ ) । अपरे तु न हि सर्वाणि नामान्याख्यातजानि मन्यन्ते नैरुक्ते गार्ग्योऽपि । भगवान् पाणिनिस्तु कानिचित्तु नामानि व्युत्पन्नानि अत एव धातुजानि मन्यते, कानिचित्त्वव्युत्पन्नान्यपि अत एव रूढानि । ग्रन्थकृत्तु शाकटायनमतमनुसृत्य धातून् हि सर्वेषामेव शब्दानां मूलं मन्यते । तदाह—तत्रेत्यादिना । तत्र धात्वर्थनिरूपणप्रसङ्गे । फलानुकूलः फलं व्यापारजन्यं विक्लित्यादि तस्यानुकूलः साधकः । यत्नसहितः यत्नः कृतिर्व्यापारस्य हेतुस्तेन सहितोऽन्वितः । व्यापारः तज्जन्यत्वे सति तज्जन्यजनकः पाचनादिरूपः । धात्वर्थः धातुसामान्यार्थः । अत्रोच्यते । धात्वर्थः क इत्यादाय सन्त्यनेकानि मतानि प्रवर्तितानि । तत्र मीमांसकमते फलमेव धात्वर्थः व्यापारस्त्वाख्यातप्रत्ययार्थः । शाब्दबोधे हि व्यापारस्य प्राधान्यमिति । प्राचीननैयायिकमते व्यापार एव धात्वर्थः, फलप्रतीतिस्तु द्वितीयान्तपदादेव शाब्दबोधे प्रथमान्तार्थो विशेष्यः । नव्यनैयायिकमते फलव्यापारौ धात्वर्थः, शाब्दबोधो हि प्रथमान्तार्थप्रधानः । प्राचीनवैयाकरणमते फलव्यापारौ धात्वर्थः, तयोः खण्डशः शक्तिः व्यापारमुख्यविशेष्यकः शाब्दबोधः । नव्यवैयाकरणमते फलविशिष्टव्यापारो धात्वर्थः

विशिष्टे शक्तिः। तेन कर्तृप्रत्ययसमभिव्याहारस्थले फलविशिष्टव्यापारविशेष्यकः शाब्दबोधः कर्मप्रत्ययस्थले तु व्यापारविशिष्टफलविशेष्यकः। तदेव व्याख्याति—फलत्वमित्यादिना। फलत्वं प्रवृत्तिमत्त्वम्। अन्येच्छानधीनेच्छाविषयत्वं वा। उक्तं यथा—'यस्यार्थस्य प्रसिद्धचर्थमारभ्यन्ते पचादयः। तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम्' ॥ इति। तेन यदुद्देशेन प्रवृत्तिर्भवति तत्फलं तत्त्वमित्याशयः। 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' ( पा० सू० १।३।७२ ) इति सूत्रे प्रवृत्त्युद्देश्यमुख्यफले एव फलपदस्य ग्रहणं दृश्यते। च तु। तद्धात्वर्थजन्यत्वे तस्य सम्बद्धस्य पचादेर्धातोः क्रियावाचिशब्दस्य योऽर्थस्तज्जन्यत्वं तदुत्पाद्यत्वं तस्मिन् तथाभूते। सति विद्यमाने। धातुवाच्यत्वे सतीत्याशयः। कर्तृप्रत्ययसमभिव्याहारे कर्तृवाचकप्रत्ययसामीप्ये। तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वं तस्य धातोरर्थे निष्ठा विद्यमानता यस्यास्तादृशी या विशेष्यता फलवत्ता तन्निरूपिता तज्ज्ञापिता या प्रकारता विशेषणता तद्वत्त्वं तद्युक्तत्वम्। अत्रेदमवधेयं यद्व्यापारजन्यत्वेन फलस्य विशेष्यत्वं तथापि कर्तृवाच्ये विशेषणत्वेन धात्वर्थरूपव्यापारं विशिनष्टि। यथा हि पचतेः फलं पाकः। तत्पाकरूपफलमेकतस्तु पचनक्रियातः व्यापाररूपधात्वर्थतो वोत्पद्यतेऽतस्तस्य विशेष्यत्वं स्पष्टमेव। अपरतश्च कर्तृवाच्यप्रयोगे पाकरूपफलोत्पादिका क्रिया पाकानुकूलव्यापारो वा फलरूपार्थस्य प्रतीतिर्भवति। तेनैतादृशस्थले तु व्यापारवैशिष्टचाधायकतया फलस्य विशेषणत्वमपि। फलस्य विशेष्यविशेषणत्वयोः प्रयोजनमाह—विभागेत्यादिना। विभागजन्यसंयोगादिरूपे—विभागः पृथग्भवनं तज्जन्यस्तदुत्पाद्यो यः संयोगः सम्पर्कस्तदादिरूपे। पतत्यादिधात्वर्थे पत्धातोरर्थे। विभागसंयोगयोः पृथग्भवनसम्पर्कयोः। फलत्ववारणाय फलत्वातिव्याप्तिनिवारणाय। उभयं फलस्य विशेष्यविशेषणभावकथनम्। अत्रेदमुक्तं भवति यद्विभागजन्यसंयोगः पतधात्वर्थः। 'वृक्षात्पत्रं भूमौ पतति' इत्यत्र यदि फलस्य धात्वर्थजन्यत्वेन विशेष्यत्वं नोक्तं स्यात्तथा तस्य व्यापाररूपधात्वर्थस्य विशेषणत्वमेव स्वीकृतं स्यात्तदा विभागे हि फलत्वस्यातिव्याप्तिः स्यात्पतधात्वर्थसंयोगवैशिष्टचाधायकत्वेन। अत्र विभागजन्यसंयोग एव व्यापारस्तेन विभागस्य संयोगरूपव्यापारविशेषणत्वमस्त्येव। फलस्य धात्वर्थजन्यत्वे तु न विभागे फलत्वातिव्याप्तिः, तस्य धात्वर्थरूपसंयोगजन्यत्वाभावात् तज्जनकत्वाच्च। एवमेव फलस्य धात्वर्थजन्यत्वमात्रस्वीकारे संयोगेऽतिव्याप्तिः स्यात्तस्य विभागव्यापाररूपधात्वर्थजन्यत्वात्। फलस्य धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वस्वीकारे तु फलस्य व्यापारविशेषणत्वेन न संयोगे फलत्वातिव्याप्तिः। न हि संयोगो विभागरूपधात्वर्थं विशिनष्टि प्रत्युत विभाग एव तस्य विशेषणम्। विभागजन्य एव संयोगो न तु संयोगजन्यो विभाग इति। एवं विभागसंयोगयोरतिव्याप्तिवारणाय फलं हि विशेष्यविशेषणत्वोभयत्वेन परिभाषितमिति। कर्मप्रत्ययसमभिव्याहारे कर्मवाच्यप्रयोगविषये। तु तद्व्यतिरिक्तम्। फलस्य। विशेष्यता व्यापारजन्यत्वेन केवलं विशेष्यत्वमेव। कर्मवाच्ये तु आख्यातस्य कर्म एव विषयो न तु कर्ता। तेन कर्मणः प्राधान्येन फलस्य विशेष्यत्वमेव न तु विशेषणत्वमित्युक्तम्। वस्तुतस्तु कर्तृवाच्ये फलस्य विशेषणत्वं व्यापारस्य

विशेष्यत्वं तद्विपरीतं कर्मवाच्ये फलस्य विशेष्यत्वं व्यापारस्य विशेषणत्वमिति समुदितोऽर्थः। फलस्य जन्यत्वञ्चारोपितमनारोपितञ्च। तेन 'ईश्वरस्तिष्ठति' 'पत्ये शेते' इत्यादौ वास्तविकजन्यत्वाभावेऽपि आरोपितजन्यत्वमादाय लक्षणसमन्वय इति ज्योत्स्नायां स्पष्टम्। व्यापारं विवृणोति --**व्यापारत्वमित्यादिना**। **व्यापारत्वं** व्यापारभावः। **च** तु। **धात्वर्थफलजनकत्वे** धात्वर्थभूतं यत्फलं पाकादि तस्य जनकत्वे उत्पादकत्वे। **सति**। **धातुवाच्यत्वं** धातोर्वाच्यार्थत्वम्। तेन फलानुकूलप्रयास एव व्यापारो धात्वर्थः फलजनकः। फलस्यापि धातुवाच्यत्वात्तत्रातिव्याप्तिवारणाय धात्वर्थफलजनकत्वमिति। करणादौ तेषामपि व्यापारस्य फलजनकत्वेन अतिव्याप्तिवारणाय धातुवाच्यत्वमिति। 'काष्ठं पचति' इत्यादौ तु काष्ठस्यापि धात्वर्थविवक्षया व्यापारत्वमेव। धात्वर्थपरिभाषागतं फलानुकूलम् इत्यत्रत्यमनुकूलपदं व्याचष्टे—**अनुकूलत्वमित्यनेन**। **अनुकूलत्वम्** अनुकूलभावो हि। **संसर्गः** फलव्यापारयोर्जन्यजनकतारूपः सम्बन्ध एव। फलस्य जन्यत्वं व्यापारस्य जनकत्वमिति तयोर्जन्यजनकतारूपपारस्परिकसम्बन्धत्वमेवात्रापेक्षितम्। **अनुकूलत्वं** व्यापारस्य फलानुकूलत्वम्। **च** तु। फले पाकादौ निष्ठा विद्यमानता यस्यास्तादृशी या जन्यता जन्यभावस्तन्निरूपितं तदपेक्षितं जनकत्वमुत्पादकत्वमेवेति।

वस्तुतः फलं व्यापारश्चोभावेव धात्वर्थः। तयोरेतावदेवान्तरं यद् व्यापारो हि फलजनकधात्वर्थः, फलं तु व्यापारजन्यधात्वर्थः। तेनैवोच्यते—धात्वर्थफलजनकत्वे सति धातुवाच्यत्वं व्यापारत्वम्; धात्वर्थव्यापारजन्यत्वे सति धातुवाच्यत्वं फलत्वमिति। अत्र प्राचीनवैयाकरणमतमाह—**भावेत्यादिना**। **आख्यातं** तिङन्तपदम्। **भावप्रधानं** भावः भाव्यतेऽनेनेति भावो व्यापारः भावयत्येनमिति भावः फलं सः प्रधानं मुख्यो यस्मिन्निति तद् भावप्रधानम्। कर्तृवाच्ये व्यापारस्य कर्मवाच्ये फलस्य प्राधान्यमित्याशयः। **नामानि** प्रातिपदिकानि। **सत्त्वप्रधानानि** सत्त्वं द्रव्यं प्रधानं येषु तानि। भवन्ति। **इति** इत्थम्। **निरुक्तोक्तेः** निरुक्तवचनात्। **व्यापारमुख्यविशेष्यकः** व्यापारप्रधानः। **बोधः** शाब्दबोधो धातोरिति शेषः। तत्र धातोर्व्यापारप्रधानशाब्दबोधे। **तिङ्वाच्यं** तिङः तिङ्प्रत्ययस्य वाच्यमर्थः। **सङ्ख्याविशिष्टकारकं** सङ्ख्यया वचनेन विशिष्टं परिचाय्यं कारकं कर्ता कर्म च **कालः** भूतवर्तमानभविष्यद्रूपः। **व्यापारविशेषणं** व्यापारस्य धात्वर्थभूतव्यापारस्य विशेषणं विशेषताधायकमिति। कर्तृकर्मसङ्ख्याकालास्तिङर्थः। तत्राधाराधेयसम्बन्धेन कर्ता व्यापारस्य विशेषणं भवति यतो हि व्यापारः कर्तर्याश्रितो भवति। तथैव फलस्य कर्माश्रितत्वात्कर्म हि फलस्य विशेषणम्। सङ्ख्या हि कर्तृवाच्ये कर्तुः कर्मवाच्ये तु कर्मणो विशेषणं भवति। इत्थं हि आख्याताद्यः शाब्दबोधो भवति स व्यापारप्रधानो भवति यस्य सङ्ख्याविशिष्टकारकं विशेषणं भवति। कर्तृवाच्ये तु कर्ता कर्मवाच्ये तु कर्म व्यापारस्य विशेषणे भवतः। एतदतिरिक्तं कालोऽपि व्यापारस्य विशेषणं भवति। कर्तृवाच्ये भाववाच्ये च क्रियाप्राधान्यं कर्मवाच्ये तु फलस्यैव प्राधान्यमिति तु प्रतिपादितमेव। कर्तृवाच्ये फलमपि व्यापारस्य विशेषणं भवति। प्रकरणस्यास्यायमाशयः—सर्वेऽपि शब्दाः धातुजा अत एव व्युत्पन्ना इति सर्वेषामेवार्थानां धात्वर्थमूलत्वम्। धात्वर्थो हि फलानु-

कूलो यत्नसहितो व्यापारः। फलव्यापारयोर्जन्यजनकभावसम्वन्धः। कर्तृवाच्ये फलस्य विशेष्यत्वं विशेषणत्वञ्च कर्मवाच्ये तु विशेष्यत्वमेव। भाववाच्ये तु व्यापारस्य प्राधान्यमिति।

**हिन्दी**—अब सभी शब्दों का मूल होने से धातु के अर्थ का निरूपण किया जाता है। फल के अनुकूल यत्न सहित व्यापार धातु का अर्थ होता है। वह व्यापार ही धातु का अर्थ है, जो कि फल की उत्पत्ति के अनुकूल हो और यत्नपूर्वक किया गया हो। फल वह है, जो उस धातु के अर्थ से उत्पन्न हो और कर्तृवाचक प्रत्यय की उपस्थिति में उस धात्वर्थ में विद्यमान जो विशेष्यता है, उसके द्वारा निरूपित प्रकारता अर्थात् विशेषणता से युक्त हो अर्थात् फल के व्यापारजन्य होने के कारण विशेष्य होते हुए भी कर्तृवाच्य में विशेषण बनकर धात्वर्थ रूप व्यापार को विशेषित करता है। विभाग से उत्पन्न संयोग आदि रूप 'पत्' धातु के अर्थ में विभाग एवं संयोग में फलत्व की अतिव्याप्ति के निवारण के लिए उक्त दोनों ( धातु से वाच्य होना और उस धातु के अर्थ में विद्यमान विशेष्यता के द्वारा निरूपित प्रकारता से युक्त होना ) का ग्रहण किया गया है। यदि फल को धात्वर्थजन्य न माना जाय तो विभाग के भी संयोग का विशेषण होने के कारण उसमें भी फलत्व होने लगेगा। यदि फल को केवल धात्वर्थजन्य मात्र कहा जाय, तो संयोग में भी फलत्व आ जायेगा। कर्मप्रत्यय की जगह में तो फल की विशेष्यता ही मानी जाती है।

धातु के अर्थ फल का उत्पादक होते हुए धातु का वाच्य अर्थ व्यापार है। 'अनुकूल होना' का अर्थ है फल एवं व्यापार का जन्यजनकभावसम्बन्ध। फल में विद्यमान जो जन्यता या उत्पाद्यता है, उसके द्वारा निरूपित उत्पादकता ही अनुकूलता है।

'आख्यात वा तिङन्त शब्द भावप्रधान अर्थात् व्यापारप्रधान होते हैं'—निरुक्त के इस कथन के अनुसार धातु से व्यापारप्रधान शाब्दबोध होता है। उसमें तिङ् प्रत्यय के वाच्य अर्थ सङ्ख्याविशिष्ट कारक अर्थात् कर्ता, कर्मकारक और काल भी व्यापार के विशेषण होते हैं।

कहने का आशय यह है कि फलानुकूल व्यापार ही धातु का अर्थ है। अतः फल एवं व्यापार दोनों ही विशेष्य होते हैं। उसमें भी वाच्य के अनुसार व्यापार ही मुख्य विशेष्य है।

( ५७ ) परे तु फलव्यापारयोर्धातोः पृथक् शक्तावुद्देश्यविधेयभावेनान्वयापत्तिस्तयोः स्यात्। पृथगुपस्थितयोस्तथाऽन्वयस्यौत्सर्गिकत्वात्। किञ्चैकपदे व्युत्पत्तिद्वयकल्पनेऽतिगौरवम्। तथा हि फलविशेषणकव्यापारबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम्। व्यापारविशेषणकफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणमिति कार्यकारणभावद्वयकल्पनम्। धातोरर्थद्वये शक्तिद्वयकल्पनं धातोर्बोधजनकत्वसम्बन्धद्वयकल्पनं चातिगौरवम्। तस्मात् फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले च धातूनां

शक्तिः। कर्तृकर्मार्थकतत्तत्प्रत्ययसमभिव्याहारश्च तत्तद्बोधे नियामक इत्याहुः।

**व्याख्या**—अत्र प्राञ्चस्तु फलव्यापारयोः पृथक् शक्तिरन्यथा कर्तृप्रत्ययसमभिव्याहारे फलावच्छिन्नव्यापारबोधेन कर्मप्रत्ययसमभिव्याहारे व्यापारावच्छिन्नफलबोधेन च विशिष्टशक्तिकल्पने गुरुशक्यतावच्छेदकशक्तिद्वयकल्पनापत्तिः स्यात्। एवञ्च विशिष्टशक्तिस्वीकारे फलस्य पदार्थैकदेशत्वाद् द्वितीयादिपदार्थान्तरान्वयोऽपि न स्यात्। न चैकधातूपस्थितिविषययोः फलव्यापारयोरन्वयाभाव इति वाच्यं, व्युत्पत्तिवैचित्र्यादेकपदोपस्थाप्ययोरपि परस्परमबाधोऽन्वय इति यदाहुस्तन्निरासाय प्रकरणमारभते—**परे** इत्यादिना। **परे** अन्ये। **तु** तद्व्यतिरिक्तम्। **फलव्यापारयोः** फलव्यापारयोर्धातुरिति द्विवचनान्तनिर्देशेन फले व्यापारे च पृथक् शक्तिर्न तु फलविशिष्टव्यापारे इति मतमनुसृत्य तयोः। **धातोः** क्रियावाचिनः। **पृथक् शक्तौ** पृथक्पृथगेव शक्तिस्वीकारे। **तयोः** फलव्यापारयोः। **उद्देश्यविधेयभावेन** तात्पर्यनिर्णायकवशात् कदाचित्फलोद्देश्यकव्यापारविधेयकत्वेन कदाचित्तु व्यापारोद्देश्यकफलविधेयकत्वेन। **अन्वयापत्तिः** सम्बन्धप्राप्तिः। **स्यात्**। **पृथगुपस्थितयोः** विभिन्नोपस्थितीयविशेष्ययोः। **तथा** तेन प्रकारेण। **अन्वयस्य** सम्बन्धस्य। **औत्सर्गिकत्वात्** स्वाभाविकत्वात् 'नीलो घट' इत्यादौ तथा प्रसिद्धत्वात्। 'नीलो घटः' इत्यत्र कदाचिन्नीलस्योद्देश्यत्वं घटस्य विधेयत्वं कदाचित्तु तद्विपरीतमपीति। **किञ्च** तथा च। **एकपदे** समानपदे। **व्युत्पत्तिद्वयकल्पने** कार्यकारणभावद्वयविचारणायाम्। **अतिगौरवम्** अत्यधिकप्रयासः। तदेवाह—**तथाहीत्यादिना**। **तथाहि** यथा। **फलविशेषणकव्यापारबोधे**—यत्र फलस्य विशेषणत्वं व्यापारस्य विशेष्यत्वं तादृशं यच्छाब्दबोधरूपकार्यं तत्र। **कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः** कर्तृप्रत्ययसमभिव्याहृतः कर्तृवाचकप्रत्ययसम्बद्धो यो धातुस्तज्जन्यस्तदभिसंसूच्यो योऽर्थस्तस्योपस्थितिः। **कारणं** हेतुः। **इत्येकः** कार्यकारणभावः। **व्यापारविशेषणकफलबोधे** यत्र हि व्यापारो विशेषणं फलं तु विशेष्यं तादृशे शाब्दबोधरूपकार्ये। **कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः** कर्मवाचकप्रत्ययसम्बद्धधातुव्यक्तार्थभावः। **कारणम्**। **इत्यपरः** कार्यकारणभावः। **इति** इत्थम्। **कार्यकारणभावद्वयकल्पनं** फलस्य विशेषणत्वेन व्यापारविशेष्यककार्यकारणभावः व्यापारस्य विशेषणत्वेन फलविशेष्यककार्यकारणभाव इत्येतद् द्विविधकार्यकारणभावद्वयकल्पनम्। **धातोः**। **अर्थद्वये** फलव्यापाररूप उभय एवार्थे। **शक्तिद्वयकल्पनं** भिन्नभिन्नवाचकताकलनम्। **धातोः**। **बोधजनकत्वसम्बन्धद्वयकल्पनं** विशिष्टार्थनिरूपितवाच्यवाचकभावात्मकसम्बन्धद्वयपरिकल्पनम्। **च** इति समुच्चये। **अतिगौरवम्** अत्यन्तश्रमः। स्वाभीष्टं मतमाह—**तस्मादित्यादिना**। **तस्मात्** यतो धातोः फलव्यापाररूपार्थद्वयस्वीकारे तयोरुद्देश्यविधेयभावेनान्वयापत्तेः कार्यकारणभावद्वयकल्पनेऽर्थद्वये शक्तिद्वयकल्पने बोधजनकत्वसम्बन्धद्वयकल्पने चातिगौरवं ततः। **फलावच्छिन्ने** अनुकूलतासम्बन्धेन फलविशिष्टे। **व्यापारे**। **व्यापारावच्छिन्ने** जन्यतासम्बन्धेन व्यापारविशिष्टे। **फले**। **च**। **धातूनां** क्रियावाचिशब्दानाम्। **शक्तिरिति**। फलोत्पादकव्यापारे व्यापारजन्यफले च धातोः शक्तिरित्याशयः। **कर्तृकर्मार्थकतत्त-**

**त्प्रत्ययसमभिव्याहारः** कर्तृवाचककर्मवाचकतत्तत्प्रत्ययसम्बद्धता। **तत्तद्बोधे** तस्य तस्य फलविशिष्टव्यापारस्य व्यापारविशिष्टफलस्य च बोधे ज्ञाने। **नियामकः** व्यवस्थापकः। कर्तृवाच्यप्रयोगे फलानुकूलव्यापारस्य कर्मवाच्ये तु व्यापारजन्यफलस्य प्रतीतिरिति तत्तत्प्रत्ययसमभिव्याहारः ज्ञापक इत्याशयः। **इति**। **आहुः** कथयन्ति।

अयमाशयः—यच्च फलव्यापारयोरुभयोरेव धातूनां वाचकतेति कथ्यते पूर्वाचार्यैस्तन्न समीचीनम्। धातोः फलव्यापारयोः पृथक्पृथगर्थत्वस्वीकारे क्वचित्तु व्यापारस्योद्देश्यत्वं फलस्य विधेयत्वं क्वचित्तु फलस्योद्देश्यत्वं व्यापारस्य विधेयत्वमपि स्वीकर्तव्यमेव; यतो हि उभयोः पृथगर्थत्वस्वीकारे उद्देश्यविधेयभावस्थितिः सर्वथा स्वाभाविक्येव। यथा हि नीलो घट इत्यादौ क्वचिन्नीलस्योद्देश्यत्वं घटस्य विधेयत्वं क्वचित्तद्विपरीतत्वमपि सम्भवति। तेन हि तयोरुद्देश्यविधेयभावेनान्वयापत्तिरपरिहार्या भवति।

अपरञ्च तथाऽर्थद्वयस्वीकारे कार्यकारणभावरूपव्युत्पत्तिद्वयकल्पनमप्यावश्यकं भवति। यदा हि व्यापारस्य मुख्यत्वेन फलस्य गौणत्वेन बोधस्तादृशबोधरूपकार्यं प्रति धातुसम्बद्धकर्तृवाचकप्रत्ययानां कारणत्वम्। यदा तु फलस्य प्राधान्येन व्यापारस्य गौणत्वेन बोधस्तादृशबोधरूपकार्यं प्रति धातुसम्बद्धकर्मवाचकप्रत्ययानां कारणत्वम्। एतादृशकल्पने सुमहद् गौरवं भवति। तथैव धातोर्भिन्न-भिन्नवाचकत्वशक्तिद्वयकल्पनमप्यावश्यकं भवति, तस्यार्थद्वयस्वीकारे यद्धि अतिगौरवम्। ये हि खलु बोधजनकतामेव शक्तित्वेन स्वीकुर्वन्ति तत्कृतेऽपि धातोरर्थद्वयस्वीकारे बोधजनकत्वसम्बन्धद्वयकल्पनमपि गौरवायैव। तेन हि फलविशिष्टव्यापारे व्यापारविशिष्टफले च धातोः शक्तिः स्वीकर्तव्या। कुत्र कस्य स्थितिरिति तु कर्तृकर्मवाच्यतत्तत्प्रत्ययसमभिव्याहारो ज्ञापयतीति नात्र पूर्वोक्तदोषावसरः। कर्तृवाच्ये हि फलानुकूलव्यापारस्य कर्मवाच्यप्रयोगे तु व्यापारानुकूलफलस्य प्रतीतिरिति सर्वं सिद्धं भवति।

**हिन्दी**—दूसरे तो फल एवं व्यापार में धातु की पृथक् शक्ति के स्वीकार करने पर उन दोनों का उद्देश्य एवं विधेय भाव से अन्वय की प्राप्ति होगी। पृथक् रूप में उपस्थित दो में वैसा अन्वय होना स्वाभाविक होता है। और यह भी है कि एक पद में दो-दो व्युत्पत्तियों की कल्पना में अतिगौरव होता है। जैसे कि फल विशेषण और व्यापार विशेष्य में होने वाले शाब्दबोध रूप कार्य के प्रति कर्तृवाचक प्रत्ययों से सम्बन्धित धातुजन्य अर्थ की उपस्थिति ही कारण होती हैं और जहाँ व्यापार विशेषण एवं फल विशेष्य वाला शाब्दबोध होता है, उस कार्य के प्रति कर्मवाचक प्रत्ययों से सम्बन्धित धातुजन्य अर्थ की उपस्थिति कारण होती है। इस तरह दो कार्यकारण भावों की कल्पना करनी पड़ेगी। धातु के दो अर्थों में दो-दो शक्तियों की कल्पना करना एवं धातु के दो-दो बोधजनकत्व सम्बन्धों की कल्पना भी अत्यन्त गौरव है। इस कारण फल से विशिष्ट व्यापार में और व्यापार से अवच्छिन्न फल में ही धातु की शक्ति होती है। कर्तृवाचक एवं कर्मवाचक उन-उन प्रत्ययों की समीपता ही उन-उन अर्थों के ज्ञान में नियामक अर्थात् ज्ञापक होती है।

कहने का आशय यह है कि जैसे कि कुछ लोग फल और व्यापार दोनों में ही

धातु की शक्ति मानते हैं, वह कई बातों से स्वीकार्य नहीं है। पहली बात यह है कि फल और व्यापार दोनों में ही धातु की शक्ति मानने पर उन दोनों में उद्देश्य एवं विधेय भाव से अन्वय करना पड़ेगा, जो कि दो पृथक् अर्थों में स्वाभाविक रूप से हुआ करता है। वैसा होने पर कभी तो फल को उद्देश्य एवं व्यापार को विधेय, कभी तो व्यापार को उद्देश्य एवं फल को विधेय मानना पड़ेगा। जैसे कि 'नीलो घटः' में प्रसिद्ध है। इसके अतिरिक्त एक ही पद में दो-दो व्युत्पत्तियों की कल्पना करना गौरव पड़ता है। फल को विशेषण वना कर व्यापार को विशेष्य मानकर जो अर्थबोध होता है, उस कार्य के प्रति कर्तृवाचक प्रत्यय के सामीप्य में धातुजन्य उपस्थिति कारण होता है, यह हुआ एक कार्यकारणभाव। व्यापारविशेषणक फल के वोधरूप कार्य के प्रति कर्मवाचक प्रत्ययों के द्वारा व्यक्त धातुजन्य उपस्थिति ही कारण होता है। यह हुआ दूसरा कार्यकारणभाव।

तीसरी आपत्ति तो यह है कि धातु के दो अर्थ मानने पर दो पृथक् शक्तियों की भी कल्पना करनी पड़ेगी। जो धातु की वोधजनकता को ही धातु की शक्ति मानते हैं, उनके लिए भी दो बोधजनकत्व सम्वन्धों की कल्पना करनी पड़ेगी। यह भी अत्यन्त गौरव है। इस कारण फलविशिष्ट व्यापार एवं व्यापारविशिष्ट फल में धातु की शक्ति माननी पड़ेगी। कर्तृवाचक एवं कर्मवाचक उन-उन प्रत्ययों का समभिव्याहार उन-उन अर्थों के ज्ञान का नियामक होता है। अतः इसमें कोई दोष नहीं है।

(५८) यत्तु मीमांसकाः 'फलं धात्वर्थो व्यापारः प्रत्ययार्थः' इति वदन्ति तन्न; 'लः कर्मणि' इत्यादिसूत्रविरोधापत्तेः। न हि तेन व्यापारस्य प्रत्ययार्थता लभ्यते। किञ्च 'पचति' 'पक्ष्यति' 'पक्ववान्' इत्यादौ फूत्कारादिप्रतीतये तत्रानेकप्रत्ययानां शक्तिकल्पनापेक्षया एकस्य धातोरेव शक्तिकल्पनोचिता। किञ्च फूत्कारादेः प्रत्ययार्थत्वे 'गच्छति' इत्यादौ तत्प्रतीतिवारणाय तद्बोधे 'पचि'-समभिव्याहारस्यापि कारणत्वकल्पनेऽतिगौरवम्।

**व्याख्या**—धात्वर्थविषये मीमांसकमतमनूद्य दूषयितुं प्रकरणमारभते—**यदि**त्यादिना। **यत्** यदेव। **तु** हि। **मीमांसकाः** मीमांसादर्शनानुयायिनाः विशेषेण मण्डनमिश्राद्याः। **फलं धात्वर्थः** फलरूपक्रियावाचकत्वं धातुत्वमिति। **व्यापारः प्रत्ययार्थः** तिङादिप्रत्ययवाच्य इति। **इति** इत्थम्। **वदन्ति** कथयन्ति। **तत्** तन्मतम्। **न** न समीचीनम्। तस्यासमीचीनत्वे हेतुमाह—लः इत्यादिना। **लः कर्मणि इत्यादिसूत्रविरोधापत्तेः** 'लः कर्मणि च भावे चाकर्मकेभ्यः' (पा० सू० ३।४।६९) इति यत्सूत्रं पाणिनीयं तस्याशयेन सह विरोधापत्तेः विरोधप्राप्तेः। **तेन** तत्सूत्रेण। **व्यापारस्य** धात्वर्थसम्मतव्यापारस्य। **प्रत्ययार्थता** तिङादिप्रत्ययार्थत्वम्। **लभ्यते** अवगम्यते। अयमाशयः—मीमांसका मण्डनमिश्रपुरःसरा हि फलस्यैव धात्वर्थत्वं व्यापारस्य तु तिङ्प्रत्ययार्थत्वं मन्यन्ते। यथा 'पाकः' इत्यत्र विक्लित्तिर्धात्वर्थः पाकानुकूलव्यापारस्तु घञ्प्रत्ययार्थ इति। एकस्मिन्नेव फले एकाधिकव्यापारसम्भवाद् व्यापारस्य धात्वर्थत्वे गौरवं स्याद्।

तेन हि 'गम्' धातोरर्थः अन्यस्थानसंयोगः पततेरर्थोऽधोवर्तिप्रदेशसंयोगः त्यजतेस्तु विभागोऽर्थः। एतादृशफलानामुत्पादको यो व्यापारः स प्रत्ययगम्य इति। परे तन्न मन्यन्ते। तथामते 'लः कर्मणि' इत्यादिसूत्राशयेन विरोध आपद्यते। सूत्रमिदं गङ्गा-प्रवाहन्यायेन 'कर्तरि कृत्' (६।४।६७) इति सूत्रमनुवृत्त्य प्रवर्तते। तेन 'लः कर्मणि कर्तरि अकर्मकेभ्यो भावे च भवती'ति तस्याशयः। एतेन कर्मार्थे कर्त्रर्थे च लकारो भवति तथैव लादेशानां तिवादीनामपि स एवार्थो न तु व्यापारः। **किञ्च** यतो हि। **पचति** पाकं करोति। **पक्ष्यति** पाकं करिष्यति। **पक्ववान्** पाकं कृतवान्। **इत्यादौ**। **फूत्कारादिप्रतीतये** अग्निप्रज्वालननिमित्तकफूत्कारादिज्ञानाय। **तत्र** तथाविधपदेषु। **अनेकप्रत्ययानां** त्रयाणां हि पृथक्पृथक्प्रत्ययानाम्। **शक्तिकल्पनापेक्षया** व्यापारबोधक-शक्तेर्या कल्पना तदपेक्षया। **एकस्य धातोः** पचतेः। **एव**। **शक्तिकल्पना** शक्तिस्वीकारः। **उचिता** लाघवाद् योग्या। भवतीति। **किञ्च** यतो हि। **फूत्कारादेः** व्यापाररूप-फूत्कारस्य। **प्रत्ययार्थत्वे** तिबादिप्रत्ययबोध्यत्वे। **'गच्छति' इत्यादौ**। **तत्प्रतीति-वारणाय** तस्य 'पचति' इत्यत्र तिप्प्रत्ययस्य फूत्कारार्थस्य या प्रतीतिरुपस्थितिस्त-द्वारणाय तन्निराशाय। **तद्बोधे** तस्य फूत्कारादिव्यापारस्य बोधे ज्ञाने। **पचिसमभि-व्याहारस्य** 'पच्'धातुसामीप्यस्य। **अपि च**। **कारणत्वकल्पने** हेतुत्वाकलने। **अति-गौरवं** नितान्तमेव गौरवाय भवतीति। **अयम्भावः**—व्यापारस्य प्रत्ययार्थत्वस्वीकारे 'पचति' इत्यत्र फूत्कारस्तिबर्थः स्यात्। तथैव 'गच्छति' इत्यत्रापि तिपस्तथैवार्थः फूत्कारार्थं आपद्यते किन्तु वस्तुतस्तु न तथा। तेन पचतेस्तिप्प्रत्ययस्य यः फूत्काररूप-व्यापारार्थो न स एव गच्छतेस्तिप इति तैरामन्तव्यमेव। इत्थं हि प्रत्येकं प्रत्ययानामर्थ-कल्पने महद्गौरवं भवेत्। व्यापारस्य धात्वर्थस्वीकारे तु धातुपार्थक्येन पचतेः यस्य व्यापारस्य भवति प्रतीतिः गच्छतेस्तद्भिन्नव्यापारस्यैव प्रतीतिरिति न गौरवास्पदम्।

प्रकरणस्यास्यायमाशयः—कैश्चिन्मीमांसकैर्यदुच्यते फलं धात्वर्थो व्यापारस्तु प्रत्ययार्थं इति तन्न स्वीकार्यम्। तथास्वीकारे हि कतिपये दोषा आपद्यन्ते तत्र। तत्र प्रथमं तु मतमिदं 'लः कर्मणि' इति पाणिनीयसूत्राशयविरुद्धम्। तदनुसारेण लकाराः कर्त्रर्थे कर्मार्थे च भवन्ति तदादेशानां तिबादीनामपि तैरेवार्थैर्भाव्यमेव न तु भिन्नैः। प्रत्यये शक्तिकल्पने एकधातुसम्बद्धविभिन्नप्रत्ययसंयोजनेन सम्पन्नेष्वनेकेषु प्रयोगेषु तत्तत्प्रत्ययानामेकस्यैव व्यापारस्य वाचकत्वं स्वीकर्तव्यम्। पचति, पक्ष्यति, पक्ववान् इत्यादौ विद्यमानानां त्रयाणां पृथक्प्रत्ययानां व्यापारबोधकशक्तेः कल्पनमावश्यकं यद्धि भवेन्महदेव गौरवम्। तदपेक्षया धातावेव शक्तिकल्पनं लाघवाय भवति। यदि हि पचति इत्यत्र व्यापाररूपफूत्कारादिः प्रत्ययार्थो भवति तदा गच्छति इत्यत्रापि प्रत्ययस्य स एवार्थः स्यात्किन्तु न तथा। यदि च पचति इत्यत्र तिप्रत्ययस्य फूत्कारादिव्यापार-वाचकत्वं नान्यत्रेति कथ्यते तदा प्रत्ययेषु प्रत्येकं शक्तिकल्पनाऽऽवश्यकी भवति यद्धि भवेदत्यन्तगौरवम्। वस्तुतस्तु धातुपार्थक्येन पचति इत्यत्र गच्छति इत्यत्र च प्रत्ययस्य प्रतीतिः पृथगेव। तेन धातावेव शक्तिकल्पनमुचितं न तु प्रत्ययेषु।

**हिन्दी**—जो कि मीमांसक 'फल धातु का अर्थ है और व्यापार प्रत्यय का अर्थ है'

ऐसा कहते हैं वह ठीक नहीं है। वैसा मानने पर 'लः कर्मणि च भावे चाकर्मकेभ्यः' (पा० सू० ३।४।६९) इत्यादि सूत्र से विरोध हो जाता है। उस सूत्र का आशय यह नहीं कि व्यापार में प्रत्ययों का अर्थ मिल जाय और यह भी कि पचति, पक्ष्यति, पक्ववान् इत्यादि में फूत्कार आदि की प्रतीति के लिए वहाँ अनेक प्रत्ययों की शक्ति की कल्पना की अपेक्षा एक ही धातु में शक्ति की कल्पना उचित है। और यह भी कि फूत्कार आदि को प्रत्ययों का अर्थ मानने पर गच्छति इत्यादि में उसकी प्रतीति के निवारण के लिए उसके ज्ञान में 'पच्' धातु के समभिव्याहार के भी कारणत्व की कल्पना में अत्यन्त गौरव होगा।

कहने का आशय यह है कि व्यापार को प्रत्यय का अर्थ नहीं माना जा सकता। वैसा मानने पर कई आपत्तियाँ आ पड़ेंगी। पहली आपत्ति तो यह है कि वैसा मानना 'लः कर्मणि' (३।४।६९) आदि सूत्र के विरुद्ध हो जायेगा। उस सूत्र में स्पष्ट कहा है कि लकार कर्ता और कर्म अर्थ में होते हैं और उनके स्थान में होने वाले (लादेश) तिबादि के भी वही अर्थ होने चाहिए, न कि व्यापार अर्थ। दूसरी आपत्ति तो यह है कि व्यापार को प्रत्यय का अर्थ मानने पर पचति (वर्तमान), पक्ष्यति (भविष्यत्) और पक्ववान् (भूत) आदि प्रयोगों में फूत्कार रूप व्यापार की प्रतीति के लिए अनेक प्रत्ययों की शक्ति की कल्पना करनी पड़ेगी। उससे हलका तो यह होगा कि एक ही धातु में शक्ति की कल्पना की जाय और यह भी कि यदि फूत्कार आदि व्यापार को प्रत्यय का अर्थ माना जाय तो गच्छति में भी उसी व्यापार की प्रतीति होने लगेगी, जिसको रोकने के लिए फूत्कार के ज्ञान में पच् धातु की समीपता के कारणत्व की कल्पना में भी अत्यन्त गौरव होगा।

(५९) किञ्च सकर्मकाकर्मकव्यवहारोच्छेदापत्तिः। न च प्रत्ययार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वं तन्मते तत्समानाधिकरणफलवाचकत्वमकर्मकत्वञ्च प्रत्ययार्थव्यापाराश्रयत्वं कर्तृत्वं घटं भावयतीत्यादौ णिजर्थव्यापारव्यधिकरणफलाश्रयत्वेन घटादेः कर्मत्वमिति वाच्यमभिधानानभिधानव्यवस्थोच्छेदापत्तेः। न च व्यापारेणाश्रयाक्षेपात्कर्तुरभिधानं कर्माख्याते च प्रधानेन फलेन स्वाश्रयाक्षेपात्कर्मणोऽभिधानमिति वाच्यम्। जातिशक्तिवादे जात्याक्षिप्तव्यक्तेरिवाश्रयप्राधान्यापत्तौ 'क्रियाप्रधानमाख्यातम्' इति यास्कवचोविरोधापत्तेः। किञ्च फलस्य धातूनां तदाश्रयस्य चाक्षेपेण लाभसम्भवेन 'लः कर्मणि' इत्यस्य वैयर्थ्यापत्तेः।

**व्याख्या**—व्यापारस्य प्रत्ययार्थत्वे सम्भाव्यापत्तिं पुनर्दर्शयति—**किञ्चेत्यादिना**। **किञ्च**। नैतावन्मात्रमपि तु। व्यापारस्य प्रत्ययार्थत्वस्वीकारे **सकर्मकाकर्मकव्यवहारोच्छेदापत्तिः** धातोः यः सकर्मकाकर्मकव्यवहारः स्वार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वं स्वार्थव्यापारसमानाधिकरणफलवाचकत्वमकर्मकत्वमिति यो व्यवहारस्तस्य उच्छेदापत्तिः विनाशसम्भवः। **न च** नैव च। **तन्मते** तेषां मीमांसकानां मते। **प्रत्य-**

यार्थव्यापारव्यधिकरणफलवाचकत्वं प्रत्ययानां तिबादीनामर्थो वाच्यो यो व्यापारस्तस्य व्यधिकरणसमानाश्रयं यत्फलं तस्य वाचकत्वं ज्ञापकत्वम् । सकर्मकत्वम् । तत्समानाधिकरणफलवाचकत्वं तस्य प्रत्ययार्थरूपव्यापारस्य समानाधिकरणं तुल्याश्रयं यत्फलं तस्य वाचकत्वम् । अकर्मकत्वम् । प्रत्ययार्थव्यापाराश्रयत्वम् प्रत्ययार्थो यो व्यापारस्तस्याश्रयत्वमाधारभावः । कर्तृत्वं कर्तृभावः । 'घटं भावयति' इत्यादौ । णिजर्थव्यापारव्यधिकरणफलाश्रयत्वं प्रत्ययभूतो यो णिच् तस्यार्थो यो व्यापारस्तस्य व्यधिकरणमसमानाश्रयं यत्फलं तस्याश्रयत्वेन । घटादेः । कर्मत्वं णिच्प्रत्ययार्थभूतो यः प्रेरणाव्यापारस्तद्धिकरणभिन्नाधिकरणोत्पत्तिरूपफलस्याश्रयत्वात् कर्मत्वं सम्पद्यते, कर्तुरीप्सिततमत्वादिति । इति इत्थम् । वाच्यं कथनीयम् । अयमाशयः—व्यापारस्य प्रत्ययार्थत्वे यथा मीमांसका वदन्ति धातोः सकर्मकत्वाकर्मकत्वव्यवहारस्य विच्छेद एव स्यात् । सकर्मकेभ्यः कर्तरि कर्मणि अकर्मकेभ्यः कर्तरि भावे च लकारा भवन्तीति व्यवहारोऽपि न स्यात् । यतो हि सकर्मकत्वाकर्मकत्वव्यवस्था व्यापारस्य धात्वर्थं स्वीकृत्यैव सुसङ्गता भवति, नान्यथा । धातोः स्वार्थभूतो यो व्यापारस्तस्यासमानाधिकरणं यत्फलं तस्य वाचकत्वे सकर्मकत्वं तत्समानाधिकरणफलवाचकत्वमकर्मकत्वमिति । अत्र मीमांसकाः कथयितुं शक्नुवन्ति यद् व्यवस्थेयं सुसङ्गता भवति यदा स्वार्थशब्दस्थाने प्रत्ययार्थशब्दः पठ्यते, येन प्रत्ययार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वं-तत्समानाधिकरणफलवाचकत्वमकर्मकत्वमिति । एवमेव प्रत्ययार्थव्यापाराश्रयत्वं कर्तृत्वं तद्व्यधिकरणफलाश्रयत्वं कर्मत्वमित्यपि व्यवस्था सङ्गच्छत एवेति । अत्रोच्येत यद्युच्यते प्रत्ययार्थव्यापाराश्रयत्वं कर्तृत्वमिति तर्हि घटं भावयति इत्यादौ घटस्य कर्मत्वं न स्यात् । नात्र घटः णिच्प्रत्ययार्थभूतप्रेरणाव्यापारस्याश्रयस्तेन तस्य नैव कर्तृत्वमपि । अणौ यः कर्ता तस्यैव णौ कर्मसंज्ञा भवति 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' ( पा० सू० १।४।५२ ) इति सूत्रेण । यच्चोच्यते नैव भवेदत्र घटस्य 'गतिबुद्धि' इत्यादिना कर्मसंज्ञा, किन्तु तस्य तु णिच्प्रत्ययार्थभूतप्रेरणाव्यापारव्यधिकरणोत्पत्तिरूपफलस्याश्रयत्वं तु घटेऽस्त्येव, तेन तस्य 'कर्तुरीप्सिततमं कर्म' इति कर्मसंज्ञा भवत्येवेति, तन्न । अभिधानानभिधानव्यवस्थोच्छेदापत्तेः—अभिधानं तिङादिभिः अनभिधानं तैरनुक्तत्वं तयोर्या व्यवस्था प्रबन्धः 'अनभिहिते' ( पा० सू० २।३।१ ) इत्यधिकृत्य कर्मणि द्वितीया कर्तरि तृतीया अभिहिते तु उभयत्र प्रथमेति तस्या उच्छेदापत्तेः नैरर्थ्यक्यप्राप्तेः । अयम्भावः—कर्तृकर्मणोरुक्तत्वं तदैव सम्भवति यदा तिङादिप्रत्ययानां कर्तृकर्मार्थकत्वम् । तेषां व्यापारार्थत्वं तु न कदापि तयोरभिहितत्वं, प्रत्ययानां व्यापारार्थकत्वात् । न च । व्यापारेण प्रत्ययार्थभूतव्यापारेण । आश्रयाक्षेपात् आश्रयस्य कर्तुराक्षेपात् संसूचनात् । कर्तुः व्यापाराश्रयस्य कर्तुः । अभिधानं कथनं भवतीति । अयमाशयः—कर्तृवाच्ये यः प्रधानो व्यापारः स स्वाश्रयं कर्तारं तथैवाक्षिपति यथा हि जात्या स्वसिद्धये स्वाश्रयभूतव्यक्तिराक्षिप्यते । तेन यत्र प्रत्ययार्थव्यापारः स्वाश्रयमाक्षिपति तत्र कर्तुरभिधानमिति । तथैव कर्माख्याते कर्मवाच्ये । प्रधानेन मुख्यभूतेन । फलेन धात्वर्थभूतफलेन । स्वाश्रयाक्षेपात्—स्वाश्रयस्य कर्मण आक्षेपादसाक्षात्

संसूचनात् **कर्मणः अभिधानं** कथनम्। इति भवत्येव कर्तृकर्मणोरभिधानानभिधान-व्यवस्थेति। **वाच्यं** कथनीयम्। न हि व्यापारेण कर्तुः फलेन कर्मण आक्षेपात्कर्तृकर्मणो-रभिधानं कर्तृवाच्ये कर्तुः कर्मवाच्ये कर्मण आक्षेपाभावस्थले त्वनभिधानमिति व्यवस्था सुसङ्गतेति वाच्यमिति। **जातिशक्तित्ववादे** ये हि खलु जातावेव शक्तिं मन्यन्ते व्यक्तौ तत्स्वीकारे आनन्त्यव्यभिचारदोषमाकलय्य तेषां मते। **जात्याक्षिप्तव्यक्तेः** जात्या स्वसिद्धये आक्षिप्ताऽसाक्षादपि सूचिता या व्यक्तिस्तस्याः। **इव** यथा। **आश्रयप्राधान्या-पत्तौ**—आश्रयस्य व्यापारादेः प्राधान्यं मुख्यत्वं तस्यापत्तौ सिद्धौ। **क्रियाप्रधानं** क्रिया धात्वर्थः प्रधानं मुख्यं यस्य तत् तादृशम्। यथोक्तम्—

'धात्वर्थो भावना सैवोत्पादना सैव च क्रिया।
असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते॥
यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते॥' इति।

भावनैव धात्वर्थः सैव साध्यत्वेनाभिधीयमाना क्रिया। तेन क्रियैव धात्वर्थः तत्प्रधानं भवत्याख्यातमिति। अत्राख्यातं तिङन्तमाख्यायन्ते क्रियागुणभावेन वर्तमानान्यनेनेति विग्रहः। **आख्यातं** तिङन्तपदं भवतीति। इति। **यास्कवचोविरोधापत्तेः** यास्कस्य निरुक्त-कारस्य तदाख्यस्य वचः कथनं तस्य विरोधो वैपरीत्यं तस्यापत्तेरिति। अयम्भावः—न हि व्यापाराक्षेपेण कर्तुरभिधानं सम्भवति, न च फलाक्षेपेन कर्मणः। जात्या स्वसिद्धये व्यक्तिस्त्वाक्षिप्यते, किन्तु तत्र जात्यपेक्षया व्यक्तेः प्राधान्यं भवति, तत्रैव कार्यसम्भवात्। तथैवात्रापि व्यापारापेक्षया कर्तुः प्राधान्यमापतेत्तथा मते यद्धि क्रियाप्रधानमाख्यात-मिति निरुक्तवचनविपरीतं भवतीति। **किञ्च** तथा च। **धातुना फलस्य** फलेन तदाश्रय-स्य तस्य फलस्याश्रयस्याधारभूतस्य **कर्मणः**। **आक्षेपेण** लाभसम्भवेन प्राप्तिसम्भवात्। **'लः कर्मणि'** इत्यस्य कर्तरि कर्मणि च लकारविधायकसूत्रस्य। **वैयर्थ्यापत्तेः** व्यर्थत्व-सिद्धेः।

अयम्भावः—फलस्य स्वाश्रयाक्षेपेण कर्मणो लाभे कर्तरि कर्मणि लकारविधान-स्यानावश्यकतया तद्विधायकं 'लः कर्मणि···' इत्यादिपाणिनीयसूत्रमपि निरर्थकं स्यात्, तदभिप्रायस्य व्यापारफलद्वारैव सिद्धेरिति।

प्रकरणस्यास्यायमाशयः—फलं धात्वर्थो व्यापारस्तिङर्थ इति मते धातोः सकर्मक-कर्मकव्यवहारस्यापि विच्छेद आपद्यते। यतो हि सकर्मकत्वं स्वार्थव्यापारव्यधिकरण-फलवाचकत्वमकर्मकत्वं तु स्वार्थव्यापारसमानाधिकरणफलवाचकत्वं, यथा क्रमशः 'जलं पिबति, स वर्धते' इत्यादौ। तेन व्यापारस्य धात्वर्थत्वे हि सा व्यवस्था सम्भवति, न तु तस्य प्रत्ययार्थत्वेन। यदुच्यते—प्रत्ययार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वं तत्समानाधिकरणफलवाचकत्वं, तेन प्रत्ययार्थव्यापाराश्रयत्वं कर्तृत्वं फलाश्रयत्वं कर्मत्व-मिति सर्वं सुस्थमिति तन्न; तथामते कर्तृकर्मणोरभिधानानभिधानव्यवस्थाविच्छेदात्। प्रत्ययानां कर्तृकर्मार्थकत्वे हि कर्तुः कर्मणो वा तिङादिनामभिधानं सम्भवति। शास्त्रे हि अनभिहिते कर्तरि तृतीयाविभक्तेरभिहिते तु प्रथमायाः कर्मण्यनभिहिते द्वितीयाया-

स्तदभिधाने तु प्रथमाया व्यवस्था कृताऽऽस्ति। प्रत्ययस्य व्यापारार्थत्वे तु तथाभिधानमेव न सम्भवतीति। न च यथा जात्या व्यक्तिराक्षिप्यते तथा व्यापारेण कर्तुः फलेन कर्मण आक्षेपादभिधानानभिधानसिद्धिरिति वाच्यं, तथा सति यथा जात्या व्यक्तेराक्षेपे जात्यपेक्षया व्यक्तेः प्राधान्यं भवति, तत्रैव कार्यसम्भवात्तथैवात्र व्यापारापेक्षया कर्तुः फलापेक्षया कर्मण एव प्राधान्यमापतति, यद्धि क्रियाप्रधानमाख्यातमिति निरुक्तकारवचनेन सह विरुध्येत, व्यापारस्य गौणत्वात्। क्रिया धात्वर्थस्तत्प्रधानं तिङन्तमित्यस्याशयः। तथा च धातुना फलस्य फलेन तदाश्रयभूतकर्मणो लाभात्कर्तरि कर्मणि च लकारविधानं व्यर्थं स्यात्तद्विधायकसूत्रस्य 'लः कर्मणि' इति सूत्रस्य नैरर्थक्यमपि।

**हिन्दी**—इसके अतिरिक्त व्यापार को प्रत्यय का अर्थ मानने पर यह भी एक और आपत्ति होगी कि उससे सकर्मक एवं अकर्मक के व्यवहार का उन्मूलन हो जाता है। न तो यह कहना ठीक है कि उनके मत में प्रत्यय के अर्थभूत के अधिकरण से भिन्न अधिकरण वाले फल का वाचक होना सकर्मक होना है और उससे समान अधिकरण वाले फल का वाचक होना अकर्मक होना है। प्रत्यय के अर्थभूत व्यापार का आश्रय कर्ता है। 'घटं भावयति' इत्यादि में 'णिच्'प्रत्यय का अर्थभूत जो व्यापार है, उसके अधिकरण से भिन्न अधिकरण वाले फल के आश्रयत्व से घट आदि में कर्मत्व होता है इत्यादि। ऐसा मानने पर कर्ता एवं कर्म का अभिहित होना और न होना रूप जो व्यवस्था है, उसका विच्छेद हो जाएगा। न तो यह कहना उचित है कि व्यापार के द्वारा उसके आश्रय कर्ता का अभिधान होता है, कर्मवाच्य में प्रधानभूत फल के द्वारा अपने आश्रयभूत कर्म का आक्षेप होने से कर्म का भी अभिधान होता है। जातिशक्तिवाद में जाति के द्वारा आक्षिप्त व्यक्ति की तरह आश्रयभूत कर्ता एवं कर्म का प्राधान्य हो जाने पर निरुक्तकार का आख्यात अर्थात् तिङन्त क्रिया अर्थात् धात्वर्थ प्रधान वाला होता है, इस कथन का विरोध हो जाता है। इसके अतिरिक्त धातु से फल का और उसके आश्रय का भी आक्षेप से लाभ हो जाने के कारण 'लः कर्मणि…' इस सूत्र की व्यर्थता हो जाती है।

कहने का आशय यह है कि व्यापार को प्रत्यय का अर्थ मानने पर धातु का सकर्मकत्व एवं अकर्मकत्व का व्यवहार ही विच्छिन्न हो जाएगा। यह कहना भी ठीक नहीं है कि 'प्रत्ययार्थरूप व्यापार के अधिकरण से भिन्न अधिकरण वाले फल का वाचक सकर्मक होता है और उसके समान अधिकरण वाले फल का वाचक होना अकर्मक होना है। प्रत्यय के अर्थ रूप जो व्यापार है, उसका आश्रय होना ही कर्तृत्व है, उसके अधिकरण से भिन्न अधिकरण वाले फल का आश्रय होना ही कर्मत्व है' इत्यादि। ऐसा मानने से कर्ता एवं कर्म का अभिधान एवं अनभिधान की व्यवस्था उखड़ जायेगी। अभिधान तिङादि से होता है और उसका अर्थ तो व्यापार है, तो फिर उससे कर्ता का अभिधान कैसे होगा? न तो यह कहना ही उचित है कि व्यापार के द्वारा आश्रय के आक्षेप से कर्ता का अभिधान होता है और फल के आश्रय के आक्षेप से कर्म का अभिधान होता है; जैसा कि जाति के द्वारा व्यक्ति का आक्षेप होता है।

वैसा मानने पर यह आपत्ति होगी कि जैसे जातिशक्तिवाद में जाति के द्वारा आक्षिप्त व्यक्ति की जाति की अपेक्षा प्रधानता होती है, उसी तरह यहाँ आश्रयभूत कर्ता का प्राधान्य होने के कारण 'आख्यात क्रियाप्रधान होता है' ऐसे यास्क के वचन से इसका विरोध हो जायेगा। इतना ही नहीं, धातु के द्वारा फल का और फल के द्वारा उसके आश्रय का आक्षेप से ही लाभ हो जाने पर कर्ता एवं कर्म अर्थ में लकार का विधान करने वाला 'लः कर्मणि…' इत्यादि सूत्र भी व्यर्थ हो जायेगा। अतः इस हेतु से भी व्यापार प्रत्यय का अर्थ नहीं हो सकता।

(६०) कर्तृकर्मकृतां कारकभावनोभयवाचकत्वे गौरवाच्च। किञ्च भावविहितघञादीनां व्यापारावाचकत्वे ग्रामो गमनवानित्याद्यापत्तिः। तद्वाचकत्वेऽपि तेनाऽपि स्वाश्रयाक्षेपे कर्तुरभिधानापत्तिः।

किञ्च 'गुरुः शिष्याभ्यां पाचयति' इत्यादौ 'हेतुमति च' इति सूत्रबलात् प्रयोजकव्यापारस्य णिजर्थत्वे स्थिते प्रयोज्यव्यापारः आख्यातार्थो वाच्यः।

एवञ्च सङ्ख्यायाः स्ववाचकाख्यातार्थव्यापारेऽन्वयित्येवान्वयात् शिष्याभ्यामिति द्विवचनानापत्तिः। पाचयति इत्येकवचनानापत्तिश्च। गुरोरनभिधानेन तत्र प्रथमाया अनापत्तेश्च। शिष्यशब्दात्तदापत्तेश्चेत्यन्यत्र विस्तरः।

**व्याख्या**—व्यापारस्य प्रत्ययार्थत्वे सम्भाव्यापत्तिं पुनर्दर्शयति—कर्त्रित्यादिना। **कर्तृकर्मकृताम्**—कर्तरि कर्त्रर्थे कर्मणि कर्मार्थे च 'कर्तरि कृत्' इत्याद्यनुवृत्य ये खलु कृतः कृत्प्रत्ययाः ण्वुलादयस्तेषाम्। **कारकभावनोभयवाचकत्वे** कारकं कर्तृकर्मादि भावना धात्वर्थः क्रिया तदुभयस्य वाचकत्वे बोधकत्वे। **गौरवात् च** अपि न व्यापारः प्रत्ययार्थ इति कथनं नोपयुक्तम्। अयमाशयः—कृत्प्रत्ययाः ण्वुलादयो हि कर्तृकर्मवाचकाः। यदि हि तेषामेव व्यापारोऽर्थोऽपि गृह्येत तदा तेषामुभयार्थकत्वे गौरवमापतेत्। तेषां केवलमाश्रयवाचकत्वे लाघवमिति न तेषां व्यापारार्थं उपयुक्त इति। तदेव विशदयति—**किञ्चे**त्यादिना। **किञ्च** यतः। **भावविहितघञादीनां** 'भावे' इत्यनुवृत्य भावार्थे विहिता ये घञादयः कृतस्तेषाम्। **व्यापारावाचकत्वे** तेषां कारकभावनोभयवाचकत्वजन्यगौरवनिराकरणाय तेषां कारकार्थमेवादाय व्यापारस्य अवाचकत्वेऽबोधकत्वे। तेषां मते धातोर्व्यापारार्थत्वाभावेन **'ग्रामो गमनवान्' इत्याद्यापत्तिः**। अयम्भावः—यदि हि कृतां यत्कारकभावनोभयवाचकत्वे गौरवं भवति तन्निरासाय तेषां कारकार्थं एव गृह्यते, तदा भावविहितानां ल्युडादीनां व्यापारार्थकत्वाभावाद् गमनमित्यादि व्यापाररूपमर्थं नैव बोधयितुं प्रभवन्ति, किन्तु तस्यार्थः संयोगमात्रमेव भवेत्, येन ग्रामः संयोगवानित्यादेरिव 'ग्रामो गमनवान्' इत्यादि प्रयोगोऽपि सम्भवेत्, यद्धि न कदाप्यभीष्टम्। यदि हि तेषां केवलं व्यापारार्थं एव गृह्यते तदा। **तद्वाचकत्वे** तस्य व्यापारस्य वाचकत्वे। **तेन** व्यापारेण। **अपि च**। **स्वाश्रयाक्षेपे** स्वाश्रयस्य कर्तुराक्षेपे। **कर्तुः अभिधानं** कथनं भवेत्। अयम्भावः—व्यापारस्य प्रत्ययार्थत्वास्वीकारेऽपि गमनमित्यादौ व्यापाराभावेन संयोगमात्रार्थकत्वात्तस्य 'ग्रामो गमनवान्' इति प्रयोगापत्तिः स्यात्, यदि वा व्यापारार्थे

एव तस्य मतेऽपि व्यापारेण स्वाश्रयाक्षेपात्कर्तुरभिधानं स्याद्यद्धि नैवाभीष्टमिति । इत्थं हि व्यापारस्य कृत्प्रत्ययार्थत्वस्वीकारे तदस्वीकारे चोभयत्र दोषापत्तिः । व्यापारस्य धात्वर्थत्वे तु न तदवसरः । तदेवोपपादयति—किञ्चेत्यादिना । किञ्च नैतावन्मात्रमपितु । 'गुरुः शिष्याभ्यां पाचयति' इत्यादौ इत्यादिवाक्ये । 'हेतुमति च' इति सूत्रवलात् हेतुमति हेतोः प्रयोजकस्य यो व्यापारः क्रियासुप्रेषणमानुकूल्यं वा स हेतुमान् तत्र । च धातोर्णिच् स्यात् 'चुरादिभ्यो णिच्' ( पा० सू० ३।१।२६ ) इत्यनुवृत्य णिचम् । इति यत्सूत्रं तद्वलात् तदाशयेन । प्रयोजकव्यापारस्य प्रेरकव्यापारस्य । णिजर्थत्वे णिच्प्रत्ययार्थत्वे । स्थिते सम्मते सति । प्रयोज्यव्यापारः प्रयोज्यसम्बद्धव्यापारः । आख्यातार्थः तिङर्थः । वाच्यं मन्तव्यः । एवञ्च एवमेव शिष्यव्यापारस्याख्यातवाच्यत्वेन । सङ्ख्यायाः । स्ववाचकाख्यातार्थव्यापारे—स्ववाचकं यदाख्यातं तदर्थो यो व्यापारस्तस्मिन् । अन्वयिनि अन्वयिभूते । एव । अन्वयात् सम्बन्धात् । 'शिष्याभ्याम्' इति इत्यत्र । द्विवचनानापत्तिः—द्विवचनाप्राप्तिः । 'पाचयति' इति इत्यत्र । एकवचनानापत्तिः एकवचनाप्राप्तिः । अयमाशयः—'गुरुः शिष्याभ्यां पाचयति' इत्यत्र प्रयोजकस्य गुरोर्व्यापारस्तु णिजर्थः, यतो हि प्रयोजकव्यापाराभिधानायैव 'हेतुमति चे'ति णिच्प्रत्ययविधानं कृतमस्ति । मीमांसकमते प्रयोज्यव्यापारस्तु तिङर्थ एव । यदाऽऽख्यातं प्रयोज्यव्यापारमभिदधाति तत्सम्बद्धप्रयोज्यभूतशिष्यपदे तिङर्थभूतसङ्ख्याया अप्यन्वयः कार्यो येन द्वयोरेव समानवचनस्य प्रयोग आवश्यकः, सङ्ख्याया अपि तिङर्थत्वात् । तेन पाचयति इत्यस्य सम्बन्धेन शिष्यपदेऽप्येकवचनापत्तिरथवा शिष्याभ्यामित्यस्य सम्बन्धेन पाचयति इत्येतस्य द्विवचनापत्तिः । एवमेव । गुरोः प्रयोजकभूतस्य गुरोः । अनभिधानेन गुरोर्णिच्प्रत्ययार्थत्वादाख्यातस्य प्रयोज्यव्यापारार्थत्वात् तिङाद्यभिधानाभावेन । तत्र गुरुपदे । प्रथमायाः प्रथमाविभक्तेः । अनापत्तेः अप्राप्तेः कर्तर्यनभिहिते तु तृतीयाविधानात् तत्र तृतीयाप्राप्तेरिति । शिष्यशब्दात् तस्याभिहितत्वेन । तदापत्तेः तस्याः प्रथमायाः आपत्तेः प्राप्तेः । च । इति एतद्विषये । अन्यत्र ग्रन्थान्तरे लघुमञ्जूषादौ । विस्तरः प्रपञ्चः ।

प्रकरणस्यास्यायमाशयः—प्रत्ययानां व्यापारार्थत्वे तु कर्त्रर्थे कर्मार्थे च ये खलु कृत्प्रत्यया विहितास्तेषामुभयार्थकत्वं स्यात् व्यापारा( भावना )र्थकत्वं कर्तृकर्मार्थकत्वञ्च सत्यपि तेषां भावनार्थकत्वे कारकार्थकत्वमपि तेषां न निषेद्धुं शक्यते, कर्तृकर्मार्थयोरेव तेषां विधानात् । तेषामुभयवाचकत्वे सुमहद् गौरवं स्यात् । धातोर्व्यापारार्थकत्वे तु कृतां कर्तृकर्ममात्रार्थकत्वे लाघवम् ।

अपरञ्च ये हि कृतो भावे विधीयन्ते तेषां घञादीनां यदि हि व्यापारवाचकत्वं स्वीक्रियते तदा व्यापारेण स्वाश्रयभूतस्य कर्तुराक्षेपेण तस्याभिधानापत्तिर्येन तत्र प्रथमा प्राप्तिर्यदि वा तेषां तत्परिहाराय व्यापारावाचकत्वं परिह्रियते तदाऽपि धातोर्व्यापारार्थकत्वास्वीकारेण व्यापारार्थकत्वाभावात्तत्र 'ग्रामो गमनवान्' इत्यादेः संयोगमात्रार्थकत्वेन ग्रामः संयोगवानित्यादिवत्प्रयोगः स्याद्यद्धचनिष्टमेव ।

एवमेव व्यापारस्य प्रत्ययार्थकत्वे 'गुरुः शिष्याभ्यां पाचयति' इत्यत्र प्रयोजक-

व्यापारभूतगुरोर्णिच्प्रत्ययार्थत्वेन प्रयोज्यव्यापार एवाख्यातवाच्यः स्याद्येन सङ्ख्याया-स्तिङर्थत्वेन स्ववाचकं यदाख्यातं तद्व्यापारभूतशिष्यपदेन तस्या अन्वयात् पाचयति इत्येकवचनयोगेन शिष्याभ्यामित्यत्र न द्विवचनप्राप्तिरथवा शिष्याभ्यामिति योगेन पाचयति इत्यत्र द्विवचनप्राप्तिः स्यात् गुरोरपि णिच्प्रत्ययार्थत्वेन तिङभिधानाभावात्तत्र तृतीया विभक्तिः स्यात्, अनभिहिते इत्यनुवृत्य 'कर्तृकरणयोस्तृतीया' इति विधानात्। एवमेव शिष्यपदस्य तिङभिधानत्वेन तत्र प्रथमा स्यादिति न व्यापारस्य प्रत्ययार्थकत्व-मभीष्टमिति।

हिन्दी—कर्ता एवं कर्म अर्थ में जो कृत् प्रत्यय होते हैं उनको कारक ( कर्ता एवं कर्म ) तथा भावना ( व्यापार ) दोनों अर्थों के वाचक मानने पर बहुत गौरव होता है।

इसके अतिरिक्त भाव में विधान किये गये जो घञ् आदि प्रत्यय हैं, उनको यदि व्यापार का अवाचक माना जाय ( क्योंकि व्यापार को धातु का अर्थ तो माना नहीं जा रहा है ), तो 'गमनम्' आदि में व्यापार के अभाव में केवल संयोगमात्र अर्थ के रहने पर 'ग्रामो गमनवान्' इत्यादि का प्रयोग होने लगेगा और यदि उनको व्यापार का वाचक मानने पर उस व्यापार के द्वारा अपने आश्रय के आक्षेप के कारण कर्ता का अभिधान हो जायेगा और उसमें प्रथमा विभक्ति होगी।

इतना ही नहीं, व्यापार को प्रत्ययार्थ मानने पर 'गुरुः शिष्याभ्यां पाचयति' में 'हेतुमति च' ( हेतु अर्थात् प्रयोजक का जो व्यापार (काम में लगाना) है, वह हेतुमान् है; उसमें धातु से णिच् होता है। ) सूत्र के बल से प्रयोजक व्यापार ( गुरु ) का णिच् का अर्थ होने पर प्रयोज्य व्यापार ( शिष्य ) आख्यात का अर्थ होगा। ऐसा होने पर सङ्ख्या ( वचन ) के अन्वयी अपने वाचक बने आख्यात के अर्थभूत व्यापार के साथ उसका अन्वय हो जाने के कारण या तो 'शिष्याभ्याम्' में द्विवचन नहीं होगा या तो 'पाचयति' में एकवचन नहीं होगा। गुरु का भी आख्यात के द्वारा अभिहित न होने के कारण उसमें तृतीया विभक्ति होगी और तिङ् के द्वारा अभिहित होने के कारण शिष्य पद में प्रथमा विभक्ति होगी इत्यादि का ग्रन्थान्तर में विस्तार से निरूपण है।

क्रिया का लक्षण ( ६१ ) सर्वकारकान्वयितावच्छेदकधर्मवती क्रिया। तदाह—

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते॥ १॥
गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते॥ २॥

इति भूवादिसूत्रस्थभाष्यार्थप्रतिपादकहरिग्रन्थात्। क्रमजन्मनां व्यापाराणां समूहं प्रति गुणभूतैरवयवैर्युक्तः सङ्कलनात्मिकया एकत्वबुद्ध्या प्रकल्पिता-भेदरूपः समूहः क्रियेति व्यवह्रियते इति द्वितीयकारिकार्थः। अत्रावयवाश्रयं पौर्वापर्यं समुदायाश्रयमेकत्वम्। क्षणनश्वराणां व्यापाराणां वस्तुभूतसमुदाया-

भावात् बुद्धया इत्युक्तम्। पचति, पक्ष्यति इत्यादावसिद्धम्; अपाक्षीदित्यादौ सिद्धमसिद्धं वा साध्यत्वेनाभिधीयमानं क्रिया। आश्रितेति योगदर्शनं कृतमवयवानां क्रमेणोत्पत्त्या। अत एवाश्रितक्रमरूपा क्रियेति आदिमकारिकार्थः। एकैकावयवेऽपि समूहरूपारोपादधिश्रयणकालेऽपि पचतीति व्यवहारः। तदुक्तम्—

एकदेशे समूहे वा व्यापाराणां पचादयः।
स्वभावतः प्रवर्तन्ते तुल्यरूपं समाश्रिताः॥ इति।

**व्याख्या**—क्रियां विवृणोति—**सर्वै**त्यादिना। सर्वैः निखिलैः कारकैः कर्तृकर्मकरणसम्प्रदानापादानाधिकरणादिभिः सह या अन्वयिता सम्बद्धता तयाऽवच्छिन्नो निरूपितो यो धर्मस्तद्वती तद्विशिष्टा या सा **क्रिया** क्रियापदवाच्या भवतीति। कारकत्वञ्च क्रियाजनकत्वमेव करोति क्रियां निवर्तयति इति व्युत्पत्तेः। न च क्रियानिमित्तत्वं कारकत्वमिति तथा सति चैत्रस्य तण्डुलं पचतीत्यादौ तण्डुलादिसम्पादनद्वारा सम्बन्धिनोऽपि पाकादिक्रियानिमित्तत्वेन चैत्रादावतिव्याप्तेः। न च क्रियान्वयित्वमेव कारकत्वमिति वाच्यं तथामते 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छति' इत्यादौ पुत्रद्वारा ब्राह्मणस्यापि क्रियान्वयित्वेन तत्र कारकत्वापत्तेः। यत्र हि सर्वैरेव कारकैरन्वितत्वक्षमता विद्यते सा क्रियेति यदुच्यते तत्रान्वयितावच्छेदकधर्मस्तु व्यापारत्वं फलत्वञ्चेति। उक्तं द्रढयति—यावदित्यादिना। सिद्धं वा असिद्धं यावत् साध्यत्वेन अभिधीयते आश्रितक्रमरूपत्वात् सा क्रिया इति अभिधीयते इत्यन्वयः। **सिद्धम्** परिनिष्पन्नं भूतम्। **वा** इति पक्षान्तरे। **असिद्धम्** अनिष्पन्नं वर्तमानं भविष्यच्च प्रारब्धापरिसमाप्तत्वरूपं वर्तमानत्वमिति वर्तमानमपि असिद्धान्तर्गतमेवेति अम्बाकर्त्र्यां स्पष्टम्। तदेवं सिद्धमसिद्धं वा यावत् साध्यत्वेन क्रियान्तराकाङ्क्षानुत्पादकतावच्छेदकरूपेणासत्त्वभूतत्वेन। **अभिधीयते** कथ्यते। **तत्** तत्सर्वम्। **आश्रितक्रमरूपत्वात्** आश्रितं समालम्बितं क्रमरूपं समुदायरूपत्वेन प्रसिद्धत्वेऽपि कर्त्रा क्रमेण क्रियमाणरूपं यया सा तया तस्या भावस्तत्त्वं तस्मादिति। सर्वा अपि क्रिया लोके क्रियाणां समुदायरूपेण प्रसिद्धा। यथा आरोहणमवरोहणं गमनमागमनं पाकः इत्यादि। सत्तावर्तमानत्वादिरूपाऽपि क्रिया क्रमेणैव निष्पद्यत इति कर्त्रा क्रमेण क्रियमाणत्वात् क्रिया। **क्रिया इति अभिधीयते** निगद्यते इति।

यदा सिद्धोऽप्यसिद्धोऽपि भावो हि साध्यरूपेण कथ्यते तदा स क्रिया भवति। तस्य हि भावस्य साध्यत्वेन तत्रावान्तरव्यापाराणां भवति कश्चिद्विशेषः क्रमः। यथा पचतीत्यादौ अग्निप्रज्वालनादारभ्य पाकपर्यन्तः क्रमः उपस्थितो भवति। यत्र तु नास्ति पौर्वापर्यक्रमो; यथा अस्तीत्यादौ; तत्रापि अवयवभूतव्यापारक्रमारोपेण क्रियात्वमित्येतादृशस्थले क्रियाया रूढत्वमेवेति। तदेव द्रढयति—**गुणभूतै**रित्यादिना। क्रमजन्मनां गुणभूतैः अवयवैः बुद्धया प्रकल्पिताभेदः समूहः क्रिया इति व्यपदिश्यते इत्यन्वयः। **क्रमजन्मनां** क्रमेण एकमनु एकं कृत्वा पौर्वापर्येण जन्म उत्पत्तिर्येषां तेषां व्यापाराणाम्। **गुणभूतैः** सहयोगिभिः। **अवयवैः** अङ्गैः उपलक्षितः। **बुद्धया** सङ्कलनात्मिकया स्वगतैकत्वबुद्धया। **प्रकल्पिताभेदः** प्रकल्पितः समापादितः अभेद ऐक्यं यस्य तादृशवस्तुतः समूह-

समूहिनोरनतिरेकेणावयवबहुत्वे समूहे ऐक्याभावेऽपि समापादितैक्यः इति। समूहः समुदायः। क्रिया इति इत्थम्। व्यपदिश्यते कथ्यत इति। क्रमोत्पत्तीनामवान्तरव्यापाराणां पौर्वापर्येण वस्तुत ऐक्याभावेऽपि वक्ता हि स्वकीयया सङ्कलनात्मिकया बुद्धया तेष्वैक्यमारोप्यादितोऽवसानपर्यन्तं या खलु अवान्तरक्रिया भवन्ति तासामैक्यं मन्यते। एष एवावयवभूतावान्तरव्यापाराणामभेददृष्टचैकत्वं प्राप्तः समूह एव क्रियेत्युच्यते। एष बुद्धिप्रकल्पितसमूहो हि प्रधानो व्यापारस्तस्यावयवभूतावान्तरव्यापारा हि गुणभूता इति गौणा इत्युच्यन्ते। उक्तं यथा—

'क्रियासु बह्वीष्वभिसंश्रितो यः पूर्वापरीभूत इवैक एव।
क्रियाभिनिर्वृत्तिवशेन सिद्ध आख्यातशब्देन समर्थमाहुः॥' इति।

इति इत्थम्। भूवादिसूत्रस्थभाष्यार्थप्रतिपादकहरिग्रन्थात् भूवादिसूत्रस्थस्य 'भूवादयो धातवः' (पा० सू० १।३।१) इति यत्पाणिनीयं सूत्रं तत्सम्बद्धस्य भाष्यस्य पातञ्जलमहाभाष्यस्य अर्थप्रतिपादक आशयानुवादकः हरिग्रन्थः हरिप्रणीतवाक्यपदीयाख्यग्रन्थस्तस्मात्। कारिकां स्वयं व्याख्याति—क्रमेत्यादिना। क्रमजन्मनाम् एकमनु एकं कृत्वा सम्पाद्यानाम्। व्यापाराणां क्रियाणाम्। समूहं समुदायम्। प्रति। गुणभूतैः सहयोगिभिः। अवयवैः अङ्गैः। युक्त उपलक्षितः। सङ्कलनात्मिकया समुदायरूपया। एकत्वबुद्धया ऐक्यमत्या। प्रकल्पिताभेदरूपः समापादितैक्यस्वरूपः। समूहः समुदायः। क्रिया इति क्रिया इति पदेन। व्यवह्रियते संशब्द्यते। इति एतद्विधः। द्वितीयकारिकार्थः द्वितीयायाः कारिकायाः गुणभूतैरित्यस्याः अर्थ आशयः। अत्र प्रकरणेऽस्मिन्। पौर्वापर्यं क्रमसम्पाद्यत्वम्। अवयवाश्रयं गुणभूतावयवाधारम्। एकत्वं तेषामवयवानामैक्यम्। समुदायाश्रयं समूहावलम्बनम्। अत्र। क्षणनश्वराणां क्षणमात्रविद्यमानानाम्। व्यापाराणां क्रियाणाम्। वस्तुभूतसमुदायाभावात् वस्तुभूतस्य वस्तुत्वमाप्तस्य समुदायस्य समूहस्य अभावादसम्भवात्। बुद्धया इति कारिकायां बुद्धया प्रकल्पिताभेद इति। उक्तं कथितम्। निदर्शनमुखेन क्रियायाः सिद्धासिद्धत्वे व्याख्याति—पचतीत्यादिना। पचति इति वर्तमाने पक्ष्यति इति भविष्यति च यत्तत् असिद्धमनिष्पन्नम्। अपाक्षीत् इति भूते। इत्यादौ। सिद्धं निष्पन्नम्। तदसिद्धं सिद्धं वा। साध्यत्वेन क्रियान्तराकाङ्क्षानुत्पादकतावच्छेदकरूपेणासत्त्वभूतत्वेन। अभिधीयमानं कथ्यमानम्। क्रिया। आश्रितेति आश्रितक्रमरूपत्वात् इत्यत्र। योगदर्शनं क्रियायाः यौगिकताज्ञापनम्। कृतं विहितम्। अवयवानां व्यापाराङ्गानाम्। क्रमेण एकमनु एकं कृत्वा। उत्पत्त्या उद्भवात्। अतः यतो हि क्रियाशब्दः 'कृ' धातोः 'श' प्रत्यययोगेन निष्पन्नः तेन। एव हि। आश्रितक्रमरूपा अवलम्बितक्रमस्वरूपा। क्रिया। इति एतद्विधः। आदिमकारिकार्थः यावदित्यादिप्रथमकारिकाशयः। एकैकावयवे प्रत्येकव्यापारे। अपि हि। समूहरूपारोपात् समुदायरूपारोपणात्। अधिश्रयणकाले पात्रस्य चूल्लिकोपरि सन्निवेशसमये। अपि च। पचति इति। व्यवहारः प्रयोगः, न तु पार्थक्येनाधिश्रयणमात्रव्यवहारः। उक्तार्थं द्रढयति—तदित्यादिना। तत् प्रागुक्तम्। उक्तं कथितं वाक्यपदीये इति शेषः। हरिकारिकामुद्धरति—एकदेशे इत्यादिना। पचादयः व्यापाराणाम् एकदेशे समूहे च

तुल्यरूपं समाश्रिताः सन्तः स्वभावतः प्रवर्तन्ते इत्यन्वयः। पचादयः पचादिधातवः। व्यापाराणां क्रियाणाम्। एकदेशे एकभागेऽधिश्रयणादिरूपे। समूहे तत्समुदाये। च अपि। तुल्यरूपं समानप्रकृतिम्। समाश्रिताः समन्विताः। स्वभावतः प्रकृत्यैव। प्रवर्तन्ते प्रवृत्तिमायान्तीति। धातवो हि व्यापाराणामेकभागे समुदाये च समानानुपूर्वीकत्वेन प्रकृत्यैव प्रवर्तन्ते। यथा हि विक्लित्त्यनुकूलव्यापारे तथैव अधिश्रयणादावपि। इति। कर्तृप्रत्ययसमभिव्याहारे तत्प्रकारकव्यापाराणां समूहे कर्मकर्तृविषयेऽन्येषां साधनानां सौकर्यातिशयमूलिकायां कर्तृत्वविवक्षायाश्च व्यापाराणामेकदेशे तुल्यरूपसमन्विताः समानानुपूर्वीकाः अतोऽभिन्नाः पचादिधातवः स्वभावतः प्रवर्तन्ते। तत्र समूहे उदाहरणं 'देवदत्तः काष्ठैः स्थाल्यां तण्डुलं पचति' इति। एकदेशे उदाहरणं 'पच्यते ओदनः स्वयमेव' 'एधाः पचन्ति' 'स्थाली पचति' इत्यादि। इति अम्बाकर्त्र्यां स्पष्टम्। इति इत्युद्धरणसमाप्तौ। प्रकरणस्यास्यायमाशयः—तत्पदं क्रिया यत्र सर्वैः कारकैः सहान्वितत्वक्षमता भवति। कारकत्वं तु क्रियानिष्पादकत्वमेव। तेन यस्य कर्तृकर्मकरणसम्प्रदानाधिकरणापादानादिभिः सह सम्बन्धता तत्पदं क्रियते। 'भूवादयो धातवः' (पा० सू० १।३।१) इति सूत्रभाष्यमनूद्य हरिणाऽप्युक्तम्—'पचति' 'पक्ष्यति' इत्यादावनिष्पन्नम् 'अपाक्षीत्' इत्यादौ तु निष्पन्नं हि साध्यत्वेन क्रियान्तराकाङ्क्षानुत्पादकतावच्छेदकरूपेणासत्त्वभूतत्वेनाभिधीयते आश्रितक्रमरूपं तत्क्रिया। क्रमोत्पत्तीनां गौणैरवयवैरैक्यबुद्धचा कल्पिताभेदः समूह एव क्रियते। क्रमजन्मनां हि व्यापाराणामधिश्रयणादीनां समूहं प्रधानव्यापारं प्रति गौणत्वमाप्तैरवयवैर्युक्त एकत्वबुद्धचा परिकल्पिताभेदः समूहः क्रियेति कारिकाशयः। तत्र हि व्यापाराणां पौर्वापर्यमवयवाश्रयमेकत्वं तु समुदायाश्रयम्। व्यापारा हि क्षणनश्वरास्तेन तेषां नैव सम्भवति वास्तविकसमुदाय इति अभेदरूपसमूहस्य बुद्धिप्रकल्पितत्वमुक्तम्। अवयवानां क्रमेणोत्पत्त्या क्रियाया आश्रितक्रमरूपत्वम्। एकैकावयवे समूहरूपारोपेण व्यापारस्य प्रारम्भकालेऽपि क्रियाव्यवहारो यथा अधिश्रयणकालेऽपि पचतीति व्यवहारः। धातवो हि व्यापाराणामेकदेशे समूहेऽपि तुल्यरूपसमन्विताः सन्तः स्वभावत एव प्रवर्तन्त इति हरिणाऽप्युक्तमिति।

हिन्दी—सभी कारकों की अन्वयिता का जो अवच्छेदक धर्म है, उससे युक्त क्रिया होती है। जैसा कि सिद्ध वा असिद्ध जो साध्य के रूप में कहा जाता है, उसके क्रम में आश्रित होने के कारण वह क्रिया कही जाती है।

क्रम से उत्पन्न होने वाले व्यापारों का गुण (अप्रधान) बने अवयवों का बुद्धि के द्वारा प्रकल्पित जो अभेद है, वह समूह ही क्रिया कही जाती है। इस प्रकार 'भूवादयो धातवः' सूत्र के भाष्य के अर्थ का प्रतिपादक हरि के ग्रन्थ (वाक्यपदीय) से (इसकी पुष्टि होती है।) क्रम से ही उत्पन्न होने वाले व्यापारों का समूह के प्रति गुण (अप्रधान) भूत जो अवयव है, उनसे युक्त सङ्कलनात्मक (संयोजनपरक) एकत्व बुद्धि के द्वारा प्रकल्पित अभेदरूप समूह ही 'क्रिया' कहकर व्यवहृत होता है। यह दूसरी कारिका का आशय है। यहाँ पौर्वापर्य अर्थ व्यापारों का पहले और बाद में होने वाला क्रम अवयवों में आश्रित है और एकत्व उनके समुदाय में आश्रित है।

क्षण में ही नाश होने वाले व्यापारों का वस्तुभूत अर्थात् वास्तविक समुदाय का अभाव होने से 'बुद्धि के द्वारा प्रकल्पित अभेद' ऐसा कहा गया है। 'पचति' 'पक्ष्यति' इत्यादि ( वर्तमानकालिक एवं भविष्यत्कालिक क्रियाओं ) में असिद्ध अर्थात् अनिष्पन्न 'अपाक्षीत्' इत्यादि ( भूतकालिक क्रिया ) में सिद्ध अर्थात् सम्पन्न जो साध्य के रूप में कथित होता है, वह क्रिया है। क्रिया का आश्रितक्रमरूप जो कहा गया है, उससे क्रिया का यौगिकत्व दर्शाया गया है, अवयवों के क्रम से उत्पन्न होने के कारण। इसी कारण 'क्रम का आश्रयण करने वाली क्रिया है' ऐसा प्रथम कारिका का आश्रय है। एक-एक अवयव में भी समूह रूप के आरोप से अधिश्रयण ( वर्तन को चूल्हे पर रखना ) काल में भी 'पचति' ( पकाता है ) ऐसा व्यवहार होता है। जैसे कि कहा गया है—पच् आदि जो धातु हैं, वे व्यापारों के एक भाग में अथवा समूह में समान रूप से समन्वित होकर स्वभाव से ही प्रवर्तित होते हैं।

कहने का आशय यह है कि क्रिया वही है, जो सभी कारकों से अन्वित हो सके। क्रिया में पहले तो व्यापारों का एक सिलसिला होता है, फिर उन व्यापारों का जब बुद्धि से अभेदसमूह माना जाता है, तब वह समूह ही क्रिया होती है। जैसे 'पाक' में आग जलाना, चूल्हे पर वर्तन विठाना, उवलना, वस्तु का नरम होना आदि अनेक व्यापार होते हैं और वे क्रम से एक के वाद एक निष्पन्न होते हैं और उनके एक कल्पित अभेदसमूह को ही क्रिया माना जाता है—'पकाना'। ये व्यापार क्षणिक होते हैं, अतः इनका वास्तविक समूह तो वन नहीं पाता, इसीलिए ऐसा समूह बुद्धि के द्वारा प्रकल्पित माना जाता है। व्यापारों का पौर्वापर्य तो अवयवों में आश्रित होता है, किन्तु एकत्व समूह में आश्रित होता है। एक-एक व्यापार में भी समूह के आरोप से प्राथमिक व्यापार जैसे अधिश्रयण अर्थात् 'चूल्हे पर वर्तन बिठाना' के समय में भी 'पकाता है' का व्यवहार होता है। पच् आदि धातु व्यापारों के एकदेश अथवा समूह में भी समान रूप से अन्वित होकर प्रवर्तित होते हैं; ऐसा उनका स्वभाव है।

( ६२ ) अत्र केचित्—सिद्धत्वं क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकवैजात्यवत्त्वे सति कारकत्वेन क्रियान्वयित्वे सति कारकान्तरान्वयायोग्यत्वम्। साध्यत्वञ्च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं सत् कारकान्तरान्वययोग्यतावच्छेदकरूपवत्त्वम्। हिरुगाद्यव्ययानां साध्यत्वाभावेऽपि क्रियावाचकत्वव्यवहारस्तु क्रियामात्रविशेषणत्वात्। तत्र सिद्धत्वं 'पाकः' इत्यादौ घञादिवाच्यम्। साध्यत्वं तु सर्वत्रैव धातुप्रतिपाद्यम्। ननु 'हरिं नमेच्चेत् सुखं यायात्' इत्यत्र क्रियाया अपि क्रियान्तराकाङ्क्षत्वेन सिद्धत्वमस्तीति चेन्न; चेच्छब्दसमभिव्याहारेणाकाङ्क्षोत्थापनादित्याहुः।

व्याख्या—क्रियायाः सिद्धसाध्यत्वविषये मतान्तरमनुवदति—अत्रेत्यादिना। अत्र प्रकरणेऽस्मिन्। केचित् कतिपये विचक्षणाः सम्भवतः कौण्डभट्टप्रभृतयः। अस्य आहुरित्यनेन सम्बन्धः। सिद्धत्वं निष्पन्नत्वम्। क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकवैजा-

त्यवत्वे—क्रियान्तरस्य अपरस्या अपि क्रियायाः या आकाङ्क्षा तस्याः उत्थापकतायाः अवच्छेदकं परिचायकं यद् वैजात्यं साध्यक्रियापेक्षया वैलक्षण्यं तद्वत्त्वे तद्युक्तत्वे । सति । कारकत्वेन कर्तृकर्मादिकारकरूपेण । क्रियान्वयित्वे क्रियया सहान्वययुक्तत्वे । सति । कारकान्तरान्वयायोग्यत्वम् अन्येन कारकेण सह अन्वययोग्यताभावः । यस्य हि क्रियान्तराकाङ्क्षोत्पादिका शक्तिः यत्र च तस्य क्रियया सह कारकरूपेणान्वयः । न च कारकान्तरेणान्वयस्तस्य कारकत्वात्कारकस्य क्रियया सहैवान्वयसम्भवात् तदेव क्रियायाः सिद्धत्वम् । वस्तुतस्तु समाप्त्यैव क्रिया सिद्धा भवति । सिद्धेरनन्तरं क्रिया हि द्रव्यरूपं गृह्णाति, यत्र क्रियात्वमपि कारकत्वे परिणमते, येन तस्य क्रियान्तरेणान्वयः सम्भवति न तु कारकान्तरेण तस्यापि कारकत्वात् । उक्तं हि यथा—

'क्रियाभिनिर्वृत्तिवशोपजातः कृदन्तशब्दाभिहितो यदा स्यात् ।
सङ्ख्याविभक्तिव्ययलिङ्गयुक्तो भावस्तदा द्रव्यमिवोपलक्ष्यः ॥' इति ।

यथा हि पाक इति सिद्धो भावः, स च क्रियान्तरमपेक्षते, स्वयमपि अस्तीत्यादि क्रियया सह कारकत्वेनान्वेति च ।

साध्यत्वम् । च तु । क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं क्रियान्तरस्य या आकाङ्क्षा तस्या या अनुत्थापकताऽनपेक्षता तस्याः अवच्छेदकं बोधकम् । सत् । कारकान्तरान्वययोग्यतावच्छेदकरूपवत्त्वम्—कारकान्तरेण सह योऽन्वयस्तस्य योग्यतायाः समर्थतायाः यदवच्छेकरूपं परिचायकधर्मस्तद्वत्त्वं तेन युक्तत्वम् । सिद्धत्वविपरीतं हि साध्यत्वस्वरूपम् । साध्यस्य हि स्वयमेव क्रियात्वमतो न तस्य क्रियान्तराकाङ्क्षा, कारकं हि तामन्वेति ।

हिरुगाद्यव्ययानां हिरुग्वर्जनं तदादीनि यान्यव्ययानि तेषाम् । साध्यत्वाभावे साध्यधर्मशून्यत्वे । अपि च । क्रियावाचकत्वव्यवहारः क्रियायाः साध्यभावस्य यो वाचकत्वव्यवहारः बोधकत्वप्रयोगः । तु हि । क्रियामात्रविशेषणत्वात् क्रियामात्रस्य साध्यक्रियायाः विशेषणत्वाद् वैशिष्ट्याधायकत्वादेवेति । तत्र सिद्धत्वसाध्यत्वयोर्मध्ये । सिद्धत्वं सिद्धभावः । 'पाकः' इत्यादौ । घञादिवाच्यं घञादिप्रत्ययबोध्यम् । यथा पचनं पाकः= पच्+घञ् ( भावे ) । साध्यत्वं साध्यभावः । तु तद्व्यतिरिक्तम् । सर्वत्रैव सर्वस्मिन्नेव स्थाने । धातुप्रतिपाद्यं धातुना पचादिना प्रतिपाद्यं समासादनीयम् । भवतीति शेषः । सिद्धो हि भावः कृदन्तपदेन साध्यस्तु तिङन्तपदेनाभिधीयत इत्याशयः । उक्तञ्च यथा—

'साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सत्त्वभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥' इति ।

कृदभिहितभावस्तु द्रव्यवदेव भवतीति भाष्यवचनमपि । ननु इति प्रश्ने । 'हरिं नमेच्चेत् सुखं यायात्' । इत्यत्र इत्यादिवाक्ये । क्रियायाः साध्यभावरूपक्रियायाः । अपि च । क्रियान्तराकाङ्क्षत्वेन क्रियान्तरस्य स्वभिन्नक्रियायाः 'यायादि'त्यादेः आकाङ्क्षत्वेनापेक्षितत्वेन । सिद्धत्वं सिद्धरूपम् । अस्ति विद्यते । इति चेत् इति कथ्यते चेत् तत् । न नैवोपयुक्तम् । चेच्छब्दसमभिव्याहारेण चेच्छब्दस्य सामीप्येन । आकाङ्क्षोत्थापनात् अपेक्षितत्वोदयात् तदनुपस्थितौ तु नेति न नमेदित्येतस्य स्वत एव

क्रियान्तराकाङ्क्षोत्थापकत्वमिति न तादृशस्य सिद्धभाव इति। इति इत्थम्। आहुः कथयन्तीति।

हिन्दी—इस पर कुछ विद्वान् ( कौण्डभट्ट आदि ? ) ( कहते हैं )—'दूसरी क्रिया की आकाङ्क्षा की जो उत्थापकता है, उसके अवच्छेदक अर्थात् परिचायक धर्म से युक्त होते हुए एवं कारक के रूप में क्रिया के साथ अन्वय योग्य होते हुए दूसरे कारकों के साथ अन्वित हो पाने की योग्यता का न होना सिद्धत्व ( सिद्ध भाव ) है। दूसरी क्रिया की आकाङ्क्षा की अनुत्थापकता का अवच्छेदक होते हुए अन्य कारकों के साथ अन्वित हो पाने की योग्यता के अवच्छेदक धर्म से युक्त होना साध्यत्व है।'

हिरुक् आदि अव्ययों के साध्यत्व के अभाव में भी क्रिया के वाचकत्व का व्यवहार तो क्रिया-विशेषण होने से है।

इस प्रकरण में सिद्धत्व 'पाक' इत्यादि में घञ् आदि प्रत्ययों के द्वारा वाच्य है, साध्यत्व तो सभी जगह धातु के द्वारा ही प्रतिपाद्य है।

'यदि हरि को नमस्कार करें तो सुख पाएँ' इत्यादि में क्रिया के भी दूसरी क्रिया के प्रति साकाङ्क्ष होने से सिद्धत्व बनता हैं—ऐसा कहा जाता है तो वह ठीक नहीं हैं। वैसे में तो यदि तो आदि के सामीप्य से ही आकाङ्क्षा का उत्थापन है, स्वतः नहीं इत्यादि कहते हैं।

( ६३ ) वस्तुतः साध्यत्वं निष्पाद्यत्वमेव। तद्रूपेणैव बोधः। स्पष्टञ्चेद-'मुपपदमतिङ्' इत्यादौ भाष्ये। ननु घटं करोति इत्यादौ द्रव्यस्याऽपि साध्यत्वेन प्रतीतिरिति चेन्न; 'करोति'पदसमभिव्याहारात्। तथा प्रत्ययेऽपि स्वतो घटादिपदात् द्रव्यस्य सिद्धत्वेनैव प्रतीतेः।

व्याख्या—साध्यत्वस्य स्वसम्मतां परिभाषामाह—वस्तुत इत्यादिना। वस्तुतः यथार्थतः। साध्यत्वं साध्यभावः। निष्पाद्यत्वम् उत्पाद्यता। एव। तद्रूपेण तस्य साध्यत्वस्य तद्रूपेण तेन निष्पाद्यत्वेन रूपेण। एव। बोधः ज्ञानमिति। तद्विपरीतं सिद्धत्वं हि निष्पन्नत्वमिति। उक्तार्थे भाष्यं प्रमाणयति—स्पष्टमित्यादिना। इदं साध्यत्वं निष्पाद्यत्वं सिद्धत्वं निष्पन्नत्वमिति। उपपदमतिङ् इत्यादौ पाणिनीये 'उपपदमतिङ्' इति सूत्रसम्बद्धे। भाष्ये पातञ्जलमहाभाष्ये। पूर्वोक्तमते साध्यत्वं हि क्रियान्तराकाङ्क्षोत्थापकत्वशक्तिशून्यत्वेन परिभाषितं किन्त्वेतत् 'पचतिक्रियाः भवतिक्रियायाः कर्त्र्यो भवन्ति' इति महाभाष्यस्य यद्वचनं ( १।३।१ ) तेन सह विरुध्यत, इति तन्नैव स्वीकार्यमिति साध्यत्वस्य परिभाषान्तरमत्रोपस्थापितम्। एवमेव 'भुक्त्वा गच्छति' इत्यादौ पूर्वकालिकक्रियाभूतस्य 'भुक्त्वा' इत्येतस्य साध्यत्वं न स्यात्क्रियान्तराकाङ्क्षोत्थापकत्वात्। तथैव 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण। साधनं हि क्रिया निवर्तयति' इति महाभाष्यवचनम् ( २।२।१९ ) अपि साध्यत्वस्य निष्पाद्यत्वार्थमेव सूचयति। ननु इति प्रश्ने। 'घटं करोति' इत्यादौ इत्यादिवाक्ये। द्रव्यस्य घटस्य सिद्धस्य। अपि च। साध्यत्वेन साध्यरूपेण। प्रतीतिः अवभासनम्। इति। चेत् इति कथ्यते चेत्। न

नैतत्कथनमुपयुक्तम् । तथाप्रतीतिस्तु करोतिपदसमभिव्याहारात् करोतिपदसामीप्यादेव न तु स्वतः । तथाप्रत्यये करोतिपदसामीप्येन घटस्य सिद्धस्यापि साध्यत्वेन प्रतीतौ । अपि हि । स्वतः प्रकृत्या । घटादिपदात् घटप्रभृतिपदात् । द्रव्यस्य वस्तुनः । सिद्धत्वेन निष्पन्नत्वेन । एव हि । प्रतीतेः अवभासनात् । यद्युच्यते साध्यत्वं निष्पाद्यत्वमिति तदा 'घटं करोति' इत्यादौ घटस्य सिद्धस्यापि साध्यत्वेन प्रतीतिर्भवतीति कथं तदुपयुक्तमिति चेन्न; घटस्य साध्यत्वेन प्रतीतिस्तु करोतिपदसान्निध्येनैव न तु स्वतः । स्वतस्तु द्रव्यं हि सिद्धमेव भवति इति नो दोष इति ।

**हिन्दी**—वास्तविक रूप में निष्पाद्यता ही साध्यता है। उसी रूप में क्रिया का ज्ञान भी होता है। यह बात 'उपपदमतिङ्' सूत्र के भाष्य में स्पष्ट किया गग्ग है।

'घड़ा वनाता है' इत्यादि में सिद्ध द्रव्य घट की भी साध्य के रूप में प्रतीति होती है—ऐसा कहना ठीक नहीं है। यह तो केवल 'वनाता है' पद के सामीप्य से ही लगता है। ऐसी प्रतीति होने पर भी स्वयं घट आदि पद से द्रव्य की सिद्ध रूप में ही प्रतीति होती है। अतः इसमें कोई दोष नहीं है।

**( ६४ ) अस्तिभवतिवर्ततिविद्यतीनामर्थः सत्ता । सा च अनेककालस्थायिनी इति कालगतपौर्वापर्येण क्रमवती इति तस्याः क्रियात्वम् । सत्तेहात्मधारणम् ।**

**व्याख्या**—यदि साध्यत्वस्याशयं निष्पाद्यत्वेन गृह्येत तथा क्रियायां विशेषक्रमस्यापेक्षाऽपि स्यात्तदा भवत्यादीनां कथं क्रियात्वं सिध्यति ? भूप्रभृतिधातूनां सत्तार्थकत्वात् सत्तायाः सिद्धत्वाभिव्यक्तेस्तत्र क्रमरूपताभावाच्चेत्याशङ्कापरिहारायाह—अस्तीत्यादिना । **अस्तिभवतिवर्ततिविद्यतीनाम्** अस्-भू-वृत्-विद्धातूनां तत्तत्क्रियोपस्थापितानाम्—'इक्श्तिपौ धातुनिर्देशे' इति व्यवस्थया । **अर्थः** वाच्यत्वेन विवक्षित आशयः । **सत्ता** आत्मधारणम् । तेन तत्रात्मधारणानुकूलव्यापारस्य सत्त्वेन निष्पाद्यत्वमस्त्येवेत्याशयः । एवमेव तत्र क्रमरूपताऽपि आरोपिता भवति **सा** सत्ता । **च** हि । **अनेककालस्थायिनी** कालसम्बद्धमासपक्षादिपरिमाणपर्यन्तस्थिरा । **इति** हेतोः । **कालपौर्वापर्येण** कालपरिमाणेषु विद्यमानं यत्पौर्वापर्यं क्रमिकता तेन । **क्रमवती** क्रमरूपा । **इति** हेतोः । **तस्याः** सत्तायाः । **क्रियात्वं** क्रियाभावः । **इह** प्रसङ्गेऽस्मिन् । **सत्ता** सत्तेति पदस्यार्थः । **आत्मधारणम्** आत्मधारणानुकूलव्यापार इति । साध्यत्वस्य निष्पाद्यत्वे क्रियायाः क्रमरूपत्वेऽपि न भवतीत्यादीनां क्रियात्वहानिः । भू-अस्-वृत्-विद्धातूनां सत्तार्थः । सत्ता चात्मधारणमेवेति तत्रात्मधारणानुकूलव्यापारस्य सत्त्वान्निष्पाद्यत्वमस्त्येव । एवमेव सत्ताऽपि एकाधिककालपरिमाणपर्यन्तव्यापिनीति कालगतक्रमिकतायाः सत्तायामारोपेण सत्ताऽपि क्रमरूपैव । यथाऽऽह हरिरपि—

'आत्मभूतः क्रमोऽप्यस्या यत्रेदं कालदर्शनम् ।
पौर्वापर्यादिरूपेण प्रविभक्तमिव स्थितम् ॥' इति ।

**हिन्दी**—अस्, भू, वृत्, विद् आदि धातुओं का अर्थ सत्ता है। वह भी अनेक कालों में स्थायी होती है और काल से सम्बद्ध क्रमिकता के कारण वह क्रम से युक्त होती

है। अतः उसका क्रियात्व सिद्ध है। यहाँ सत्ता का अर्थ आत्मधारण के अनुकूल व्यापार का करना है।

इसका आशय यह है कि यदि ऐसा कहा जाय कि साध्यत्व का निष्पाद्यत्व अर्थ एवं क्रिया को क्रमवती मानने पर भवति, अस्ति आदि का क्रियात्व सिद्ध नहीं होगा, क्योंकि इनका सत्ता अर्थ न तो निष्पाद्य ही है और न इसमें क्रमिकता ही है तो यह कथन ठीक नहीं है, क्योंकि अस्, भू आदि धातुओं का अर्थ सत्ता अर्थात् आत्मधारणा के अनुकूल व्यापार करना ही है। अतः इसके व्यापार में निष्पाद्यत्व है और सत्ता में क्रमिकता के न रहने पर भी वह एक से अधिक काल तक रहने वाली होती है। यद्यपि काल अखण्ड एवं पूर्ण है फिर भी उसको समझने के लिए उसे वर्ष-मास-पक्ष आदि खण्डों में विभक्त माना जाता है और उसमें जो इस तरह की क्रमिकता है, उसका सत्ता में आरोप किया जाता है। इस तरह सत्ता में भी क्रमिकता आ जाती है। अतः भवति, अस्ति आदि में क्रियात्व होने में कोई अड़चन नहीं है।

**( ६५ ) सकर्मकत्वञ्च फलव्यधिकरणव्यापारवाचकत्वम्। फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम्। क्वचित्तु फलांशाभावादकर्मकत्वम्। यथा अस्त्यादौ केवलं सत्तादिरेवार्थः। फलांशस्य सूक्ष्मदृष्टयाऽप्यप्रतीतेः। उत्पन्नस्य सत्त्वस्य स्वरूपधारणरूपां सत्तामाचष्टे अस्त्यादिरिति निरुक्तोक्तेश्च।**

**व्याख्या**—अथावसरप्राप्तं धातोः सकर्मत्वाकर्मत्वविषयं निरूपयन् प्रथमं प्राचीनमतमनुवदति—**सकर्मकत्वमित्यादिना**। धातोः। **सकर्मकत्वं** कर्मवत्ता कर्मणोऽपेक्षा। **फलव्यधिकरणव्यापारवाचकत्वम्**—फलस्य व्यधिकरणः भिन्नाश्रयवान् यो व्यापारस्तस्य वाचकत्वम्। फलाश्रयभिन्नाश्रयव्यापारबोधकत्वमेव सकर्मकत्वमिति। **फलसमानाधिकरणव्यापारवाचकत्वं** फलस्य समानाधिकरणस्तुल्याश्रयो यो व्यापारस्तस्य वाचकत्वम्। **अकर्मकत्वं** कर्महीनता इति। उक्तमेव यथा—

'फलव्यापारयोरेकनिष्ठतायामकर्मकः।
धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः॥' इति।

**क्वचित्** कुत्रचित्। **तु** तद्व्यतिरिक्तम्। **फलांशाभावात्** फलस्य अंशस्यैकदेशस्याप्यभावाद्विरहात्। अपि। **अकर्मकत्वमकर्माभावः**। **यथा** इति निदर्शने। **अस्तीत्यादौ** अस्ति प्रभृतौ। **केवलम्**। **सत्तादिरात्मधारणम्**। **एव**। **अर्थः** आशयः। **फलांशस्य** फलभागस्य। **सूक्ष्मदृष्टया** नितान्तान्वेषणे। **अपि**। **अप्रतीतेः** अनवभासनात्। उक्तार्थे निरुक्तं प्रमाणयति—**उत्पन्नस्येत्यादिना**। **अस्त्यादिः** अस्तिप्रभृतिक्रिया। **उत्पन्नस्य** निष्पन्नस्य। **सत्त्वस्य** वस्तुनः। **स्वरूपधारणरूपाम्** आत्मभरणस्वरूपाम्। **सत्ताम्**। **आचष्टे** कथयति। **इति** इत्थम्। **निरुक्तोक्तेः** यास्काचार्यप्रणीतनिरुक्तवचनात्। **चेति**।

अयमाशयः—फलव्यापारयोरेकनिष्ठतायां धातुरकर्मको भवति, तयोर्धर्मिभेदे तु स सकर्मको भवति। तेन हि गमेः फलस्य कर्तृ निष्ठत्वेऽपि नैव तस्याकर्मकत्वं फलस्य कर्म-

स्थत्वेन च तयोः समानाश्रयत्वाभावात्। अस्तिप्रभृतेस्तु केवलसत्तार्थकत्वात् फलांश-प्रतीतेरभावादकर्मकत्वमित्येकः पक्षो ग्रन्थसम्मतः। अत्रापि स्वसत्ताधारणरूपफलानुकूल-व्यापारस्य प्रतीतेस्तद्भावेऽपि स्वधारणात्मकफलतदनुरूपव्यापारयोः कर्त्रैकाधिकरणा-श्रयत्वात्। आत्मधारणारूपफलस्याश्रयभूतकर्मणः कर्तर्येवान्तर्भावेन कर्तरि तस्य पृथक्-सत्ताभावात् तेषामकर्मकत्वम्। यथोक्तम्—

'आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते।
अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः॥' इति।

सत्ताधारणायाः फलत्वासम्मतत्वे तु न फलांशप्रतीतिरिति प्रथमपक्षस्याधारभूमिः।

**हिन्दी**—फल के आश्रय से भिन्न आश्रय वाले व्यापार का वाचक होना सकर्मकत्व है। फल के आश्रय से अभिन्न आश्रय में रहने वाले व्यापार का वाचक होना अकर्मकत्व है। कहीं तो फल के अंश के अभाव में भी अकर्मकत्व है। जैसे 'अस्ति' आदि में केवल सत्ता आदि ही अर्थ है, क्योंकि फल के अंश की सूक्ष्मदृष्टि से भी वहाँ प्रतीति नहीं होती। 'अस्ति' आदि उत्पन्न हुए द्रव्य की आत्मधारणा रूप सत्ता को कहते हैं—ऐसा निरुक्त का वचन भी है।

(६६) वस्तुतस्तु शब्दशास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम्। तदनन्वय्यर्थकत्वमकर्मकत्वम्। तेन 'अध्यासिता भूमयः' इत्यादिसिद्धिः। 'अधिशीङ्स्थासाम्' इत्यनेन भूमय इत्याधारस्य कर्मत्वम्। अन्वयश्च पृथग्बुद्धेन संसर्गरूपः। अन्वयपदस्य तत्रैव व्युत्पत्तेः। तेन 'जीवति' इत्यादौ न दोषः। तत्र प्राणादिरूपकर्मणो धारणार्थधात्वर्थात् पृथगबोधादिति 'सुप आत्मनः' इति सूत्रे भाष्ये स्पष्टम्।

**व्याख्या**—इत्थं प्राचीनसम्मतं सकर्मकत्वाकर्मकत्वलक्षणमभिधाय सम्प्रति स्व-सम्मतां तत्परिभाषामुपस्थापयति—**'वस्तुत'** इत्यादिना। **वस्तुतः** यथार्थतः। **तु** हि। **शब्दशास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वं** शब्दशास्त्रीयः व्याकरणशास्त्राभिमतो यः कर्म-संज्ञकार्थः कर्मसंज्ञकत्वेन गृहीतः अर्थस्तस्य अन्वय्यर्थकत्वम् अन्वययोग्यार्थवत्त्वम्। **सकर्म-कत्वं** धातोः सकर्मकभावः। **तदन्वय्यर्थकत्वं** तेन अनन्वितार्थकत्वम्। **अकर्मकत्वम्।** **तेन** हेतुना। **'अध्यासिता भूमयः'** **इत्यादिसिद्धिः** इत्यादिप्रयोगसिद्धिः। **अधिशीङ्स्था-साम्** 'अधिशीङ्स्थासां कर्म' (पा० सू० १।४।४६) **इत्यनेन** इति सूत्रेण। **भूमयः इति।** **आधारस्य** अधिकरणकारकस्थाने। **कर्मत्वं** कर्मसंज्ञा भवतीति।

अयमाशयः—यदि हि फलव्यधिकरणव्यापारवाचकत्वमेव सकर्मकत्वमुच्यते तदा 'अध्यासिता भूमयः' इत्यत्र कर्मत्वं न स्यात् भूमयः इत्यत्र। आधारस्यास्य कर्मत्वमत्र शास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वेनैव यथा व्यवस्थितम् 'अधिशीङ्स्थासां कर्म' इति सूत्रेण न तु फलव्यधिकरणव्यापारवाचकत्वेन। कृदभिहितत्वेनात्र कर्मणि प्रथमा। तत्रान्वय-पदं व्याचष्टे—**अन्वय** इत्यादिना। **अन्वयः।** **च** हि। **पृथग्बुद्धेन** पृथग्रूपेण ज्ञातेन पदार्थेन **संसर्गरूपः** सम्बन्धस्वरूपः। **तत्रैव** तस्मिन्नेवार्थे। **अन्वयपदस्य।** **व्युत्पत्तेः**

शक्तेः। धात्वर्थात्पृथग्रूपेण ज्ञातेन कर्मणाऽन्वितत्वमेवान्वयो न तु धात्वर्थान्तर्भूतेनेति। तेन हेतुना। जीवति। इत्यादौ। न। दोषः अकर्मकत्वहानिः। तत्र जीवतीत्यत्र। प्राणादिरूपकर्मणः धारणपदार्थभूतप्राणकर्मणः। धारणार्थधात्वर्थात् धात्वर्थभूताद् धारणार्थात्। पृथगबोधात् पार्थक्येनानवभासनात्। इति इत्थम्। सुप आत्मनः इति सूत्रे 'सुप आत्मनः क्यच्' (पा० सू० ३।१।८) इति सूत्रसम्बद्धे। भाष्ये पातञ्जल-महाभाष्ये। स्पष्टं स्पष्टतया प्रतिपादितमिति। भाष्येऽप्युक्तम्—

'अथाऽस्य क्यजन्तस्य कानि साधनानि भवन्ति? भावः कर्ता च। अथ कर्म। नास्ति कर्म। ननु चायमिषिः सकर्मकः यस्यायमर्थे क्यज्विधीयते। अभिहितं तत्कर्मान्तर्भूतं धात्वर्थः सम्पन्नः। न चेदानीमन्यत्कर्मास्ति, येन सकर्मकः स्यात्। कथं तस्येयं सकर्मको भवति? अपुत्रं पुत्रमिवाचरति पुत्रीयति माणवकमिति। अस्त्यत्र विशेषः। द्वेऽत्र कर्मणि। उपमानकर्मोपमेयकर्म च। उपमानकर्मान्तर्भूतमुपमेयेन कर्मणा सकर्मको भवति······' इत्यादि।

**हिन्दी**—वस्तुतः व्याकरणशास्त्र में कर्मसंज्ञक अर्थ से अन्वित होने वाले अर्थ का होना ही सकर्मक होना है। उससे अनन्वित अर्थ का होना अकर्मकत्व है। इसी कारण 'अध्यासिता भूमयः' इत्यादि की सिद्धि होती है। 'अधिशीङ्स्थासां कर्म' सूत्र के द्वारा 'भूमयः' के आधार में कर्मसंज्ञा होती है।

धातु के अर्थ से पृथक् रूप में ज्ञात कर्म के साथ सम्बद्ध होना ही यहाँ अन्वय है। अन्वय पद की उसी अर्थ में शक्ति है। इस कारण 'जीवति' इत्यादि में दोष नहीं आता। उसमें प्राणादि रूप कर्म का धारणार्थक धात्वर्थ से पृथक् बोध नहीं होता। यह बात 'सुप आत्मनः क्यच्' सूत्र के भाष्य में स्पष्ट है।

कहने का आशय यह है कि वास्तव में धातु सकर्मक तभी होती है जब उसका अर्थ व्याकरणशास्त्र के अनुसार कर्मसंज्ञा होने वाले अर्थ का अन्वयी होता है, न कि फल के आश्रय वाले व्यापार के वाचक होने पर। जिन धातुओं का अर्थ कर्मसंज्ञक अर्थ का अन्वयी नहीं होता, वे अकर्मक हैं। 'अध्यासिता भूमयः' में भूमि में आधार के स्थान पर कर्मसंज्ञा होती है। अतः यह प्रयोग सिद्ध होता है। यहाँ अन्वित होने का अर्थ है—धातु के अर्थ से भिन्न रूप में उपस्थित कर्म से सम्बद्ध होना। इसी कारण 'जीवति' में सकर्मकता नहीं होती, क्योंकि यहाँ प्राणधारण रूप कर्म का धारणार्थक धात्वर्थ से पृथक् रूप में ज्ञात नहीं होता।

(६७) जानातेर्विषयतया—ज्ञानं फलम्। आत्ममनःसंयोगो व्यापारः। अत एव 'मनो जानाति' इत्युपपद्यते। आत्माऽत्रान्तःकरणं, मनोऽपि तद्वृत्ति-विशेषरूपम्। आत्माऽऽत्मानं जानातीत्यादौ अन्तःकरणावच्छिन्नः कर्ता शरीरावच्छिन्नं कर्म इति कर्मवत् सूत्रे भाष्ये स्पष्टम्।

**व्याख्या**—जानातेरर्थविषये विषयमुपस्थापयति जानातेरित्यादिना। जानातेः जानातिरूपज्ञाधातोः। विषयतया विषयत्वसम्बन्धेन। ज्ञानमवबोधः। फलम्। आत्म-

**मनःसंयोगः** आत्मनोऽन्तःकरणस्य मनसः संयोगो ज्ञानानुकूलसम्पर्कः। **व्यापारः।** अत एव एतदर्थमेव। **'मनो जानाति'** इति इत्थं प्रयोगः। **उपपद्यते** सिध्यति। **अत्र** प्रसङ्गेऽस्मिन्। **आत्मा** आत्मपदवाच्यं हि। **अन्तःकरणं** चिदेव। **मनः** मानसम्। अपि च। **तद्वृत्तिविशेषरूपं** तस्यान्तःकरणस्य वृत्तिविशेषस्य विशिष्टाया वृत्तेः रूपमेव। **आत्मा आत्मानं जानाति इत्यादौ** इति प्रयोगे। **अन्तःकरणावच्छिन्नः** अन्तःकरणधर्मविशिष्टः आत्मा। **कर्ता** व्यापाराश्रयः। **शरीरावच्छिन्नं** शरीरधर्मविशिष्टत्वेन गृहीतं **कर्म** फलाश्रयः। **इति कर्मवत् कर्मणा इति सूत्रे भाष्ये** 'कर्मवत् कर्मणा तुल्यक्रियः' ( पा० ३।१।८७ ) इति सूत्रसम्बद्धभाष्ये। **स्पष्टं** स्पष्टतयोक्तमिति। यथोक्तं महाभाष्ये—'द्वावात्मानौ अन्तरात्मा शरीरात्मा च। अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखेऽनुभवति। शरीरात्मा तत्कर्म करोति येनान्तरात्मा सुखदुःखेऽनुभवति।' इति।

**हिन्दी**—'ज्ञा' धातु का विषयत्वसम्बन्ध से रहने वाला ज्ञान ही फल है ( इसमें घट आदि विषय हैं )। आत्मा एवं मन का संयोग व्यापार है। इसी कारण 'मन जानता हैं' आदि प्रयोगों की सिद्धि होती है। यहाँ आत्मा अन्तःकरण है और मन उस आत्मा की वृत्तिविशेष का रूप है। 'आत्मा आत्मा को जानता है' इत्यादि में अन्तःकरण से अवच्छिन्न ( आत्मा ) कर्ता शरीर से अवच्छिन्न ( आत्मा ) कर्म है। यह बात 'कर्मवत् कर्मणा तुल्यक्रियः' ( पा० सू० ३।१।८७ ) सूत्र के भाष्य में स्पष्ट है।

( ६८ ) यत्तु आवरणभङ्गो विषयता वा फलम्, व्यापारस्तु ज्ञानमेवेति। तन्न। कर्मस्थक्रियकत्वापत्तेः। तद्व्यवस्था चेत्थमुक्तं हरिणा—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता॥ इति।

अस्यार्थः—यत्र कर्मणि कर्तरि वा क्रियाकृतो विशेषः कश्चिद् दृश्यते तत्र क्रिया व्यवस्थितेत्युच्यते। नन्वेवं पच्यादिकर्तर्यपि श्रमादिरूपविशेषस्य दर्शनादिदमयुक्तम्। किञ्च 'चिन्तयति' 'पश्यति' इत्यादीनां कर्तृस्थभावकत्वानुपपत्तिः। कर्तरि क्रियाकृतविशेषाभावात्। अत आह—अन्येषामिति। मते इति शेषः। यत्र कर्तृकर्मसाधारणरूपं फलं शब्देन प्रतिपाद्यते स कर्तृस्थभावकः। यथा 'पश्यति घटम्' 'ग्रामं गच्छति' 'हसति' इत्यादौ। तत्र विषयतासमवायाभ्यां ज्ञानमुभयनिष्ठम्। संयोगश्चोभयनिष्ठः। एवं हासोऽपि। न हि विषयताऽऽवरणभङ्गावेवम्। यत्र कर्त्रवृत्तिकर्मस्थफलं स कर्मस्थभावकः। यथा भिनत्तीत्यादौ। न हि द्विधाभवनादि कथमपि कर्तृनिष्ठमिति हेलाराजः। तथा चावरणभङ्गस्य विषयतायाश्च कर्ममात्रनिष्ठत्वाज्जानातेरपि कर्मस्थक्रियकत्वापत्तिरित्यलम्।

**व्याख्या**—जानातेरर्थविषये मतान्तरमनूद्य दूषयितुं प्रकरणमारभते—यदित्यादिना। **यत्** यदेव। **तु** हि। **जानातेः आवरणभङ्गः** आवरणस्याच्छादनस्य भङ्गो

विनाशः। **विषयता** विषयभावः। **फलम्**। **व्यापारः**। **तु** तद्व्यतिरिक्तम्। **ज्ञानम्** **एव**। **इति** इत्थं समर्थ्यते। वेदान्तिनां हि आवरणभङ्गमेव जानातेः फलं मन्यन्ते। तदनुसारेण यदा हि वस्तु प्रत्यक्षीक्रियते तदाऽस्माकमन्तःकरणं हि ज्ञानेन्द्रियमाध्यमेन तद्वस्तु निकटं प्राप्य तदाकृतिरूपे हि परिणतं भवति। इयमेव स्थितिर्वृत्तिरिति ज्ञानमिति वा कथ्यते, यतो हि तद्वस्तुन आवरणभङ्गो जायते यो हि फलमित्युच्यते। तद्विपरीतं नैयायिकास्तु ज्ञातानि हि वस्तूनि ज्ञानस्य विषयतामापद्यन्ते। अयमेव विषयभावः फलमिति वदन्ति। उभयपक्षेऽपि ज्ञानं तु व्यापार एव। **तत्** तादृशं कथनम्। **न** **नैवोपयुक्तम्**। तदनुपयुक्तत्वे हेतुमाह—**कर्मेत्यादिना**। **कर्मस्थक्रियकत्वापत्तेः** आवरणभङ्गस्य विषयतारूपस्य चोभयोरेव कर्मस्थत्वाद्धातोः कर्मस्थक्रियकत्वस्य कर्मस्था या क्रिया तत्त्वस्य आपत्तेः प्राप्तेः। कर्मस्थफलक्रियायां हि 'कर्मवत्कर्मणा तुल्यक्रियः' इति व्यवस्थया कर्ता हि कर्मवद् व्यवह्रियते, येन 'ज्ञायते घटः स्वयमेव' इत्याद्यसाधुप्रयोगस्य साधुत्वमापद्येत। धातुर्हि द्विविधो मतः—कर्तृस्थक्रियकः कर्मस्थक्रियकश्च। यत्र हि धात्वभिव्यक्तवैशिष्ट्यं कर्तरि कर्मणि चोभयोरेव साधारणरूपेण लभ्यते स धातुः कर्तृस्थक्रियक इत्युच्यते। यथा हि 'घटं पश्यति' इत्यादौ दर्शनरूपफलं हि कर्तरि कर्मणि चोभयोरेव साधारणरूपेण लभ्यते, तेन न 'दृश्यते घटः स्वयमेव' इत्यादिप्रयोगस्यासाधुत्वं धातोः कर्तृस्थक्रियकत्वात्। यत्र हि कर्मण्येव फलस्याभिव्यक्तिः पतति न तु कर्तर्यपि तदा धातुः कर्मस्थक्रियकः सम्पद्यते। यथा 'भिद्यते काष्ठं स्वयमेव' इत्यादौ भेदनफलस्य न कदापि कर्तर्यवस्थितिः। ज्ञाधातोरपि धातूपस्थापितफलस्योभयत्र कर्तरि कर्मणि च सत्त्वात्कर्तृस्थक्रियकत्वं न तु कर्मस्थक्रियकत्वम्। यदि ह्यावरणभङ्गो विषयता वा फलत्वेन गृह्येत तदा तस्यापि कर्मस्थक्रियकत्वापत्तेः 'ज्ञायते घटः स्वयमेव' इत्यादिप्रयोगः स्यादिति। उक्तार्थे हरिं प्रमाणयति—**तदित्यादिना**। **तद्**-**व्यवस्था** तस्य कर्मस्थक्रियकत्वस्य व्यवस्था प्रबन्धः। **च** **हि**। **हरिणा** वाक्यपदीयकृता तदाख्येन। तदुद्धरति—**विशेषेति**। यत्र विशेषदर्शनं तत्र क्रिया व्यवस्थिता अन्येषां मते तु क्रियाव्यवस्था शब्दैः एव प्रकल्पिता भवतीत्यन्वयः। **यत्र** **कर्तरि** **कर्मणि** **वा**। **विशेषदर्शनं** क्रियाकृतस्य कस्यचिद्विशेषस्य फलस्य दर्शनं **तत्र** **कर्तरि** **कर्मणि** **वा**। **क्रिया**। **व्यवस्थिता** प्रतिष्ठिता भवतीति। **अन्येषामितरेषाम्**। **मते** पक्षे। **तु** तद्व्यतिरिक्तम्। **क्रियाव्यवस्था** कर्तरि कर्मणि वा क्रियाया विशेषरूपेणावस्थितिः। **शब्दैः**। **एव**। **प्रकाश्यते** संसूच्यत इति। **अस्य** कथनस्यास्य **अर्थः** आशयः। **यत्र** यस्मिंस्स्थले। **कर्मणि**। **वा** **कर्तरि**। **क्रियाकृतः** भावजनितः। **कश्चित्**। **विशेषः** वैशिष्ट्यम्। **दृश्यते**-ऽनुभूयते। **तत्र** तत्रैव कर्मणि कर्तरि वा। **क्रिया** धात्वर्थः। **व्यवस्थिता** प्रतिष्ठिता। **भवति**। **इति** **उच्यते** कथ्यते। यदि हि कर्तरि कश्चिदपि क्रियाकृतो विशेषस्तदा क्रियायाः कर्तरि व्यवस्थिता भवति। यदा तु स कर्मणि दृश्यते तदा क्रियाऽपि कर्मण्येव व्यवस्थिता भवतीति। **ननु** इति प्रश्ने। **एवं** **यत्र** **क्रियाकृतो** **विशेषस्तत्र** **क्रिया** **व्यवस्थितेति** **मते**। **पचयादिकर्तरि** **पचेः** **कर्तरि**। **अपि** **च**। **श्रमादिरूपविशेषस्य** परिश्रमप्रभृतिस्वरूपवैशिष्ट्यस्य। **दर्शनात्** उपलब्धेः। **इदम्** एतत्कथनम्। **अयुक्तमनुचितम्**।

पचादिषु पाचनक्रियोत्पन्नश्रमादिवैशिष्ट्यानि कर्तर्यपि दृश्यन्ते । अत उक्तसिद्धान्तपक्षे तु पचादेरपि कर्तृस्थक्रियकत्वमुत्पद्यते । **किञ्च** अपि च । **चिन्तयति पश्यति इत्यादीनां कर्तृस्थभावकत्वानुपपत्तिः** कर्तृस्थं कर्तयाश्रितं यद् भावकत्वं क्रियकत्वं तस्यानुपपत्तिरसिद्धिः । चिन्तदृश्प्रभृति धातवो हि कर्तृस्थक्रियकास्तथामते कर्मस्थक्रियकतामापद्यन्ते । **कर्तरि** कर्तृपदे । **क्रियाकृतविशेषाभावात्** भावजनितवैशिष्ट्याभावात् । **अतः** अनेन हेतुना । **आह** कथयति । **अन्येषाम्** इति । पूर्वोक्तपक्षे सम्भाव्यदोषान् मनसि कृत्वाऽपरमेव सिद्धान्तं सूचयति—**अन्येषामित्यादिना** । **अन्येषामित्यनन्तरं मते इति शेषः** । अन्येषां मते इति । तदनुसारेण **यत्र कर्तृकर्मसाधारणरूपं** कर्तरि कर्मणि च सामान्यत्वेन सम्मतम् । **फलं** शब्देन धातुना । **प्रतिपाद्यते** साध्यते । **सः** तादृशो धातुः । **कर्तृस्थभावकः** कर्तृस्थक्रियकः । **यथा** । **पश्यति घटम्** । **ग्रामं गच्छति** । **हसति इत्यादौ** । तत्र 'घटं पश्यति' इत्यादौ **विषयतासमवायाभ्यां** विषयत्वेन समवायसम्बन्धेन च । **ज्ञानं** फलम् । **उभयनिष्ठं** कर्तृकर्मसम्बद्धम् । विषयत्वेन घटे समवायसम्बन्धेन गामिनि च ज्ञानं वर्तत इति । एवमेव 'ग्रामं गच्छति' इत्यादौ । **संयोगः** गमेर्विषयीभूतो ग्रामगन्तृसंयोगः । **च** अपि । **उभयनिष्ठः** कर्तृकर्मनिष्ठः । **एवम्** इत्थमेव । **हासः** हसतीत्यत्र हासः । अपि च । कर्तृकर्मनिष्ठ एव । तस्य विषयत्वेन दृष्टव्यक्तौ समवायसम्बन्धेन तु तद्दर्शकेऽपि फलस्य सत्त्वात् । तेन दृश्-गम्-हस्प्रभृतिधातवः कर्तृस्थक्रियका न तु कर्मस्थक्रियकाः; येन घटं पश्यति, ग्रामं गच्छति, हसति प्रभृतिप्रयोगास्तु सिध्यन्ति न तु 'दृश्यते घटः स्वयमेव' 'गम्यते ग्रामः स्वयमेव' 'दृश्यते स्वयमेवे'त्यादि प्रयोगास्तु न सिध्यन्ति । **न** नैव । **हि** । **विषयताऽऽवरणभङ्गौ** विषयभावावरणनाशौ । **एवम्** उभयनिष्ठौ । तयोः कर्ममात्रसम्बद्धत्वात् । **यत्र** यस्मिंस्स्थाने । **कर्त्रवृत्तिकर्मस्थफलं** कर्तरि अवृत्ति व्यापाररहितं कर्मस्थं च तत्फलम् । **सः** तादृशो धातुः । **कर्मस्थभावकः** कर्मस्थक्रियक इति । **यथा भिनत्ति इत्यादौ** । भिनत्ति काष्ठम्, भिद्यते काष्ठं स्वयमेवेत्यादिप्रयोगसिद्धिः । **न** नैव । **हि** । **द्विधाभवनादि भिदेः** द्विधाभवनार्थः । **कथमपि** केनाऽपि प्रकारेण । **कर्तृनिष्ठं** कर्त्रा सम्बद्धम् । **इति** इत्थम् । **हेलाराजः** वाक्यपदीयव्याख्याता तदाख्यः । काष्ठादेर्द्विधाभवनफलं न कथमपि कर्तृगमिति भिनत्तेः कर्मस्थभावकत्वं तेन भिद्यते काष्ठं स्वयमेवेति प्रयोगसिद्धिरिति । **तथा च** तेनैव प्रकारेण । **आवरणभङ्गस्य** आच्छादनविनाशस्य । **विषयतायाः** विषयभावस्य । **च** । **कर्ममात्रनिष्ठत्वात्** कर्त्रवृत्तिकर्ममात्रसम्बद्धत्वात् । **जानातेः** । अपि तयोः फलत्वे तु । **कर्मस्थक्रियकत्वापत्तिः** कर्मस्थभावकत्वप्राप्तिर्येनानभीष्टस्य ज्ञायते वस्तु स्वयमेवेत्यादिप्रयोगस्य सिद्धिः स्यादिति । **अलम्** एतावदेवात्र ।

**अयमाशयः**—वेदान्तिनो हि जानातेरावरणभङ्गो हि फलं व्यापारस्तु ज्ञानमिति मन्यन्ते । नैयायिकास्तु तत्र घटादेर्विषयभावः फलमिति प्रतिपादयन्ति । वस्तुतस्तु नैतदुभयमेवोपयुक्तम् । तथासति जानातेरपि कर्मस्थक्रियकत्वापत्तिः स्यात्, यद्धि नितान्तमेवानभीष्टम् । धातोः कर्तृकर्मस्थक्रियकत्वविषये द्वौ पक्षौ स्तः । एकपक्षानुसारेण कर्तरि कर्मणि वा यत्र क्रियाकृतो विशेषस्तत्रैव क्रियायाः व्यवस्थितिरिति ।

अपरे तन्न मन्यन्ते। तथा हि सति पच्यादेः कर्तर्यपि परिश्रमरूपविशेषस्य दर्शनात् तस्य कर्तृस्थक्रियकत्वापत्तिः स्यात्। चिन्तयति पश्यति इत्यादीनां तु कर्मणि क्रियाकृतविशेषदर्शनात्तेषां कर्मस्थक्रियकत्वापत्तिः स्यात्। उक्तदोषपरिहाराय ते कथयन्ति यद्यत्र कर्तृकर्मसाधारणरूपं फलं प्रतिपाद्यते स कर्तृस्थभावकः, यथा पश्यति घटमित्यादौ। दर्शनस्य द्रष्टृघटयोरुभयोरेव सामान्येन सत्त्वात्। यत्र च कर्त्रवृत्तिकर्मस्थफलं स कर्मस्थक्रियको यथा भिनत्तीत्यादिः। न हि काष्ठादेर्द्विधाभवनं कथमपि कर्तृनिष्ठं भवति। तेन जानातेरपि कर्तृस्थक्रियकत्वेन विषयताऽऽवरणभङ्गयोः कर्ममात्रनिष्ठत्वात् न तयोः फलत्वमपि तु विषयतया ज्ञानमेवेति।

हिन्दी—जो कि आवरण का भङ्ग अथवा विषयता फल है और व्यापार तो ज्ञान ही है—ऐसा कहा जाता है, वह कथन ठीक नहीं है। वैसा होने पर ( ज्ञा धातु का ) कर्मस्थक्रियकत्व सिद्ध हो जाएगा। इस व्यवस्था को हरि ने इस प्रकार कहा है—

'जहाँ ( कर्ता अथवा कर्म में ) क्रिया के द्वारा किया गया विशेष फल दिखलायी पड़ता है, वह क्रिया वहीं व्यवस्थित मानी जाती है।'

'दूसरों के मत में तो क्रिया की व्यवस्था शब्द ( धातु ) के द्वारा ही प्रकल्पित होती है।' इसका अर्थ है—

जहाँ कर्म अथवा कर्ता में क्रिया के द्वारा किया गया कोई विशेष देखा जाता है, वहीं क्रिया व्यवस्थित कही जाती है। यदि ऐसा माना जाय तो पचि आदि के कर्ता में भी श्रम आदि रूप विशेष के देखे जाने से यह ठीक नहीं है। और यह भी कि 'चिन्तयति' 'पश्यति' इत्यादि के कर्तृस्थभावकत्व की उपपत्ति नहीं होगी, क्योंकि कर्ता में क्रिया से विहित किसी भी विशेष का अभाव रहता है। इसीलिए कहते हैं— 'दूसरों के'। 'मत में' यह शेष है। जहाँ कर्तृकर्मसाधारणरूप फल शब्द के द्वारा प्रतिपादित होता है, वह कर्तृस्थभावक है। जैसे—'पश्यति घटम्' 'ग्रामं गच्छति' 'हसति' इत्यादि में। उसमें ( 'घटं पश्यति' में ) विषयभाव एवं समवाय सम्बन्ध से ज्ञान उभयनिष्ठ है। ( 'ग्रामं गच्छति' में ) संयोग भी उभयनिष्ठ है। इसी तरह हास भी। विषयता एवं आवरणभङ्ग ऐसे नहीं हैं। जहाँ कर्ता में वृत्तिशून्य कर्मस्थ फल हो, वह कर्मस्थभावक होता है। जैसे 'भिनत्ति' इत्यादि में। 'दो भाग होना' आदि किसी भी प्रकार से कर्तृनिष्ठ नहीं होता, ऐसा हेलाराज का मत है। उसी प्रकार आवरणभङ्ग एवं विषयता का भी कर्ममात्रनिष्ठ होने से 'जानाति' का भी कर्मस्थक्रियकत्व की प्राप्ति होगी। अधिक विस्तार से कोई लाभ नहीं।

कहने का आशय यह है कि वेदान्ती और नैयायिक 'ज्ञा' धातु का आवरणभङ्ग अथवा विषयभाव फल है और ज्ञान व्यापार है—ऐसा मानते हैं। यह ठीक नहीं है, क्योंकि ऐसा मानने पर कर्तृस्थक्रियक ज्ञा धातु कर्मस्थक्रियक बन जाएगा, जो कि अभीष्ट नहीं है। धातु के कर्तृस्थक्रियकत्व एवं कर्मस्थक्रियकत्व को लेकर हरि ने दो प्रकार के मतों का उल्लेख किया है। पहला तो यह है कि यदि क्रिया से विहित विशेष फल कर्ता में रहे तो वह धातु कर्तृस्थक्रियक होता है और कर्म में रहने पर कर्मस्थ-

क्रियक। दूसरा यह है कि क्रिया की व्यवस्था धातु के द्वारा निर्णीत होती है अर्थात् यदि धातु का फल कर्ता और कर्म दोनों में साधारण हो तो वह धातु कर्तृस्थक्रियक माना जायगा और यदि वह कर्ता की वृत्ति न होकर केवल कर्म में रहे तो धातु कर्मस्थक्रियक बन जाएगा। इन दोनों में भी पहला पक्ष मान्य नहीं है, क्योंकि वैसा मानने पर पचि आदि के कर्ता में भी श्रम आदि रूप-विशेष के पाए जाने से वैसे धातु कर्तृस्थक्रियक माने जाने लगेंगे और 'चिन्त्' 'दृश्' आदि धातु कर्ता में क्रियाकृत विशेष के अभाव में कर्मस्थक्रियक बन जायेंगे। ये दोनों स्थितियाँ अभीष्ट नहीं हैं। दूसरे मत में यह दोष नहीं रहेगा। 'ज्ञा' धातु का फल भी कर्ता एवं कर्म में साधारण रूप से रहेगा। अतः यह कर्तृस्थक्रियक है, लेकिन आवरणभङ्ग अथवा विषयता को उसका फल मानने पर उनकी स्थिति केवल कर्म में होने के कारण वह कर्मस्थक्रियक बनने लगेगा। अतः उक्त मत ठीक नहीं है।

( ६९ ) इच्छतेरिच्छानुकूलं ज्ञानमर्थः। अतीतानागतयोरपि बुद्ध्युपारोहात् फलशालित्वम्।

**व्याख्या**—इच्छतेरर्थविषयमाह—इच्छतेरित्यादिना। इच्छतेः इष्धातोः इच्छानुकूलम् इच्छारूपफलानुकूलसम्पाद्यम्। ज्ञानं ज्ञानरूपव्यापारः। अर्थः। अतीतानागतयोः भूतभविष्यत्कालसम्बद्धवस्तूनाम्। बुद्ध्युपारोहात् तात्कालिकबुद्धिविषयत्वेन। फलशालित्वम् इच्छारूपफलाश्रयत्वम्। अयमाशयः—इच्छतेः फलमिच्छा तदनुकूलं ज्ञानं व्यापारः। इच्छारूपफलाश्रयत्वं तु तेषामेव वस्तूनां सम्भवति, यानि हि सन्ति इच्छाकाले विद्यमानानि। तेन कथमतीतानागतयोरिच्छाविषयत्वमिति चेदुच्यते—बुद्धौ तेषामुपस्थितेरतीतानागतवस्तूनामपि इच्छाविषयत्वमिति।

**हिन्दी**—'इष्' धातु का इच्छा रूप फल के अनुकूल ज्ञान रूप व्यापार अर्थ है। भूतकालीन एवं भविष्यत्कालीन वस्तुएँ भी तात्कालिक बुद्धि का विषय बनने के कारण इच्छारूप फल के आश्रय बन जाते हैं।

( ७० ) पतिर्गमिवत्सकर्मकः। नरकं पतित इत्यादिप्रयोगात्। विभागजन्यसंयोगमात्रपरत्वेऽकर्मक इति।

**व्याख्या**—पतेरर्थविषयमाह—पतिरित्यादिना। पतिः पत्धातुः। गमिवत् गम्धातुवत्। सकर्मकः। 'नरकं पतितः' इत्यादिप्रयोगात् संयोगरूपफलस्याश्रयभूतनरकादेः कर्मसंज्ञात्वात्तदन्वितार्थबोधकत्वेन प्रयोगात्। विभागजन्यसंयोगमात्रपरत्वे विभागजन्यो यः संयोगस्तन्मात्रपरत्वे न तु तदनुकूलव्यापारपरत्वे संयोगस्यैव व्यापारत्वात्। अकर्मक इति।

**अयम्भावः**—पतिः विभागोत्पन्नसंयोगरूपफलानुकूलव्यापारार्थे सकर्मको भवति; यथा 'नरकं पतित' इत्यादौ। अत्र हि संयोगरूपफलाश्रयभूतनरकस्य कर्मसंज्ञा भवति, तदन्वितार्थवाचकत्वेन धातोरपि सकर्मकत्वमिति। स्पष्टमिदं 'द्वितीया श्रितातीत' ( २।१।२४ ) इति सूत्रे पतेः सकर्मकत्वम्। विभागोत्पन्नसंयोगमात्रार्थे तु पतेरकर्मकत्वमेव।

अत्र हि संयोग एव व्यापारः। विभागजन्यसंयोगमात्रार्थे धात्वर्थे फलांशाभावेन तदाश्रयभूतकर्मणोऽप्यभावात्तदनन्वितार्थवाचकत्वेन धातोरकर्मकत्वमिति।

**हिन्दी**—'पत्' धातु भी 'गम्' धातु की तरह सकर्मक होता है, क्योंकि 'नरकं पतितः' इत्यादि प्रयोग होते हैं। विभाग से उत्पन्न संयोग मात्र परक अर्थ में तो वह अकर्मक होता है।

कहने का आशय यह है कि विभाग से उत्पन्न संयोगरूप फलानुकूल व्यापार अर्थ में पत् धातु सकर्मक बनता है, क्योंकि संयोग रूप फल के आश्रय को कर्मसंज्ञा होती है। विभागजन्य संयोग मात्र अर्थ होने पर तो धात्वर्थ में फलांश के न रहने से उसके आश्रयभूत कर्म का भी अभाव होता है, अतः वह अकर्मक बनता है।

**(७१) कृञ उत्पत्तिव्यधिकरणस्तदनुकूलो व्यापारोऽर्थः। फलमात्रार्थकत्वे अकर्मकत्वापत्तिर्यतिवत्। किञ्च कर्मस्थभावकत्वाभावात् कर्मकर्तरि यगाद्यनापत्तिः। कृतिरित्यादौ धातूनामनेकार्थत्वाद्यत्नमात्रे वृत्तिः। यद्वा यत्नकृतिशब्दयोरपि व्यापारसामान्यवाचितैव। अत एव स्थालीस्थे यत्ने पचिना कथ्यमाने स्थाली पचति इति 'कारके' इति सूत्रे भाष्ये उक्तम्।**

**व्याख्या**--करोतेरर्थमाह—**कृञ** इत्यादिना। **कृञः** करोतिरूपकृधातोः। **उत्पत्तिव्यधिकरणः** उत्पत्तिभिन्नाधिकरणयुक्तः। **तदनुकूलः** तस्याः उत्पत्तेरुत्पत्तिरूपफलानुकूलः। **व्यापारः**। **अर्थः** धातुवाच्य इति। **फलमात्रार्थकत्वे** केवलयत्नार्थबोधकत्वे। **यतिवत्** यतिरिव। **अकर्मकत्वापत्तिः** अकर्मकत्वप्राप्तिः। करोतेरुत्पत्तिरूपफलाधिकरणः उत्पत्तिरूपफलानुकूलो व्यापारोऽर्थ इति पक्षे धातुरयं सकर्मकः उत्पत्तिरूपफलभिन्नाश्रयकर्तृस्थव्यापारवाचकत्वेन फलव्यधिकरणव्यापारवाचकत्वात्तस्य। पक्षेऽस्मिन्नसौ कर्मस्थक्रियकोऽपि भवति कर्त्रवृत्तिकर्मस्थफलबोधकत्वात्तस्य। तेन क्रियते घटः स्वयमेवेत्यस्यापि सिद्धिः। पक्षे धातुरसौ केवलयत्नरूपफलवाचको न तूपत्त्यनुकूलव्यापारस्य। तेनायमकर्मकः यत्नयत्नानुकूलव्यापारयोरुभयोरेव कर्त्राश्रयत्वात्। पक्षेऽस्मिन् किञ्च तथा च। **कर्मस्थभावकत्वाभावात्** कर्मस्थक्रियकत्वविरहात्। **कर्मकर्तरि** कर्मकर्त्रर्थे। **यगाद्यनापत्तिः** यगाद्यप्राप्तिः। करोतेः केवलयत्नमात्रवाचकत्वे यत्नस्य चेतनधर्मत्वेन घटादावचेतने तदभावात्कर्मस्थफलवाचकत्वाभावेन न कर्मस्थक्रियकत्वं तस्य, न च तेन कर्मकर्तरि कर्मवद्भावप्राप्तिः।

यदि हि कृधातोरुत्पत्तिरूपफलानुकूलव्यापारार्थकत्वे कृञो निष्पन्नस्य कृतिशब्दस्य कथं यत्नार्थावबोधः? इति चेदुच्यते—**कृतिः इत्यादौ** इति प्रयोगे। **धातूनां** क्रियावाचकशब्दानाम्। **अनेकार्थत्वात्** एकाधिकार्थावबोधकत्वात्। **यत्नमात्रे** यत्नार्थे। **वृत्तिः** व्यापारः। पक्षान्तरमाह—**यद्वि**त्यादिना। **यद्वा** इति पक्षे। **यत्नकृतिशब्दयोः** यत्नशब्दस्य कृतिशब्दस्य। **अपि च**। **व्यापारसामान्यवाचिता** मनोव्यापारभिन्नसामान्यव्यापारवाचकता। एव सामान्यव्यापारकथनस्य तु कस्मादपि धातोः सम्भवात्। यत्नशब्दस्य सामान्यव्यापारवाचकत्वे भाष्यं प्रमाणयति—**अत** इत्यादिना। **अत एव** यत्नस्य

सामान्यव्यापारवाचकत्वेनैव । **स्थालीस्थे** स्थालीगते । **यत्ने** सामान्यव्यापारे । **पचिना** पच्धातुना । **कथ्यमाने** उच्यमाने । **स्थाली पचति इति** इत्थम्प्रयोगः । **कारके सूत्रे भाष्ये** 'कारके' ( पा० सू० १।४।२३ ) इति सूत्रसम्बद्धभाष्ये । **उक्तं** कथितमिति ।

**हिन्दी**—कृञ् धातु का उत्पत्ति रूप फल से भिन्न अधिकरण वाला उत्पत्ति रूप फल का अनुकूल व्यापार अर्थ है ( इस अर्थ में यह सकर्मक होता है )। उसका फल मात्र अर्थ होने पर यति धातु की तरह अकर्मक हो जाएगा। ऐसा हो जाने पर कर्मस्थक्रियकत्व के अभाव में कर्मकर्ता में यक् आदि की प्राप्ति नहीं होगी। कृति इत्यादि में धातुओं के अनेकार्थक होने से यत्नमात्र में ही व्यापार होता है। अथवा 'यत्न' एवं 'कृति' शब्दों की भी सामान्य व्यापार की वाचकता ही मानी जाय। इसी कारण स्थाली से सम्बद्ध यत्न को पच् धातु से कहे जाने पर 'स्थाली पचति' कहा जाता है। यह बात 'कारके' ( पा० सू० १।४।२३ ) सूत्र के भाष्य में कही गयी है।

( ७२ ) यत्तु तार्किकाः—फलव्यापारौ धात्वर्थः। लकाराणां कृतावेव शक्तिर्लाघवान्न तु कर्तरि, कृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवात्, प्रथमान्तपदेनैव तल्लाभाच्च। आख्यातार्थे धात्वर्थो विशेषणम्, प्रकृत्यर्थप्रत्ययार्थयोः सहार्थत्वे प्रत्ययार्थस्यैव प्राधान्यात्। प्रथमान्तार्थे आख्यातार्थो विशेषणम्। अनुकूलत्वमाश्रयत्वञ्च संसर्गः। तथा च 'चैत्रः पचति' इत्यादौ विक्लित्त्यनुकूलव्यापारानुकूलकृतिमांश्चैत्र इति बोधः। 'रथो गच्छति' इत्यादौ 'रथस्याचेतनत्वात् यत्नशून्यत्वेन व्यापारे आश्रयत्वे वा' आख्यातस्य लक्षणा इत्याहुः।

**व्याख्या**—लकारार्थविषये नैयायिकमतमनुवदति—यद्वित्यादिना। **यत्** यदेव। **तु** हि। **तार्किकाः** नैयायिकाः। आहुरित्यनेनान्वयोऽस्य। तदनुवदति—**फलेत्यादिना**। **फलव्यापारौ** फलं व्यापारपरिणतिः व्यापारो यत्नश्च तौ। **धात्वर्थः** धातुवाच्यविषयः। **लकाराणां** लडादीनाम्। **कृतौ** यत्ने। **एव** नान्यत्र। **शक्तिः** वाचकता। **लाघवात्**। **न** नैव। **कर्तरि** यथा वैयाकरणानां सम्मतम्। तथा सति। **कृतिमतः** यत्नवतः। **कर्तृत्वेन**। **तत्र** कर्तरि। **शक्तौ** वाचकत्वे। **गौरवात्** कर्तुर्वाच्यत्वे कृतिमति अनन्तकृतिसमावेशात् तासां लकारवाच्यत्वमभिमन्तव्यम्। तेन कर्तुर्वाच्यत्वे महद् गौरवमिति। यद्यपि कृतेरेव वाच्यत्वेऽपि अनन्तकृतीनां वाच्यत्वं मन्तव्यमेव, तथापि तत्र कृतित्वजातेरेकत्वात्तस्य वाच्यत्वे लाघवमिति। **प्रथमान्तपदेन** प्रथमाविभक्त्यन्तपदद्वारा। **एव** हि। **तल्लाभात्** तस्य कर्तुर्लाभात् प्राप्तेः। **च**। **आख्यातार्थे** तिङन्तबोध्यार्थे कृतौ। **धात्वर्थः** धातुवाच्यफलव्यापाररूपार्थः। **विशेषणं** वैशिष्ट्यावबोधकम्। **प्रकृत्यर्थप्रत्ययार्थयोः** यतः प्रत्ययो विधीयते सा प्रकृतिः, यो हि प्रकृतौ संयोज्यते स प्रत्ययः, प्रकृतिरत्र धातुः प्रातिपदिकं वा, प्रत्ययस्तु तिङादिः अणादिर्वा। तत्तदर्थयोः। **सहार्थत्वे** समकालमेवोपस्थितौ। **प्रत्ययार्थस्य** प्रत्ययबोध्यार्थस्य। **एव** हि। **प्राधान्यात्** प्रधानभावेन। **प्रथमान्तार्थे** प्रथमाविभक्त्यन्तपदबोध्यकर्त्रर्थे। **आख्यातार्थः** आख्यातबोध्यकृत्यर्थः। **विशेषणम्** अप्रधानम्। नैयायिकमते हि लकाराणां कृतावेव शक्तिस्तेन

फलावच्छिन्नव्यापारानुकूलः कृत्यादिराख्यातार्थः। कृतौ कृतित्वजातिसम्भवात्तत्र लाघवम्। आख्यातस्य कर्त्रर्थे तु कृतिमतः कर्तृत्वेनानन्तकृतीनां वाच्यत्वाद् गौरवमित्येकः। यत्तु शाब्दिकाः आख्यातस्य कर्त्रर्थमधिवदन्ति तत्प्रकारान्तरेणापि न सिध्यति, तस्य प्रथमान्तार्थत्वेन लाभात् 'अनन्यलभ्यः शब्दार्थः' इति न्यायानुरोधाच्च। एवमेव धात्वर्थ आख्यातार्थे विशेषणं भवति यथा प्रत्ययार्थे प्रकृत्यर्थः। एवमेव आख्यातार्थः कृतिः प्रथमान्तार्थे कर्तरि विशेषणं भवति। तेन हि सर्वत्र शाब्दबोधे प्रथमान्तार्थस्य प्राधान्यम्। तत्र अनुकूलत्वं फलं प्रति व्यापारस्य व्यापारं प्रति कृतेरानुकूल्यम्। आश्रयत्वं कृतिं प्रति प्रथमान्तार्थस्याश्रयता। च संसर्गः सम्वन्धः भवतीति शेषः। फलानुकूलो भवति व्यापारो व्यापारानुकूलैव कृतिः। एवं कृतेराश्रयः कर्तेति फलव्यापारकृतिकर्तॄणामन्योन्यसम्वन्ध इति। तथा च तेनैव। 'चैत्रः पचति' इत्यादौ। विक्लित्त्यनुकूलव्यापारानुकूलकृतिमान् विक्लित्तिस्तण्डुलानां कोमलभावः फलं तदनुकूलः पचनव्यापारस्तदनुकूला पाककृतिस्तद्वान्। चैत्रः। इति। बोधः अर्थज्ञानम्। नन्वेवं कथं 'रथो गच्छती'त्यादौ अचेतनस्य रथस्य गमनकृतिमत्त्वमिति चेदुच्यते— 'रथो गच्छति' इत्यादौ। रथस्य। अचेतनत्वात् चैतन्यरहितत्वेन। यत्नशून्यत्वेन कृत्यभावतया। व्यापारे आख्यातस्य व्यापारेऽर्थे येन गमनानुकूलो यो व्यापारस्तद्युक्तो रथ इत्यर्थोऽवगम्यते। वा इति पक्षान्तरे। तथा मते सति अश्वासंयुक्ते वा स्थिते रथेऽपि रथो गच्छतीति प्रयोगापत्तिः स्यादिति-विकल्पार्थोऽयमारम्भः। आश्रयत्वे आख्यातस्य आश्रयतार्थे। आख्यातस्य तिङन्तपदस्य। लक्षणा इति आहुः कथयन्तीति तार्किका इत्यनेनान्वयोऽस्य।

**हिन्दी**—जो कि नैयायिक ( कहते हैं ) फल एवं व्यापार धातु के अर्थ हैं। लकारों की कृति ( यत्न ) में ही शक्ति है, क्योंकि उसी में लाघव है। कर्ता में नहीं, कृतिमान् का ही कर्तृत्व होने से अर्थात् कर्ता के कृतिमान् होने से उस कर्ता में लकारों की वाचकता मानने में गौरव है। प्रथमा विभक्ति अन्त्य में होने वाले पद के द्वारा भी उसकी प्राप्ति होती है। आख्यात के अर्थ में धातु का अर्थ विशेषण है, प्रकृत्यर्थ एवं प्रत्ययार्थ दोनों का सह अर्थ में प्रत्यय के अर्थ का ही प्राधान्य होता है। प्रथमान्तार्थ में आख्यात का अर्थ विशेषण होता है।

अनुकूलत्व एवं आश्रयत्व संसर्ग है। इसी तरह 'चैत्रः पचति' में 'विक्लित्ति ( कोमल होना ) के अनुकूल व्यापार के अनुकूल कृति से युक्त चैत्र है' ऐसा बोध होता है। 'रथ जाता है' इत्यादि में रथ के अचेतन होने के कारण यत्नशून्य होने से आख्यात का व्यापार अथवा आश्रयत्व अर्थ में 'लक्षणा होती है' ऐसा कहते हैं।

कहने का आशय यह है कि नैयायिकों का कहना है—फल एवं व्यापार ( फलावच्छिन्न व्यापार ) धातु का अर्थ है और आख्यात अर्थात् तिङन्त पद का अर्थ कृति यत्न है, न कि कर्ता; जैसा कि वैयाकरण मानते हैं। उनका कहना है कि एक तो आख्यात का अर्थ कर्ता मानने पर कर्ता के ही कृतिमान् होने से अनन्त कृतियों को लकारवाच्य मानना पड़ेगा, जो कि बहुत गौरव है। इसके विपरीत आख्यात का अर्थ

कृति मानने पर कृतित्व जाति के कारण लाघव पड़ता है। दूसरी बात यह है कि कर्ता तो प्रथमान्त पद से भी मिलता है और जो दूसरे शब्दों से भी प्राप्त हो सके वह शब्द का अर्थ नहीं होता। धातु का अर्थ कृति का विशेषण होता है और कृति अर्थ प्रथमान्तार्थ ( कर्ता ) का। इस तरह फल, व्यापार, कृति एवं कर्ता में एक शृङ्खला बन जाती है। फल एवं व्यापार तथा कृति के बीच अनुकूलत्व सम्बन्ध रहता है और कृति एवं कर्ता के बीच आश्रयत्व सम्बन्ध। अर्थात् फल के अनुसार ही व्यापार होता है और व्यापार के अनुसार कृति ( यत्न ) होता है और कर्ता कृति का आश्रय होता है। अतः 'चैत्रः पचति' से 'तण्डुल का कोमल होना जो फल है, उसके अनुकूल जो व्यापार होता है और उस व्यापार के अनुकूल जो कृति ( यत्न ) है, उससे युक्त चैत्र है' ऐसे अर्थ का बोध होता है। 'रथ जाता है' में रथ का अचेतन होने से, उसका यत्न शून्य होने से आख्यात के अर्थ का व्यापार में अथवा आश्रयत्व में लक्षणा की जाती है। आख्यात का अर्थ इस तरह व्यापार मानने पर 'रथ जाता है' का अर्थ होगा—'गमनानुकूल व्यापार से युक्त रथ'। लेकिन इसमें यह आपत्ति है कि इसकी अश्व से हीन अथवा खड़े हुए रथ का भी गमनानुकूल व्यापार से युक्त अर्थ होगा। अतः उससे बचने के लिए आख्यात का अर्थ आश्रयत्व माना गया। ऐसा मानने पर वाक्य का अर्थ होगा—'गमनानुकूल व्यापार की आश्रयता से युक्त रथ', जिसमें कि कोई दोष नहीं आता।

( ७३ ) तन्न। युष्मदस्मदोर्लकारेण सामानाधिकरण्याभावात् पुरुषव्यवस्थाऽनापत्तेः। 'पचन्तं चैत्रं पश्य' 'पचते देवदत्ताय देहि' इत्यादौ शतृशानजादीनामपि तिबादिवल्लादेशाविशेषेण तेभ्यः कृतिमात्रबोधापत्तेश्च। न चेष्टापत्तिराश्रयाश्रयिभावेन कर्मणि सम्प्रदाने च कृतेरन्वयादिति वाच्यम्; 'नामार्थयोरभेदान्वयो व्युत्पन्नः' इति व्युत्पत्तिभङ्गापत्तेः। ननु 'फलमुखगौरवं न दोषाय' इति न्यायेन शत्रादीनां कर्तरि शक्तिस्तिबादीनां कृतावेवेति चेन्न। स्यान्येव वाचको लाघवादादेशानां बहुत्वेन तेषां वाचकत्वे गौरवमिति हि तव मतम्। एवञ्च तिबादीनां शत्रादीनाञ्च स्थानिस्मारकतया लिपिस्थानीयत्वं, बोधकस्तु लकार एव। स च शत्राद्यन्ते कर्तरि शक्तस्तिबाद्यन्ते कथं कृतिं बोधयेत्; 'अन्यायश्चानेकार्थत्वमिति न्यायात्।

**व्याख्या**—लकारार्थः कृतिरिति यन्नैयायिकमतं तद्दूषणायोपक्रमते—तन्नित्यादिना। तत् लकारार्थः कृतिरेव न तु कर्ता, तत्र गौरवात्तस्य प्रथमान्तपदलाभाच्चेति यन्नैयायिकैरुक्तं तत्। **न** नैवोपयुक्तम्। **युष्मदस्मदोः** युष्मदस्मच्छब्दयोः। **लकारेण** लादेशेन सह। **सामानाधिकरण्याभावात्** समानाधिकरणभावविरहात्। **पुरुषव्यवस्थानापत्तेः** पुरुषयोर्मध्यमोत्तमयोर्या व्यवस्था 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' ( पा० सू० १।४।१०५ ) 'अस्मद्युत्तमः' ( पा० सू० १।४।१०७ ) इति सूत्रविहिता तस्या अनापत्तेरसिद्धेः। यदि हि लकाराणां कृतिरेवार्थस्तदा युष्मदस्मदोर्लकारेण सामाना-

धिकरण्याभावान्न हि सिध्यति पुरुषव्यवस्था। लकारेणाभिन्नवाच्यार्थे युष्मदस्मदोर्विद्यमानतायां गम्यमानतायामपि क्रमशः मध्यमोत्तमपुरुषयोः प्रयोग इति व्यवस्था। तत्र यदि लादेशानां कृतिरेवार्थः समर्थ्यते न तु कर्त्रादिस्तदा न हि तेन युष्मदस्मदोः सामानाधिकरण्यसम्भवो यतोऽनयोः सर्वनाम्नोरर्थः मध्यमोत्तमपुरुषौ तिङस्तु कृतिरेव। तेनोभयोर्भिन्नार्थत्वेन न तयोः समानाधिकरणतेति। **'पचन्तं चैत्रं पश्य' 'पचते देवदत्ताय देहि' इत्यादौ** इत्यादिप्रयोगे। **शतृशानजादीनां** शतृशानच्प्रभृतिप्रत्ययानाम्। **अपि च। तिबादिवत्** तिप्प्रभृतिविभक्तीनामिव। **लादेशविशेषेण** लकारस्थानीयादेशसामान्येन। **तेभ्यः** शतृप्रभृतिप्रत्ययेभ्यश्च। **कृतिमात्रबोधापत्तेः** कृत्यर्थमात्रप्राप्तेः। **च।** यदि हि लादेशानां तिबादीनां कृतिरेवार्थस्तदा लादेशाविशेषाणां शतृप्रभृतिप्रत्ययानामपि स एवार्थः स्यान्न तु कर्मसम्प्रदानादिः उपर्युक्तवाक्ययोः। ते च 'लटः शतृशानचावप्रथमासमानाधिकरणे' ( पा० सू० ३।२।१२४ ) इति सूत्रेण लकारस्य स्थाने एव भवन्ति, यथा तिबादयः। तथा सति 'पचन्तं देवदत्तम्' 'पचते देवदत्ताय' इत्यादीनामभेदसम्बन्धेनान्वयो न स्यात्सत्यपि समानायां विभक्तौ। **न** नैव। **च। इष्टापत्तिः** अभीष्टैव अभेदसम्बन्धाप्राप्तिः। **आश्रयाश्रयिभावेन** आश्रयः कृतिराश्रयी कारकादि तयोर्भावेन सम्बन्धेन। **तत्र। कर्मणि** कर्मकारके। **सम्प्रदाने** सम्प्रदानकारके। **च। कृतेः** तिङर्थभूतकृतेः। **अन्वयात्** अन्वयसम्भवात्। **मा भूत्** लकारस्य कृतावर्थे शत्रादीनामभेदसम्बन्धेनान्वयस्तस्यास्तु तत्र आश्रयाश्रयिभावेनान्वयभावात्। **इति** इत्थम्। **वाच्यं** कथनीयम्। **नामार्थयोः** प्रातिपदिकतदर्थयोः। **अभेदान्वयः** अभेदेनान्वयः। **व्युत्पन्नः** सिद्धः। **इति** इत्थम्। **व्युत्पत्तिभङ्गापत्तेः** व्युत्पत्तिविच्छेदात्। यद्युच्यते कृतिकारकयोराश्रयाश्रयिभावेनान्वय इति तन्न; तथा सति प्रातिपदिकतदर्थयोरभेदेनान्वयस्य व्युत्पत्तेर्विच्छेद एव स्याद्येन 'नीलो घट' इत्यादावपि तदसिद्धिः स्यात्। नामार्थयोर्भेदेन साक्षादन्वयोऽव्युत्पन्न एव। **ननु** इति प्रश्ने। **फलमुखगौरवं** फलमुखं फलमुद्दिश्य स्वीकृतं गौरवं फलं मुखे यस्य तादृशं गौरवमिति व्युत्पत्तेः। **न** नैव। **दोषाय** दूषणार्थम्। **इति। न्यायेन** न्यायपरम्परातः। **शत्रादीनां** शतृप्रभृतीनाम्। **कर्तरि** कर्तृप्रभृतिकारके। **शक्तिर्वाच्यता। तिबादीनां** तिप्प्रभृतिविभक्तीनाम्। **कृतौ** कृत्यर्थे। **एव** नान्यत्र। **इति। चेत्** कथ्यते चेत्। **न** नैवोपयुक्तं तत्। **स्थानी** स्थानिभूतो लकारः। **वाचकः** अर्थावबोधकः। **लाघवात्** लाघवेनैव प्रयोजनसिद्धेः। **आदेशानां** स्थानिप्रत्यनन्तरभूतानां तिबादीनाम्। **बहुत्वेन** स्थान्यपेक्षया बहुसङ्ख्यकत्वेन। **तेषामादेशानाम्। वाचकत्वे** अर्थावबोधकत्वे। **गौरवम्। इति** इत्थम्। **तव** भवतो नैयायिकस्यैव। **मतं** सिद्धान्तः। **एवम्** इत्थम्। **च** हि। **तिबादीनां** तिप्प्रभृतिविभक्तीनाम्। **शत्रादीनां** शतृप्रभृतिप्रत्ययानाम्। **च** अपि। **स्थानिस्मारकतया** स्थानिनो लस्य स्मारकतया। **लिपिस्थानीयत्वं** लिप्यन्तरवत्स्थानम्। **बोधकः** वाचकः। **तु** हि। **लकारः** लडादिः। **एव** हि। **सः** लकारः। **च** हि। **शत्राद्यन्ते** शतृप्रभृतिप्रत्यययोगे। **कर्तरि** कर्त्रर्थे। **शक्तः** वाचकत्वेनाभिमतः। **तिबाद्यन्ते** तिप्प्रभृतिप्रत्यययोगे। **कथं** केन न्यायेन। **कृतिं** कृत्यर्थम्। **बोधयेत्** जनयेत्। **अनेकार्थत्वम्** एकाधि-

कार्थवत्त्वम्। अन्यायः असङ्गतः। इति। न्यायात् न्यायसिद्धेः। न च फलमुद्दिश्य स्वीकृतं गौरवं न दोषायेति शत्रादीनां कारकमर्थस्तिबादीनां कृतिरर्थं इत्युच्यते चेत्तदपि न उभयोरेव लादेशत्वेन समानयोनित्वाद् भेदस्य तु लिपिस्थानीयमात्रत्वात्।

हिन्दी—वह कथन ठीक नहीं है, क्योंकि वैसा मानने पर युष्मद्, अस्मद् शब्दों का लकार के साथ सामानाधिकरण्य अर्थात् अभिन्न वाच्यार्थ के अभाव में ( मध्यम एवं उत्तम ) पुरुष की व्यवस्था की असिद्धि होती है और क्योंकि 'पचन्तं चैत्रं पश्य' 'पचते देवदत्ताय देहि' इत्यादि में शतृ, शानच् आदि का भी तिप् आदि की तरह लादेश से भिन्न न होने के कारण उनसे कृतिमात्र बोध की प्राप्ति होती है। न तो आश्रय एवं आश्रयी के भाव से कर्म और सम्प्रदान में भी कृति के अन्वय होने से इष्टापत्ति ही कहनी चाहिए। ऐसा मानने पर 'प्रातिपदिक एवं उसके अर्थ का अभेद अन्वय ही व्युत्पन्न होता है' ऐसी व्युत्पत्ति का भङ्ग होता है।

'फल है मुख में जिसका—ऐसा गौरव दोष के लिए नहीं होता' इस न्याय से 'शतृ आदि का कर्ता में शक्ति मानी जाय, तिप् आदि की शक्ति कृति में ही मानी जाए' ऐसा कहा जाय तो भी ठीक नहीं है; 'लाघवता के कारण स्थानी ही वाचक होता है, आदेशों के अनेक होने से उनके वाचकत्व में गौरव आता है' ऐसा आपका ही मत है। इसी तरह तिप् आदि शतृ आदि का भी स्थानी के स्मारक होने से लिपिभेद की तरह ही वर्णभेद मात्र है, बोधक तो लकार ही होता है। शतृ-प्रत्ययान्त में जो कर्ता अर्थ बतलाने वाला है, वह तिवाद्यन्त होने पर कृति अर्थ का बोध कैसे कराएँ। 'एक ही शब्द का अनेक अर्थ होना असङ्गत है' ऐसा न्याय भी है।

कहने का आशय यह है कि आख्यात का कृति अर्थ मानने पर कई आपत्तियाँ हो सकती हैं। ऐसा मानने पर युष्मद्, अस्मद् का लकार के साथ सामानाधिकरण्य नहीं हो पायेगा और पुरुष की व्यवस्था ही विच्छिन्न हो जायेगी। सामानाधिकरण्य तभी सम्भव होता है जब दोनों अर्थात् युष्मद्, अस्मद् शब्द एवं लकार का समान आश्रय हो। यह तभी बन पायेगा जब लकार का अर्थ कारक हो। लकार का अर्थ कृति मानने पर दोनों में सामानाधिकरण्य अर्थात् वाच्यार्थ का एकत्व नहीं बन पायेगा। पुरुष जो कि युष्मद्, अस्मद् शब्द का वाच्य है, कृति अर्थ के साथ कोई मेल नहीं रखता।

दूसरी आपत्ति यह है कि शतृ आदि प्रत्ययों का भी लकार के स्थान में होने के कारण कृति अर्थ हो जाने से उसका कारक के साथ अभेद सम्बन्ध नहीं बन पायेगा, जिससे कि दोनों का अन्वय हो सके। यह तभी सम्भव होगा, जब शतृ आदि का अर्थ कर्ता आदि हो। दोनों का आश्रयाश्रयिभाव से अन्वय की कल्पना उचित नहीं है, क्योंकि प्रातिपदिक एवं उसके अर्थ का 'अभेदसम्बन्ध' से ही अन्वय होता है—ऐसा न्याय है।

यह कहना भी ठीक नहीं है कि तिबादि का अर्थ कृति हो और शतृ आदि प्रत्ययों का अर्थ कारक हो। दोनों के लकार के स्थान में होने के कारण एक ही शब्द के दो

अर्थ नहीं हो सकते, क्योंकि नैयायिक के ही मत के अनुसार लकार ही वाचक है, न कि आदेश।

( ७४ ) ननु 'लः कर्मणि' इति सूत्रे कर्तृकर्मपदे भावप्रधाने। तथा च कर्तृत्वं कृतिः कर्मत्वं फलं तयोः शक्तौ सूत्रस्वरसः। कर्मप्रत्ययान्ते 'पच्यते ओदनो देवदत्तेन' इत्यादौ देवदत्तनिष्ठकृतिजन्यव्यापारजन्यविक्लित्तिमान् ओदन इति बोधः। 'कर्तरि कृत्' इति सूत्रे तु कर्तरि इति पदस्य धर्मिप्रधानत्वात् कृत्याश्रये शत्रादीनां शक्तिरिति चेन्न। 'कर्तरि कृदि'ति सूत्रे यत्कर्तृग्रहणं तस्यैव 'लः कर्मणि' इति सूत्रे चकारानुकृष्टत्वेन भावप्रधानत्वे सूत्रस्वरसाभावात्। शत्रादीनां स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वमिति न्यायेन स्थान्यर्थेन निराकाङ्क्षत्वात् 'आकाङ्क्षितविधानं ज्यायः' इति न्यायात् कर्तरि कृदित्यनेन शक्तिग्रहाभावात्। अन्यथा 'देवदत्तेन शय्यमाने आस्यमाने च यज्ञदत्तो गत' इत्यादौ भावे शानजनापत्तेः।

**व्याख्या**—लकारस्य कृत्यर्थत्वे सम्भाविदोषनिराकरणोपायान्तरमनूद्य तद्दूषयितुं प्रकरणमारभते—नन्वित्यादिना। **ननु लः कर्मणि इति सूत्रे** लः कर्मणि च भावे चाकर्मकेभ्यः' ( पा० सू० ३।४।६९ ) इति सूत्रे। **कर्तृकर्मपदे** 'कर्तरि कृत्' ( पा० सू० ३।४।६७ ) इत्यतोऽनुवृत्तं कर्तृपदं सूत्रस्थं कर्मपदं च ते। **भावप्रधाने** भावो धर्मः कर्तृत्वं कर्मत्वञ्च प्रधानो मुख्यो यस्मिन्निति। **तथा च** एवं हि। भावप्राधान्यादेव कर्तेति कर्तृत्वं कर्मेति कर्मत्वं यत्र **कर्तृत्वं कृतिः** यत्नः। **कर्मत्वं फलम्** इत्यर्थः। **तयोः** कर्तृत्वकर्मत्वयोः कृतिफलयोर्वा। **शक्तौ** वाचकत्वे कर्तृवाच्ये कृतेः कर्मवाच्ये फलस्य लकारवाच्यार्थत्वे। **सूत्रस्वरसः** सूत्रसङ्गतिः। **कर्मप्रत्ययान्ते** कर्मवाच्ये। **'पच्यते ओदनो देवदत्तेन' इत्यादौ** इत्यादिवाक्ये। **देवदत्तनिष्ठकृतिजन्यव्यापारजन्यविक्लित्तिमान्** देवदत्तः कर्तृभूतस्तन्निष्ठाया कृतिर्यत्नस्तज्जन्यस्तत्सम्भाव्यो यो व्यापारः पचनादिस्तज्जन्या या विक्लित्तिर्मृदुत्वं तद्वान्। **ओदनः**। **इति** इत्थम्। **बोधः** अभिज्ञानम्। **'कर्तरि कृत्' इति सूत्रे**। **तु** हि। **'कर्तरि' इति पदस्य** सूत्रे कर्तरि इति यत्पदं तस्य। **धर्मिप्रधानत्वात्** कर्तृतारूपधर्मयुक्तो यो धर्मी स प्रधानं यत्र तथात्वात् कर्तुः प्राधान्येन वाचकत्वात्। **कृत्याश्रये** कृतेराश्रयभूते कर्तरि। **शत्रादीनां** शतृप्रत्ययादीनाम्। **शक्तिः** वाचकता। **इति** इत्थमुच्यते। **चेत्**। **न** नैवोपयुक्तम्। **'कर्तरि कृत्' इति सूत्रे यत्** यदेव। **कर्तृग्रहणं** कर्तृपदोल्लेखः। **तस्य** कर्तरि इत्येतस्य। **एव** हि। **लः कर्मणि इति सूत्रे** 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रे। **चकारानुकृष्टत्वेन** 'कर्मणि च' इत्यत्र यो चकारस्तेनानुकृष्टत्वेन। **भावप्रधानत्वे** धर्ममुख्यत्वे। **सूत्रस्वरसाभावात्** सूत्रसङ्गतेरभावात्। **शत्रादीनां** शतृप्रभृतिप्रत्ययानाम्। **स्थान्यर्थाभिधानसमर्थस्य** स्थानिनो यस्य स्थाने आदेशव्यवस्था क्रियते स स्थानी तस्य योऽर्थस्तस्याभिधानं कथनं तत्समर्थस्य तत्क्षमस्य। **एव** हि। **आदेशत्वम्** आदेशभावः। **इति**। **न्यायेन**। **स्थान्यर्थेन** स्थानिनो योऽर्थस्तेन। **निराकाङ्क्षत्वात्** निरपेक्षत्वात्। **आकाङ्क्षितविधानं**

साकाङ्क्षार्थव्यवस्थोचिता । इति । न्यायात् । 'कर्तरि कृत्' इत्यनेन इति सूत्रेण । शक्तिग्रहाभावात् शत्रादीनामर्थनिर्णयासम्भवात् । अन्यथा यदि हि 'कर्तरि कृत्' इत्यनेन शत्रादीनां वाच्यार्थनिर्णयः स्वीक्रियते तदा । 'देवदत्तेन शय्यमाने आस्यमाने च यज्ञदत्तो गतः' इत्यादौ इत्यादिप्रयोगे । भावे भावार्थे । शानजनापत्तेः शानचोऽप्राप्तेः । अयम्भावः—यद्युच्यते 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति पाणिनीये सूत्रे कर्तृपदं कर्मपदञ्च भावप्रधानमिति कर्तृत्वे कर्मत्वरूपफले च शक्तिः । 'कर्तरि कृदि'ति सूत्रे कर्तृपदस्य धर्मिप्रधानत्वात् शत्रादीनां कृत्याश्रये शक्तिरिति चेन्न । 'लः कर्मणी'त्यत्र कर्तृपदं हि कर्तरि कृदित्यतोऽपकृष्यते चकारेण । तत्र यदि 'पाचको देवदत्तः' इत्यत्र विक्लित्त्यनुकूलभावनाश्रयाभिन्नो देवदत्त इति सामानाधिकरण्येनान्वयसिद्धये कर्तृपदमाश्रयबोधकं तदा सूत्रेऽस्मिन्नपि तथैव तत एव तदनुवृत्तेः । तेन कर्तरि कृदित्यत्रत्यं कर्तृपदमाश्रयपर 'लः कर्मणि' इत्यत्र तु तदेव कर्तृत्वपरमिति नोपपद्यते, तादृशवैषम्ये वीजाभावात् । तन्मते स्थानिन एव वाचकत्वेन स्थानिरूपलकारवाच्यकर्तृत्वमादाय विहितानां शत्रादीनां कर्तरि विधानाभाव एव अर्थान्तरविषयकाकाङ्क्षाया अनुदयात् । तथासति कर्तरि कृदिति कर्तरि शक्तिज्ञानासम्भवः । निराकाङ्क्षितस्य विधानेन कर्तरि कृदिति शक्तिग्रहे भावे शानचोऽप्राप्तिः स्यादिति ।

**हिन्दी**—'लः कर्मणि च भावे चाकर्मकेभ्यः' सूत्र में कर्ता एवं कर्म पद भावप्रधान हैं और कर्तृत्व का अर्थ कृति ( यत्न ) है तथा कर्मत्व का अर्थ फल । अतः उन दोनों कृति तथा फल में लकार की शक्ति मानना ही उक्त सूत्र की सङ्गति है । कर्मप्रत्ययान्त अर्थात् कर्मवाच्य में 'पच्यते ओदनो देवदत्तेन' में देवदत्तनिष्ठ जो कृति ( कर्तृत्व ) है, उससे जन्य जो व्यापार है, उससे जन्य विक्लित्ति ( कोमलता ) युक्त है ओदन—ऐसा बोध होता है । 'कर्तरि कृत्' सूत्र में तो कर्तरि पद का धर्मिप्रधान ( अर्थात् कर्तृता रूप जो धर्म है, उससे युक्त धर्मी कर्ता, उसका प्रधान रूप से वाचक ) होने से 'शतृ आदि का कृति के आश्रय में शक्ति है' इत्यादि कथन उपयुक्त नहीं है । 'कर्तरि कृत्' सूत्र में जो कर्तृपद है, उसका 'लः कर्मणि···' सूत्र में चकार के द्वारा अनुवृत्त होने के कारण भावप्रधान होने में सूत्र की सङ्गति का अभाव है । 'शतृ आदि प्रत्ययों का स्थानी अर्थ के अभिधान में समर्थ का ही आदेशत्व होता है' इस न्याय से स्थानी के अर्थ के द्वारा ( अर्थान्तर के लिए ) निराकाङ्क्ष होने से 'आकांक्षित का विधान ही श्रेष्ठ होता है', इस न्याय से 'कर्तरि कृत्' सूत्र से शक्तिग्रह सम्भव नहीं होता । अन्यथा 'देवदत्तेन शय्यमाने आस्यमाने च यज्ञदत्तो गतः' इत्यादि में भाव में शानच् की प्राप्ति नहीं होती ।

( ७५ ) ननु नामार्थयोरभेदान्वयानुरोधात् शतृशानजादीनां कर्तरि शक्तिरिति चेन्न । पचतिकल्पं पचतिरूपं देवदत्तः इत्याद्यनुरोधेन तिङ्क्ष्वपि कर्तुरेव वाच्यत्वौचित्यात् ।

**व्याख्या**—पूर्वोक्तमेव पुनः पर्यालोचयति—नन्वित्यादिना । ननु नामार्थयोः प्रातिपदिकतदर्थयोः । अभेदान्वयानुरोधात् अभेदेन अभेदसम्बन्धेन योऽनुरोधस्तस्मात् । शतृ-

**शानजादीनां** शतृशानच्प्रभृतिप्रत्ययादीनाम्। **कर्तरि** कर्त्रर्थे। **शक्तिर्वाचकता। इति। चेत्। न नैवोपयुक्तम्। पचतिकल्पं** ईषत्पचति। **पचतिरूपं** साधुपचति। **देवदत्तः। इत्याद्यनुरोधेन** इत्यनुरोधवशात्। **तिङ्क्षु** तिवादिषु। **अपि च। कर्तुः। एव हि। वाच्यत्वौचित्यात्** वाच्यत्वस्य वाच्यार्थत्वस्य औचित्यात् उभयत्र सामानाधिकरण्यस्य तुल्यत्वादिति। यदि हि नामार्थयोरभेदान्वयानुरोधेन शत्रादीनां कर्तर्येव तिवादीनां तु कृतावेव शक्तिः स्यादित्युच्यते चेत्तदपि न पचतिकल्पं पचतिरूपं देवदत्त इत्यादौ तिङर्थत्वेन कर्तुर्ग्रहणे एवान्वयः सम्भवति न तु कृत्यर्थग्रहणे।

**हिन्दी**—नाम और अर्थ के अभेदान्वय के अनुरोध से शतृ, शानच् आदि की कर्ता में शक्ति मानी जाय ( तिङ् की कृति में ही )—यह भी ठीक नहीं है। 'देवदत्तः पचतिकल्पं' ( थोडा पकाता है ) 'पचतिरूपम्' ( अच्छा पकाता है ) इत्यादि के अनुरोध से तिङ् में भी कर्ता का ही वाच्यत्व मानना उचित है ( कृति अर्थ मानने पर यहाँ अन्वय नहीं हो पाएगा। )

( ७६ ) किञ्च कृतिवाच्यत्वे 'रथो गच्छति' इत्यादावाश्रये लक्षणास्वीकारे गौरवापत्तिरभिहितत्वानभिहितत्वव्यवस्थोच्छेदापत्तिश्च। न च 'अनभिहिते' इति सूत्रेऽनभिहितसङ्ख्याके इत्यर्थवर्णनमिति वाच्यम्; कृत्तद्धितसमासैः सङ्ख्याभिधानस्याप्रसिद्धत्वात्। किञ्च यत्नोऽपि व्यापारसामान्यं धातुत एव लभ्यते, स्थालीस्थे यत्ने पचिना कथ्यमाने स्थाली पचति इति कारके इत्यधिकारसूत्रे भाष्यप्रयोगात् अनन्यलभ्यस्यैव शब्दार्थत्वात् कृतौ शक्तेरुक्तिसम्भव एव नेत्यलम्।

**व्याख्या**—लकारस्य कृत्यर्थत्वे रथो गच्छतीत्यादौ लक्षणास्वीकारेऽपि सम्भाविदोषमाह—**किञ्चेत्यादिना। किञ्च** एवमेव। लकारस्य केवलम्। **कृतिवाच्यत्वे** कृत्यर्थत्वे। **'रथो गच्छति' इत्यादौ आश्रये** आख्यातस्याश्रयेऽर्थे। **लक्षणास्वीकारे** लक्षणात्मकप्रयोगसमर्थने। **गौरवापत्तिः** गौरवम्। एवमेव तथा सति सर्वदा कारकस्य तिङाऽकथितत्वेन। **अभिहितत्वानभिहितत्वव्यवस्थोच्छेदापत्तिः** अनभिहिते कर्मणि, द्वितीया कर्तरि तृतीया अभिधानञ्च तिङादिभिः। अभिहिते कर्तरि कर्मणि च प्रथमेति या व्यवस्था तस्योच्छेदापत्तिः। **चकार** उभयसमुच्चयार्थकः। **न च** नैवाऽपि। **'अनभिहिते' इति सूत्रे** लकृत्तद्धितसमासैरनभिहिते इत्याशयके पाणिनीये ( २।३।१ ) सूत्रे। अनभिहिते इत्येतस्य **अनभिहितसङ्ख्याके** अकथितसङ्ख्याके कारके। **इति** इत्थम्। **अर्थवर्णनम्** अर्थकथनम्। **इति। वाच्यं** कथनीयम्। **कृत्तद्धितसमासैः** अभिधायकेषु तिङ्कृत्तद्धितसमासेषु कृता तद्धितेन समासेन च। **सङ्ख्याभिधानस्य** सङ्ख्याकथनस्य। **अप्रसिद्धत्वात्** अख्यातत्वात्। **किञ्च** एतदतिरिक्तम्। **यत्नः** कृतिः। **अपि च। व्यापारसामान्यं** व्यापारसामान्यमेव। **धातुत एव। लभ्यते** प्राप्यते। **स्थालीस्थे** स्थालीगते। **यत्ने** कृतौ। **पचिना** पच् धातुना। **कथ्यमाने** अभिधीयमाने। **स्थाली पचति इति। 'कारके'** इत्यधिकारसूत्रे **'कारके'** (पा० सू० १।४।२३) इति यत्पाणिनीयमधिकारसूत्रं तस्मिन्।

**भाष्यप्रयोगात्** भाष्ये तथावचनात् । **अनन्यलभ्यस्य** कुतोऽप्यन्यस्मादप्राप्यस्य । **एव हि** । **शब्दार्थत्वात्** शब्दवाच्यत्वात् । **कृतौ** कृत्यर्थे । **आख्यातस्य शक्तेः** वाचकत्वस्य । **उक्तिसम्भवः** कथनसम्भावना । **एव हि** । **न** नैव । **इत्यलं नो फलमतिविस्तरेणेति** ।

**हिन्दी**—इसी तरह यदि लकारों का कृतिवाच्यत्व ( लकारों का अर्थ कृति है, न कि कारक ) मान लेने पर 'रथो गच्छति' इत्यादि में आश्रय में भी लक्षणा को स्वीकार करने में भी गौरव आ जाता है । इतना ही नहीं, ऐसा मानने पर अभिहितत्व एवं अनभिहितत्व की व्यवस्था का भी उच्छेद हो जाता है । न तो 'अनभिहिते' सूत्र में जहाँ सङ्ख्या का अभिधान नहीं होता, वहाँ अर्थात् 'अकथित सङ्ख्या वाले कारक में ऐसे अर्थ का कथन है' कहना ही उचित होता है, क्योंकि कृत्, तद्धित एवं समास से सङ्ख्या का अभिधान अप्रसिद्ध है ।

इसी तरह यत्न ( कृति ) भी व्यापारसामान्य होने के कारण धातु से ही पाया जा सकता है । स्थालीगत यत्न को पच् धातु से कहने हेतु 'स्थालीं पचति' आदि का 'कारके' ( पा० सू० १।४।२३ ) इस अधिकारसूत्र के भाष्य में प्रयोग मिलता है । जो दूसरे शब्द से न पाया जा सके, वही शब्द का अर्थ है और कृति शक्ति के कथन की सम्भावना ही नहीं है । बस इतना ही ।

'कृति' को आख्यातार्थ मानने में जो आपत्तियाँ है, उनमें से प्रथम यह है कि ऐसा मानने पर 'रथो गच्छति' आदि प्रयोग सिद्ध नही होंगे । रथ के अचेतन होने से वह यत्न का आश्रय नहीं बन सकता । उसमें लकार का आश्रय अर्थ में लक्षणा मानने में भी गौरव होगा । ऐसा मानने पर कारक का अभिहित होना एवं अनभिहित होना आदि जो व्यवस्था है, उसका भी विच्छेद हो जाता है । 'अनभिहित' का अर्थ अकथित सङ्ख्या भी माना नहीं जा सकता, क्योंकि कृदन्त, तद्धितान्त एवं समास के सङ्ख्या का अभिधान प्रसिद्ध नहीं है, यह तो केवल तिङ्मात्र का है । तीसरी बात यह है कि यत्न भी व्यापार-सामान्य ही है, जो कि धातु से उपलब्ध होता है । जैसे स्थाली से सम्बद्ध यत्न पच् धातु से कहे जाने पर 'स्थालीं पचति' इत्यादि प्रयोग होता है । शब्द का अर्थ तो वही होता है, जो दूसरे शब्द से लभ्य न हो । 'यत्न' के धातुलभ्य होने के कारण वह आख्यात का अर्थ कैसे होगा ? इन सबसे यह सिद्ध है कि कृति में आख्यात की शक्ति का अभिधान सम्भव नहीं हैं ।

( ७७ ) आख्यातार्थे धात्वर्थो विशेषणमित्यस्य निराकरणमवशिष्यते । तथाहि—प्रकृत्यर्थप्रत्ययार्थयोः सहार्थत्वे प्रत्ययार्थस्यैव प्राधान्यमित्युत्सर्गः । 'पाचकः' 'औपगवः' इत्युदाहरणम् । पाकक्रियाश्रयः उपगुसम्बन्ध्यभिन्नापत्यमिति प्रत्ययार्थस्य प्राधान्यं तयोरर्थे । तत्रापि प्रत्ययवाच्यस्यैवार्थस्य प्राधान्यम् । द्योत्यस्य त्वप्राधान्यमेव । यथा 'अजा' इत्यत्र स्त्रीत्वविशिष्टपशुविशेष इति बोधः । तस्योत्सर्गस्य भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' इति यास्कवचनमपवादः । तेनाख्याते तिङन्ते क्रियाया एव प्राधान्यं शाब्दबोधे न प्रत्ययार्थस्य इति बोध्यम् ।

यत्तु आख्यातपदेन तिङ्मात्रग्रहणाद् भावप्रधानमित्यत्र षष्ठीतत्पुरुषाश्रयणात् प्रत्ययार्थप्राधान्यमेव फलति इति चेत्तन्न। 'आख्यातमाख्यातेन क्रियासातत्ये' इति सूत्रे आख्यातपदेन तिङन्तस्यैव ग्रहणात्, उत्सर्गेणैव निर्वाहे यास्ककृतापवादवचनवैयर्थ्यापत्तेश्च। तस्माद् भावप्रधानमित्यत्र बहुव्रीहिः। आख्यातपदेन तिङन्तस्यैव ग्रहणमित्यलम्।

**व्याख्या**—इत्थमाख्यातार्थः कृतिरिति नैयायिकमतं युक्त्या सप्रपञ्चं निराकृत्य धात्वर्थ आख्यातार्थे विशेषणमिति तन्मतं खण्डयितुमुपक्रमते—**आख्यातार्थ** इत्यादिना। **आख्यातार्थे** आख्यातस्य तिङः अर्थे। **धात्वर्थः** धातुसंसूचितफलव्यापाररूपार्थः। **विशेषणम्** अप्रधानम्। **इत्यस्य** इति नैयायिकमतस्य। **निराकरणं** खण्डनम्। **अवशिष्यते** कर्तव्यतयाऽवशिष्टं भवति तत्सम्प्रति क्रियत इत्याशयः। **तथाहि। प्रकृत्यर्थप्रत्ययार्थयोः** प्रकृतिबोध्यो योऽर्थो यश्च प्रत्ययबोध्यस्तयोः। **सहार्थत्वे** समकालमेवोपस्थितौ। **प्रत्ययार्थस्य** प्रत्ययबोध्यस्यार्थस्य। **एव हि। प्राधान्यं** विशेष्यता। **इति** एतादृशः। **उत्सर्गः** सामान्यनियमः। **'पाचकः' 'औपगवः'** इति अस्योत्सर्गस्य **उदाहरणं** निदर्शनम्। तत्र प्रत्ययार्थस्य प्राधान्यं निर्वक्ति—**पाकेत्यादिना**। पाचक इत्यत्र **पाकक्रियाश्रयः** पच्धात्वर्थभूतपाकक्रियाया आश्रयः आधारः इति कर्त्रर्थे ण्वुलः। **औपगवः** इत्यत्र। **उपगुसम्बन्ध्यभिन्नापत्यम्** उपगुरित्येतस्य यदभिन्नमपत्यम् इति अपत्यार्थेऽणः इति। **तयोः** पाचकोपगवयोः। **अर्थे। प्रत्ययार्थस्य** प्रत्ययभूतस्य ण्वुलः अणश्च योऽर्थस्तस्य। **प्राधान्यं** विशेषता। **इति**। तत्र वैशिष्टचमाह—**तत्रापीत्यादिना**। **तत्रापि** प्रत्ययार्थप्राधान्येऽपि। **प्रत्ययवाच्यस्य** योऽर्थः प्रत्ययवाच्यो भवति तस्य। **एव। अर्थस्य प्राधान्यं** विशेष्यता भवति यत्र प्रकृत्यर्थस्तस्य विशेषणतामायाति। **द्योत्यस्य** योऽर्थः प्रत्ययद्योत्यो भवति न तु तद्वाच्यस्तस्य। **तु** तद्विपरीतम्। **अप्राधान्यं** गौणम्। **एव न तु** प्राधान्यमिति। **यथा। 'अजा' इत्यत्र स्त्रीत्वविशिष्टपशुविशेषः** 'आ' प्रत्ययबोध्यं यत्स्त्रीत्वं तद्विशिष्टस्तद्विशेषणीभूतः पशुविशेषः। **इति** इत्थम्। **बोधः** ज्ञानम्। नात्र प्रत्ययार्थस्य प्राधान्यमपि तु पशुविशेषार्थं प्रति गौणत्वमेव। **तस्य** पूर्वोक्तस्य। उत्सर्गस्य प्रत्ययार्थस्य वाच्यत्वे तत्प्राधान्यमित्येतस्य **'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि'** आख्याते हि भावस्य क्रियायाः प्राधान्यं भवति नाम्नि तु सत्त्वस्येति। **इति** इत्थम्। **यास्कवचनं** यास्कस्तदाख्यो निरुक्तकारस्तस्य वचनं कथनम्। **अपवादः** विशेषनियमः। पर्यवसितमाह—**तेनेत्यादिना**। **तेन** यास्कवचनविरोधेन। **तिङन्ते** तिङ्प्रत्ययान्तरूपे। **आख्याते** पचतीत्यादौ। **क्रियायाः** भावस्य। **एव न तु** प्रत्ययार्थस्य। **प्राधान्यं** विशेष्यता। **शाब्दबोधे** शाब्दज्ञानप्रकरणे। **न** नैव। **प्रत्ययार्थस्य** तिङादिप्रत्ययार्थस्य कृतिरूपस्य कर्तृरूपस्य वा। **इति** इत्थम्। **बोध्यं** ज्ञेयम्। **यत्** यदेव। **तु** हि। **आख्यातपदेन** भावप्रधानमाख्यातमित्यत्रत्येनाख्यातपदेन। **तिङ्मात्रग्रहणात्** तिङ्प्रत्ययमात्रग्रहणेन न तु तिङन्तपदग्रहणेन। **'भावप्रधानम्'** इत्यत्र इति पदे। **षष्ठीतत्पुरुषाश्रयणात्** भावस्य प्रधानमिति षष्ठीतत्पुरुषमाश्रित्य। **प्रत्ययार्थप्राधान्यं** प्रत्ययस्य तिङो योऽर्थस्तस्य प्राधान्यं मुख्यता। **एव हि। फलति** सिध्यति। **इति** इत्थमुच्यते। **चेत्। तत्** तादृशं कथनम्। **न** नैवोप-

युक्तम् । यद्धि नैयायिका भावप्रधानमाख्यातमित्यत्रत्यस्य आख्यातपदस्य तिङ्मात्रमर्थमादाय भावप्रधानमित्यत्र भावस्य प्रधानमिति षष्ठीतत्पुरुषसमासमाश्रित्य भावनिरूपितप्रधानतेति भावप्रधानमित्यस्यार्थमादाय तिङः क्रियाद्योत्यं प्राधान्यमिति वदन्ति, तन्नोपयुक्तम् । तस्यानुपयुक्तत्वे हेतुं निर्दिशति—**आख्यातमित्यादिना । 'आख्यातमाख्यातेन क्रियासातत्ये'** इति सूत्रे । **गणसूत्रे** मयूरव्यंसकादिगणपठिते । **आख्यातपदेन ।** तिङन्तस्य तिङन्तपदस्य । एव हि न तु तिङ्प्रत्ययस्य । **ग्रहणात्** व्यवहारात् । नैतावन्मात्रमपितु **उत्सर्गेण** सामान्यनियमेन । **एव हि । निर्वाहे** कार्यसिद्धौ । **यास्ककृतापवादवचनवैयर्थ्यापत्तेः** यास्केन निरुक्तकारेण तदाख्येन कृतं विहितं यदपवादवचनं विशेषनियमवाक्यं भावप्रधानमाख्यातमिति तस्य वैयर्थ्यापत्तेः व्यर्थतासिद्धेः । **च । तस्मात्** तेन हेतुना । **भावप्रधानम्** इत्यत्र । **बहुव्रीहिः** भावः प्रधानं यत्रेति बहुव्रीहिसमासः । **आख्यातपदेन** तत्रत्याख्यातपदेन । **च । तिङन्तस्य** तिङन्तरूपस्य न तु तिङ्मात्रस्य । **एव हि । ग्रहणं** व्यवहारः । **इत्यलम्** एतावदेव कथनं पर्याप्तमिति ।

आख्यातार्थे धात्वर्थो विशेषणमिति यदुच्यते नैयायिकैस्तदपि नोपयुक्तम् । प्रकृतिप्रत्यययोः सहार्थत्वे प्रत्ययार्थस्य विशेष्यत्वमिति सामान्यो नियमः । पाचक इत्यत्र पाकक्रियाश्रयत्वेन प्रत्ययार्थस्यैव प्राधान्यमपि । किन्तु तत्रापि यदि प्रत्ययार्थो वाच्यो भवति तदैव तस्य प्राधान्यं न तु द्योत्यस्य । तेन 'अजा' इत्यत्र न टाप्प्रत्ययद्योत्यस्य स्त्रीत्वस्य प्राधान्येन पशुविशेषवृत्तिस्त्रीत्वमित्येव बोधः अपि तु प्रकृत्यर्थप्राधान्येन स्त्रीत्वविशिष्टपशुविशेषस्य बोधः । नियमस्यास्य भावप्रधानमाख्यातमिति यास्कवचनमपवादः । तेन सिद्धचति यत्तिङन्तरूपे आख्याते भावस्य ( क्रियायाः ) एव प्राधान्यं न तु प्रत्ययार्थस्य । यच्च नैयायिकाः आख्यातपदेन तिङ्प्रत्ययमात्रमर्थमादाय भावप्रधानमित्यत्र बहुव्रीहिस्थले षष्ठीतत्पुरुषमाश्रित्य भावस्य प्रधानमिति विगृह्य भावद्योतितप्राधान्यमाख्यातमिति कल्पयन्ति तदपि नैवोपयुक्तम् । प्रथमतस्तु 'आख्यातमाख्यातेन क्रियासातत्ये' इति मयूरव्यंसकादिगणपाठपठितगणसूत्रे आख्यातपदेन तिङन्तस्यैव ग्रहणं कृतमस्ति, न तु तिङ्प्रत्ययमात्रस्य । यदि हि यास्कस्यापि प्रत्ययार्थस्यैव प्राधान्यमभिमतं स्यात्तदा उत्सर्गेणैव निर्वाहे विशेषवचनस्य व्यर्थताऽऽपद्येत । तेन आख्यातस्य तिङन्तमेवार्थस्तत्र च क्रियाया एव प्राधान्यमिति पर्यवस्यति ।

हिन्दी—'आख्यातार्थ में धात्वर्थ विशेषण होता है' इसका निराकरण करना शेष रह जाता है । जैसे कि 'प्रकृत्यर्थ एवं प्रत्ययार्थ की एक साथ उपस्थिति में प्रत्ययार्थ की ही प्रधानता होती है' यह सामान्य नियम ( उत्सर्ग ) है । 'पाचकः' 'औपगवः' आदि इसके उदाहरण हैं । इसमें 'पाक क्रिया का आश्रय' 'उपगु सम्बन्धी अभिन्न सन्तान' ऐसा उन दोनों के अर्थ में प्रत्ययार्थ की प्रधानता है । उसमें भी प्रत्ययवाच्य अर्थ की ही प्रधानता होती है, द्योत्य अर्थ की तो अप्रधानता ही । जैसे 'अजा' इसमें स्त्रीत्वविशिष्ट पशु का ही बोध होता है ( न कि पशु-विशेष वृत्ति स्त्रीत्व का ) । उस उत्सर्ग ( सामान्य नियम ) का आख्यात भावप्रधान होता है और 'सत्त्वप्रधान नाम' यह

यह यास्क का वचन अपवाद है। इस कारण तिङन्त रूप आख्यात में शाब्दबोध में क्रिया की ही प्रधानता होती है, न कि प्रत्ययार्थ की—ऐसा जान लेना चाहिए।

जो कि आख्यात पद से तिङ्मात्र ( न कि तिङन्त ) का ग्रहण होने से भाव-प्रधान पद में षष्ठीतत्पुरुष का आश्रय मानने पर उसमें भी प्रत्ययार्थ की प्रधानता ही फलती है, ऐसा कहा जाता है—वह ठीक नहीं है। 'आख्यातमाख्यातेन क्रियासातत्ये' इस ( गण ) सूत्र में आख्यात पद से तिङन्त पद का ग्रहण किया जाता है, तिङ्मात्र का नहीं। उत्सर्ग से ही काम हो जाने पर यास्क द्वारा किया गया अपवाद-वचन की व्यर्थता आ जाएगी। इस कारण भावप्रधान इसमें बहुव्रीहि है। आख्यात पद से तिङन्त पद का ही ग्रहण होता है। इतना ही बहुत है।

( ७८ ) प्रथमान्तार्थमुख्यविशेष्यको बोधस्तार्किकमते इति निराकर्तुमवशिष्यते। तथाहि शाब्दिकमते 'पश्य मृगो धावति' इत्यादौ मृगकर्तृकं धावनं दृशिक्रियायाः कर्म। प्रधानं दृशिक्रिया एव। तथा च मृगकर्तृकधावनकर्मकं प्रेरणाविषयीभूतं त्वत्कर्तृकं दर्शनमिति बोधः। तत्र मृगो धावति इत्यत्र विशेष्यभूतधावनरूपार्थवाचकस्य धावति इत्यस्य प्रातिपदिकत्वाभावात् न द्वितीया। कर्मत्वं तु संसर्गमर्यादया भासते। एवं पचति, भवति इत्यत्र पचिक्रियाकर्तृका सत्ता इति बोधः। पच्यादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्तीति भूवादिसूत्रस्थभाष्यात्। उक्तञ्च हरिणा—

सुबन्तं हि यथाऽनेकतिङन्तस्य विशेषणम्।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम् ॥ इति।

**व्याख्या**—शाब्दबोधे प्रथमान्तार्थमुख्यविशेष्यको बोध इति तार्किकमतं निराकर्तुमुपक्रमते—**प्रथमेत्यादिना**। **तार्किकमते** नैयायिकमते। शाब्दबोधे **प्रथमान्तार्थमुख्यविशेष्यकः** प्रथमान्तस्य प्रथमाविभक्त्यन्तपदस्य योऽर्थस्तन्मुख्यविशेष्यको मुख्यत्वेन विशेष्यीभूतः। **बोधः** शाब्दबोधः। **इति** एतादृशं मतम्। **निराकर्तुं** दूषयितुम्। **अवशिष्यते** सम्प्रति कर्तव्यत्वेन वर्तत इति। **तथाहि** इति उपस्थापने। **शाब्दिकमते** वैयाकरणनये। **'पश्य मृगो धावति' इत्यादौ** इत्यादिवाक्ये। **मृगकर्तृकं** मृगेण कर्तृत्वेन सम्पादितम्। **धावनं** सुत्वरितगमनम्। **दृशिक्रियायाः** पश्येति दृश्धातुसम्पन्नाख्यातस्य। **कर्म** फलाश्रयः इति। **प्रधानं** मुख्यम्। **तु**। **दृशिक्रिया** दृशिधातुजनितक्रिया। **एव**। इति। **तथा च** तथा हि। **मृगकर्तृकधावनकर्मकं** मृगेण कर्तृत्वेन सम्पादितं यद्धावनं तत्कर्मभूतम्। **प्रेरणाविषयीभूतम्** प्रेरणाया विषयत्वेन गृहीतम्। **त्वत्कर्तृकं** त्वया कर्तृत्वेन सम्पादितम्। **दर्शनं** विलोकनम्। **इति** इत्थम्। **बोधः** ज्ञानम्। **तत्र** तस्मिन्। **मृगो धावति इत्यत्र**। **विशेष्यभूतधावनरूपार्थवाचकस्य**—विशेष्यभूतः प्राधान्येन विशेष्यतयोपस्थितो यो **धावनरूपः अर्थ**स्तस्य **वाचक**स्याभिधायकस्य। **'धावति' इत्यस्य**। **प्रातिपदिकत्वाभावात्** प्रत्ययान्तत्वेन प्रातिपदिकसंज्ञाभावात्। कर्मत्वेऽपि **न द्वितीया** द्वितीया विभक्तिः। तथापि तत्र **कर्मत्वम्**। **तु** हि। **संसर्गमर्यादया** पश्येति पदे

विद्यमानाकाङ्क्षया। **भासते** द्योतते। आकाङ्क्षा हि पारिभाषिकत्वेन संसर्गमर्यादेत्युच्यते। 'एकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते' इति वचनात्। मृग इत्यत्र तु प्रातिपदिकत्वेऽपि अप्राधान्यान्न द्वितीयेति। तत्र निदर्शनान्तरमाह—**एवमित्यादिना**। **एवम्** इत्थमेव। **'पचति भवति'** इत्यत्र इति वाक्ये। **पचिक्रियाकर्तृका** पचिक्रियया कर्त्रीत्वेन सम्पादिता। **सत्ता** पचनक्रियासम्वद्धसत्ता। **इति। बोधः** ज्ञानम्। उक्तार्थे भाष्यं प्रमाणयति—**पच्यादय इत्यादिना**। **पच्यादयः** पचिप्रभृतयः। **क्रियाः। भवतिक्रियायाः। कर्त्र्यः** कर्तृस्वरूपाः। **भवन्ति** सम्पद्यन्ते। **इति भूवादिसूत्रस्थभाष्यात्** 'भूवादयो धातवः' ( पा० सू० १।३।१ ) इति यत्सूत्रं तत्सम्वद्धमहाभाष्ये प्रतिपादितत्वात्। उक्तार्थे हरिमपि प्रमाणयति—**उक्तमित्यादिना। उक्तं** कथितम्। **हरिणा** तदाख्येन वाक्यपदीयकारेण। **च**। तदुद्धरति—**सुबन्तमित्यादिना**। यथा हि सुवन्तम् अनेकतिङन्तस्य विशेषणं तथा तिङन्तम् अपि तिङन्तस्य विशेषणम् आहुः इत्यन्वयः। **यथा** येन प्रकारेण। **हि। सुबन्तं** सुवन्तपदम्। **अनेकतिङन्तस्य** एकाधिकतिङन्तपदस्य। **विशेषणं** वैशिष्ट्याधायकम्। **भवति** सम्पद्यते। **तथा** तेनैव प्रकारेण। **तिङन्तं** तिङन्तपदम्। **अपि च। तिङन्तस्य** तिङन्तपदस्य। **विशेषणं** वैशिष्ट्याधायकम्। **आहुः** कथयन्ति। यथा देवदत्तः पूर्वं स्नाति अर्चति पचति भक्षति ततो व्रजति इत्यादौ। अत्र हि 'व्रजति'क्रियाया एव प्राधान्यमन्यासां तु तद्विशेषणत्वमेव। तेन शाब्दवोधे क्रियाया एव प्राधान्यं न तु प्रथमान्तार्थस्येति।

**हिन्दी**—नैयायिकों के 'शाब्दबोध में प्रथमा विभक्त्यन्त पद का अर्थ मुख्य विशेष्य होता है' इस मत का निराकरण करना शेष रह गया है। शाब्दिक अर्थात् वैयाकरण के मत में 'पश्य मृगो धावति' ( देखो मृग दौड़ता है ) इत्यादि में मृग के द्वारा किया गया धावन ( दौड़ना ) 'देखना' क्रिया का कर्म है। मुख्य तो 'देखना' क्रिया ही है। इससे मृग के द्वारा किये गये धावन कर्म से युक्त प्रेरणा के विषय बने तुम्हारे द्वारा किया गया दर्शन ( देखना )—ऐसा बोध होता है। उसमें भी 'मृगो धावति' में विशेष्यभूत धावनरूप अर्थ का वाचक 'धावति' की प्रातिपदिक संज्ञा न होने से कर्म होने पर भी द्वितीया विभक्ति नहीं होती। उसमें विभक्ति के बिना भी जो कर्मत्व है, वह संसर्गमर्यादा अर्थात् आकाङ्क्षा के कारण भासित होता है। इसी तरह 'पचति भवति' ( पचन क्रिया होती है ) इत्यादि में पचि क्रिया के द्वारा कर्ता के रूप में साधित सत्ता अर्थात् पचन क्रिया है कर्ता जिसमें—ऐसी सत्ता का बोध होता है। 'पचि आदि क्रियाएँ भवति क्रिया की कर्ता होती हैं' यह बात 'भूवादयो धातवः' ( पा० सू० १।३।१ ) सूत्र के भाष्य में कही गयी है। जैसे कि हरि ने भी कहा है—

'जैसे सुवन्त पद अनेक तिङन्त पद का विशेषण होता है, उसी तरह तिङन्त को भी तिङन्त पद का विशेषण कहते हैं।'

( 'वह पहले नहाता है, पकाता है, फिर जाता है' इसका उदाहरण है। यहाँ जाना क्रिया मुख्य है और शेष उसके विशेषण हैं। )

( ७९ ) तार्किकमतेऽन्यदेशसंयोगानुकूलधावनानुकूलकृतिमन्मृगकर्मकं प्रेरणाविषयीभूतं यद् दर्शनं तदनुकूलकृतिमांस्त्वमिति बोधः। तत्र विशेष्यभूतार्थवाचकमृगशब्दस्य प्रातिपदिकत्वाद् दृशिक्रियाकर्मत्वाच्च द्वितीयापत्तौ 'धावन्तं मृगं पश्य' इतिवत् 'पश्य मृगं धावति' इत्यापत्तेः। अप्रथमासमानाधिकरणे शतृशानचोर्नित्यत्वादेवम्प्रयोगविलयापत्तेश्च।

**व्याख्या**—तत्र तार्किकमतमनूद्य तद्दूषयितुमुपक्रमते—**तार्किके**त्यादिना। **तार्किकमते** नैयायिकनये। **अन्यदेशसंयोगानुकूलधावनानुकूलकृतिमन्मृगकर्मकम्**—अन्यदेशस्य यः संयोगः संयोगरूपफलं तदनुकूलं यद् धावनं धावनरूपव्यापारस्तदनुकूलकृतिमांस्तदनुकूलयत्नवान्यो मृगस्तत्कर्मकम्। **प्रेरणाविषयीभूतं** प्रेरणाया विषयत्वेन स्थितम्। **यद्**। **दर्शनम्**। **तदनुकूलकृतिमान्** तदनुकूलयत्नवान्। **त्वम्**। **इति**। **बोधः** शाब्दबोधः। दर्शनरूपो यो व्यापारस्तदनुकूलो यो यत्नस्तदाश्रयस्त्वमिति शाब्दबोधः। अत्र त्वमिति दृशिक्रियायाः कर्ता। तेन अन्यस्थानसंयोगरूपं यत्फलं तदनुकूलो यो यत्नस्तदाश्रयो मृग इति 'मृगो धावति' इत्यत्र 'धावनजनककृतिमान् मृगः' इति 'पश्य मृगो धावति' इत्यत्र तत्कर्मकदर्शननिरूपिताश्रयतावान् त्वमिति बोध इत्याशयः। तत्रापत्तिं दर्शयति—**तत्रे**त्यादिना। **तत्र** तथाबोधे। **विशेष्यभूतार्थवाचकमृगशब्दस्य** विशेष्यभूतः प्रथमान्तपदार्थम्प्रति तिङर्थरूपकृतेर्विशेषणत्वात्कृतिम्प्रति धात्वर्थस्य विशेषणत्वाच्च विशेष्यस्थानीयो योऽर्थस्तस्य वाचको यो मृगशब्दस्तस्य। **प्रातिपदिकत्वात्** प्रातिपदिकसंज्ञकत्वेन। **दृशिक्रियाकर्मत्वात्** दृशिक्रियायाः पश्येति रूपायाः कर्मत्वात्। **च**। **द्वितीयापत्तौ** 'कर्मणि द्वितीया' इति द्वितीयाविभक्तौ प्राप्तायाम्। **'धावन्तं मृगं पश्य' इतिवत्** यथा 'धावन्तं मृगं पश्य' इति सिध्यति। तथैव। **'पश्य मृगं धावति'**। **इति**। **आपत्तेः** प्राप्तेः। वैयाकरणनये तु क्रियायाः प्राधान्येन धावतेः प्रातिपदिकत्वाभावात्तत्र न द्वितीयाऽप्राधान्येन मृगपदेऽपि। 'पश्य मृगं धावति' इति प्रयोगे तु मृगस्य द्वितीयाविभक्त्यन्तत्वेन धावतेः प्रथमाभिन्नविभक्तिसामानाधिकरण्यात् **अप्रथमासमानाधिकरणे** प्रथमेतरविभक्त्यन्तसमानाधिकरणे। **शतृशानचोः** 'लटः शतृशानचावप्रथमासमानाधिकरणे' इति लटः स्थाने शतृशानच्प्रत्यययोः। **नित्यत्वात्** नित्यविधानात्। **एवम्प्रयोगविलयापत्तेः** 'पश्य मृगो धावति' इत्येवंविधप्रयोगविनाशसम्भवात्। **चेति**।

**हिन्दी**—नैयायिक के मत में 'दूसरे स्थान के साथ जो संयोग है, उसके अनुकूल जो धावन व्यापार है, उसके अनुकूल कृति ( यत्न ) से युक्त मृग है कर्म जिसका—ऐसी प्रेरणा के विषयीभूत जो दर्शन है, उसके अनुकूल कृति से युक्त तुम' ऐसा शाब्दबोध होता है।

इसमें विशेष्यभूत अर्थ का वाचक मृग शब्द को प्रातिपदिक संज्ञा होने से और दृशि क्रिया के कर्म होने से भी द्वितीया की प्राप्ति होने पर 'दौडते हुए मृग को देखो' इस तरह 'पश्य मृगं धावति' ( देखो मृग को दौडता है ) इत्यादि की प्राप्ति होती है। ऐसा होने पर प्रथमा से भिन्न विभक्ति के साथ सामानाधिकरण्य होने पर शतृ एवं

शानच् की नित्य व्यवस्था होने के कारण 'पश्य मृगो धावति' इत्यादि प्रयोगों के विलय हो जाने की सम्भावना आ जाती है।

( ८० ) ननु विशिष्टार्थवाचकस्य 'धावति मृगः' इति वाक्यस्य कर्मत्वेऽपि पृथक् मृग इत्यस्य प्रातिपदिकस्य कर्मत्वाभावान्न द्वितीयेति चेन्न। 'अनभिहिते' इत्यधिकारसूत्रप्रघट्टके अभिधानञ्च तिङ्कृत्तद्धितसमासैरित्येतत्परिगणन-प्रत्याख्यानपरभाष्यरीत्या द्वितीयाऽऽपत्तेः। तथा हि 'कटं भीष्मं कुरु' इत्यादौ विशेष्यकटशब्दादुत्पन्नया द्वितीयया कर्मत्वस्योक्तत्वाद् विशेषणीभूतभीष्म-शब्दाद् द्वितीया न स्यात्, अतः परिगणनं भाष्ये कृतम्। तत्प्रत्याख्यानञ्च सर्वकारकाणां साक्षात् स्वाश्रयद्वारा वा अरुणाधिकरणन्यायेन भावनान्वयस्वी-कारात्। अत एवोक्तं भाष्ये—कटोऽपि कर्म भीष्मादयोऽपि इति। तत्र कट-निष्ठकर्मत्वोक्तावपि भीष्मत्वादिगुणविशिष्टकर्मत्वानुक्तेस्तस्माद् द्वितीया इति तात्पर्यम्। उभयोः पश्चात्परस्परमन्वयस्तु विशेष्यविशेषणभावेन। अय-मेवान्वयः पार्ष्णिक इत्युच्यते।

अयमेवान्वयोऽरुणाधिकरणेऽरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति इत्यत्र क्रयणक्रियायां मीमांसकैः स्वीकृतः।

तस्माद् 'धावति मृगः' इत्यत्रोभयोः कर्मत्वे धावति इत्यस्य प्रातिपदिक-त्वाभावाद् विशेषणत्वेनान्यत्र निराकाङ्क्षत्वाच्च द्वितीयोत्पत्त्यभावेऽपि मृग-शब्दाद् द्वितीया दुर्वारा एवेत्यवेहि।

शाब्दिकमते तु क्रियाविशेषणत्वेनेतरार्थे निराकाङ्क्षत्वान्मृगशब्दान्न द्वितीया। तार्किकमते तु विशेष्यार्थवाचकत्वान्मृगशब्दाद् राज्ञः पुरुषमानय इतिवत् द्वितीया दुर्वारा। इत्यलमतिविस्तरेण।

इति धात्वर्थनिर्णयः।

---

व्याख्या—मृगपदे प्राधान्ये सति द्वितीयापत्तिरिति यदुक्तं तन्निरासाय सम्भाव्य-शङ्कामुद्भाव्य तद् दूषयति—नन्वित्यादिना। ननु। विशिष्टार्थवाचकस्य मृगकर्तृक-धावनरूपविशिष्टार्थबोधकस्य 'धावति मृगः' इति वाक्यस्य। कर्मत्वे दृशिक्रियायाः कर्मभावे। अपि। पृथक् पृथक्पदरूपेण। 'मृग' इत्येतस्य। प्रातिपदिकस्य। कर्मत्वा-भावात् कर्मत्वविरहात्। न। द्वितीया द्वितीयाविभक्तिः। इति। चेत्। न। अनभिहिते इत्यधिकारसूत्रप्रघट्टके 'अनभिहिते' ( पा० सू० २।३।१ ) इति यदधिकारसूत्रं तस्य प्रघट्टके प्रकरणे। अभिधानं कथनञ्च। तिङ्कृत्तद्धितसमासैः तिङा कृता तद्धितेन समासेन च तैः। इत्येतत्परिगणनप्रत्याख्यानपरभाष्यरीत्या इति इत्थम् एतत्परि-गणनस्य वार्तिककारकृतपरिसङ्ख्यानस्य प्रत्याख्याने निराकरणे परं यद्भाष्यं तस्य रीत्या। द्वितीयापत्तेः द्वितीयाविभक्तिप्राप्तेः। यत्र हि कारकस्य तिङ्कृत्तद्धितसमासै-रभिधानं तत्रैवाभिधाननियमो नान्यत्रेति विधानाय परिगणनं कर्तव्यम्। असति हि तथा

तथाहि । 'कटं भीष्मं कुरु' इत्यादौ इत्यादिवाक्ये । **विशेष्यकटशब्दात्** विशेष्यभूतकट-शब्दात् । **उत्पन्नया** प्रादुर्भूतया । **द्वितीयया** द्वितीयाविभक्त्या । **कर्मत्वस्य** । **उक्तत्वात्** अभिहितत्वात् । **विशेषणीभूतभीष्मशब्दात्** कटस्य विशेषणत्वेन गृहीतो यो भीष्मशब्द-स्तस्मात् । **द्वितीया** द्वितीयाविभक्तिः । **न** । **स्यात्** । **अतः** अस्माद्धेतोः । **भाष्ये** भाष्य-ग्रन्थे । **परिगणनं** तिङ्कृत्तद्धितसमासैरेवाभिधानमिति परिसङ्ख्यानम् । **कृतं** विहितम् । **तत्प्रत्याख्यानं** तस्य परिगणनस्य प्रत्याख्यानं निराकरणम् । **च** । **सर्वकार-काणां** सर्वेषामेव कारकाणां कर्त्रादीनाम् । **साक्षात्** प्रत्यक्षतया । **स्वाश्रयद्वारा** यदि कस्यचिद्यथाऽधिकरणस्य क्रियया सह साक्षात्सम्बन्धो न सिध्यति तस्य स्वाश्रयभूत-कर्त्रादिद्वारा । **वा** इति विकल्पे । **अरुणाधिकरणन्यायेन** पूर्वं प्रत्येकं पदं क्रिययाऽन्वेति पश्चाच्च तेषामन्योन्यं विशेष्यविशेषणभावेनान्वय इति व्याख्यानाय स्वीकृतेन मीमांसायां प्रचलितेन तदाख्यन्यायेन । **भावनान्वयस्वीकारात्** भावनया क्रियया सह अन्वयस्य स्वीकारात् । **अत एव** । **भाष्ये** महाभाष्यग्रन्थे । **उक्तम्** । **'कटं भीष्मं करोति'** इत्यत्र । **कटः** । **अपि** । **कर्म भीष्मादयः** अपि कर्म इति । यथा कटस्य करोतिना सहान्वयस्तथैव भीष्मस्यापि । **तत्र** । कटमित्यनेन । **कटनिष्ठकर्मत्वोक्तौ** कटे निष्ठा यस्य तत्तादृशं यत्कर्मत्वं तस्योक्तौ कथने । **अपि** । **भीष्मत्वादिगुणविशिष्ट-कर्मत्वानुक्तेः** भीष्मत्वादेर्यद् गुणविशिष्टं कर्मत्वं तस्यानुक्तेरकथनात् । **तस्मात्** भीष्मादिपदात् । **द्वितीया** द्वितीयाविभक्तिर्भवति इति । **तात्पर्यमाशयः** । **उभयोः** कटभीष्मयोः । **पश्चात्** पूर्वं प्रत्येकं क्रिययाऽन्वयस्तदनन्तरम् । **परस्परमन्योन्यम्** । **अन्वयः** सम्बन्धः । **तु** । **विशेष्यविशेषणभावेन** कटस्य विशेष्यत्वेन भीष्मस्य विशेषण-त्वेन । **अयम्** एतादृशः । **एव हि** । **अन्वयः पार्ष्णिकः** पाष्ठिकश्च । **इति** । **उच्यते** । पार्ष्णिक इति अनन्तरघटकत्वेन । **अयम्** एषः । **एव** । **अन्वयः** । **अरुणाधिकरणे** अरुणा-ख्येऽधिकरणे । **अरुणया** रक्तवर्णया । **पिङ्गाक्ष्या** पिङ्गनेत्रया । **एकहायन्या** एकवर्षया । **सोमम्** । **क्रीणाति** । **इत्यत्र** इति वाक्ये तैत्तिरीयसंहितासम्बद्धे । **क्रयणक्रियायां** क्रयणं किमपि दत्त्वाऽन्यस्य ग्रहणम् तस्य क्रियायाम् । **मीमांसकैः** मीमांसादर्शनानुसारिभिः । **स्वीकृतः** अङ्गीकृत इति । अत्रापि 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' इत्यत्र अरुणा पिङ्गाक्षी एकहायनी इत्येते शब्दाः गुणवाचका जातिवाचका वा । एतेषामाश्रयभूता गोवत्सा करणरूपेण गृह्यते सोमक्रयणे । तेन तृतीयान्तरूपेणैव अरुणया इत्यादीनां क्रयणक्रियया सहान्वयः पश्चाच्च तदाश्रयद्रव्याकाङ्क्षया गोवत्सया सहैतेषां विशेष्यविशेषणभावेनान्वयोऽभेदसम्बन्धेन । **तस्मात्** तेन । **'धावति मृगः'** **इत्यत्र** इति वाक्ये । **उभयोः** मृगधावत्योः । **कर्मत्वे** कर्मभावे । **धावति इत्यस्य प्रातिपदिकत्वा-भावात्** प्रातिपदिकसंज्ञाविरहात् । **अन्यत्र** पदान्तरे । **विशेषणत्वेन** वैशिष्ट्याधायकत्वेन । **निराकाङ्क्षत्वात्** अनाकाङ्क्षितत्वात् । **च** **द्वितीयोत्पत्त्यभावे** कर्मत्वेऽपि द्वितीयाविभक्ते-रुत्पत्तेरभावे । **अपि** । **मृगशब्दात्** । **द्वितीया** द्वितीयाविभक्तिः । **दुर्वारा** दुर्निरोध्या । **एव** । **इति** । **अवेहि** जानीहि । **शाब्दिकमते** वैयाकरणनये । **तु** तद्व्यतिरिक्तम् । **इतरार्थे** अर्थान्तरे । **क्रियाविशेषणत्वेन** क्रियाया विशेषणभावेन क्रियाया एव विशेष्य-

त्वात्। निराकाङ्क्षत्वात् आकाङ्क्षारहितत्वात्। मृगशब्दात्। न। द्वितीया। तार्किकमते नैयायिकनये। तु तद्व्यतिरिक्तम्। विशेष्यार्थवाचकत्वात् क्रियापेक्षया प्रथमान्तपदस्य प्राधान्येन विशेषार्थवाचकत्वात्। मृगशब्दात्। 'राज्ञः पुरुषमानय' इतिवत्। यथा हि पुरुषमित्यत्र द्वितीया दुर्वारा तथैवात्रापि। द्वितीया। दुर्वारा। इति। अतिविस्तरेण अत्यन्तविस्तृतीकरणेन। अलमिति।

श्रीपर्शुरामपुत्रेण श्रीलोकमणिना कृता।
धात्वर्थनिर्णयाबद्धा समाप्ता किरणावली ॥

---

हिन्दी—विशिष्ट अर्थ के वाचक 'धावति मृगः' इस वाक्य का कर्मभाव होने पर भी पृथक् रूप में 'मृग' इस प्रातिपदिक के कर्मभाव न होने से उसमें द्वितीया विभक्ति नहीं आती—ऐसा कहा जाय तो वह भी ठीक नहीं है। 'अनभिहिते' ( पा० सू० २।३।१ ) इस अधिकार सूत्र के प्रकरण में जो 'अभिधान है वह तिङ्, कृत्, तद्धित, समास के द्वारा हुआ ही माना जाय; अन्य के द्वारा हुआ नहीं' इस परिगणन एवं उसके प्रत्याख्यानपरक भाष्योक्त रीति से द्वितीया की प्राप्ति होती है। उस तरह का परिगणन यदि न किया जाय तो 'कटं भीष्मं कुरु' इत्यादि में विशेष्यभूत कट शब्द से उत्पन्न द्वितीया के द्वारा कर्मत्व का अभिधान होने से विशेषणीभूत भीष्म आदि शब्दों से द्वितीया की प्राप्ति नहीं हो पाएगी। इस कारण भाष्य में परिगणन किया गया कि अभिधान तिङ् आदि का ही माना जाय, दूसरे का नहीं। उसका प्रत्याख्यान यह है कि सभी प्रकार के कारकों का साक्षात् अथवा अपने आश्रय के द्वारा अरुणाधिकरण न्याय से भावना अर्थात् क्रिया के साथ अन्वय स्वीकार किया जाता है। इसीलिए भाष्य में कहा गया है—कट भी कर्म है और भीष्म आदि भी। उसमें कटनिष्ठ जो कर्मत्व है, उसके उक्त होने पर भी भीष्मत्वादि गुणविशिष्ट कर्मत्व अनुक्त ही रह जाता है। अतः उनमें द्वितीया विभक्ति होती है—ऐसा तात्पर्य है। उन दोनों के बाद में परस्पर अन्वय तो विशेष्य-विशेषण भाव से होता है। यह अन्वय पार्ष्णिक अर्थात् पीछे हुआ कहा जाता है।

यह अन्वय अरुणाधिकरण में 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' इसमें करणक्रिया के साथ मीमांसकों के द्वारा स्वीकृत है।

इस कारण 'धावति मृगः' इसमें दोनों के कर्मभाव में 'धावति' इसके प्रातिपदिकत्व के अभाव में विशेषण के रूप में रहने से अन्यत्र साकाङ्क्ष न होने से द्वितीया की उत्पत्ति के अभाव में भी मृग शब्द से द्वितीया तो दुर्वार ही है—यह जान लो।

वैयाकरण के मत में तो क्रिया के विशेषण होने से दूसरे अर्थ के प्रति निराकाङ्क्ष होने के कारण मृग शब्द से द्वितीया नहीं होती। नैयायिक के मत में विशेष्य अर्थ के वाचक होने से मृग शब्द से 'राज्ञः पुरुषम् आनय' में जैसे द्वितीया हट नहीं सकती। इससे अधिक विस्तार की आवश्यकता नहीं है।

इस प्रकार धात्वर्थ-निरूपण समाप्त हुआ।

---

## ( १० ) अथ निपातार्थनिर्णयः

( ८१ ) 'अनुभूयते सुखम्' 'साक्षात्क्रियते गुरुः' इत्यादौ निपातानां द्योतकत्वेन अनुभवसाक्षात्काररूपफलयोर्धात्वर्थत्वेन सकर्मकत्वम् । कर्मसंज्ञकार्थान्वियर्थकत्वं सकर्मकत्वमिति निष्कृष्टमतेऽपि फलाश्रयतया कर्मसंज्ञकस्य धात्वर्थफले एवान्वयौचित्येन द्योतकत्वमावश्यकम् ।

**व्याख्या**—निपातानां द्योतकत्वं वाचकत्वं वाऽर्थस्येति निर्णेतुमर्थं प्रकरणमारभते—**अनुभूयते इत्यादिना** । **'अनुभूयते सुखम्' 'साक्षात्क्रियते गुरुः' इत्यादौ** इत्यादिवाक्ये । **निपातानां** चादीनां ( चादयोऽसत्त्वे १।४।५७ ) प्रादीनां ( प्रादयः १।४।५८ ) च सत्त्वभिन्नेऽर्थे चादयो निपाता भवन्ति प्रादयश्च । प्रादयो हि क्रियायोगे उपसर्गसंज्ञका अपि भवन्ति ( उपसर्गाः क्रियायोगे १।४।५९ ) तेषाम् । **द्योतकत्वेन** धात्वर्थस्य प्रकाशकत्वेन **अनुभवसाक्षात्काररूपफलयोः** सुखानुभवगुरुसाक्षात्काररूपयोः फलयोः । **धात्वर्थत्वेन** धातोरेवार्थतया । धातोः । **सकर्मकत्वं** सकर्मकभावः । **कर्मसंज्ञकार्थान्वियर्थकत्वं** कर्मसंज्ञकः कर्मसंज्ञकत्वेन 'कर्तुरीप्सिततमं कर्म' 'अधिशीङ्स्थासां कर्म' इत्यादिशास्त्रीयरीत्या निर्दिष्टो योऽर्थस्तस्यान्वयी अर्थो यस्य तस्य भावस्तत्त्वम् । **सकर्मकत्वम् इति** । **निष्कृष्टमते** निष्कर्षभूतनये । **अपि च** । **फलाश्रयतया** फलस्य धात्वर्थभूतफलस्य आश्रयतया । **कर्मसंज्ञकस्य** कर्मसंज्ञाभूतार्थस्य । **धात्वर्थफले** धात्वर्थभूतफले । **एव** । **अन्वयौचित्येन** अन्वययोग्यतया । **द्योतकत्वं** निपातानामर्थप्रकाशकत्वम् । **आवश्यकम् इति** ।

**अयमाशयः**—नैयायिका हि निपातानामर्थस्य वाचकत्वं मन्यन्ते उपसर्गाणां तु द्योतकत्वम् । किन्तु ग्रन्थकारस्तु निपातोपसर्गयोरुभयोरेव द्योतकत्वमर्थस्य स्वीकुर्वन्ति न तु वाचकत्वम् । अनुभूयते सुखमित्यत्र प्रतीयमानो योऽनुभवोऽर्थः स धातोरेवार्थो न तूपसर्गस्य । यदि ह्यत्रानुभवार्थ उपसर्गस्य स्यात्तदा अनुगच्छतीत्यादावपि अनुभवादिप्रत्ययापत्तिः स्यात् । यदि हि धातोरेवानुभवार्थस्तदोपसर्गरहितस्य भूधातोः कथं न तत्प्रतीतिरिति चेदुच्यते—धातोरेवार्थ उपसर्गेण द्योत्यते इति द्योतकाभावे न तत्प्रतीतिरिति । कर्मसंज्ञकशब्दस्य फलाश्रयत्वाद्धात्वर्थभूतफले एवान्वयोऽभीष्टोऽतोऽनुभवाद्यर्थो धातोरेवोपसर्गस्य तु तस्य द्योतकत्वमेवेति स्पष्टमेव । उपसर्गस्य वाचकत्वे तु कर्मसंज्ञकशब्दस्य तत्रान्वय एव न स्याद्धात्वर्थत्वाभावेनाऽर्थस्य ।

**हिन्दी**—'अनुभूयते सुखम्' 'साक्षात्क्रियते गुरुः' इत्यादि वाक्यों में 'अनु' एवं 'साक्षात्' जो 'उपसर्ग' एवं 'निपात' है, उनके द्योतक होने से अनुभव एवं साक्षात्कार रूप फल का धात्वर्थ होने से धातु सकर्मक होता है । कर्मसंज्ञक अर्थ का अन्वयी अर्थ होना सकर्मकत्व है । इस सारभूत मत में भी फल के आश्रय होने से कर्मसंज्ञक शब्द का धात्वर्थभूत फल में ही अन्वय के औचित्य होने से निपातों का द्योतकत्व ही आवश्यक है ।

(८२) द्योतकत्वञ्च स्वसमभिव्याहृतपदनिष्ठवृत्त्युद्बोधकत्वम्। क्वचित्तु क्रियाविशेषाक्षेपकत्वं द्योतकत्वम्। यथा 'प्रादेशं विलिखति' इत्यादौ विर्मानक्रियाक्षेपकः। प्रादेशं विमाय लिखति इत्यर्थावगमात्। अत एव 'अथ शब्दानुशासनम्' इत्यत्र अथशब्दस्य प्रारम्भक्रियाक्षेपकत्वं कैयटाद्युक्तं सङ्गच्छते। क्वचित्तु सम्बन्धपरिच्छेदकत्वं द्योतकत्वम्; यथा कर्मप्रवचनीयानाम्। विशिष्टस्य तु न धातुत्वमपाठादडाद्यव्यवस्थापत्तेश्च।

**व्याख्या**—निपातानामर्थद्योतकत्वं यदुक्तं तत्र द्योतकत्वं विवृणोति—**द्योतकत्व**मित्यादिना। **निपातानाम्**। **द्योतकत्वमर्थप्रकाशकत्वम्**। **च हि**। **स्वसमभिव्याहृतपदनिष्ठवृत्त्युद्बोधकत्वम्**—स्वेन द्योतकत्वेनाभिमतेनोपसर्गादिना सह समभिव्याहृतं समुच्चारितं यत्पदं धात्वादि तन्निष्ठा या वृत्तिस्तस्या उद्बोधकत्वं प्रकाशकत्वमेव। यथा 'अनुभूयते सुखम्' इत्यत्र अनुपदेन समभिव्याहृतभूशब्दनिष्ठानुभवादिबोधकवृत्तिप्रकाशकत्वमेव अनोर्द्योतकत्वम्। पक्षान्तरमाह—**क्वचिदित्यादिना**। **क्वचित्** कुत्रचित्। **तु** तद्वचतिरिक्तम्। **क्रियाविशेषाक्षेपकत्वं** क्रियाविशेषस्य आक्षेपकत्वमुपस्थापकत्वम् अनुमापनं वा। **द्योतकत्वमिति**। **यथा—'प्रादेशं विलिखति' इत्यादौ** इत्यादिवाक्ये। **विः** विरुपसर्गः। **मानक्रियाक्षेपकः** मानक्रियाया मानार्थकक्रियाया आक्षेपकोऽनुमापकः। **'प्रादेशं विमाय लिखति' इति** इत्थम्। **अर्थावगमात्** अर्थबोधात्। **अतः** यतो हि, निपातः क्रियाविशेषाक्षेपकोऽपि तस्मात्। **एव हि**। **'अथ शब्दानुशासनम्' इत्यत्र**। **अथशब्दस्य** अथेति निपातस्य। **प्रारम्भक्रियाक्षेपकत्वं** प्रारम्भ उपक्रमस्तदर्थिका या क्रिया तस्या आक्षेपकत्वमनुमापकत्वम्। **कैयटाद्युक्तं** कैयटप्रभृतिव्याख्याकृदुक्तम्। **सङ्गच्छते** सुसङ्गतं भवति। द्योतकत्वस्य तृतीयं पक्षमाह—**क्वचिदित्यादिना**। **क्वचित्** कुत्रचित्। **तु** तद्वचतिरिक्तम्। **सम्बन्धपरिच्छेदकत्वं** सम्बन्धस्य परिच्छेदकत्वं निश्चायकत्वम्। **द्योतकत्वम्**। **यथा कर्मप्रवचनीयानां** कर्मप्रवचनीयसंज्ञकानां शब्दानाम्। अनुर्लक्षणे, अधिरीश्वरे उपोऽधिके च, उपपरी वर्जने, अभिरभागे, अधिपरी अनर्थकौ, सुः पूजायाम् अतिरतिक्रमणे च इत्यादिकर्मप्रवचनीयव्यवस्था। कर्म प्रोक्तवन्त इति कर्मप्रवचनीयाः। हरिणाऽप्युक्तम्—

'क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः। नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः। इति।

**विशिष्टस्य** निपातरहितवैशिष्टचस्य 'अनुभूः' इत्यादेः। **न**। **धातुत्वं** धातुभावः। **अपाठात्** तथा पाठाभावात्। **अडाद्यव्यवस्थापत्तेः** अडादीनाम् अट्, आट् इत्यादीनां 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' 'आडजादीनाम्' इत्यादिभिर्विहितव्यवस्थानां तथैव आदिपदात् 'एकाचो द्वे प्रथमस्य' 'अजादेर्द्वितीयस्ये'त्यादिभिर्विहितद्वित्वानाञ्च अव्यवस्थापत्तेः व्यवस्थाविच्छेदप्राप्तेः। **च**। यथा हि निपातविशिष्टस्य धातुत्वे 'अनुभू' इत्येतस्य लङि अजादित्वेन अडागमः स्याद् सम्भू इत्येतस्य तु अडागम एव तथैव लिटि अजादित्वेन 'नु' इत्येतस्य द्वित्वं स्यात्। तेन न निपातविशिष्टस्य धातुत्वमिति स्पष्टम्।

**हिन्दी**—जो द्योतकत्व है, वह अपने साथ उच्चरित पद में निष्ठ जो वृत्ति है, उसका उद्बोधन करना है। कहीं तो क्रिया-विशेष का आक्षेप करना भी द्योतकत्व है। जैसे

'प्रादेशं विलिखति' इत्यादि में जो 'वि' है वह मान क्रिया का आक्षेपक है, क्योंकि उससे प्रादेश को मान बनाकर लिखता है—इस तरह के अर्थ का बोध होता है। इसी कारण ही 'अथ शब्दानुशासनम्' इसमें अथ शब्द प्रारम्भ क्रिया का आक्षेपक है, ऐसा कैयट आदि का वचन सुसङ्गत हो जाता है। कहीं तो सम्बन्ध का परिच्छेद (निश्चय) करना भी द्योतकत्व होता है, जैसे कर्मप्रवचनीय संज्ञा वाले शब्दों का। निपात से विशिष्ट (अनुभू आदि) का धातुत्व नहीं होता, क्योंकि उस तरह गणपाठ में पढ़ा नहीं गया है और वैसा होने पर अडागम, आडागम, द्वित्व आदि की भी अव्यवस्था बन जाती है। निपात के कारण हलादि धातु अजादि बन जाएगा और अजादि हलादि। वैसा होने पर सारी व्यवस्था ही व्यर्थ हो जाएगी।

(८३) यत्तु तार्किकाः—उपसर्गाणां द्योतकत्वं तदितरनिपातानां वाचकत्वं, साक्षात्प्रत्यक्षतुल्ययोरिति कोशात्। नमःपदेन 'देवाय नमः' इत्यादौ नमस्कारार्थस्य, दानावसरे 'गवे नमः' इत्यत्र पूजार्थस्य प्रसिद्धत्वाच्च। सकर्मकत्वञ्च स्वस्वसमभिव्याहृतनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वम्। कर्मत्वञ्च स्वस्वसमभिव्याहृतनिपातान्यतरार्थफलशालित्वमित्याहुः।

तन्न। वैषम्ये बीजाभावात्। अनुभूयते इत्यनेन साक्षात्क्रियते इत्यस्य समत्वात्। नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयाभावान्निपातार्थधात्वर्थयोरन्वयस्यैवासम्भवात्। निपातार्थफलाश्रयत्वेऽपि धात्वर्थान्वयं विना कर्मत्वानुपपत्तेश्च।

**व्याख्या**—उपसर्गाणामर्थद्योतकत्वं तदितरनिपातानामर्थवाचकत्वमिति नैयायिकमतनिरासाय प्रकरणमारभते—यदित्यादिना। यत् यदेव। तु हि। तार्किकाः नैयायिकाः। आहुरित्यनेनान्वयः। उपसर्गाणां 'प्रादयः क्रियायोगे' इति विहितोपसर्गसंज्ञानां प्रादीनाम्। द्योतकत्वं स्वसमभिव्याहृतपदार्थस्य प्रकाशकत्वम्। तदितरनिपातानां तद्भिन्नानां निपातानाम् उपसर्गसंज्ञारहितानामिति। वाचकत्वं स्वार्थाविबोधकत्वम्। साक्षात्प्रत्यक्षतुल्ययोः प्रत्यक्षार्थे तुल्यार्थे च साक्षाच्छब्दः इति। कोशात् कोशवाक्यात्। नमःपदेन नम इति पदेन। देवाय नमः इत्यादौ नमस्कारार्थस्य प्रणामरूपार्थस्य। दानावसरे दानकाले। गवे नमः इत्यत्र इत्यादौ। पूजार्थस्य पूजनविशेषाशयस्य। प्रसिद्धत्वात् प्रचलितत्वात्। चेति। सकर्मकत्वं सकर्मकभावः। च। स्वस्वसमभिव्याहृतनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वं स्वं धातुः स्वसमभिव्याहृतो धातुना सहोच्चारितो निपातः साक्षादादिस्तयोरन्यतरार्थरूपं यत्फलं तस्य व्यधिकरणः फलाधिकरणभिन्नाधिकरणो यो व्यापारस्तस्य वाचकत्वं बोधकत्वम्। कर्मत्वं कर्मभावः। च। स्वस्वसमभिव्याहृतनिपातान्यतरार्थफलशालित्वं स्वं धातुः स्वसमभिव्याहृतो यो निपातस्तयोरन्यतरार्थफलयुक्तत्वम्। इति। आहुः कथयन्ति। तन्निराकर्तुमुपक्रमते—तदित्यादिना। तत् उपसर्गाणां द्योतकत्वं तदितरनिपातानां वाचकत्वमिति कथनम्। न नैवोपयुक्तम्। वैषम्ये निपातोपसर्गयोर्विषमास्थितौ। बीजाभावात् हेतुराहित्यात्। 'अनुभूयते' इत्यनेन सह। साक्षात्क्रियते

**इत्यस्य । समत्वात्** भेदाभावात् । **नामार्थधात्वर्थयोः** नामप्रतिपाद्यार्थस्य धातुप्रतिपाद्यार्थस्य च तयोर्भेदेन सत्त्वप्रधानतया नाम्नो भावप्रधानतया धातोरिति तयोः । **साक्षात्** प्रत्यक्षतया । **अन्वयाभावात्** अन्वयराहित्यात् । **निपातार्थधात्वर्थयोः** निपातप्रतिपाद्यत्वेन कथितो योऽर्थो धातुना प्रतिपाद्यश्च योऽर्थस्तयोः । **अन्वयस्य । एव । असम्भवात् । निपातार्थफलाश्रयत्वे** निपातस्यार्थरूपं यत्फलं तस्य आश्रयत्वे आश्रयभावे । **अपि च । धात्वर्थान्वयं विना** धात्वर्थेन सहान्वयाभावे । **कर्मत्वानुपपत्तेः** कर्मभावसिद्धेः । **चकारः** समुच्चयार्थकः । **अयमाशयः**—नैयायिका हि उपसर्गाणामर्थद्योतकत्वं तदितरनिपातानां त्वर्थवाचकत्वं समर्थयन्ति । ते हि स्वपक्षदाढर्याय निपातार्थफलव्यधिकरणव्यापारवत्त्वं सकर्मत्वं निपातार्थफलशालित्वं कर्मत्वमित्यपि सकर्मकत्वकर्मत्वे परिभाषेते । यतो हि निपातार्थफलाश्रयत्वेऽपि सुखदर्शनादेः कर्मत्वसिद्धेर्धातोः कर्मणि लकारः स्यात् । ग्रन्थकृत्तन्न मन्यते । ग्रन्थानुसारेण प्रथमतस्तु निपातोपसर्गयोर्वैषम्ये न किमपि बीजम् । प्रादयो हि क्रियायोगे उपसर्गसंज्ञका भवन्ति । एतावदेव तयोरन्तरम् । समानप्रकृतिकानां केषाञ्चिदर्थद्योतकत्वमपरेषां तु तद्वाचकत्वं न युक्त्या प्रपद्यते । न च नामार्थधात्वर्थयोर्भेदेन साक्षादन्वय एव सम्भवति । तयोरन्वयस्तु द्वितीयादिविभक्तिसाहाय्येनैव । अन्यथा 'तण्डुलः पचति' इत्यादिप्रयोगोऽपि साधुः स्यात् । तेन 'साक्षात्क्रियते' इत्यत्र प्रातिपदिकार्थत्वेन तन्मतस्य साक्षात्काररूपफलस्य कृधातोर्व्यापारार्थेऽन्वयाभावेन साक्षात्कारानुकूलव्यापारस्य बोध एव न । तृतीयतस्तु निपातानामर्थवाचकत्वे साक्षात्क्रियते गुरुरित्यत्र गुरुपदस्य कर्मत्वं नैव सिध्यति । कर्मत्वनिमित्तं न केवलं निपातार्थाश्रयत्वमपितु फलस्य प्रकृतधात्वर्थत्वमपि समावश्यकम् । धातुवाच्यफलाश्रयस्यैव कर्मसंज्ञेति 'कर्तुरीप्सिततमं कर्मे'ति सूत्रे स्पष्टमेव । कारकाणां क्रियान्वयित्वमेव कारकत्वं तेन धात्वर्थान्वितत्वे एव गुरुपदस्य कर्मत्वं सिध्यति यदाश्रित्य कर्मणि लकारः स्यात् ।

**हिन्दी**—जो कि नैयायिक—"उपसर्ग अर्थ के द्योतक होते हैं, उनसे भिन्न निपात अर्थ के वाचक होते हैं । कोश में भी 'प्रत्यक्ष' एवं तुल्य अर्थ में साक्षात् शब्द पढ़ा गया है । 'नमः' पद का 'देवाय नमः' इत्यादि में नमस्कार अर्थ का, दान के समय 'गवे नमः' में पूजा अर्थ प्रसिद्ध हैं । वाचकत्व होने के कारण ही ऐसा अर्थभेद होता है । तो फिर 'साक्षात्क्रियते गुरुः' आदि में निपातार्थरूप फल साक्षात्कार का आश्रय गुरु का कर्मत्व कैसे होगा, क्योंकि कर्मसंज्ञा उसी को होती है, जो धात्वर्थभूत फल का आश्रय होता है ? इस पर यह कहा जाता है कि सकर्मकत्व वही है, जो स्व अर्थात् धातु तथा धातु का समभिव्याहृत जो निपात है, उन दोनों में से किसी एक के अर्थरूप फल के अधिकरण से भिन्न अधिकरण वाले व्यापार का वाचकत्व है । कर्मत्व भी स्व अर्थात् धातु तथा धातुसमभिव्याहृतनिपात में से किसी एक के अर्थरूप फल से युक्त होना है"—ऐसा कहते हैं ।

वह ठीक नहीं है । दोनों की विषमता में कोई बीज नहीं है । 'अनुभूयते' इसके साथ 'साक्षात्क्रियते' इसकी समता है । दूसरी बात यह है कि नामार्थ एवं धात्वर्थ

के भेदसम्बन्ध से साक्षात् अन्वय नहीं हो सकता। तीसरी बात यह है कि निपातार्थ एवं धात्वर्थ का अन्वय एकदम सम्भव नहीं होता। निपात के अर्थरूप फल के आश्रय होने पर भी धात्वर्थ के साथ अन्वय के बिना कर्मत्व की उपपत्ति नहीं होती।

(८४) यदपि केचिच्छाब्दिकाः—निपातानां वाचकत्वे शोभनः समुच्चय इतिवत् शोभनश्च इत्यापत्तिः। घटस्य समुच्चय इतिवत् घटस्य च इत्यापत्तिः। घटं पटश्च पश्य इत्यादौ षष्ठ्यापत्तिश्च इत्याहुः।

व्याख्या—नैयायिकमते केषाञ्चिच्छाब्दिकानामाक्षेपमनुवदति विवेचनाय—यदि-त्यादिना। यद् यदेव। अपि केचित् कतिपये। शाब्दिकाः वैयाकरणाः। निपातानां साक्षादादीनाम्। वाचकत्वे अर्थवाचकभावे। 'शोभनः समुच्चयः' इतिवत् यथा एत-त्सिध्यति तथैव शोभनश्च इति। आपत्तिः प्राप्तिः। चकारस्य समुच्चयार्थकत्वात्।

'घटस्य समुच्चयः' इतिवत् 'घटस्य च' इत्यापत्तिः चकारस्य समुच्चयार्थकत्वात्। घटं पटं च पश्य इत्यादौ इत्यादिवाक्ये। षष्ठ्यापत्तिः घटस्य चकारेण सहान्वयात् क्रियया सहान्वयाभावेन घटपदात् षष्ठीविभक्तिप्राप्तिः, अर्थस्तु घटसमुच्चयवन्तं पटं पश्येति। इत्याहुरिति।

हिन्दी—और जो कि कुछ वैयाकरण "निपातों का वाचकत्व मानने पर 'शोभनः समुच्चयः' में जैसे शोभनः च इत्यादि की प्राप्ति होगी। 'घटस्य समुच्चयः' में जैसे घटस्य च की भी प्राप्ति होगी। 'घटं पटं च पश्य' इत्यादि में षष्ठी विभक्ति की प्राप्ति होगी" आदि कहते हैं।

(८५) तन्न। शब्दशक्तिस्वभावेन निपातैः स्वार्थस्य परविशेषणत्वेनैव बोधनेन विशेषणान्वयाप्रसङ्गात्। चशब्दद्योत्यसमुच्चयस्य असत्त्वभूतत्वात् षष्ठ्यप्राप्तेश्च। किञ्च घटं पटं पश्य इत्यादौ घटपदस्य घटप्रतियोगिक-समुच्चयवति अप्रसिद्धा शक्तिरेव लक्षणा। चशब्दस्तु तात्पर्यग्राहकः। अत एवोभयोः सामानाधिकरण्येन क्रियान्वयाद् द्वितीया। घटसमुच्चयवन्तं पटं पश्येति बोधः। समुच्चयस्य प्रतियोग्याकाङ्क्षायाः सन्निहितत्वात् घटस्य प्रतियोगित्वं पटे तु समुच्चयस्य भेदेनान्वयो न तु पटस्य समुच्चये इति क्व षष्ठ्यापादनम्। नामार्थयोरभेदान्वयव्युत्पत्तिस्तु निपातातिरिक्तविषया।

व्याख्या—उक्ताक्षेपं पर्यालोचयति—तदित्यादिना। तत् उक्तमतम्। न नैवोप-युक्तम्। शब्दशक्तिस्वभावेन शब्दस्य या शक्तिरर्थावबोधनक्षमता तस्याः स्वभावेन प्रकृत्या। निपातैः चादिभिः। स्वार्थस्य स्वबोध्यार्थस्य। विशेषणत्वेन विशेषणरूपेण। एव हि न तु विशेष्यत्वेन। बोधनेन ज्ञापनेन। तदर्थस्य विशेषणान्वयाप्रसङ्गात् विशेषणेन शोभनादिना सह अन्वयस्य अप्रसङ्गात् असम्भवात्। शब्दानां हि प्रत्येकं स्वस्वस्वभावो भवति तेभ्यो हि स्वस्वस्वभावानुसारेणैव पृथक्पृथग्रूपेणार्थस्य प्रतीति-र्भवति। शब्दानां पृथगर्थत्वे शब्दस्वभाव एव हेतुर्नान्यः। यथा हि एकैव पचनक्रिया पाकशब्देन सिद्धरूपे पचतिशब्देन साध्यरूपे प्रकटयते। तथैव निपाता अपि स्वस्वभावा-

नुसारेणेतरशब्दार्थविशेषणरूपेणैव सुसङ्गता भवन्ति, न तु विशेष्यरूपेण। तेषां हि केवलविशेषणरूपेणोपस्थितेर्न विशेषणान्तरेण कदाप्यन्वयप्रसङ्गः। एवमेव **चशब्दद्योत्य-समुच्चयस्य** चशब्दद्योत्यः 'घटस्य च' इति कथने चशब्देन द्योत्यो यः समुच्चयस्तस्य। **असत्त्वभूतत्वात्** 'चादयोऽसत्त्वे' इति नियमेन अद्रव्यत्वात्। **षष्ठ्यप्राप्तेः** षष्ठ्याः अप्राप्तेरलाभात्। सम्बन्धे एव षष्ठी भवति, सम्बन्धस्तु सत्त्वभूतानामेव सम्भवति इति। चशब्दस्य सत्त्वभिन्नार्थे एव निपातसंज्ञा भवतीति कथं तत्सम्बन्धेन षष्ठीति। ( कथं घटस्य घटत्वमित्यत्र षष्ठीति चिन्त्यमेव घटत्वस्याप्यसत्त्वभूतत्वात्। ) **किञ्च** एवमेव। **'घटं पटं च पश्य' इत्यादौ** इत्यादिवाक्ये। **घटपदस्य घटप्रतियोगिकसमुच्चयवति** घटः प्रतियोगी विशेषणं यत्र तादृशो यः समुच्चयस्तद्वति अर्थे। **अप्रसिद्धा शक्तिः लक्षणा** एव। अत्र हि घटपदस्य न केवलं घटोऽर्थोऽपि तु घटसमुच्चययुक्तमिति विशिष्टोऽर्थो यो हि अप्रसिद्धया शक्त्या लक्षणया वा लभ्यते। **चशब्दः** अत्र यश्चशब्दः सः। **तु** हि। **तात्पर्यग्राहकः** घटमित्येतस्य घटसमुच्चयवन्तमिति यो लक्षणाविषयो विशिष्टोऽर्थस्तस्य तात्पर्यस्य ग्राहकः द्योतक इति। **अतः** यतो हि विशिष्टार्थे घटपदोऽपि पटमेवार्थं बोधयति तस्मात्। **एव** हि। **उभयोः** घटपटयोः। **सामानाधिकरण्येन** समानाश्रयतया। **क्रियान्वयात्** क्रियया सह अन्वयात्। **द्वितीया** द्वितीयाविभक्तिरेवेति न तु षष्ठीति। **तेनास्य वाक्यं 'घटसमुच्चयवन्तं पटं पश्य' इति** इत्थम्। **बोधः** ज्ञानमिति। **समुच्चयस्य** घटसमुच्चयस्य। **प्रतियोग्याकाङ्क्षायाः** प्रतियोगिनी विशेषणीभूता या आकाङ्क्षा तस्याः। **सन्निहितत्वात्** सान्निध्यवर्तित्वेन प्रयुक्तत्वात्। घटस्य प्रतियोगित्वं समुच्चय-विशेषणत्वम्। **पटे** पटेऽर्थे। **तु** हि। **समुच्चयस्य** घटप्रतियोगिकसमुच्चयस्य। **भेदेन** भेदसम्बन्धेन। **अन्वयः**। **न** नैव। **तु** हि। **पटस्य**। **समुच्चये इति** हेतोः। **क्व** कुत्र। **षष्ठ्यापादानं** षष्ठीविभक्त्यवकाशः। **नामार्थयोः** नाम्नस्तद्बोध्यार्थस्य च तयोः। **अभेदान्वयव्युत्पत्तिः** अभेदेनाभेदसम्बन्धेनान्वयस्य या व्युत्पत्तिः सा तु। **निपातातिरिक्त-विषया** निपातभिन्नविषयसम्बद्धा। 'समानविभक्तिकनामार्थयोरभेदान्वयः' इति नियमस्य सत्त्वे कथं घटतत्समुच्चययोः ( यत्र घटो विशेषणं पटो विशेष्यः ) एवं पटसमुच्चययोः ( यत्र पटो विशेष्यः समुच्चयो विशेषणम् ) भेदेनान्वय इति चेदुच्यते नामार्थयोः समानविभक्तिकयोरभेदान्वयस्तु निपातातिरिक्तविषयेष्वेव। वस्तुतस्तु प्रातिपदिकशब्दा हि लिङ्गसङ्ख्याविशिष्टा भवन्ति न तु निपातास्तेषां प्रातिपदि-कत्वाभावादिति घटसमुच्चययोः पटसमुच्चययोश्च आद्ये विशेषणविशेष्यभावेन द्वितीये विशेष्यविशेषणभावेन भेदेनान्वय इति।

**हिन्दी**—उस वैयाकरण का वह कथन ठीक नहीं है। शब्द की शक्ति के स्वभाव से निपातों के द्वारा अपने अर्थ का विशेषण के रूप में ही बोधित होने से विशेषण के साथ अन्वय का प्रसङ्ग ही नहीं आता। च शब्द के द्वारा द्योत्य जो समुच्चय है, उसके असत्त्व अर्थात् द्रव्य से भिन्न होने से षष्ठी की प्राप्ति नहीं होती। और यह भी कि 'घटं पटं च पश्य' इत्यादि में घट पद का घट है प्रतियोगी अर्थात् विशेषण जिसका—ऐसे समुच्चययुक्त अर्थ में अप्रसिद्धा शक्ति लक्षणा ही है। च शब्द तो मात्र उस

तात्पर्य का ग्राहक है। इसी कारण दोनों के समान अधिकरण वाले होने के कारण ( क्योंकि यहाँ घट का अर्थ पट ही है ) क्रिया से अन्वय होता है और द्वितीया विभक्ति हुई है। इससे 'घट के समुच्चय से युक्त पट को देखो' ऐसा बोध होता है। समुच्चय की जो प्रतियोगी सम्बन्धी आकाङ्क्षा है, उसके सन्निहित होने के कारण घट का प्रतियोगित्व होता है। पट में तो समुच्चय का भेद से ही अन्वय होता है, न कि पट के समुच्चय में। इस कारण षष्ठी विभक्ति कहाँ होती है। ( समान विभक्ति वाले ) नाम और अर्थ का अभेद से अन्वय होने की जो बात है, वह निपात से भिन्न विषय में ही प्रवृत्त होती है, निपात में नहीं ( क्योंकि प्रातिपदिक में लिङ्ग, सङ्ख्या ( वचन ) आदि होते हैं, निपात में नहीं )। वस्तुतः निपात प्रातिपदिक ही नहीं है।

( ८६ ) निपातानामर्थवत्त्वमपि द्योत्यार्थमादायैव। शक्तिलक्षणाद्योतकताऽन्यतमसम्बन्धेन बोधकत्वस्यैवार्थवत्त्वात्। नञ्समास उत्तरपदार्थप्राधान्यं द्योत्यार्थपेक्षयैव।

**व्याख्या**—द्योतकत्वेऽपि निपातानां सार्थकत्वप्रतिपादनाय प्रकरणमारभते—**निपातानामित्यादिना**। **निपातानां** निपातसंज्ञितशब्दानाम्। **अर्थवत्वं** सार्थकत्वम्। **अपि च**। **द्योत्यार्थं** द्योतकतागम्यार्थम्। **आदाय** अधिकृत्य। **एव**। **शक्तिलक्षणाद्योतकतान्यतमसम्बन्धेन**—शक्तिरभिधा लक्षणा अप्रसिद्धा शक्तिः द्योतकता व्यञ्जकता व्यञ्जना, आसामन्यतमसम्बन्धेन। **बोधकत्वस्य** शक्त्या लक्षणया द्योतकतया वा यदर्थबोधकत्वं तस्य। **एव हि**। **अर्थवत्त्वात्** अर्थयुक्तत्वात्। **नञ्समासे** नञा सह प्रातिपदिकस्य यः समासस्तत्र **उत्तरपदार्थप्राधान्यम्** उत्तरपदस्य योऽर्थस्तस्य प्राधान्यं मुख्यत्वं विशेष्यत्वं वा। **द्योत्यार्थपेक्षया** द्योत्यो योऽर्थस्तस्य अपेक्षयाऽनुरोधेन। **एवेति**। यथा अब्राह्मण इत्यादौ आरोपितब्राह्मणत्वरूपद्योत्यार्थे प्रकारतायाः सत्त्वाद् नञः सार्थकत्वेन ब्राह्मणस्योत्तरपदत्वेन तत्प्राधान्यरूपतत्पुरुषसिद्धिरिति।

**अत्रेदमवधेयम्**—निपातोपसर्गयोर्द्योतकत्वं वाचकत्वं वाऽर्थस्येति विषये प्राचीनकालादेव विचक्षणेषु विवादः प्रवर्तितो दृश्यते। सन्त्यत्र त्रयो मुख्याः पक्षाः—केचिद् उपसर्गाणामर्थद्योतकत्वं तदितरनिपातानां तु वाचकत्वं मन्यन्ते। परे तु निपातोपसर्गयोरेव निर्विशेषेणार्थद्योतकत्वमेव मन्यन्ते। केचिदुभयोरेव क्वचिदर्थवाचकत्वं क्वचित्तु तद्द्योतकत्वमपि मन्यन्ते। हरिणाऽप्युक्तम्—

'क्वचित्सम्भविनो भेदाः केवलैरनिदर्शिताः।
उपसर्गेण सम्बन्धे व्यज्यन्ते प्रपरादिना॥
स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वा।
शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते॥
अप्रयोगेऽधिपर्योश्च यावद् दृष्टं क्रियान्तरम्।
तस्याभिधायको धातुः सह ताभ्यामनर्थकः॥
तथैव स्वार्थिकाः केचित् सङ्घातान्तरवृत्तयः।
अनर्थकेन संसृष्टाः प्रकृत्यर्थानुवादिनः॥

निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः ।
आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचकाः ॥
उपरिष्टात्पुरस्ताद्वा द्योतकत्वं न भिद्यते ।
तेषु प्रयुज्यमानेषु भिन्नार्थेष्वपि सर्वथा ॥
चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः ।
प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते ॥'

( वाक्यपदीयम्—२।१८७–१९४ )

प्रकृतग्रन्थकृन्मते तु निपातोपसर्गयोरुभयोरेव निर्विशेषेणार्थद्योतकत्वं द्योतकता-सम्बन्धेनैव तयोरर्थवत्त्वमिति ।

**हिन्दी**—निपातों की जो अर्थवत्ता है, वह भी द्योत्य अर्थ को लेकर ही बनती है । शक्ति लक्षणा, द्योतकता ( व्यञ्जकता ) में से किसी एक के सम्बन्ध से बोधकत्व का ही अर्थवत्त्व होती है । नञ् समास में उत्तरपदार्थ की प्रधानता द्योत्य अर्थ की अपेक्षा से ही होती है ।

( ८७ ) 'प्रतिष्ठते' इत्यत्र तिष्ठतिरेव गतिवाची, धातूनामनेकार्थत्वात् । प्रशब्दस्तु तदर्थगत्यादिमत्वस्य द्योतकः । अत एव 'धातुः पूर्वं साधनेन युज्यते पश्चादुपसर्गेण' इति सिद्धान्तितम् । साधनं कारकम् । तत्प्रयुक्तकार्येण, उपसर्गेण उपसर्गसंज्ञकशब्देन । तत्र हि भाष्ये—पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधने-नेति । नैतत्सारम् । पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण साधनं हि क्रियां निवर्तयति । तामुपसर्गो विशिनष्टि । अभिनिर्वृत्तस्य चार्थस्य उपसर्गेण विशेषः शक्यते वक्तुम् । सत्यमेवमेतत् । यस्त्वसौ धातूपसर्गयोरभिसम्बन्ध-स्तमभ्यन्तरं कृत्वा धातुः साधनेन युज्यते । अवश्यञ्चैतदेवं विज्ञेयम् । यो हि मन्यते पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति तस्य आस्यते गुरुणा इत्य-कर्मकः उपास्यते गुरुरिति केन सकर्मकः स्यादिति ।

**व्याख्या**—उपसर्गाणामर्थद्योतकत्वप्रतिपादनाय प्रकरणमारभते—**प्रतिष्ठते** इत्या-दिना । **'प्रतिष्ठते'** इत्यत्र **तिष्ठतिः** स्थाधातुः । **एव** हि । **गतिवाची** गत्यर्थावबोधकः न तूपसर्गः । **धातूनां** क्रियावाचिशब्दानाम् । **अनेकार्थत्वात्** एकाधिकार्थकत्वात् । **प्रशब्दः** । **तु** हि । **तदर्थगत्यादित्वस्य** तस्य धातोर्योऽर्थो गत्यादिस्तत्त्वस्य । **द्योतकः** प्रकाशकः । **अत एव** अनेनैव कारणेन । **धातुः** क्रियावाचिशब्दः । **पूर्वं** प्रथमम् । **साधनेन** कारकादिना । **युज्यते** युक्तो भवति । **पश्चादनन्तरमेव** । **उपसर्गेण** उपसर्गसंज्ञकशब्देन । **इति** इत्थम् । **सिद्धान्तितं** सिद्धान्ततया प्रतिपादितमिति । अत्र हि **साधनं** नाम कारकं क्रियानिवर्तकम् । **तत्प्रयुक्तकार्येण** तेन प्रयुक्तं यत्कार्यं लडादिस्तेनेति । **उपसर्गेणेति** उप-सर्गसंज्ञकशब्देन प्रादयः क्रियायोगे उपसर्गसंज्ञका भवन्तीति व्यवस्थया यस्योपसर्गसंज्ञा भवति तेन । विषयेऽस्मिन् भाष्यकारमतमनुवदति—**तत्रेत्यादिना** । **तत्र** धातूपसर्ग-सम्बन्धविषये । **हि** यतः । **भाष्ये** महाभाष्यग्रन्थे । ( ६।१।१३५ ) **पूर्वं** प्रथमम् । **धातुः**

धातुगणपठितः क्रियावाचिशब्दः । उपसर्गेण उपसर्गसंज्ञकशब्देन युज्यते युक्तो भवति । पश्चात् तदनन्तरमेव । साधनेन कारकेण । इति । एतत् एतत्कथनम् । न । सारम् उपयुक्तम् । वस्तुतस्तु पूर्वं धातुः साधनेन युज्यते पश्चात् उपसर्गेण । तत्र तथाभवने हेतुमाह—साधनमित्यादिना । साधनं कारकम् । हि । क्रियां धातुकार्यम् । निर्वर्तयति साधयति । तां तथासिद्धक्रियाम् । उपसर्गः प्रादिः । विशिनष्टि विशेषार्थद्योतनेन वैशिष्ट्यमुत्पादयति । अभिनिर्वृत्तस्य सम्पन्नस्य । कार्यस्य क्रियायाः । उपसर्गेण प्रादिना । विशेषो वैशिष्ट्यम् । वक्तुं समर्थयितुम् । शक्यः । एतत् । सत्यं यथार्थपरकम् । एव । यः तु । असौ प्रसिद्धः । धातूपसर्गयोः धातोरुपसर्गस्य च तयोः । अभिसम्बन्धः संयोगः । तम् अभिसम्बन्धम् । अभ्यन्तरं बुद्धिस्थम् । कृत्वा विधाय । धातुः क्रियावाची शब्दः । साधनेन कारकेण । युज्यते निर्वृत्तो भवति । एतत् अवश्यनपरिहार्यम् । एव । विज्ञेयम् । यः हि । मन्यते समर्थयति । पूर्वं धातुः साधनेन युज्यते पश्चात् । उपसर्गेण इति । तस्य तन्मते । आस्यते गुरुणा इति अकर्मक आस् धातुः । उपास्यते गुरुः । इति इत्यत्र । केन किं साधनेन । सकर्मकः स्यात् । इति ।

अत्रोच्यते—उपसर्गाणामर्थद्योतकत्वसिद्धयेऽत्र प्रतिष्ठते इत्युदाहृतं यत्र गत्यर्थस्तिष्ठतेरेव धातूनामनेकार्थत्वादुपसर्गस्तु तस्य द्योतक एवेत्यप्युक्तम् । अन्ये तु उपसर्गाणां तिस्रो गतयो भवन्तीत्यामनन्ति । उक्तं यथा—धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्तते । विशिनष्टि तमेवार्थमुपसर्गगतिस्त्रिधेति । वाक्यपदीयेऽप्युक्तं—'स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वा । शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते ॥' इति । व्याख्यातं यथा केवलं न द्योतका यावद्वाचका अपि दृश्यन्ते । यथा प्रतिष्ठते इत्यादौ धातोर्गतिनिवृत्तिवाचकत्वं प्रेण तु गतिवाचकत्वं व्यवस्थाप्यते । तथा चोक्तं—'धात्वर्थं बाधते कश्चिदि'ति ।……सम्भूय धातूपसर्गावर्थमाहतुरिति शक्तिमात्रमुपसर्गः कुरुते इत्यर्थाभिधाने सहकारिण उपसर्गाः अत्राप्युक्तं कश्चित्तमनुवर्तते इति । एवमेव तत्रोक्तम्—

'स्वादिभिः केवलैर्यच्च गमनादि तु गम्यते ।
तत्रानुमानाद् द्विविधात् तद्धर्मा प्रादिरुच्यते ॥' इति । ( २।१८९ )

तिष्ठतिर्गतिनिवृत्तिं प्रसिद्धयाभिदधाति । अतः केवलेन तेन गमनं न प्रतिपाद्यत इति अनेकार्था धातव इति कृत्वाऽनुमानाद् गतिवाचकत्वमपि तस्य व्यवस्थाप्यते । उपसर्गस्तु तद्द्योतक एव ।

निरुक्तेऽप्युक्तम्—'न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्तीति । उच्चावचाः पदार्था भवन्तीति गार्ग्यः ।' इति ।

महाभाष्ये तूक्तम्—'इह तर्हि व्यक्तमर्थान्तरं गम्यते तिष्ठति प्रतिष्ठते इति । तिष्ठति इति व्रजिक्रियाया निवृत्तिः प्रतिष्ठते इति व्रजिक्रिया गम्यते । तेन मन्यामहे उपसर्गकृतमेतद्येनात्र व्रजिक्रिया गम्यते ।' ( १।३।१ ) । बह्वर्था अपि धातवो भवन्तीति । तद्यथा—वपिः प्रकिरणे दृष्टः छेदने चापि वर्तते । केशश्मश्रू वपतीति । ईडिः स्तुति-

चोदनायाश्चापि दृष्टः प्रेरणे चापि वर्तते। अग्निर्वा इतो वृष्टिम् ईट्टे मरुतोऽमुतश्च्यावयन्ति। एवमिहापि तिष्ठतिरेव व्रजिक्रियामाह तिष्ठतिरेव व्रजिक्रियाया निर्वृत्तिम्। (१।३।१)।

वस्तुतस्तु प्रतिष्ठते इत्यत्र यदि व्रजिक्रिया प्रस्यार्थस्तदा प्रकर्ष इत्यादावपि तस्य तथैवार्थः स्यात् किन्तु न तथेति व्रजिक्रिया तिष्ठतेरेवार्थः प्रशब्दस्तु तस्या द्योतक एवेति स्पष्टमेव।

किं धातुः पूर्वमुपसर्गेण युज्यते पश्चात्साधनेन पूर्वं साधनेन पश्चादुपसर्गेण वेति पक्षोऽपरः। तत्र साधनं हि क्रियां निवर्तयति पश्चादुपसर्गो तां विशिनष्टि इत्येकः पक्षः पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेत्यपरः। ग्रन्थकृन्मते उभावपि पक्षौ चिन्त्यौ यदि धातुः पूर्वं साधनेन युज्यते पश्चादुपसर्गेणेति मन्येत तदा उपास्यते गुरुरित्यत्र कर्मणि लकार एव न स्यादासेरकर्मकत्वात्। यदि च धातुः पूर्वमुपसर्गेण युज्यते पश्चात्साधनेनेति मन्येत तदा अडादिद्वित्वादिव्यवस्था विच्छिन्ना स्यात्। तर्हि को नियोगोऽत्रेत्यपेक्षायामुच्यते पूर्वं धातूपसर्गयोरभिसम्बन्धमभ्यन्तरं कृत्वा धातुः साधनेन युज्यते इति। तथा सति सर्वं सुस्थं भवति। उपास्यते इत्यत्र उपेन सह धातोर्योऽभिसम्बन्धस्तस्याभ्यन्तरीकरणेन धातोः सकर्मकत्वात्कर्मणि लकारः प्रातिष्ठदित्यत्र तिष्ठतेः प्रागडागमश्च। एवमेव प्रागेवोपसर्गयोगे तु अध्येत्यत्र सवर्णदीर्घसन्धिः स्यात्। तेन हि धातौ साधनयोगात्प्रागेव सोऽर्थो विद्यमानो भवति यो हि पश्चादुपसर्गेण द्योत्यते।

हिन्दी—'प्रतिष्ठते' इत्यादि में तिष्ठति ही गतिवाची है, क्योंकि धातु के अनेक अर्थ होते हैं। 'प्र' शब्द तो उसके गति अर्थ का द्योतक मात्र है। इसी कारण 'धातु पहले साधन से युक्त होता है, बाद में उपसर्ग से' इस प्रकार का सिद्धान्त बना हुआ है। साधन का अर्थ कारक आदि है; उसके द्वारा प्रयुक्त कार्य से वह कारक है। उपसर्ग अर्थात् उपसर्गसंज्ञक शब्द। उसमें भाष्य में 'पहले धातु उपसर्ग से युक्त होता है, बाद में साधन से' ऐसा कहा गया है। यह कथन उपयुक्त नहीं है। पहले धातु साधन से युक्त होता है, बाद में उपसर्ग से साधन क्रिया की निर्वृत्ति कराता है और उसको उपसर्ग-विशेष अर्थ से युक्त कराता है। यह कथन सही भी है। जो यह धातु एवं उपसर्ग का अभिसम्बन्ध है, उसको अपने अन्दर समाविष्ट करके ही धातु साधन से युक्त होता है। यह कथन अवश्य ही सही है। जो यह मानता है कि पहले धातु साधन से युक्त होता है बाद में उपसर्ग से, उसके लिए 'आस्यते गुरुणा' यह तो अकर्मक है 'उपास्यते गुरुः' में किससे सकर्मक हो।

कहने का तात्पर्य यह है कि 'प्रतिष्ठते' आदि का जो जाना अर्थ है, वह भी धातु का ही है; उपसर्ग का नहीं। उपसर्ग तो केवल 'तिष्ठति' के ही गति अर्थ का द्योतक मात्र है। इसीलिए यह सिद्धान्त बना लिया गया है कि धातु पहले साधन अर्थात् लकार आदि से युक्त होता है और बाद में उपसर्ग से। कोई कहते हैं कि धातु पहले उपसर्ग से युक्त होता है और तब साधन से। यह कथन ठीक नहीं है। ऐसा होने पर अडागम आदि व्यवस्था में बाधा पड़ेगी और यदि उपसर्ग को बाद में जुड़ने वाला माना जाय, तो भी ठीक नहीं; क्योंकि ऐसा करने पर 'उपास्यते गुरुः' आदि में

आस् धातु के अकर्मक होने के कारण कर्म में लकार ही नहीं होगा। तो माना क्या जाय? माना यह जाय कि धातु एवं उपसर्ग का जो सम्बन्ध है, उसे पहले ही लिया जाय अर्थात् धातु का उपसर्ग से द्योतित होने वाला जो अर्थ है, उसे लिया जाय; तब धातु से लकार आदि माने जाय और बाद में उपसर्ग। ऐसा करने से सारी स्थिति ठीक बन जाएगी और 'उपास्यते गुरुः' आदि में कर्म में लकार भी होगा।

( ८८ ) हरिणाऽप्युक्तम्—

धातोः साधनयोगस्य भाविनः प्रक्रमाद्यथा।
धातुत्वं कर्मभावश्च तथान्यदपि दृश्यताम्॥
बुद्धिस्थादभिसम्बन्धात् तथा धातूपसर्गयोः।
अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते॥

अस्यार्थः यथा भाविसाधनसम्बन्धाश्रयेण क्रियावाचित्वमाश्रित्य धातुसंज्ञोच्यते यथा च सन्प्रत्यये चिकीर्षिते भावि इषिकर्मत्वमाश्रित्य उपक्रमे एव इषिकर्मत्वमुक्तं तथा भाव्युपसर्गसम्बन्धादुपक्रमे एव विशिष्टक्रियावाचकत्वं दृश्यताम्। धातूपसर्गयोः सम्बन्धं बुद्धिविषयीकृत्योपसर्गार्थकृतो विशेषो धातुनैवाभ्यन्तरीकृतः पदप्रयोगकाले उपसर्गसम्बन्धे सति प्रकाशते। श्रोतुरिति शेषः। उपसर्गयोगात् प्रागेव धातुनैवोपसर्गार्थविशिष्टः स्वार्थ उच्यते इति तात्पर्यम्। पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति तु तदर्थस्य धात्वर्थान्तर्भावाद् व्यवहारः।

**व्याख्या**—धातूपसर्गयोरभिसम्बन्धमभ्यन्तरं कृत्वा धातुः साधनेन युज्यते इति यदुक्तं तत्रार्थे हरिं प्रमाणयति—**हरिणे**त्यादिना। **हरिणा** वाक्यपदीयकृता तदाख्येन। **अपि च। उक्तं** कथितम्। तदुद्धरति—**धातोरि**त्यादिभ्यां श्लोकद्वयाभ्याम्। यथा भाविन साधनयोगस्य धातोः प्रक्रमात् धातुत्वं कर्मभावः च तथा अन्यद् अपि दृश्यताम्।

तथा बुद्धिस्थात् अभिसम्बन्धात् धातूपसर्गयोः अभ्यन्तरीकृतः भेदः पदकाले प्रकाशते इत्यन्वयः।

**यथा** येन प्रकारेण। **भाविनः** भविष्यतः। **साधनयोगस्य** साधनवाचकप्रत्ययसंसर्गस्य। **धातोः**। **प्रक्रमात्** उपक्रमे एवानुसन्धानात्। **धातुत्वं** क्रियावचनो धातुरिति धातुसंज्ञा यथा वा भाविनः इषिकर्मत्वस्य सन्प्रत्ययोत्पत्तये उपक्रम एवानुसन्धानेन समाश्रयणात् सन्प्रकृतिधातोः **कर्मभावः** इषिकर्मत्वम्। **च** अपि। **तथा** तेन प्रकारेण। **अन्यद् अपि** साधनसम्बन्धात्प्रागुपसर्गसम्बन्धवशेन धातोः विशिष्टक्रियावचनत्वमपि अनुभूयते इत्यादौ कर्मणि लकारादिसिद्धये। **दृश्यताम्** ज्ञायतामिति। **तथा**—

'बीजकालेषु सम्बद्धा यथा लाक्षारसादयः।
वर्णादिपरिणामेन फलानामुपकुर्वते॥'

तद्वत्। **धातूपसर्गयोः** धातोरुपसर्गस्य च तयोः। **बुद्धिस्थात्** बुद्धिविषयभूतात् न तु वस्तुसतः। **अभिसम्बन्धात्** सम्बन्धयोगात्। धातूपसर्गसमुदायस्य वस्तुतो धातुत्वेन

धातूपसर्गविभागस्याडादिकार्यार्थं कल्पितत्वेन वाह्यस्य तयोरभिसम्बन्धस्यासम्भवे बौद्धस्यैव तस्य सम्भवात्। **अभ्यन्तरीकृतः** अन्तर्लीनतयाऽव्यक्तः केवलं प्रतीयमानः। **भेदः** क्रियाविशेषः। **पदकाले** धातोः साधनसम्बन्धोत्तरं पदनिष्पत्तिकाले। **प्रकाशते** स्फुटं प्रतीयत इति ( वा० प० २।१८४, १८६ )। कारिकाशयं स्पष्टयति—**अस्येत्यादिना**। **अस्य** कथनस्यास्य। **अर्थः** आशयः ईदृश इति। **यथा** येन प्रकारेण। **भाविसाधनसम्बन्धाश्रयणेन**—भावि भविष्यद् यत्साधनं लकारादि तस्य सम्बन्धस्य आश्रयणेनाधारेण। **क्रियावाचित्वं** क्रियां वक्तुं तच्छील इति तस्य भावस्तत्त्वम्। **आश्रित्य** आधारीकृत्य। **धातुसंज्ञा** धातुरिति संज्ञा क्रियावाचिनो भूवादयो धातुसंज्ञकाः स्युरिति व्यवस्थया भूवादयो धातव इति। **उच्यते** कथ्यते। **यथा च**। सन्प्रकृतिकधातोः धातोः कर्मणः समानकर्तृकादिच्छायां वा इति सन्प्रत्यये 'गुप्तिज्किद्भ्यः सन्' इत्यनुवृत्य सनि। **चिकीर्षिते** कर्तुं विवक्षिते। **भावि** भविष्यत्। **इषिकर्मत्वम्** इषिधातोः कर्मभावम्। **आश्रित्य** आधारीकृत्य। **उपक्रमे** प्रारम्भ एव। **धातोः इषिकर्मत्वम्** इषेः कर्मभावः। **उक्तं** कथितम्। **तथा** तेन प्रकारेण। **भाव्युपसर्गसम्बन्धात्** भावी भविष्यद् य उपसर्गस्तस्य सम्बन्धात्सम्पर्कात्। **उपक्रमे** कार्यारम्भे। **एव हि**। **विशिष्टक्रियावाचकत्वं** विशिष्टा विशेषार्थस्य यथा तिष्ठतेर्व्रजिक्रियार्थस्य बोधिका या क्रिया तस्या वाचकत्वम्। **दृश्यताम्** अवगम्यतामिति।

**धातूपसर्गयोः** धातोर्यथा 'ष्ठा गतिनिवृत्तौ' इत्यादेः उपसर्गस्य प्रादेस्तयोः। **सम्बन्धं** सम्पर्कम्। **बुद्धिविषयीकृत्य** बुद्धिस्थं कृत्वा। **उपसर्गार्थकृतः** उपसर्गस्य प्रादेर्योऽर्थस्तेन कृतो विहितः। **विशेषः** अर्थवैशिष्टचम्। **धातुना केवलेनैव** धातुना। **अभ्यन्तरीकृतः** अन्तर्लीनतया गृहीतः। **पदप्रयोगकाले** पदावसरे क्रियासिद्धाविति। **उपसर्गसम्बन्धे** उपसर्गयोगे। **सति** सञ्जाते। **प्रकाशते** द्योतते। **श्रोतुः** इति शेषः श्रोतुः प्रकाशते इत्याशयः। **उपसर्गयोगात्** उपसर्गसम्पर्कात्। **प्राक्** प्रथमम्। **एव हि**। **धातुना एव**। **उपसर्गार्थविशिष्टः** उपसर्गस्य योऽर्थस्तेन विशिष्टः **स्वार्थः** धातोः स्वकीयार्थः। **उच्यते** कथ्यते। **इति**। **तात्पर्यम्** अभिप्रायः कारिकाया इति। **पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन इति** एतत्कथनम्। **तु**। **तदर्थस्य** तस्योपसर्गस्य योऽर्थस्तस्य। **धात्वर्थान्तर्भावात्** धातोर्योऽर्थस्तत्रान्तर्भावादन्तर्लीनतया। **व्यवहारः** प्रयोगः। उपसर्गद्योत्यार्थोऽपि धात्वर्थ एवान्तर्भूतो भवतीति पूर्वं धातुरुपसर्गेण युज्यत इत्युक्तमिति।

**हिन्दी**—हरि ने भी कहा है—

जैसे बाद में होने वाले साधन-सम्बन्ध के आधार पर प्रारम्भ में ही धातु का धातुत्व माना जाता है एवं जैसे सन् प्रत्यय की विवक्षा से भविष्य में होने वाली इष् धातु की कर्मता के आधार पर धातु की कर्मवत्ता मान ली जाती है, उसी प्रकार और भी बाद में होने वाले उपसर्ग के सम्बन्ध के आधार पर प्रारम्भ में ही धातु की विशिष्ट क्रियावाचकता जान लेना चाहिए।

धातु तथा उपसर्ग के बौद्धिक अभिसम्बन्ध से धातु के द्वारा अपने में अन्तर्लीन किया हुआ विशिष्ट अर्थ पद के प्रयोग के समय श्रोता को ज्ञात होता है।

इसका आशय है—

जैसे कि भावी साधन के सम्बन्ध के आश्रय से क्रियावाचित्व का आश्रय लेकर धातु की धातु संज्ञा मानी जाती है; जैसे कि धातु से सन् प्रत्यय किये जाने की इच्छा में भावी इष् धातु के कर्मत्व का आश्रय लेकर शुरु में ही 'इष्' का कर्मत्व माना गया है। उसी प्रकार भावी उपसर्ग सम्बन्ध से शुरु में ही धातु की विशिष्ट क्रियावाचकता जान लेनी चाहिए। धातु एवं उपसर्ग के सम्बन्ध को बुद्धिस्थ बनाकर उपसर्ग के अर्थ द्वारा की गई विशेषता धातु में ही अन्तर्लीन होकर पद के प्रयोग-काल में उपसर्ग से सम्बन्ध होने पर प्रकाशित होती है। इसमें 'श्रोता को' यह शेष अर्थ है। उपसर्ग के योग से पहले ही धातु के द्वारा उपसर्ग के अर्थ के द्वारा विशिष्ट अपना अर्थ कहा जाता है, यह तात्पर्य है। 'पहले धातु उपसर्ग से युक्त होता है और बाद में साधन से' यह तो उस ( उपसर्ग ) के अर्थ का धातु में अन्तर्भाव होने के कारण ( वह ) व्यवहार होता है।

**( ८९ ) चन्द्र इव मुखमित्यादौ चन्द्रपदस्य स्वसदृशेऽप्रसिद्धा शक्तिरेव लक्षणा। 'नञिव युक्तमन्यसदृशाधिकरणे' इति न्यायात्। इव पदं तात्पर्य-ग्राहकम्। तात्पर्यग्राहकत्वञ्च स्वसमभिव्याहृतपदस्यार्थान्तरशक्तिद्योतकत्व-मित्यागतमिवनिपातस्य द्योतकत्वम्।**

**व्याख्या**—इवशब्दोऽर्थस्य वाचको द्योतको वेति निर्णेतुं प्रकरणमारभते—**चन्द्र** इत्यादिना। **'चन्द्र इव मुखम्' इत्यादौ** इत्यादिवाक्ये। **चन्द्रपदस्य। स्वसदृशे** चन्द्र-सदृशेऽर्थे। **अप्रसिद्धा** प्रसिद्धेतरा सहृदयमात्रविषया। **शक्तिः** अर्थविबोधकसामर्थ्यम्। **एव। लक्षणा** तदाख्यवृत्तिः। **नञिव युक्तं** नञा इवेन वा युक्तम्। **अन्यसदृशाधिकरणे** अन्यं स्वेतरत् किन्तु सदृशं स्वतुल्यं यदधिकरणं विषयस्तस्मिन् ( तथा हि अर्थगतिः )। **इति न्यायात्** न्यायस्य प्रसिद्धेः। महाभाष्ये भृशादिभ्यो 'भुव्यच्वेर्लोपश्च हलः' ( पा० सू० ३।१।१२ ) इति सूत्रभाष्ये अच्विशब्दार्थनिर्णयप्रकरणे वार्तिकमिदं स्मृतं यस्य नञ्युक्त इवयुक्तो वा शब्दस्तच्छब्दभिन्ने किन्तु तत्सदृशेऽर्थे कार्यवान् भवति, यतो हि निपातयुक्तशब्देनैतादृश एवार्थबोधः सम्पाद्यते इत्याशयः। यथा 'अब्राह्मणमानय' इत्यत्र ब्राह्मणभिन्नब्राह्मणसदृशक्षत्रियादिरानीयते न त्वचेतनपाषाणादिरिति। इदमेव वार्तिकं पश्चान्न्यायरूपेण गृहीतं सर्वैः। एतदनुसारेण इवशब्दसमभिव्याहृतः शब्दः स्वभिन्नं किन्तु स्वसदृशमर्थं बोधयति लक्षणया अप्रसिद्धया शक्त्या वा। चन्द्र इव मुखमित्यत्र चन्द्रशब्दो हि चन्द्रसदृशार्थबोधकः इवशब्दस्तु तस्य तात्पर्यग्राहक एव। **इवपदं** चन्द्र इव मुखमित्यत्र यदिवपदं तत् **तात्पर्यग्राहकं** चन्द्रशब्दोऽत्र न केवलं मुख्यां शक्तिमाश्रित्य चन्द्रार्थमेव प्रस्तौत्यपितु अप्रसिद्धां शक्तिमाश्रित्य चन्द्रसदृशमर्थं लक्षयतीति यत्तात्पर्यं तस्य ग्राहकमिति। **तात्पर्यग्राहकत्वम्। च** तु। **स्वसमभिव्याहृत-पदस्य** स्वस्य समभिव्याहृतं सहोच्चरितं यत्पदं तस्य **अर्थान्तरशक्तिद्योतकत्वम्** अर्थान्तरे-ऽन्यस्मिन्नर्थे या शक्तिस्तस्याः द्योतकत्वम्। इति। **आगतं** सिद्धम्। **इवनिपातस्य** इव-शब्दस्य निपातसंज्ञकस्य। **द्योतकत्वमर्थद्योतकभाव इति।**

हिन्दी—'चन्द्र इव मुखम्' ( चन्द्रमा तुल्य मुख है ) इत्यादि में चन्द्र पद का स्व-सदृश अर्थ में अप्रसिद्ध शक्ति ही लक्षणा है। नञ् अथवा इव शब्द से युक्त शब्द अपने से भिन्न पर अपने सदृश अर्थ का बोधक होता है, क्योंकि ऐसे स्थलों में इसी तरह का ज्ञान होता है—ऐसा न्याय है। इव पद तो केवल ( चन्द्रपद से चन्द्रसदृश अर्थ-बोध का तात्पर्यग्राहक मात्र है। तात्पर्यग्राहकता भी अपने समीप में उच्चरित पद का अर्थान्तर ) प्रसिद्ध अर्थ से भिन्न अर्थ को कहने की शक्ति का द्योतक होना है। अतः इव निपात का द्योतकत्व सिद्ध हो गया।

( ९० ) यत्तु इवार्थः सादृश्यं तत्र प्रतियोग्यनुयोगिभावेनैव चन्द्रमुखयो-रन्वयोपपत्तौ किं लक्षणया? तथा च चन्द्रप्रतियोगिकसादृश्याश्रयो मुखमिति बोध इत्याहुः। तन्न। 'चन्द्र इव मुखं दृश्यते' चन्द्रमिव मुखं पश्यामि' इत्यादौ चन्द्रपदस्य मुखरूपकर्मसामानाधिकरण्याभावादुक्तानुक्तत्वप्रयुक्तविभक्त्यना-पत्तेः षष्ठ्यापत्तेश्च।

**व्याख्या**—प्रस्तुते नैयायिकमतमनूद्य दूषयति—**यदित्यादिना**। **यद्** यदेव। **तु** हि। **इवार्थः** इवस्य इवनिपातस्य अर्थः। **सादृश्यं** साम्यम्। **तत्र प्रतियोग्यनुयोगिभावेन** विशेषणविशेष्यभावेन। **एव**। **चन्द्रमुखयोः** चन्द्रस्य शशिनः मुखस्य वदनस्य च तयोः। **अन्वयोपपत्तौ** अन्वयस्य सिद्धौ। **लक्षणया** चन्द्रसदृशेऽर्थे चन्द्रपदस्य लक्षणास्वीकारेण। **किं** किम्प्रयोजनम्? **तथा च** विशेषणविशेष्यभावेनैव। **चन्द्रप्रतियोगिकसादृश्याश्रयः** चन्द्रोऽस्ति प्रतियोगी यस्मिन् तथाभूतं यत्सादृश्यं साम्यं तस्याश्रय आधारः। **मुखं** वदनम्। **इति** इत्थम्। **बोधः** ज्ञानमिति। **इति** इत्थम्। **आहुः** कथयन्ति। नैयायिका इति शेषः। **तत्** तथाकथनम्। **न** नैवोपयुक्तम्। **चन्द्र इव मुखं दृश्यते, चन्द्रमिव मुखं पश्यामि इत्यादौ** इत्यादिवाक्ये। **चन्द्रपदस्य**। **मुखरूपकर्मसामानाधिकरण्याभावात्** मुख-रूपं यत्कर्म तस्य सामानाधिकरण्यं समानाश्रयता एकाधिकरणता तस्य अभावाद्विरहात्। **उक्तानुक्तत्वप्रयुक्तविभक्त्यनापत्तेः** उक्तत्वे अभिहितत्वे अप्रयुक्तत्वे अनभिहितत्वे च प्रयुक्ता या विभक्तिः प्रथमा द्वितीया च तयोरनापत्तेरप्राप्तेः। **षष्ठ्यापत्तेः** षष्ठीविभक्तिप्राप्ते-श्चेति। **अयमाशयः**—नैयायिकास्तु चन्द्र इव मुखमित्यादौ चन्द्रपदस्य चन्द्रसादृश्येऽर्थे लक्षणां मत्वा इवशब्दस्य तत्तात्पर्यज्ञापकत्वं नोररीकुर्वन्ति। तन्मते तु निपातोऽर्थस्य वाचकः। तदनुसारेण चन्द्रपदस्य चन्द्रार्थ एव सादृश्यार्थस्य तु इवनिपातो वाचकः। तत्र चन्द्रमुखयोः प्रतियोग्यनुयोगिभावेनैवान्वयसिद्धिर्यस्य मुखं चन्द्रप्रतियोगिकसादृ-श्यस्याश्रय इति बोधः। तेन नात्र लक्षणोपास्येति। ग्रन्थकृन्मते तन्न। तथामते हि अनेकत्र अभिहितानभिहितत्वसम्बद्धव्यवस्था हि विच्छिन्ना भवेत्। यथा हि 'चन्द्र इव मुखं दृश्यते' इत्यत्र यदि हि इवशब्दो हि सादृश्यार्थस्य वाचकस्तदा मुखस्य चन्द्रेण सहैकाधिकरणता नैव सम्भवति यत इवशब्दवाच्यार्थसादृश्ये चन्द्रपदार्थः प्रतियोगी भवति। येन एकत्र विशेषणं नापरत्रेति नियमानुसारेण चन्द्रमुखयोः प्रतियोग्यनुयोगि-भावो नैव सम्भवति। तयोः सामान्याधिकरण्याभावेन तिङा चन्द्रशब्दो नैवाभिहितो

भवति। येन प्रथमाविभक्तिस्तत्र स्यात् कर्तर्यभिहिते एव प्रथमाविभक्तेर्नियमात्। एवमेव 'चन्द्रमिव मुखं पश्यमि' इत्यत्र नापि द्वितीया स्यात् अनभिहिते कर्मण्येव तद्विधानात्।

एतदतिरिक्तमिवशब्दार्थभूतसादृश्यस्य प्रतियोगित्वात् चन्द्रपदार्थस्य इवशब्दार्थेन सह भेदसम्बन्धाच्च चन्द्रपदे षष्ठीविभक्तिः प्राप्नोति, यतो हि द्वयोर्नामार्थयोर्भेदसम्बन्ध-प्रतिपादनाय साक्षादन्वयबोधस्याव्युत्पन्नत्वात्कस्या अपि विभक्तेराश्रयणां कर्तव्यमेव। तेन राज्ञः पुरुषः इत्यादाविवात्रापि विशेषणभूतचन्द्रशब्दे षष्ठ्येव प्राप्नोति। इति।

**हिन्दी**—जो कि इव शब्द का अर्थ सादृश्य है अर्थात् इव शब्द सादृश्य अर्थ का वाचक है। उसमें चन्द्र एवं मुख के बीच प्रतियोगी ( विशेषण ) एवं अनुयोगी ( विशेष्य ) भाव से ही अन्वय की उपपत्ति हो ही जाती है तो फिर वहाँ लक्षणा की क्या आवश्यकता है? उससे चन्द्र है प्रतियोगी ( विशेषण ) जिसका—ऐसा जो सादृश्य है उसका आश्रय मुख है, ऐसा बोध हो जाता है इत्यादि कहते हैं, वह ठीक नहीं है। 'चन्द्र इव मुखं दृश्यते' 'चन्द्रम् इव मुखं पश्यामि' इत्यादि में चन्द्रपद का मुख रूप कर्म से सामानाधिकरण्य अर्थात् एकाधिकरणता का अभाव होने से अभिहित एवं अनभिहित होने के आधार पर प्रयुक्त जो विभक्तियाँ हैं अर्थात् पहले में प्रथमा एवं दूसरे में द्वितीया, उनकी प्राप्ति नहीं होगी और इसके अतिरिक्त ( चन्द्र पद में ) षष्ठी विभक्ति की प्राप्ति हो जाएगी, जो कि अभीष्ट नहीं है।

( ९१ ) परे तु इवशब्दस्योपमानताद्योतकत्वम्। उपमानत्वञ्च उपमा-नोपमेयोभयनिष्ठसाधारणधर्मवत्त्वेन ईषदितरपरिच्छेदकत्वम्। तद्धर्मवत्तया परिच्छेद्यत्वञ्च उपमेयत्वम्। साधारणधर्मसम्बन्धश्च क्वचिद्विशेषणतयाऽन्वेति क्वचिद्विशेष्यतया। एवं चन्द्र इवाह्लादकं मुखमित्यादौ आह्लादकोपमान-भूतचन्द्राभिन्नमाह्लादकं मुखमिति बोधः। चन्द्र इव मुखमाह्लादयति इत्यादौ चोपमानभूतचन्द्रकर्तृकाह्लादभिन्नो मुखकर्तृकाह्लाद इति बोधः। इदम् 'उपमा-नानि सामान्यवचनैः' इत्यत्र भाष्ये स्पष्टम्।

**व्याख्या**—इवनिपातार्थविषये स्वसम्मतपक्षमाह—**परे** इत्यादिना। **परे** अन्ये ये हि खलु इवशब्दस्य तात्पर्यग्राहकत्वं ये च सदृशार्थवाचकत्वं मन्यन्ते तदितरे परे। **तु** तदु-भयव्यतिरिक्तम्। **इवशब्दस्य** इवेतिनिपातस्य। **उपमानताद्योतकत्वम्** उपमानता सादृश्य-प्रतियोगित्वं तस्य द्योतकत्वं प्रकाशकत्वम्। मन्यन्ते इति। तत्र उपमानत्वम् उपमानता। **च** हि। **उपमानोपमेयोभयनिष्ठसाधारणधर्मवत्त्वेन** उपमानं सादृश्यप्रतियोगि उपमेयः सादृश्यानुयोगी तदुभयनिष्ठो यः साधारणः सामान्यो धर्मः आह्लादकत्वादिस्तद्वत्त्वेन। **ईषदितरपरिच्छेदकत्वम्** ईषत्किञ्चिन्न्यूनसाधारणयुक्तं यदितरदपरमुपमेयस्तस्य परिच्छेदकत्वं बोधकत्वम्। **तद्धर्मवत्तया** तदुभयनिष्ठसाधारणधर्मयुक्तत्वेन। **परिच्छेद्यत्वं** बोध्यत्वम्। **च** तु। **उपमेयत्वं** सादृश्यानुयोगित्वमिति। **साधारणधर्मसम्बन्धः** उपमानो-पमेयोभयनिष्ठो यः साधारणो धर्मस्तस्य सम्बन्धः। **क्वचित्** कुत्रचित् विशेषतो यत्र वाचकपदं सुबन्तं तत्र **विशेषणतया** विशेषणरूपेण। **अन्वेति** अन्वितो भवति। **क्वचित्**

कुत्रचित्तु विशेषतो यत्र साधारणधर्मवाचकपदं तिङन्तं तत्र **विशेष्यतया** विशेष्यरूपेण। अन्वेतीति। एवमनेन विधिना। **'चन्द्र इवाह्लादकं मुखम्' इत्यादौ। आह्लादकोपमानभूतचन्द्राभिन्नम्** आह्लादकस्यानन्दप्रदस्य उपमानभूतः प्रतियोगित्वेन गृहीतो यश्चन्द्रः शशी तदभिन्नं तत्समानम्। **आह्लादकमानन्दप्रदम्। मुखं** वदनम्। **इति। बोधः** ज्ञानं यत्राह्लादनसाधारणधर्मो विशेषणतयाऽन्वितोऽस्ति। **चन्द्र इव मुखमाह्लादयति इत्यादौ च। उपमानभूतचन्द्रकर्तृकाह्लादभिन्नः** उपमानभूतः सादृश्यप्रतियोगित्वेन गृहीतो यश्चन्द्रस्तत्कर्तृकस्तत्कर्तृभूतो य आह्लाद आनन्दं तस्मादभिन्न एकरूपः। **मुखकर्तृकाह्लादः** मुखं कर्ता यस्य तादृश आह्लाद आनन्दनम्। **इति** इत्थम्। **बोधः** ज्ञानं यत्र आह्लादरूपसाधारणधर्मो विशेष्यतयाऽन्वितोऽस्ति। **इदं मतमिति। 'उपमानानि सामान्यवचनैः'** ( पा० सू० २।१।५५ ) **इत्यत्र** इति यत्सूत्रं तत्सम्बद्धे। **भाष्ये** पातञ्जलमहाभाष्ये। **स्पष्टमिति।** अत्राद्ये चन्द्रस्य चन्द्रमुखोभयनिष्ठाह्लादकत्वरूपसाधारणधर्मवत्वेन स्वल्पभेदवन्मुखपरिच्छेदकत्वं मुखस्याह्लादकत्वेन परिच्छेद्यत्वम्। अत्रेदमवधेयं यत्साधारणधर्मो ह्युभयनिष्ठो भवति किन्तु उपमाने तस्याधिक्यं भवति तदपेक्षयोपमेये न्यूनताऽपि। साधारणधर्मसम्बन्धेनैवोपमानं हि उपमेयं बोधयति उपमेयश्चोपमानेन बोध्यो भवति। साधारणधर्मश्च विशेषणविशेष्योभयरूपेणोपस्थितो भवति स्थानमादृत्य। यत्र हि प्रातिपदिकमस्य वाचकं तत्रायं विशेषणरूपेण यत्र तु तिङन्तपदमस्य वाचकं तदा विशेष्यरूपेणायमुपतिष्ठते। यथा चन्द्र इवाह्लादकं मुखमित्यत्र चन्द्र आह्लादकमुखस्य विशेषणम्। एतादृशं मुखं यद्धि चन्द्रवद् आह्लादकमिति बोधः। अत्र साधारणधर्मो विशेषणत्वेन वर्तते। 'चन्द्र इव मुखमाह्लादयति' इत्यत्र तु साधारणधर्मभूत आह्लादो विशेष्यः यस्य मुखकर्तृकः चन्द्रकर्तृकाह्लादादभिन्न इति द्वे विशेषणे येन एतादृश आह्लादो यस्य कर्तृ मुखं तस्मादाह्लादादभिन्नो यस्य कर्ता चन्द्र इति बोधः।

आलङ्कारिकास्तु इवनिपातं वाचकमेव मन्यन्ते। उपमानोपमेयसाधारणधर्मवाचकशब्देति चतुष्टयोपस्थितौ पूर्णोपमा तेष्वेकस्य लोपे लुप्तोपमेत्युच्यतेऽलङ्कारसूत्रादौ।

**हिन्दी**—दूसरे तो इव शब्द को उपमानता का द्योतक मानते हैं। उपमान एवं उपमेय दोनों में रहे साधारण धर्म से युक्त होने के नाते कुछ कम धर्म वाले दूसरे का परिच्छेदक होना उपमानता है। उस धर्म से युक्त होने के कारण परिच्छेद्य होना उपमेयत्व है। साधारण धर्म का सम्बन्ध कहीं तो विशेषण के रूप में अन्वित होता है और कहीं विशेष्य के रूप में। इस प्रकार 'चन्द्र इव आह्लादकं मुखम्' में 'आह्लादक के उपमान बने चन्द्र से अभिन्न आह्लादक मुख है' ऐसा बोध होता है। 'चन्द्र इव मुखमाह्लादयति' इत्यादि में उपमान बने चन्द्र के द्वारा किये गये आनन्द से अभिन्न मुख द्वारा किया गया आह्लाद, ऐसा बोध होता है। यह जो है 'उपमानानि सामान्यवचनैः' ( पा० सू० २।१।५५ ) सूत्र के भाष्य में स्पष्ट रूप से कहा गया है।

( ९२ ) नञ् द्विविधः—पर्युदासः प्रसज्यप्रतिषेधश्च। तत्रारोपविषयत्वं नञ्पर्युदासद्योत्यम्। आरोपविषयत्वद्योतकत्वञ्च नञः स्वसमभिव्याहृतघटादि-

पदानामारोपितप्रवृत्तिनिमित्तबोधकत्वे तात्पर्यग्राहकत्वम् । प्रवृत्तिनिमित्तं घटत्वब्राह्मणत्वादि । तस्मादब्राह्मण इत्यादौ आरोपितब्राह्मणत्ववान् क्षत्रियादिरिति बोधः । अत एवोत्तरपदार्थप्राधान्यं नञ्तत्पुरुषस्येति प्रवादः सङ्गच्छते । अत एव च 'अतस्मै ब्राह्मणाय' 'असः शिवः' इत्यादौ सर्वनामकार्यम् । अन्यथा गौणत्वान्न स्यात् । प्रवृत्तिनिमित्तारोपस्तु सदृश एव भवतीति पर्युदासः सदृशग्राहीति प्रवादः । पर्युदासे निषेधस्त्वार्थः । अन्यस्मिन्नन्यधर्मारोपस्त्वाहार्यज्ञानरूपः । बाधकालिकमिच्छाजन्यं ज्ञानं त्वाहार्यमिति वृद्धाः । सादृश्यादयस्तु प्रयोगोपाधयः पर्युदासे त्वार्थिका अर्थाः । तदुक्तं हरिणा—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ।। इति ।

तत्सादृश्यं गर्दभेऽनश्वोऽयमित्यादौ । अभावस्तु प्रसज्यप्रतिषेधे वक्ष्यते । तदन्यत्वम् 'अमनुष्यं प्राणिनमानय' इत्यादौ । तदल्पत्वम् अनुदरा कन्या इत्यत्र, अर्थात् स्थूलत्वनिषेधेनोदरस्याल्पत्वं गम्यते । अप्राशस्त्यं ब्राह्मणेऽब्राह्मणोऽयमिति प्रयोगे । विरोधे असुरः अधर्म इति प्रयोगे ।

**व्याख्या**—नञोऽर्थद्योतकत्वनिरूपणाय प्रकरणमारभमाणः प्रथमं तस्य पर्युदासस्वरूप तद्द्योत्यार्थञ्च निरूपयति—नञित्यादिना । नञ् नञाख्यो निपातः । द्विविधः द्विप्रकारकः पर्युदासः सदृशग्राही । प्रसज्यप्रतिषेधः निषेधकृत् । च । यथोक्तम्—

'द्वौ नञौ च समाख्यातौ पर्युदासप्रसज्यकौ ।
पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत् ।।' इति ।

तत्र—

'प्राधान्यं हि विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ।।
अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ् ।।' इति ।

तत्र द्विविधनञ्मध्ये । आरोपविषयत्वम् आरोपस्य अतद्वति तत्प्रकारकं ज्ञानमारोपस्तस्य आरोपितज्ञानस्य विषयत्वं विषयभावः । नञ्पर्युदासद्योत्यं पर्युदासनञो द्योत्यार्थः । नञः नञाख्यनिपातस्य । आरोपितविषयत्वद्योतकत्वम् आरोपितोऽतद्वति तत्प्रकारकज्ञानत्वेन गृहीतो यो विषयस्तस्य भावस्तत्त्वस्य द्योतकत्वं प्रकाशकत्वम् । च तु । स्वसमभिव्याहृतघटादिपदानां स्वस्य समभिव्याहृतानि अव्यवहितरूपेण सहोच्चरितानि यानि घटादिपदानि तेषाम् । आरोपितप्रवृत्तिनिमित्तबोधकत्वे आरोपितस्य प्रवृत्तेर्यन्निमित्तं तस्य बोधकत्वे ज्ञापकत्वे । तात्पर्यग्राहकत्वं तात्पर्यस्य ग्राहकत्वं ज्ञापनमेव । प्रवृत्तिनिमित्तं प्रवृत्तेर्निमित्तं हेतुः । घटत्वब्राह्मणत्वादि घटत्वब्राह्मणत्वादि धर्मः । तस्मात् तद्धेतोः । अब्राह्मणः न ब्राह्मणः अब्राह्मण इत्यादौ । आरोपितब्राह्मणत्ववान् असत्यपि ब्राह्मणत्वे आरोपितब्राह्मणत्वयुक्तः । क्षत्रियादिः । इति । बोधः ज्ञानमिति । अत एव

यतो हि नञ् आरोपितब्राह्मणत्वादिधर्मबोधकत्वे तात्पर्यस्य ज्ञापकस्तस्मादेव। नञ्तत्पुरुषस्य नञा सह यस्तत्पुरुषसमासस्तस्य। उत्तरपदार्थप्राधान्यं उत्तरे यत्पदं तस्य योऽर्थस्तस्य प्राधान्यं मुख्यता। इति इत्थम्। प्रवादः प्रकथनम्। सङ्गच्छते सुसङ्गतो भवतीति। अतः एतस्मात्कारणाद्। एव हि। च अपि। नञ्तत्पुरुषस्योत्तर-पदार्थप्राधान्यादेवेति। 'अतस्मै ब्राह्मणाय' 'असः शिवः' इत्यादौ इत्यादिवाक्ये। सर्वनामकार्यं सर्वनामसम्बन्धेन स्मैप्रभृतिकार्याणि। सिध्यतीति। उत्तरपदार्थप्राधान्ये सति उत्तरपदार्थभूतस्य सर्वनाम्नः सर्वनामताऽव्याहता भवतीति तत्र सर्वनामकार्य-मिति। अन्यथा उत्तरपदार्थप्राधान्याभावे। गौणत्वात् सर्वनाम्नोऽप्राधान्यात्। न स्यात् सर्वनामकार्यं न सम्पद्येतेति। प्रवृत्तिनिमित्तारोपः प्रवृत्तेर्निमित्तस्यारोपः। सदृशे तुल्ये समानधर्मवति। एव नान्यत्र यथा न चेतनस्याचेतने। भवति सम्पद्यत। इति पर्युदासः नञ्पर्युदासः सदृशग्राही तुल्यस्यैव ग्राहकः। इति। प्रवादः प्रकथनमिति। पर्युदासे नञ्पर्यु-दासे। निषेधः तत्र विधेरेव प्राधान्याद्यो निषेधार्थः सः। तु हि। आर्थः अर्थसम्बद्ध एव। न तु साक्षान्नञ्छब्देनेति।

अन्यस्मिन् एकस्मिन्। यथा क्षत्रियादौ। अन्यधर्मारोपः इतरधर्मारोपो यथा ब्राह्मणादेः। तु हि। आहार्यज्ञानरूपः आहार्यं कल्पितं यज्ज्ञानं तद्रूपः। बाधकालिकम् अर्थबाधकालभवम्। इच्छाजन्यमिच्छाप्रकल्पितम्। ज्ञानम्। आहार्यम् आहार्यसंज्ञकम्। इति। वृद्धाः शिष्टाः कथयन्तीति शेषः। सादृश्यादयः पर्युदासनञो ये सादृश्यादयोऽर्था-स्ते। तु। प्रयोगोपाधयः प्रयोगस्योपाधयो धर्माः। पर्युदासे नञ्पर्युदासे। तु हि। अर्थाः। आर्थिकाः अर्थप्रतीयमाना एवेति। उक्तार्थे हरिं प्रमाणयति—तदित्यादिना। तत् तदेव तथ्यम्। हरिणा वाक्यपदीयकृता। हरिणा तदाख्येन विपश्चिता। उक्तं कथितम्। तदनुवदति—तदित्यादिना। तत्सादृश्यम् अभावः च तदन्यत्वम् तदल्पता अप्राशस्त्यम् विरोधः च षट् नञर्थाः प्रकीर्तिताः इत्यन्वयः।

तत्सादृश्यं तेन सादृश्यं साम्यं धर्मादौ। अभावस्तदभावः तदनुपस्थितिः। तदन्यत्वं तद्भिन्नत्वम्। तदल्पता तन्न्यूनता। अप्राशस्त्यं हीनता। विरोधो मैत्र्यभावः। इति इत्थम्। षट् षड्विधाः। नञर्थाः नञ्निपातद्योत्यार्थाः। प्रकीर्तिताः कथिताः। इति। तदुदाहरति—तदित्यादिना। तत्सादृश्यं यथा गर्दभे खरे अनश्वः अश्वसदृशः किन्तु तद्भिन्नः अयम्। इत्यादौ। अभावः। तु हि। प्रसज्यप्रतिषेधे निषेधप्राधान्ये नञि। वक्ष्यते कथयिष्यते। तदन्यत्वं यथा अमनुष्यं मनुष्येतरं प्राणिनं जीविनम् आनय उप-स्थापय। इत्यादौ। तदल्पत्वं यथा अनुदरा कन्या इत्यत्र। अर्थात् अर्थबलात्। स्थूलत्व-निषेधेन स्थूलत्वमुदरस्य स्थौल्यं तस्य निषेधेन निरोधेन। उदरस्य। अल्पत्वं तनुत्वम्। गम्यते ज्ञायते। अप्राशस्त्यं यथा ब्राह्मणे वस्तुतो ब्राह्मणे। अयम्। अब्राह्मणः। इति प्रयोगे कथने। विरोधे यथा असुरः अधर्मः इति प्रयोगे कथने।

प्रकरणस्यास्यायमाशयः—अर्थदृष्ट्या नञ्निपातो द्विविधः—पर्युदासः प्रसज्यप्रति-षेधश्च। यद्यप्यस्य सर्वत्र निषेधार्थ एव गम्यस्तथापि स क्वचिद् गौणत्वेन क्वचित्तु प्राधान्येनापि गृह्यते। नञ्पर्युदासे यत्र नञो ह्युत्तरपदेन सह भवति समासो भवति

तत्र निषेधार्थस्य गुणभावो यथा अब्राह्मण इत्यादौ। प्रसज्यप्रतिषेधे यत्र क्रियया सह नञ् तस्य प्राधान्यमापद्यते यथा पटो नास्तीत्यादौ। पर्युदासे नञ् सदृशग्राही भवति प्रसज्यप्रतिषेधे तु निषेधकृदिति प्रपञ्चः। शाब्दिकनये पर्युदासे आरोपविषयत्वमेव नञ्द्योत्योऽर्थः। आरोपस्तु अतद्वति तत्प्रकारकं ज्ञानमेव। तेन पर्युदासनञ् स्वसमीपव्याहृतपदवाच्यार्थं आरोपितज्ञानविषयतावानिति द्योतयति। यथा अब्राह्मण इत्यस्य आरोपितविषयत्ववान् ब्राह्मण इत्यर्थः। यतो हि पर्युदासनञ् आरोपितविषयताद्योतकः तेन नञ्समास उत्तरपदार्थप्रधानो भवति। तस्य तद्वाचकत्वे तु पूर्वपदार्थप्राधान्यताऽऽपद्यते येन उत्तरपदार्थप्रधानो नञ्तत्पुरुष इति न्यायस्यासङ्गतिरेव स्यात्। एवमेव नञोऽर्थवाचकत्वे तस्य प्राधान्येन 'अतस्मै' 'असः' इत्यादिप्रयोगसिद्धिरपि न स्यात्, पूर्वपदार्थप्राधान्येन तच्छब्दस्य सर्वनामसंज्ञात्वाभावात् 'अतिसर्वाय' इत्यादाविव। तस्यार्थद्योतकत्वे तु उत्तरपदार्थप्राधान्येन तच्छब्दस्य सर्वनामसंज्ञाभावादुक्तप्रयोगसिद्धिः। अन्यस्मिन्नन्यधर्मारोपे स्वल्पमपि सादृश्यं त्वावश्यकमेव। नितान्तमसदृशे वस्तुनि तु वस्त्वन्तरधर्मारोपो नैव सम्भवतीति पर्युदासनञः सदृशग्राहकत्वं नैव दुष्यति। पर्युदासे निषेधस्तु आर्थ एव भवति तस्य नञ्द्योत्यार्थारोपोत्पन्नत्वात्। अत एव पर्युदासे आरोपस्य प्राधान्यं निषेधस्य गौणता कथिता।

हिन्दी—नञ् दो प्रकार का होता है—पर्युदास और प्रसज्यप्रतिषेध। उसमें नञ्पर्युदास का द्योत्य अर्थ है—आरोपविषयत्व अर्थात् आरोपित ज्ञान का विषय बनना। आरोपित विषय का जो द्योतकत्व है, वह भी अपने साथ अव्यवहित रूप से उच्चरित घट आदि पदों के आरोपित प्रवृत्तिनिमित्त का बोधक होने में, इस तात्पर्य का ज्ञापन करना। प्रवृत्ति के निमित्त हैं—घटत्व, ब्राह्मणत्व आदि। इसी कारण अब्राह्मण इत्यादि आरोपित ब्राह्मणत्व से युक्त क्षत्रिय आदि ऐसा बोध होता है। इसी कारण 'नञ्तत्पुरुष में उत्तरपद का अर्थ प्रधान होता है' ऐसा कथन सुसङ्गत होता है। इसी कारण ही 'अतस्मै ब्राह्मणाय' 'असः शिवः' इत्यादि में सर्वनाम कार्य होता है, अर्थात् उत्तरपद के प्राधान्य होने के कारण ही 'तद्' शब्द को यहाँ भी सर्वनामसंज्ञा होती है। वैसा न होने पर अर्थात् नञ् के वाचक होकर उसके प्राधान्य होने पर सर्वनाम की गौणता ही होती और उसे सर्वनाम संज्ञा न होती। प्रवृत्तिनिमित्त का आरोप तो सदृश में हो पाता है, इस हेतु पर्युदास सदृशग्राही ही होता है, ऐसा कथन ठीक ही है। पर्युदास में निषेध तो आर्थ अर्थात् अर्थ से उत्पन्न अर्थ ही है (मुख्य अर्थ नहीं। अतः पर्युदास में निषेध अर्थ गौण होता है और आरोप मुख्य।)

एक में दूसरे के धर्म का आरोप तो आहार्य ज्ञान रूप ही होता है। बाधकालिक अर्थात् बाधित ज्ञान की स्थिति में इच्छाजन्य ज्ञान आहार्य है (और आहार्य और आरोप लगभग समानार्थक हैं), ऐसा शिष्ट लोग कहते हैं। सादृश्य आदि जो प्रयोग की उपाधियाँ अर्थात् धर्म हैं, वे पर्युदास में तो अर्थ से उत्पन्न अथवा अर्थ के बाद में होने वाले अर्थ ही हैं अर्थात् अर्थ से प्रतीयमान अर्थ हैं।

हरि ने भी कहा है—

उसकी सदृशता, उसका अभाव, उससे भिन्नता, उसकी न्यूनता, उसकी निन्दनीयता और उसका विरोध—ये छ नञ् के अर्थ हैं, जो कि नञ् के द्योत्य अर्थ से व्यक्त होते हैं।

उसकी सदृशता—गदहे में यह अनश्व ( घोडा नहीं ) है इत्यादि में। अभाव तो प्रसज्यप्रतिपेध में वतलाया जाएगा। उससे भिन्नता—अमनुष्य ( मनुष्य से भिन्न ) प्राणी को ले आओ इत्यादि में। उसकी न्यूनता—अनुदरा ( छोटे पेट वाली ) कन्या अर्थात् स्थूलत्व के निषेध से पेट का छोटापन जाना जाता है। हीनता—ब्राह्मण में यह अब्राह्मण है, ऐसे प्रयोग में। विरोध—असुर ( सुर के विरोधी ), अधर्म ( धर्म का विरोधी ) आदि प्रयोग में।

(९३) पर्युदासस्तु स्वसमभिव्याहृतपदेन सामर्थ्यात् समस्ते एव। क्वचित्तु 'यजतिषु ये यजामहं करोति नानुयाजेषु' इत्यादौ घटः अपटो भवति इत्यर्थके घटो न पटः इत्यादौ च समासविकल्पादसमासेऽपि। अत्रान्योन्याभावः फलितो भवति।

**व्याख्या**—पर्युदासनञः स्थितिं निर्दिशति—**पर्युदास** इत्यादिना। **पर्युदासः** पर्युदासनञ्। **तु** हि। **स्वसमभिव्याहृतपदेन** स्वेन सहोच्चरितपदेन **सामर्थ्यात्** सामर्थ्यहेतोः। **समस्ते** समस्तपदे। **एव** हि। भवतीति शेषः। **क्वचित्** कुत्रचित्। **तु** तद्व्यतिरिक्तम्। **यजतिषु ये यजामहं करोति नानुयाजेषु** नानुयाजेषु अनुयाजेतरेषु। यजतिषु यागेषु। होता ये यजामहं करोति ये यजामहे मन्त्रमुच्चारयति इत्यादौ। अत्र नानुयाजेषु इत्यत्र नञोऽनुयाजसम्बन्धमाश्रित्य पर्युदासस्यैवाश्रयणमसमस्तेऽपीति। **घटः अपटो भवति** घटः कुम्भः, अपटः पटभिन्नो भवति। **इत्यर्थके** इत्यर्थमाश्रित्य प्रयुक्ते **घटो न पटः**। **इत्यादौ** अत्र अपट इति आरोपितपटत्ववान् इत्याशयेन विधेरेव प्राधान्यं घटः पटत्वाभाववानिति अर्थतः। **समासविकल्पात्** पर्युदासनञ्यपि पटस्य समासाभावेन। **असमासे** समासरहितस्थले। **अपि** च। पर्युदास इति। अत्र प्रयोगेऽस्मिन् 'घटो न पटः' इत्यत्र। **अन्योऽन्याभावः** घटपटयोः पारस्परिकभिन्नता। **फलितः** फलितार्थः। **भवति**। नञोऽर्थस्तु आरोप एवेति।

प्रायेण पर्युदासः स्वसमभिव्याहृतपदेन सह समस्तरूपेणैव भवति, क्वचित्तु समासस्यापि विकल्पदर्शनादसमस्तेऽपीति प्रकरणस्यास्यार्थः।

**हिन्दी**—पर्युदास नञ् अपने साथ अव्यवहित रूप से उच्चरित पद के साथ सामर्थ्य के कारण समास वाला ही होता है। कहीं तो 'यजतिषु ये यजामहं करोति नानुयाजेषु' इत्यादि में ( न अनुयाजेषु में ) 'घटः अपटो भवति' इस अर्थ में प्रयुक्त 'घटो न पटः' इत्यादि में भी समास के विकल्प होने से समास रहित स्थल में भी पर्युदास होता है। यहाँ 'घटो न पटः' में घट एवं पट की पारस्परिक जो भिन्नता है, वह फलित अर्थ है, नञ् का अर्थ तो आरोप ही है।

( ९४ ) प्रसज्यप्रतिषेधस्तु समस्तोऽसमस्तश्चेति द्विविधः। तत्र विशेष्य-

तया क्रियान्वयनियमात् सुबन्तेन असामर्थ्येऽपि असूर्यललाटयो इत्यादिज्ञापकात् समासः । तदुक्तम्—

'प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्' इति । अत्र क्रियापदं गुणस्याऽप्युपलक्षणमिति बहवः । अत एव नञ्सूत्रे भाष्ये 'प्रसज्यायं क्रियागुणौ ततः पश्चात् निवृत्तिं कुरुते' इत्युक्तम् । उदाहरणं नास्माकमेकं प्रियमिति । एकप्रियप्रतिषेधे बहुप्रियप्रतीतिः । एवं न सन्देहः नोपलब्धिरित्याद्युदाहरणं गुणस्य सन्देहादीनां गुणत्वात् । क्रियोदाहरणञ्च अनचि च गेहे घटो नास्तीत्यादि ।

**व्याख्या**—प्रसज्यप्रतिषेधस्य स्वरूपं निर्दिशति—**प्रसज्यप्रतिषेध** इत्यादिना । **प्रसज्यप्रतिषेधः** यत्र क्रियया सह नञ् सः । **तु** हि । **समस्तः** समासयुक्तः । **असमस्तः** समासरहितः । **च** अपि । **इति** इत्थम् । **द्विविधः** द्विप्रकारकः । **तत्र** समस्तस्थले । प्रसज्यप्रतिषेधनञः **विशेष्यतया** प्रधानरूपेण । **क्रियान्वयनियमात्** क्रियया सह अन्वयस्य यो नियमस्तस्मात् । **सुबन्तेन** सुबन्तपदेन सह । **असामर्थ्ये** एकार्थीभावरूपसामर्थ्यरहितत्वे । **अपि च** । **असूर्यललाटयोः** 'असूर्यललाटयोर्दृशितपोः' ( पा० सू० ३।२।२६ ) । **इत्यादिज्ञापकात्** इति प्रभृतिसूत्रे तथादर्शनात् । **समासः** इति । अयम्भावः—प्रसज्यप्रतिषेधे नञ् क्रियया सह विशेष्यरूपेणान्वेति । सुबन्तेन सह तु एकार्थीभावाभावात् सामर्थ्यहीनतया 'समर्थः पदविधिः' ( पा० सू० २।१।१ ) इति नियमानुसारेण कथं समास इति चेदुच्यते, सामान्यतया प्रसज्यप्रतिषेधे सुबन्तेन सह न समासावसरस्तथापि कतिपयप्रयोगेऽपवादरूपेण समासप्रयोगोऽपि दृश्यते 'असूर्यललाटयोर्दृशितपोरि'ति सूत्रे । सूत्रमिदम् 'असूर्यकर्मवाचकोपपदे दृश् धातोः खश्प्रत्ययविधानं करोति 'असूर्यम्पश्या राजदारा' इत्यादौ । अत्र नञः सम्बन्धो दृशिक्रियया सहैव न तु सूर्यशब्देन सूर्यं न पश्यन्तीति विग्रहात् । अतो नञ्सूर्ययोः परस्परानन्वितत्वरूपासामर्थ्यात् समासावसराभावेऽपि व्यवहारे तथाप्रयोगदर्शनात्समासज्ञापकसूत्रं प्रणीतमाचार्येण । अनेन सिध्यति यत्क्वचित्सामर्थ्याभावेऽपि समासो भवतीति । अयं ह्यसमर्थसमास इत्युच्यते । उक्तं यथा काशिकायाम्—असूर्यं इति असमर्थसमासोऽयं दृशिना नञः सम्बन्धात् सूर्यं न पश्यन्तीति । उक्तं प्रमाणयति—**तदित्यादिना** । **तत्** तेन । **उक्तं** कथितं केनचिदिति । **प्रसज्येत्यादि**—अयम् प्रसज्यप्रतिषेधः यत्र क्रियया सह नञ् इत्यन्वयः । **अयं** प्रयोगः । **प्रसज्यप्रतिषेधः** तदाख्यो यत्र विध्यपेक्षया निषेधस्य प्राधान्यम् । **यत्र** । **क्रियया** आख्यातेन । **सह नञ्** नञ्निपातः । **इति** । **अत्र** प्रसङ्गेऽस्मिन् । **क्रियापदं** क्रियेति पदम् । **गुणस्य** गुणवाचकशब्दस्य । **अपि च** । **उपलक्षणं** संसूचकम् । **इति** इत्थम् । **बहवः** अनेके पण्डिताः । कथयन्तीति शेषः । प्रसज्यप्रतिषेधे नञोऽर्थस्य प्राधान्यं भवति तथा तस्य सम्बन्धः क्रियया सहैव भवति किन्तु न सर्वत्र नञ् क्रियया सहैवान्वितो दृश्यतेऽपितु क्रिययेव गुणवाचकशब्देन सहाप्यस्य सम्बन्धो दृश्यते । उक्तार्थे भाष्यं प्रमाणयति—**एवमित्यादिना** । **एवमित्थं** हि । **'नञ्'** इति **सूत्रे** ( पा० सू० २।२।६ ) **भाष्ये** महाभाष्यग्रन्थे । **अयं** नञ् । **क्रियागुणौ** क्रिया च गुणश्च तौ । **प्रसज्य** प्रसक्तौ कारयित्वा ।

ततः पश्चात् तदनु। निवृत्तिं निषेधम्। करोति विदधाति इति। इति इत्थम्। उक्तं व्याख्यातम्। उदाहरणं निदर्शनम्। 'नास्माकमेकं प्रियम्' इति। अत्र हि नञः सम्बन्ध एकत्वसङ्ख्यया न तु क्रियया। तेन एकप्रियप्रतिषेधे एकस्य प्रियस्य प्रतिषेधेन। बहुप्रिय-प्रतीतिः एकाधिकप्रियावभासनम्। अत्रैकत्वसङ्ख्या यया नञ् सम्बद्धः गुणो न तु क्रिया। 'न न एकं प्रियमि'त्यादौ एकप्रतिषेधसामर्थ्यादिव सङ्ख्यान्तरयुक्तवस्तुप्रतीति-रिति। एवम् इत्थमेव। 'न सन्देहः' 'नोपलब्धिः' इत्याद्युदाहरणम् एवम्प्रभृतिनिदर्शनम्। गुणस्य गुणेन सह प्रसज्यप्रतिषेधस्य। सन्देहादीनां सन्देहस्य उपलब्धेश्च। गुणत्वात् गुण-भावात्। क्रियोदाहरणं क्रियायाः उदाहरणं निदर्शनम्। च अपि। 'अनचि च' (पा० सू० ८।४।४७) 'गेहे घटो नास्ति' इत्यादि। 'अनचि चे'ति सूत्रे अनचि इति पदं विधिपरकत्वेन निषेधपरकत्वेन च द्विधा व्याख्यातमस्ति। विधिपरकार्थानुसारेण अचोऽव्यवहितोत्तरत्वेन विद्यमानस्य यरः द्वे वा स्तोऽच्पराभावे। निषेधपरकार्थानु-सारेण अचोऽव्यवहितोत्तरत्वेन विद्यमानस्य यरोऽचि परे न द्वित्वमिति। केचिदत्र भाष्यकारकाशिकारादयः प्रसज्यप्रतिषेधं मन्यन्ते, किन्तु कैयटहरदत्तादयस्तु प्रसज्य-प्रतिषेधं मन्यन्ते। गेहे घटो नास्ति इत्यादौ गेहनिरूपितविषयतावद्घटकर्तृकसत्ता-प्रतियोगिताकाभाव इत्याशयः।

हिन्दी—जो प्रसज्यप्रतिषेध है, वह समस्त एवं असमस्त भेद से दो प्रकार का होता है। उसमें विशेष्य के रूप में क्रिया के साथ अन्वय होने के नियम होने से सुबन्त के साथ सामर्थ्य के न रहने पर भी 'असूर्यललाटयोर्दृशितपोः' इत्यादि ज्ञापक से समास होता है। जैसे कि कहा गया है—

जहाँ क्रिया के साथ नञ् हो, वह प्रसज्यप्रतिषेध होता है।

इस कथन में 'क्रिया' शब्द गुण का उपलक्षण है, ऐसा बहुत लोग मानते हैं। इसी कारण 'नञ्' सूत्र के भाष्य में 'यह पहले क्रिया एवं गुण की प्रसक्ति करा के तब बाद में उनकी निवृत्ति अर्थात् निषेध करता है', ऐसा कहा गया है। उदाहरण है—'नास्माक-मेकं प्रियम्'। यहाँ एक प्रिय के निषेध से अनेक प्रिय की प्रतीति होती है। इसी प्रकार 'न सन्देहः' 'नोपलब्धिः' इत्यादि उदाहरण गुण के हैं, सन्देह आदि के गुण होने से। क्रिया के उदाहरण भी 'अनचि च' 'गेहे घटो नास्ति' इत्यादि हैं।

कहने का तात्पर्य यह है कि प्रसज्यप्रतिषेध वहाँ होता है, जहाँ क्रिया के साथ नञ् होता है। यहाँ क्रिया का अर्थ गुण भी समझना चाहिए। इसमें निषेध अर्थ का प्राधान्य रहता है और इसलिए वह विशेष्य के रूप में अर्थात् प्रधान होकर रहता है। नञ् का क्रिया के साथ अन्वय होने के कारण सुबन्त पद के साथ समास होने के सामर्थ्य के न रहने पर भी 'असूर्यललाटयोर्दृशितपोः' सूत्र के ज्ञापन से समास माना जाता है और 'असूर्यम्पश्या' जैसे प्रयोग सिद्ध होते हैं। यहाँ भी नञ् का सम्बन्ध दृशि क्रिया से है, न कि सूर्य से। 'न सन्देहः' 'नोपलब्धिः' आदि गुण के उदाहरण हैं और 'अनचि' 'गेहे घटो नास्ति' आदि क्रिया के। अतः प्रसज्यप्रतिषेध नञ् समस्त एवं असमस्त दोनों रूप में रहता है।

(९५) तस्य समस्तस्य तु अत्यन्ताभाव एवार्थः। असमस्तस्य तु अत्यन्ताभावोऽन्योन्याभावश्च। तादात्म्येतरसम्बन्धाभावोऽत्यन्ताभावः। तादात्म्यसम्बन्धाभावोऽन्योन्याभावो भेद इत्यर्थः। 'असूर्यम्पश्या राजदाराः' 'गेहे घटो नास्ति' 'घटो न पटः' इत्युदाहरणानि। प्रागभावप्रध्वंसाभावौ तु न नञ्द्योत्यौ। तत्रात्यन्ताभावो विशेष्यतया तिङन्तार्थक्रियान्वय्येव। नञर्थोऽत्यन्ताभावविशेष्यकबोधे तिङ्समभिव्याहृतधातुजन्योपस्थितेः कारणत्वात्। तथा च 'घटो नास्ति' इत्यादौ घटकर्तृकसत्ताप्रतियोगिकोऽभावः इति बोधः। अत एव अहं नास्मि त्वं नासि इत्यादौ घटौ न स्तः घटा न सन्ति इत्यादौ च पुरुषवचनव्यवस्थोपपद्यते अन्यथा युष्मदादेस्तिङ्सामानाधिकरण्याभावात् मदभावोऽस्ति इत्यादाविव सा न स्यात्।

असन्देह इत्यादावारोपितार्थकनञैव समासः। अत्यन्ताभावस्तु फलित एव। वायो रूपं नास्ति इत्यत्र तु तात्पर्यानुपपत्त्या रूपप्रतियोगिकात्यन्ताभावे लक्षणा। तेन वाय्वधिकरणिका रूपाभावकर्तृका सत्ता इति बोधः। वस्तुतस्तु समनियताभावैक्यमाश्रित्य फलितार्थ एवायम्। अरूपमस्ति इत्यर्थकं वा तत्। एतेनात्यन्ताभावप्रकारकक्रियाविशेष्यको बोध इति तार्किकोक्तमपास्तम्।

**व्याख्या**—प्रसज्यप्रतिषेधस्य प्रयोगार्थं विवृणोति—**तस्येत्यादिना**। **तस्य** प्रसज्यप्रतिषेधस्य। **समस्तस्य** समासाबद्धस्य। **तु** हि। **अत्यन्ताभावः** प्रतियोग्यसमानाधिकरणाभावः। **एव** हि। **अर्थः** आशयः। **असमस्तस्य** समासाबद्धस्य। **तु** तद्व्यतिरिक्तम्। **अत्यन्ताभावः**। **अन्योन्याभावः** अन्योन्यस्मिन्नन्योन्यस्याभावः। **च**। अत्यन्ताभावं विवृणोति—**तादात्म्येत्यादिना**। **तादात्म्येतरसम्बन्धाभावः** तादात्म्यं तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वं तदितरस्तद्भिन्नो यः सम्बन्धस्तस्याभावः। **अत्यन्ताभावः** अत्यन्ताभावबोध्यार्थः। **तादात्म्यसम्बन्धाभावः** तादात्म्यसम्बन्धस्य योऽभावः सः। **अन्योन्याभावः**। **भेदः** पारस्परिकभिन्नता। **इत्यर्थः** इत्याशयः। **अयमाशयः**—समस्तस्य प्रसज्यप्रतिषेधनञः अत्यन्ताभावोऽर्थः। अत्यन्ताभावो हि अभेदसम्बन्धभिन्नसम्बन्धाभाव एव। असमस्तस्य तस्य तु अत्यन्ताभावोऽन्योन्याभावश्चार्थो यत्रान्योन्याभावोऽभेदसम्बन्धाभावः पारस्परिकभिन्नता वा। **'असूर्यम्पश्या राजदाराः'**। **'गेहे घटो नास्ति'**। **'घटो न पटः'**। **इति**। **उदाहरणानि** एतेषां निदर्शनानि। समासयुक्तप्रसज्यप्रतिषेधस्योदाहरणम् 'असूर्यम्पश्या राजदारा' इति। अत्र राजदाराणां यः सूर्यदर्शनक्रियाया अभावः सोऽत्यन्ताभावो यतोऽत्र तादात्म्येतरसम्बन्धस्य। समवायसम्बन्धस्य। अभावः। दर्शके हि दर्शनक्रिया समवायसम्बन्धेन तिष्ठति, तस्याभावः समवायसम्बन्धाभाव एव। 'गेहे घटो नास्ति' इति समासरहितप्रसज्यप्रतिषेधोदाहरणम्। अत्रापि घटकर्तृकसत्ताया अभावस्तादात्म्यसम्बन्धभिन्नसम्बन्धाभाव एव। प्रसज्यप्रतिषेधस्यान्योन्याभावोऽप्यर्थः। अस्योदाहरणं यथा—'घटो न पटः'। अत्र हि पटे यो घटत्वाभावः

स तादात्म्यसम्बन्धाभाव एव। अन्योन्यं नाम तादात्म्यमभेदो वा। अस्याभाव एवान्योन्याभावः। असौ हि फलितोऽर्थो यतो ह्यस्य मुख्यार्थस्त्वारोप एव।

**प्रागभावप्रध्वंसाभावौ** प्रागभावः प्रतियोगितापूर्वकालिकोऽभावः अजन्यत्वे सति विनाश्यभावो वा प्रध्वंसाभावः प्रतियोगिसत्तोत्तरकालिकोऽभावस्तौ। तु हि। न नैव। **नञ्द्योत्यौ** नञा प्रकाश्यौ। **तत्र** अत्यन्ताभावान्योन्याभावयोः। **अत्यन्ताभावः।** **विशेष्यतया** प्रधानरूपेण। **तिङन्तार्थक्रियान्वयी** तिङन्तार्थभूतायाः क्रियाया भावस्यान्वयी। एव हि। **नञर्थात्यन्ताभावविशेष्यकबोधे** नञर्थो योऽत्यन्ताभावः स विशेष्यः प्रधानं यत्र तादृशो यो बोधस्तस्मिन्। **तिङ्समभिव्याहृतधातुजन्योपस्थितेः** तिङ्समीपस्थधात्वर्थप्रकाशस्य। **कारणत्वात्** हेतुत्वात्। **प्रसज्यप्रतिषेधे** नञर्थस्य प्राधान्यं यदा पर्युदासे तस्यैवाप्राधान्यम्। समस्तेऽसमस्ते वा प्रसज्यप्रतिषेधेऽत्यन्ताभाव एवास्यार्थः। असौ हि अत्यन्ताभावरूपोऽर्थस्तिङन्तपदार्थक्रियायां विशेष्यरूपेणान्वितो भवति। अत्र हि तिङन्तपदं कृदन्तपदस्याऽप्युपलक्षणमन्यथा 'असूर्यम्पश्या राजदाराः' इत्यादौ न हि नञोऽर्थोऽत्यन्ताभावो विशेष्यः स्यात्। असौ हि गुणस्याऽप्युपलक्षणम्। **तथा च।** **घटो नास्ति इत्यादौ** इत्यादिवाक्ये। **घटकर्तृकसत्ताप्रतियोगिकः** घटः कर्ता यत्र तादृशी या सत्ता तत्प्रतियोगिकः। **अभावः। इति। बोधः** ज्ञानमिति। घटः सत्ताक्रियायाः कर्ता सत्ता ह्यभावस्य प्रतियोगिनी। तेन सत्ताभावयोः समानाश्रयता घटे विद्यते। **अतः** यतो हि नञर्थात्यन्ताभावस्य क्रियागुणौ प्रति विशेष्यत्वं तस्मात्। **एव हि।** **'अहं नास्मि' 'त्वं नासि' 'घटौ न स्तः' 'घटाः न सन्ति' इत्यादौ। च। पुरुषवचनव्यवस्था** पुरुषस्य वचनस्य च व्यवस्था प्रविधिः। **उपपद्यते** सुसङ्गता भवति। **अन्यथा** प्रसज्यप्रतिषेधनञो। क्रियागुणौ प्रति विशेष्याभावेन विशेषणभावे तु। **युष्मदादेः** युष्मदस्मत्प्रभृतेः। **तिङ्सामानाधिकरण्याभावात्** तिङा सह समानाधिकरणताविरहात्। **मदभावोऽस्ति इत्यादौ। इव। सा पुरुषवचनव्यवस्था। न** नैव। **स्यात्** सम्भवेत्। **अयमाशयः**—प्रसज्यप्रतिषेधनञर्थात्यन्ताभावस्य क्रियागुणौ प्रति विशेष्यभावेनैव अहं नास्मि, त्वं नासि, घटौ न स्तः, घटाः न सन्ति इत्यादिवाक्ये पुरुषवचनव्यवस्था सुसङ्गता भवति। एषु हि अभावोऽर्थ एव प्राधान्येन वर्तते, यस्य सत्ता विशेषणम्। सत्ता ह्यभावस्य प्रतियोगिनी येन सत्ताप्रतियोगिताकोऽभाव इत्यर्थो निष्पद्यते। अहं त्वं घटौ घटा इति सत्तायाः कर्तृत्वेनात्र सन्ति। सत्ताऽभावयोः सामानाधिकरण्यादेव तदनुसारेण पुरुषवचनव्यवस्था सङ्गच्छते। एतद्विपरीतं यदि हि नञर्थात्यन्ताभावस्य विशेषणत्वेन क्रियाया विशेष्यत्वं स्वीक्रियते तदा मदभावोऽस्ति इत्यादाविव मत्प्रतियोगिताकाभावकर्तृकसत्तार्थप्रतीत्या अभावस्य कर्तृत्वेन तेन सह सत्ताक्रियायाः सामानाधिकरण्यात् अभावमनुसृत्यान्यपुरुषैकवचनप्रयोगः क्रियते तथा अहं नास्मि इत्यत्रापि मत्कर्तृकसत्ताप्रतियोगिताकोऽभाव इत्येतस्य स्थाने अस्मत्प्रतियोगिताकाभावकर्तृका सत्तेति बोधादभावस्य सत्तायाः विशेषणत्वेन क्रियाया अभावेन सह सामानाधिकरण्यात् अस्मि इत्येतस्य स्थाने अस्तिक्रियायाः प्रयोग आपद्यत इति।

**'असन्देहः' इत्यादौ आरोपितार्थकनञा** आरोपितोऽर्थो यत्र तादृशेन नञा पर्युदास-

नञा । एव न तु प्रसज्यप्रतिषेधनञा । **समासः** सन्देहपदस्य समासः । **अत्यन्ताभावः** अत्यन्ताभावोऽर्थः । **तु** हि । **फलितः** अर्थोत्पन्नो न तु शब्दार्थः । **एव** । यदि हि अत्यन्ताभावनञर्थो विशेष्यत्वेन क्रियायामन्वितो भवति तदा असन्देह इत्यादौ प्रसज्यप्रतिषेधसमासयुक्तप्रयोगेषु नञ्तत्पुरुषे उत्तरपदार्थप्राधान्यनियमस्य कथं सङ्गतिरिति चेदुच्यते असन्देह इत्यादौ तु पर्युदासप्रतिषेध एव न तु प्रसज्यप्रतिषेधस्तेनात्र नञोऽर्थं आरोपितविषयत्वमेव । अत्यन्ताभावस्त्वत्रारोपरूपज्ञानान्तरज्ञेय इति फलित एव । **'वायौ रूपं नास्ति'** इत्यत्र । **तु** तद्व्यतिरिक्तम् । **तात्पर्यानुपपत्त्या** अत्यन्ताभावार्थस्य प्राधान्ये वायुनिरूपिताधेयतावद्रूपकर्तृकसत्ताप्रतियोगिताकोऽभाव इति वाक्यार्थो भवति । किन्तु वायौ वस्तुतो रूपाभावाद्रूपकर्तृकसत्ता नैव तत्र स्वीकर्तुं शक्या । तेन हि तात्पर्यस्य अनुपपत्त्याऽसिद्धचा । रूपपदस्य **रूपप्रतियोगिताकात्यन्ताभावे** रूपप्रतियोगिताको योऽत्यन्ताभावोऽर्थस्तस्मिन् अर्थे । **लक्षणा** । नञस्तु तस्य तात्पर्यग्राहकतेव । **तेन** हेतुना । **वाय्वधिकरणिका** वायुरधिकरणं यस्यास्तादृशी । **रूपभावकर्तृका** रूपस्याभावः कर्ता यस्यास्तादृशी । **सत्ता** । **इति** । **बोधः** । **वस्तुतः** यथार्थः । **तु** हि । **समनियताभावैक्यं** समनियतौ समानाशयौ यौ अभावौ रूपकर्तृकसत्ताभावो रूपाभावश्च तौ तयोरैक्यमेकाश्रयणम् । **आश्रित्य** आधारीकृत्य । **अयमेषः** रूपाभावः । **फलितार्थः** आर्थ एव रूपाभावः । एव न तु शब्दार्थः । यत्र यत्र रूपकर्तृकसत्ताभावस्तत्र तत्र रूपाभाव इति तयोः समनियतत्वम् । शब्दार्थस्तु रूपकर्तृकसत्ताभाव एवेति सर्वं सुस्थम् । **वा** इति पक्षान्तरे । **तत्** रूपं नास्तीति कथनम् । **अरूपमस्ति** इत्यर्थकम् एतादृशार्थयुक्तम् । अरूपमिति समस्तपदं पर्युदासप्रतिषेधात्मकं यत्र वायौ रूपमारोप्यते नञा तद्ग्राह्यते । तेनारोपितरूपवान् यो वायुस्तदधिकरणिकस्पर्शादिकर्तृकसत्तेति बोधो यतो रूपाभावप्रतीतिरिति । उक्तमेव अत्यन्ताभावेऽपि प्रसक्तं हि प्रतिषिध्यते इति न्यायेनारोपितप्रसङ्गस्यैव निषेधः । तेन वायौ रूपं नास्ति इत्यादावपि वायौ रूपारोपं कृत्वैव निषेधो नञा बोध्यते इति । **एतेन** व्याख्यानेनानेन । **अत्यन्ताभावप्रकारकक्रियाविशेष्यकः** अत्यन्ताभावः प्रकारो विशेषणं यत्रैतादृशी क्रिया विशेष्यो यत्र तादृशः **बोधः** । **इति** इत्थम् । **तार्किकोक्तं** नैयायिकसिद्धान्तितम् । **अपास्तं** निराकृतम् ।

**हिन्दी**—उस समासयुक्त प्रसज्यप्रतिषेध का अत्यन्ताभाव ही अर्थ है । समास रहित उसका तो अत्यन्ताभाव एवं अन्योन्याभाव, दो अर्थ होते हैं । तादात्म्य ( अभेद ) से भिन्न सम्बन्ध का अभाव ही अत्यन्ताभाव है । तादात्म्य सम्बन्ध का अभाव अन्योन्याभाव है और पारस्परिक भिन्नता इसका अर्थ है । 'असूर्यम्पश्या राजदाराः' 'गेहे घटो नास्ति' 'घटो न पटः' आदि इनके उदाहरण हैं । ( 'असूर्यम्पश्या' यह समस्त प्रसज्यप्रतिषेध का उदाहरण है और 'गेहे घटो नास्ति' यह समासरहित प्रसज्यप्रतिषेध का तथा 'घटो न पटः' यह अन्योन्याभाव का उदाहरण है । ) प्रागभाव एव प्रध्वंसाभाव तो नञ् से द्योत्य नहीं होते । उसमें भी अत्यन्ताभाव विशेष्य के रूप में तिङन्त के अर्थभूत क्रिया का अन्वयी अर्थात् क्रिया से अन्वित होता है, क्योंकि नञर्थभूत अत्यन्ताभाव है विशेष्य जिसमें, ऐसे बोध में तिङ् के साथ उच्चरित धातु के अर्थ की उपस्थिति का

कारण होता है। इसी प्रकार 'घटो नास्ति' इत्यादि में घट है कर्ता जिसमें, ऐसी सत्ता है प्रतियोगी ( विशेषण ) जिसका, ऐसे अभाव, इस तरह का शाब्दबोध होता है। इसी कारण 'अहं नास्मि' 'त्वं नासि' इत्यादि में 'घटौ न स्तः' 'घटाः न सन्ति' इत्यादि में भी पुरुष एवं वचन की व्यवस्था सुसङ्गत हो जाती है। ऐसा न होने पर युष्मद्-अस्मद् आदि का तिङ् के साथ सामानाधिकरण्य के अभाव में 'यदभावोऽस्ति' इत्यादि में जैसे वह व्यवस्था ठीक नहीं बैठ पाएगी।

असन्देह इत्यादि में आरोपित अर्थ वाले नञ् से ही समास हुआ है। अत्यन्ताभाव तो वहाँ फलित अर्थ अर्थात् आरोपित अर्थ के बाद ज्ञान होने वाला अर्थ है। 'वायौ रूपं नास्ति' में तो ( वायु में रूप न होने के कारण ) तात्पर्य की अनुपपत्ति होने से रूप है प्रतियोगी जिसमें, ऐसे अत्यन्ताभाव अर्थ में लक्षणा होती है। इस कारण वायु अधिकरण वाली रूपाभाव है कर्ता जिसकी, ऐसी सत्ता, ऐसा शाब्दबोध होता है। यथार्थ में तो जहाँ रूपकर्तृकाभाव है, वहीं रूपाभाव है, इस तरह दोनों के जो समनियत अभाव हैं, उनकी एकता का आश्रय लेकर रूपाभाव फलित अर्थ ही है। अथवा वह 'अरूपमस्ति' ऐसे अर्थवाला है। इससे 'अत्यन्ताभाव है प्रतियोगी अर्थात् विशेषण एवं क्रिया है विशेष्य जिसमें' ऐसा शाब्दबोध होता है—ऐसा नैयायिकों का कथन निरस्त हो जाता है। क्योंकि प्रसज्यप्रतिषेध में अत्यन्ताभाव ही विशेष्य होता है और क्रिया विशेषण।

( ९६ ) नन्वेवं घटसत्तारूपोऽर्थः प्रथमं बुद्धो नञा निवर्तयितुमशक्यः, सतो निषेधायोगादसतस्तु असत्त्वादेव निवृत्तिसिद्ध्या निषेधो व्यर्थः। तदुक्तम्—

सतां च न निषेधोऽस्ति सोऽसत्सु च न विद्यते।
जगत्यनेन न्यायेन नञर्थः प्रलयं गतः॥

इति चेन्न। बौद्धो हि शब्दो वाचको बौद्ध एवार्थो वाच्य इत्युक्तत्वाद् बुद्धिसतोऽप्यर्थस्य नञा बाह्यसत्तानिषेधात्। बुद्धौ सन्नपि घटो बहिर्नास्तीत्यर्थात्।

न च घटास्तिपदाभ्यां या घटविषयाऽस्तिबुद्धिर्जाता सा नञा निवर्त्यते किं बौद्धार्थस्वीकारेणेति वाच्यम्; बुद्धेः शब्दावाच्यत्वेन नञा तन्निषेधायोगात्। एतेन बौद्धार्थमस्वीकुर्वन्तो नञर्थबोधाय कष्टकल्पनां कुर्वन्तस्तार्किकाः परास्ताः।

**व्याख्या**—नञर्थबोधविषये तार्किकमतदूषणाय प्रकरणान्तरमारभते—नन्वित्यादिना। ननु इति प्रश्ने। एवं भवदुक्तविधिना। प्रथमं प्राक्। बुद्धः अवगतः। घटसत्तारूपः घटो नास्तीत्यत्र घटस्य सत्तात्मकः। अर्थः। नञा प्रसज्यप्रतिषेधनञा। निवर्तयितुं निषेद्धुम्। अशक्यः दुर्वारः। सतः सत्तात्मकस्य। निषेधायोगात् निषेधासम्भवात्। असतः सत्तारहितस्य। तु तद्व्यतिरिक्तम्। असत्त्वात् अनवस्थितेः। एव हि निवृत्तिसिद्ध्या निराकरणलाभात्। निषेधः नञा निवर्तनम्। व्यर्थः निष्प्रयोजनमेव। तत् तदेव तथ्यम्। उक्तं कथितम्—सतामित्यादि। सतां निषेधः न

अस्ति स असत्सु न विद्यते च अनेन न्यायेन जगति नञर्थः प्रलयं गतः इत्यन्वयः। सतां सद्वस्तूनाम्। निषेधः निवर्तनम्। च। न। अस्ति। न हि सतो निषेधसम्भवः। सः निषेधरूपनञर्थः। असत्सु असद्वस्तुषु। च अपि। न विद्यते क्रियापरो असत्त्वादेव तस्य निवृत्तेः। अनेन अनन्तरात्मेन। न्यायेन विधिना। जगति भुवने। नञर्थः नञ्द्योत्योऽभावार्थः। प्रलयं विनाशम्। गतः प्राप्त इति।

इति इत्थम्। कथ्यते चेत्। न नैवोपयुक्तम्। बौद्धः बुद्धिगतः। हि नान्यः। शब्दः। वाचकः अर्थाविबोधकः। बौद्धः बुद्धिगतः। एव न तु बाह्यः। अर्थः। वाच्यः अभिधेयः। इति इत्थम्। उक्तत्वात् सिद्धान्तितत्वात्। बुद्धिसतः बुद्धौ सतः सत्तावतः। अपि। अर्थस्य। नञा नञ्निपातेन बाह्यसत्तानिषेधात् बाह्या लौकिकी या सत्ताऽवस्थितिस्तस्या निषेधान्निवर्तनात्। घटो नास्ति इत्यस्य बुद्धौ बुद्धिविषये। सन् सत्तावान्। अपि। घटः कुम्भः। बहिः बाह्यजगति दृष्टिपथे। नास्ति न विद्यते। इति इत्थम्। अर्थात् अर्थावगतेः। न नैव। च हि। घटास्तिपदाभ्यां घटो नास्ति इत्यत्र घटपदेन अस्तिपदेन च सम्भूय। या यादृशी। घटविषया घटसम्बद्धा। अस्तिबुद्धिः घटसत्तात्मकमतिः। जाता निष्पन्ना। सा तादृशी बुद्धिः। नञा नञ्निपातेन। निवर्त्यते अपाक्रियते। बौद्धार्थस्वीकारेण बुद्धिगतार्थकल्पनेन। किं किम्प्रयोजनम्। इति इत्थम्। वाच्यं कथनीयम्। बुद्धेः बुद्धिगतार्थस्य। शब्दावाच्यत्वेन शब्देन अवाच्यत्वेनाकथनीयत्वेन। नञा नञ्निपातेन। तन्निषेधायोगात् तन्निवर्तनासम्भवात्। एतेन विवरणेनानेन। बौद्धार्थम् अर्थस्य बौद्धत्वम्। अस्वीकुर्वन्तः असमर्थयन्तः। नञर्थबोधाय नञ्द्योत्यार्थज्ञानाय। कष्टकल्पनाम्। कुर्वन्तः विदधतः। तार्किकाः नैयायिकाः। परास्ताः निराकृता इति।

हिन्दी—इस प्रकार घट की सत्तारूप अर्थ, जो पहले जाना गया है, उसका नञ् से निषेध करना सम्भव नहीं है, क्योंकि जो सत् है उसका निषेध नहीं होता, जो असत् है, उसकी तो सत्ता के न होने से ही स्वतः निवारण सिद्ध हो जाने से निषेध ही व्यर्थ है। जैसे कि कहा गया है—

'सत् वस्तु का निषेध नहीं होता, असत् वस्तु का निषेध ही प्राप्त नहीं होता। इस न्याय से संसार में नञर्थ नष्ट हो गया।'

ऐसा कहा जाय तो यह ठीक नहीं है। बौद्ध शब्द ही वाचक होता है और बौद्ध अर्थ ही वाच्य है, यह सिद्धान्त प्रतिपादित है। बुद्धि में रहे भी अर्थ का नञ् से बाह्य सत्ता का निषेध हो सकता है। बुद्धि में रहा भी घड़ा बाहर नहीं है, ऐसा अर्थबोध होता है।

न तो 'घटो नास्ति' में घट एवं अस्ति पदों के द्वारा जो घट-विषयक सत्ता की बुद्धि हो जाती है, उसका नञ् के द्वारा निषेध होता है। फिर बौद्धार्थ के स्वीकार से करना ही क्या है? ऐसा ही कहना ठीक है। बुद्धि के शब्द के द्वारा वाच्य न होने से नञ् से उसका निषेध सम्भव नहीं होता। इससे बौद्ध अर्थ का अस्वीकार करते हुए नञ् के अर्थबोध के लिए कष्टकल्पना करने वाले नैयायिक परास्त हो गये।

( ९७ ) घटो न पट इत्यत्र घटपदस्य घटप्रतियोगिकभेदाश्रयेऽप्रसिद्धा शक्तिरेव लक्षणा नञ्पदं तात्पर्यग्राहकम्। तात्पर्यग्राहकत्वञ्च द्योतकत्वमेवेत्युक्तम्। अत एवान्योन्याभावबोधे प्रतियोग्यनुयोगिपदयोः समानविभक्तिकत्वं नियामकमिति वृद्धोक्तं सङ्गच्छते।

यत्तु घटपदं घटप्रतियोगिके लाक्षणिकं नञ्पदं तु भेदवति। अतो घटप्रतियोगिकभेदवान् पट इति बोध इति तार्किकैरुक्तं, तन्न। भेदवति नञर्थे भेदस्यैकदेशत्वात् तत्र घटार्थानन्वयापत्तेः। पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन इति न्यायात्, पदद्वये लक्षणास्वीकारे गौरवाच्च। भाष्यमते लक्षणाया निपातानां वाचकत्वस्य च स्वीकाराभावादिति सङ्क्षेपः।

व्याख्या—'घटो न पटः' इत्यत्र नैयायिकसम्मतमर्थं निराकृत्य स्वाभिमतमर्थमुपस्थापयति—घट इत्यादिना। 'घटो न पटः' इत्यत्र घटपदस्य। घटप्रतियोगिकभेदाश्रये घटः प्रतियोगी ( विशेषणं ) यत्र तादृशो यो भेदाश्रयः पटस्तस्मिन्। अप्रसिद्धा शक्तिः एव लक्षणा। नञ्पदं घटो न पटमित्यत्र यन्नञ्पदं तत्। तात्पर्यग्राहकं द्योतकमेव। घटपदस्य पटेऽर्थे या लक्षणा तस्य नञ्द्योतकमित्याशयः। तात्पर्यग्राहकत्वं हि द्योतकत्वं स्वसमभिव्याहृतपदबोध्यार्थद्योतकत्वम्। एव। इति इत्थम्। उक्तं कथितम्। अत एव अनेनैव कारणेन। अन्योन्याभावबोधे अन्योन्याभावस्य तादात्म्यसम्बन्धाभावस्य बोधे ज्ञाने। प्रतियोग्यनुयोगिपदयोः विशेषणविशेष्ययोः। समानविभक्तिकत्वम् एकविभक्तौ प्रयुक्तत्वम्। नियामकं कारणम्। इति इत्थम्। वृद्धोक्तं शिष्टकथनम्। सङ्गच्छते सुसङ्गतं भवति। अयम्भावः—'घटो न पटः' इत्यत्र घटशब्दस्य घटभिन्नपटेऽर्थे लक्षणायां घटस्य तिङन्तेनास्तिपदेन सह प्रथमायाः विभक्तेः संयोजनं सम्भवति। रूपेऽस्मिन् भेदप्रतियोगिघटे तदनुयोगिपटे च समानविभक्तिकत्वेन अत्रान्योन्याभावार्थबोधः सम्भवतीति शिष्टानां मतं यदन्योन्याभावबोधे प्रतियोग्यनुयोगिपदयोः समानविभक्तिकत्वं नियामकमिति। किन्तु घटे प्रतियोगिताबोधकत्वसम्बन्धेन पटेनान्वयस्वीकारे तु घटपटयोः क्रियया सह सामानाधिकरण्याभावात्क्रिययाऽनुक्तत्वेन घटपदे प्रथमाविभक्त्यभावादुभयोर्भिन्नविभक्तिकतया नोक्तन्यायसङ्गतिः। यत् यदेव। तु हि। घटपदं घटो न पट इत्यत्र घटपदम्। घटप्रतियोगिके घटस्य प्रतियोगिभूतेऽर्थे। लाक्षणिकं लक्षणाविषयः। नञ्पदम्। तु हि। भेदवति भेदाश्रयभूते पटे। लाक्षणिकम्। अतः। घटो न पट इत्यस्य। घटप्रतियोगिकभेदवान् घटः प्रतियोगी यस्य तादृशो यो भेदस्तद्वान्। पटः। इति। बोधः शाब्दबोधः। इति इत्थम्। तार्किकैः नैयायिकैः। उक्तं कथितम्। तत् तादृशं कथनम्। न नैवोपयुक्तम्। भेदवति भेदाश्रयभूते। नञर्थे नञ्बोध्यार्थे। भेदस्य भेदवत एकदेशभूतस्य भेदस्य। एकदेशत्वात् एकभागमात्रत्वात्। तत्र नञर्थे। घटार्थानन्वयापत्तेः घटार्थान्वयासिद्धेः। पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन पदार्थो हि पदार्थेन सहैवान्वितो भवति न तु तदैकभागेन। इति इत्थम्। न्यायात् न्यायप्रसिद्धेः। पदद्वये द्वयोरेव पदयोः घटपटयोः। लक्षणास्वीकारे। गौरवात् गौरवा-

पत्तेः । च । भाष्यमते भाष्यकृन्मते । लक्षणायाः लक्षणावृत्तेः । निपातानां चादीनाम् । वाचकत्वस्य अर्थाविबोधकत्वस्य । स्वीकाराभावात् अस्वीकारात् । इति । सङ्क्षेपः सारतः कथितमिति । अयमाशयः—नैयायिकानुसारेण 'घटो न पटः' इत्यत्र घटपदस्यार्थो घटप्रतियोगी तथा नञोऽर्थो भेदवानिति । तयोरन्वयस्तु भेदवतः स्थाने तदेकदेशभूतभेदे एव सम्भवति । तथाकरणे पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति न्यायासङ्गतिः सञ्जायते । तथा सति घटपटयोरुभयोरेव पदयोः लक्षणा स्वीकर्तव्या यत्रानावश्यकं गौरवमापतति । भाष्यकारमते निपातानां वाचकत्वं नैव सिद्धम् । निपातास्त्वर्थस्य द्योतका एव । तेषां वाचकत्वकथनं भाष्यकृद्विरुद्धमेवेति ।

हिन्दी—'घटो न पटः' इस वाक्य में घट पद का घट है प्रतियोगी जिसका, ऐसा जो भेद है, उसके आश्रय में ( अर्थात् पट अर्थ में ) अप्रसिद्ध शक्ति ( अर्थात् लक्षणा ) होती है । नञ् पद तो उसी तात्पर्य का ग्राहक है । जो तात्पर्यग्राहकत्व है, वह अर्थ का द्योतकत्व ही है, ऐसा कहा गया है । इसी कारण 'अन्योन्याभाव के बोध में प्रतियोगी एवं अनुयोगी पदों का समान विभक्ति का होना ही नियामक है' इस तरह की वृद्धों की उक्ति सुसङ्गत हो जाती है ।

जो कि यह घट पद घटप्रतियोगिक अर्थ में लाक्षणिक होता है, नञ् पद तो भेदवान् अर्थ में । अतः घट है प्रतियोगी जिसका, ऐसे भेद से युक्त पट है, ऐसा बोध होता है—'ऐसा तार्किकों का जो कहना है, वह ठीक नहीं है । भेदवान् नञर्थ में भेद का एकदेश मात्र होने से उसमें घट अर्थ के अन्वय की सिद्धि नहीं होती, क्योंकि पदार्थ पदार्थ के साथ ही अन्वित होता है, पदार्थ के एकदेश से नहीं; ऐसा न्याय है । दोनों घट एवं पट पद में लक्षणा के स्वीकार करने में अत्यन्त गौरव भी पड़ता है । भाष्यकार के मत में लक्षणा एवं निपातों के वाचकत्व के स्वीकार के अभाव से यह ठीक नहीं है । इस तरह इसे संक्षेप में कहा गया ।

( ९८ ) एवशब्दस्यार्थोऽवधारणमसम्भवश्च । 'एवे चानियोगे' इति वार्तिके नियोगोऽवधारणं तदभावोऽसम्भव इति कैयटोक्तेः । अनयोरर्थयोरेवशब्दो द्योतकः । अत एव तं विनापि तदर्थप्रतीतिः । सर्वं वाक्यं सावधारणमिति वृद्धोक्तं सङ्गच्छते । 'लवणमेवासौ भुङ्क्ते' इत्यादौ प्राचुर्यार्थिकस्य 'घट एव प्रसिद्धः' इत्यादावप्यर्थकस्य 'क्वेव भोक्ष्यसे' इत्यादावसम्भवार्थकस्य च तस्य सत्त्वमित्यालङ्कारिकाः ।

व्याख्या—एवनिपातस्यार्थं विवृणोति—एवेत्यादिना । एवशब्दस्य एवाख्यनिपातस्य । अर्थः द्योत्यार्थः । अवधारणं नियमनम् । असम्भवः । च । एवे चानियोगे । इति वार्तिके । नियोगः नियोगस्यार्थः अवधारणं नियमनम् । तदभावः तस्यावधारणस्य अभावो विरहः । असम्भवः । इति इत्थम् । कैयटोक्तेः महाभाष्यस्य प्रदीपाख्यव्याख्याकृत्कैयटस्तदुक्तेः । अनयोः अवधारणासम्भवयोः । अर्थयोः । एवशब्दः एवनिपातः । द्योतकः प्रकाशकः । अतः एतस्मात् । एव हि । तम् एवशब्दम् । विना विरहे । अपि

च। तदर्थप्रतीतिः तस्य एवशब्दार्थस्य प्रतीतिः बोध इति। सर्वं निखिलम्। वाक्यं सावधारणं सनियमनम्। इति इत्थम्। वृद्धोक्तं शिष्टप्रतिपादितम्। सङ्गच्छते सुसङ्गतं भवतीति। 'लवणमेवासौ भुङ्क्ते' इत्यादौ इति वाक्ये। प्राचुर्यार्थकस्य आधिक्यार्थकस्य। 'घट एव प्रसिद्धः' इत्यादौ। अप्यर्थकस्य घटोऽपि प्रसिद्ध इति अप्यर्थकस्य। 'क्वेव भोक्ष्यसे' इत्यादौ असम्भवार्थकस्य। च अपि। तस्य एव शब्दस्य। सत्त्वं सत्ता। इति। आलङ्कारिकाः साहित्यिकाः। इति। एवनिपातस्य अनियोगार्थे पररूपं भवतीति वार्तिकानुसारेण तस्य हि द्वावर्थौ परिकल्पितावनियोगो नियोगश्च। तत्र नियोगोऽवश्यम्भावोऽवधारणं नियमनं वा। तद्विपरीतमनियोगः। अनियोगोऽनवक्लृप्तिरसम्भावना वाऽनिश्चयोऽपि। वार्तिकञ्च 'एवे चानियोगे' इति। तत्र कैयटाचार्यो नियोगोऽवधारणं तदभावोऽसम्भव इति व्याख्याति। जिनेन्द्रबुद्धिस्तु नियोगस्य व्यापारमप्यर्थं गृह्णाति। अनियोगस्योदाहरणं 'क्वेव भोक्ष्यसे' इति। एवशब्दोऽपि अर्थस्य द्योतक एव, न तु वाचकस्तेन तस्य प्रयोगं विनाऽपि तत्प्रतीतिः सम्भवति। यथोक्तं महाभाष्ये—सन्त्येकपदान्यप्यवधारणानि। तद्यथा अन्यक्षो वायुभक्ष इति। अप एव भक्षयति वायुमेव भक्षयति इति गम्यते। अत्रैकपदानीति एव शब्दरहितानि। आलङ्कारिकास्तु एव शब्दस्यार्थान्तरमपि गृह्णन्ति। यथा 'लवणमेव भुङ्क्ते' इत्यादौ प्राचुर्यार्थः प्राचुर्येण लवणं भुङ्क्ते इति 'घट एव प्रसिद्ध' इत्यादौ अप्यर्थः घटोऽपि प्रसिद्ध इति 'क्वेव भोक्ष्यसे' इत्यादौ असम्भवार्थो क्वचिदपि भोक्तुमसम्भव इति।

हिन्दी—एव शब्द का अर्थ अवधारण एवं असम्भव भी है। 'एवे चानियोगे' इस वार्तिक में नियोग का अर्थ अवधारण है और उसका अभाव असम्भव है, इस तरह कैयट की उक्ति है। इन दोनों अर्थों का एव शब्द द्योतक है (वाचक नहीं), इसी कारण एव शब्द के प्रयोग के विना भी उसके अर्थ की प्रतीति होती है। 'सभी वाक्य सावधारण हैं' ऐसी वृद्धों की उक्ति सुसङ्गत हो जाती है। 'लवणमेवासौ भुङ्क्ते' इत्यादि में प्राचुर्य अर्थ का; 'घट एव प्रसिद्ध' में अपि (भी) अर्थ का, 'क्वेव भोक्ष्यसे' में असम्भव अर्थ का उस एवकार की सत्ता है—ऐसा आलङ्कारिकों का मत है।

(९९) तच्चावधारणं त्रिविधम्—विशेष्यसङ्गतैवकारेऽन्ययोगव्यवच्छेदरूपं, विशेषणसङ्गतैवकारेऽयोगव्यवच्छेदरूपं, क्रियासङ्गतैवकारेऽत्यन्तायोगव्यवच्छेदरूपम्। विशेष्ये पार्थ एव धनुर्धरः। पार्थेतरावृत्ति यद् धनुर्धरत्वं तादृशधनुर्धरत्ववान् पार्थ इति बोध इत्यस्मिन् धनुर्धरत्वसम्बन्धव्यवच्छेदः। विशेषणे शङ्खः पाण्डुर एव। अयोगः सम्बन्धाभावस्तस्य व्यवच्छेदो निवृत्तिः। द्वाभ्यां निषेधाभ्यां प्रकृतदाढर्यबोधनेनाव्यभिचरितपाण्डुरत्वगुणवान् शङ्ख इति बोधः इत्ययोगव्यवच्छेदः। न तु नील इति तु फलति। क्रियायां नीलं सरोजं भवत्येव। अत्यन्तोऽतिशयितोऽयोगः सम्बन्धाभावः। तस्य व्यवच्छेदोऽभावः। तथा च कदाचिन्नीलत्वगुणवदभिन्नं यत्सरोजं

तत्कर्तृका सत्तेति बोधः। कदाचिदन्यादृशगुणसंयुक्तमित्यपि गम्यत इति अत्यान्तायोगव्यवच्छेदः।

**व्याख्या**—अवधारणस्य एवशब्दार्थस्य प्रकारान्निर्दिशति—**तदित्यादिना**। **तत्** एवशब्दार्थभूतम्। **अवधारणम्** अवक्लृप्तिः। **त्रिविधं** त्रिप्रकारकं भवतीति शेषः। **विशेष्यसङ्गतैवकारे** विशेष्यसम्बद्धो य एवकारस्तस्मिन्। **अन्ययोगव्यवच्छेदरूपम्** अन्यस्मिन् इतरस्मिन् योगो विशेषणीभूतधर्मसम्बन्धस्तस्य व्यवच्छेदो निवारणं तद्रूपम्। **विशेषणसङ्गतैवकारे**—विशेषणेन सङ्गतः सम्बद्धो य एवकारस्तस्मिन्। **अयोगव्यवच्छेदरूपम्** अयोगो विशेष्ये विशेषणस्यासम्बन्धस्तस्य व्यवच्छेदो निषेधकस्तद्रूपम्। **क्रियासङ्गतैवकारे** क्रियया सङ्गतो य एवकारस्तस्मिन्। **अत्यन्तायोगव्यवच्छेदरूपम्** अत्यन्तः सर्वदा योऽयोगोऽसम्बन्धस्तस्य व्यवच्छेदो निषेधस्तद्रूपमिति। तदुदाहरति—**विशेष्य इत्यादिना**। **विशेष्ये** विशेष्येण सह यदैवकारस्य सङ्गतिस्तदा **पार्थ एव धनुर्धरः** इत्युदाहरणम्। तत्रान्ययोगव्यवच्छेदमाह—**पार्थेत्यादिना**। पार्थेतरावृत्ति पार्थेतरे पार्थभिन्ने नास्ति वृत्तिर्व्यापारो यस्य तत्तादृशम्। **यद्**। **धनुर्धरत्वम्**। **तादृशधनुर्धरत्ववान्** तादृशं यद्धनुर्धरत्वं तद्वान्। **पार्थः** अर्जुनः। **इति**। **बोधः** शाब्दबोधः। **इति हेतोः**। **अन्यस्मिन्** पार्थेतरस्मिन्। **धनुर्धरत्वसम्बन्धव्यवच्छेदः** धनुर्धरत्वसम्बन्धस्य व्यवच्छेदो निषेधः। **विशेषणे** एवकारस्य विशेषणेन योगे **तु**। **शङ्खः** पाण्डुर **एव**। इत्युदाहरणम्। अयोगव्यवच्छेदरूपमित्यत्र **अयोगः** इति **सम्बन्धाभावः** योगः सम्बन्धस्तस्याभावः। **तस्य** सम्बन्धाभावस्य व्यवच्छेदो निवृत्तिः। सम्बन्धाभावस्य निषेध इति। **द्वाभ्यां निषेधाभ्यां प्रकृतदार्ढ्यबोधनेन** प्रकृतस्य प्रकरणगतस्य दार्ढ्यस्य दृढतायाः बोधनेन ज्ञापनेन। **अव्यभिचरितपाण्डुरत्वगुणवान्** अव्यभिचरितो न कदाप्यन्यथाभावी यः पाण्डुरत्वगुणस्तद्वान्। **शङ्खः**। **इति**। **बोधः** ज्ञानम्। **इति हेतोः**। **अयोगव्यवच्छेदः** अयोगस्य सम्बन्धाभावस्य व्यवच्छेदो निवृत्तिरर्थाद्योगदार्ढ्यमिति। **न**। **तु** हि। **नीलः** नीलवर्णः। **इति** इत्थम्। **तु** हि। 'फलति फलितार्थत्वेन बोध्यत इति।

**क्रियायां** क्रियया सह यदैवकारस्तदा **'नीलं सरोजं भवत्येव'** इत्युदाहरणम्। **अत्यन्तायोगव्यवच्छेद** इत्यत्र अत्यन्तोऽतिशयितः **अयोगः** सम्बन्धाभावः **तस्य** सम्बन्धाभावस्य **व्यवच्छेदः** अभावः निषेध इति। **तथा च**। **कदाचित्** क्वचित्। **नीलत्वगुणवदभिन्नं** नीलत्वगुणवतोऽभिन्नम्। **यत्** यदेव। **सरोजं** कमलम्। **तत्कर्तृका** सा कर्त्री यस्याः सा तादृशी। **सत्ता**। **इति**। **बोधः** शाब्दबोधः। **कदाचित्**। **तु**। **अन्यादृशगुणसंयुक्तम्** अन्यादृशो नीलेतरो यो गुणस्तेन संयुक्तं सम्पन्नम्। **इति**। **अपि च**। **गम्यते** ज्ञायते। **इति**। **अत्यन्तायोगव्यवच्छेदः** अत्यन्तो नितान्तो योऽयोगः सम्बन्धाभावस्तस्य व्यवच्छेदो निषेधः। यत्र कुत्र कमलं नीलमपि भवति कदाचित्तु श्वेतमपीत्यस्याशयः। इत्थं हि अन्ययोगायोगात्यन्तायोगव्यवच्छेदभेदेनावधारणं त्रिविधम्। यथोक्तम्—

'अन्ययोगमयोगञ्च ह्यत्यन्तायोगमेव च।
व्यवच्छिनत्ति धर्मस्य एवकारस्त्रिधा मतः॥' इति।

अन्यस्मिंस्तद्धर्मनिषेधोऽन्ययोगव्यवच्छेदो यथा पार्थ एव धनुर्धरो नान्यः। अयोगः

सम्बन्धाभावस्तस्य व्यवच्छेदोऽयोगव्यवच्छेदो यथा शङ्खः पाण्डुर एव न तु नीलः। अत्यन्तो योऽयोगः सम्बन्धाभावस्तस्य व्यवच्छेदो निषेधोऽत्यन्तायोगव्यवच्छेदो यथा नीलं सरोजं भवत्येव नैतत्सत्यं यत्सरोजं नीलं न भवतीति। सरोजं हि नीलमपि भवति कदाचित्तु श्वेतमपि इति।

हिन्दी—वह अवधारण तीन प्रकार का होता है। विशेष्य से युक्त एवकार में अन्ययोगव्यवच्छेदरूप (दूसरे के साथ जो सम्बन्ध (धर्म) है, उसका निषेधरूप), विशेषण से युक्त एवकार में अयोगव्यवच्छेदरूप (अयोग अर्थात् सम्बन्ध का जो अभाव है, उसका निषेध रूप) और क्रिया से सङ्गत एवकार में अत्यन्त जो अयोग अर्थात् सम्बन्ध (धर्म) का अभाव है, उसका निषेध रूप। विशेष्य में 'पार्थ एव धनुर्धरः' (पार्थ ही धनुर्धारी हैं)। पार्थ से भिन्न में न रहने वाला जो धनुर्धरत्व है, उस तरह के धनुर्धरत्व से युक्त पार्थ है, ऐसा बोध होता है। इस कारण दूसरे में धनुर्धरत्व का जो सम्बन्ध है, उसका व्यवच्छेद अर्थात् निषेध होता है। विशेषण में 'शङ्खः पाण्डुर एव'। अयोग का अर्थ है—सम्बन्ध का अभाव। उसका व्यवच्छेद अर्थात् निवृत्ति (ही अयोग व्यवच्छेद है)। सम्वन्ध के अभाव का निषेध, इस तरह के दो निषेधों से प्रकृत की दृढ़ता के वोधन से व्यभिचार रहित पाण्डुरत्व गुण से युक्त शङ्ख है, ऐसा बोध होता है और यही अयोगव्यवच्छेद है। 'नीला नहीं' ऐसा अर्थ तो फलित अर्थात् अर्थ के द्वारा द्योतित अर्थ है। क्रिया में 'नीलं सरोजं भवत्येव'। अत्यन्त का अर्थ है—अतिशयित अर्थात् एकदम ही। अयोग का अर्थ है—सम्बन्ध का अभाव। उसका व्यवच्छेद अर्थात् अभाव। जैसे कि कहीं नीलत्व गुण से युक्त वस्तु से अभिन्न जो कमल है, वह है कर्ता जिसमें, ऐसी सत्ता—ऐसा बोध होता है। कहीं तो दूसरे प्रकार के गुण से युक्त भी होता है, ऐसा जाना भी जाता है और यह अत्यन्तायोगव्यवच्छेद है।

(१००) क्वचिदेवशब्दं विनापि नियमप्रतीतिः। तदुक्तं भाष्ये—'अभक्ष्यो ग्रामकुक्कुट' इत्युक्ते गम्यत एतदारण्यो भक्ष्य इति। सर्वं वाक्यं सावधारणमिति न्यायात्। आलङ्कारिका अपि परिसङ्ख्यालङ्कारप्रकरणे प्रमाणान्तरेण प्राप्तस्यैव वस्तुनः पुनः शब्देन प्रतिपादनं प्रयोजनान्तराभावात् स्वतुल्यन्यायव्यवच्छेदं गमयतीति। भागवतेऽपि—

'लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्न हि तत्र चोदना।
व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा॥' इति।

व्यवायो मैथुनमामिषं मत्स्यादि, मद्यमेतेषां सेवा जन्तोः प्राणिमात्रस्य नित्या रागतः प्राप्ता। अतस्तत्र चोदनाविधिर्नास्ति। नन्वेवम् 'ऋतौ भार्यामुपेयात्' 'हुतशेषं भक्षयेत्' 'सौत्रामण्यां सुराग्रहान् गृह्णाति' इत्येतेषां वैयर्थ्यम्। भार्यां विवाहिताम्। तत्राह—व्यवस्थितिरिति। तेषु पुनः प्रापणमित्यर्थः। नियमस्यान्यनिवृत्तिफलकत्वादाह—आसु निवृत्तिरिष्टेति। अन्येष्विति शेषः।

**व्याख्या**—एवशब्दप्रयोगं विनाऽपि तत्प्रतीतिमाह—**क्वचिदित्यादिना**। **क्वचित्** कुत्रचित्तु। **एवशब्दं** एवनिपातप्रयोगम्। **विना**। **अपि हि**। **नियमप्रतीतिः** नियमस्यावधारणस्य प्रतीतिरवभासनमिति। **तत्** तदेव तथ्यम्। **भाष्ये** महाभाष्ये। **उक्तं** कथितम्। **'अभक्ष्यो ग्रामकुक्कुटः'** इत्युक्ते ग्रामकुक्कुटशब्देन सह एवकारयोगेन अन्ययोगव्यवच्छेदेन। **एतत्**। **गम्यते** ज्ञायते। **यत्**। **आरण्यः** वन्यः कुक्कुटस्तु। **भक्ष्य इति**। **तत्र सर्वं** निखिलमेव। **वाक्यम्**। **सावधारणं** सनियमम्। **इति**। **न्यायात्** न्यायावस्थितेः। **आलङ्कारिकाः** साहित्यिकाः। **अपि च**। **परिसङ्ख्यालङ्कारप्रकरणे** परिसङ्ख्यार्थालङ्कारविवेचनप्रसङ्गे। **प्रामाणान्तरेण** अन्येनैव प्रमाणेन। **प्राप्तस्य** सिद्धस्य। **एव हि**। **वस्तुनः** विषयस्य। **पुनः** आवृत्य। **शब्देन**। **प्रतिपादनं** साधनम्। **प्रयोजनान्तराभावात्** अन्यप्रयोजनविरहात्। **स्वतुल्यन्यायव्यवच्छेदं** स्वेन तुल्यः समानो यो न्यायो विधिस्तस्य व्यवच्छेदो निषेधस्तम्। **गमयति** व्यनक्ति इति। यथोक्तं काव्यप्रकाशे—

'किञ्चिद् दृष्टमदृष्टं वा कथितं यत्प्रकल्पते।
तादृगन्यव्यपोहाय परिसङ्ख्या तु सा स्मृता॥' ( १०।११९ )

व्याख्यातञ्च यथा वृत्तिकृता—'प्रमाणान्तरावगतमपि वस्तु शब्देन प्रतिपादितं प्रयोजनान्तराभावात् सदृशवस्त्वन्तरव्यवच्छेदाय यत्तु पर्यवस्यति सा भवेत्परिसङ्ख्या।' इति। उदाहृतञ्च यथाऽऽद्यं प्रश्नपूर्वकम्—

'किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः
किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः।
किमाराध्यं पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेयं निरवधि विमुक्त्यै प्रभवति॥'

एवमेव—

'कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति॥'

अत्र नान्यत्सेव्यं नान्यद्ध्येयं नान्यदाराध्यं नान्याभिलषणीया तथैव कौटिल्यं कचनिचये एव न तु हृदये रागोऽपि करचरणाधरदलेष्वेव नान्यस्मिन् जने काठिन्यं कुचयुगले एव न तु हृदये तरलत्वं नयनयोरेव न तु मनसीति परिसङ्ख्या सदृशवस्त्वन्तरव्यवच्छेदादिति। **भागवते** श्रीमद्भागवतमहापुराणे ( ११।५।११ )। **अपि च**। **लोके इति**। लोके जन्तोः व्यवायामिषमद्यसेवा तु नित्या, तत्र न हि चोदना तेषु विवाहयज्ञसुराग्रहैः व्यवस्थितिः आसु निवृत्तिः इष्टा इत्यन्वयः। **लोके** जगति। **जन्तोः** प्राणिमात्रस्य। **व्यवायामिषमद्यसेवा** व्यवायो मैथुनम् आमिषं मत्स्यमांसादिभक्षणं मद्यमासवादि तेषां सेवा सेवनम्। **तु** हि। **नित्या** रागतः प्राप्ता स्वाभाविकी। **तत्र** तत्तद्विषये। **न** नैव। **हि**। **चोदना** प्रेरणा आवश्यकीति। **तेषु** व्यवायादिषु। **विवाहयज्ञसुराग्रहैः** विवाहः पाणिग्रहणं यज्ञो वेदविहितक्रतुः सुराग्रहो हि सौत्रामण्यादि तैः। **व्यवस्थितिः** नियमनम्। **आसु** व्यवस्थितिविषयभिन्नासु व्यवायामिषमद्यसेवासु। **निवृत्तिः** अप्रवृत्तिः। **इष्टा** सम्मतेति। पद्यं ग्रन्थकृद् व्याख्याति—**व्यवाय इत्यादिना**। **व्यवायो**

मैथुनं सम्भोगः । आमिषं मत्स्यादि मत्स्यमांसादिभक्षणम् । मद्यमासवः । एतेषां प्रत्येकं सेवाऽभ्यासः । जन्तोः प्राणिमात्रस्य न तु मानवमात्रस्य । नित्या रागतः स्वतः प्राप्ता सिद्धा । अतः अस्मादेव । तत्र व्यवायादौ । चोदना विधिः प्रेरणा । नास्ति नावश्यकी । ननु इति प्रश्ने । एवम् इत्थमुच्यते चेत् । ऋतौ रजोदर्शनकाले प्रशस्तरात्रिषु । भार्यां धर्मपत्नीम् । उपेयात् मैथुनेनासेवेत । हुतशेषं हवनावशिष्टम् । भक्षयेत् भुञ्जीत । सौत्रामण्यां सौत्रामण्याख्ययज्ञे । सुराग्रहान् सुरासेवनम् । गृह्णाति आददाति । इत्येतेषाम् एतद्विधश्रुतिवाक्यानाम् । वैयर्थ्यं निरर्थकता । स्यादिति शेषः । भार्यां विवाहितां विधितः परिणीतामिति । तत्राऽऽह उक्तश्रुतिवाक्यानां सार्थकताप्रतिपादनायाह—व्यवस्थितिरिति । अस्य तेषु व्यवायादिषु । पुनः प्रापणं विधानम् । इत्यर्थः । नियमस्य पुनर्विहितनियमस्य । अन्यनिवृत्तिफलकत्वात् अन्यविधाननिवारणपरकत्वात् । आह कथयति—आसु निवृत्तिरिष्टेति । अन्येषु तदितरेषु भार्यादिभिन्ने मैथुनादिसेवने । इति शेषः । अयम्भावः—मानान्तरप्राप्तस्यानुवादो व्यर्थोऽपि परिशेषादन्यव्यावृत्तिं फलयतीति परिसङ्ख्याविषयः । रागतः प्राप्तेषु तेषु व्यवायादिषु व्यवस्थितिः पुनः प्रापणं तच्च एभ्योऽन्येषु निवर्तनार्थमिति । भार्याहुतशेषसौत्रामण्यसम्बन्धिभ्योऽतिरिक्तेषु व्यवायादिषु शीघ्रं निवृत्तिरिष्टेति ज्ञापनार्थम् । भार्याद्यन्यत्र व्यवायादिनिवृत्तिरेव पुनः प्रापणस्य फलमिति ।

हिन्दी—कहीं 'एव' शब्द के बिना भी अवधारण की प्रतीति होती है । जैसे कि भाष्य में कहा गया है—'अभक्ष्यो ग्रामकुक्कुटः' ( गाँव का मुर्गा अभक्ष्य है ) ऐसा कहने पर यह प्रतीत होता है कि जङ्गली मुर्गा तो भक्ष्य होता है । सभी वाक्य नियम सहित होते हैं, ऐसा न्याय है । आलङ्कारिक भी परिसंख्या अलङ्कार के प्रकरण में दूसरे ही प्रमाण से प्राप्त वस्तु का फिर शब्द के द्वारा प्रतिपादन में दूसरे प्रयोजन के न होने से अपने तुल्य दूसरे न्याय का व्यवच्छेद ( निषेध ) ध्वनित करता है ।

भागवत में भी ( कहा है )—

इस लोक में मैथुन, मांसभक्षण एवं मद्यपान प्राणियों के लिए नित्य अर्थात् स्वतः प्राप्त हैं और उसमें किसी भी प्रेरणा अर्थात् विधि की आवश्यकता नहीं है । उनमें विवाह, यज्ञ एवं सुराग्रह विधि आदि से व्यवस्था की गई है अर्थात् विवाह से मैथुन का, यज्ञ से मांसभक्षण का और सौत्रामणि आदि से सुराग्रहण का व्यवस्थापन किया गया है, यह कहने के लिए कि इससे भिन्न अवस्था में इनमें निवृत्ति अभीष्ट ( अच्छी ) है ।

व्यवाय का अर्थ है मैथुन, आमिष का अर्थ है मछली आदि, मद्य-मदिरा इनकी सेवा है । जन्तु का अर्थात् प्राणीमात्र का । नित्य अर्थात् स्वभाव से ही प्राप्त । इस कारण इनमें कोई चोदना अर्थात् विधि नहीं हैं ।

यदि ऐसा हो तो 'ऋतुकाल में ही पत्नी का गमन करें' 'हवन का शेष भोजन करें' 'सौत्रामणि में सुराग्रहों को लेता है' आदि वाक्यों की व्यर्थता हो जाएगी । भार्या अर्थात् पत्नी का अर्थ है विवाहिता । उसी में कहा गया है—व्यवस्थिति इत्यादि ।

उनमें फिर से नियम करना, इसका अर्थ है। ( प्रमाणान्तर से प्राप्त वस्तु में फिर से किये गये ) नियम दूसरे की निवृत्ति के परिणाम वाला होने से कहा गया—इनमें निवृत्ति अभीष्ट है। इनसे अन्य अवस्था में, यह शेष अर्थ है।

इसका आशय यह है कि मैथुन, मांसभक्षण और मद्यपान प्राणी मात्र के लिए स्वभाव से ही प्राप्त हैं और उनमें किसी भी प्रेरक विधि की आवश्यकता नहीं है। यदि ऐसी बात है तो फिर 'ऋतुकाल में ही भार्या का गमन करें' 'हवन का शेष भोजन करें' 'सौत्रामणि में सुराग्रह लेता है' इत्यादि वाक्यों का क्या प्रयोजन है ? इनका प्रयोजन है—उनमें व्यवस्थिति लाना जिसका उद्देश्य है, इनसे भिन्न में इसकी निवृत्ति हो अर्थात् ऋतुकाल में भार्या में ही गमन करें, अन्यत्र नहीं; यज्ञ शेष के रूप में ही मांस भोजन करें अन्यत्र नहीं और सौत्रामणि के प्रसङ्ग में ही सुरापान करें, अन्यत्र नहीं।

( १०१ ) तदुक्तम्—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते ॥ इति।

स्वर्गकामोऽश्वमेधेन यजेत इति विधिः। क्षुत्प्रतिघातो यद्यपि शशकादिमांसैः श्वादिमांसैश्च भवति तथापि शशकादिमांसैरेव कर्तव्य इति परिसङ्ख्यायते पञ्च पञ्चनखा भक्ष्या इत्यनेन। नखविदलनावहननाभ्यां व्रीहिनिस्तुषीकरणं प्राप्तम्। तत्रावहनेन निस्तुषीकरणं पुण्यजनकमिति 'व्रीहीनवहन्ति' इत्यनेन नियम्यते।

यद्यपि परिसङ्ख्यायां नियमे च स्वार्थहानिः प्राप्तबाधः परार्थकल्पनेति दोषत्रयं तथाप्यनन्यगत्या स्वीक्रियते इति वृद्धाः। पञ्च पञ्चनखा इत्यस्य नियमत्वेन भाष्ये व्यवहृतत्वादन्यनिवृत्तिरूपफलेन ऐक्याच्च। नियमपदेन परिसङ्ख्याऽपि व्याकरणे गृह्यत इति सङ्क्षेपः।

इति निपातार्थनिर्णयः।

---

व्याख्या—अथ प्रसङ्गप्राप्तत्वाद्विधिनियमपरिसङ्ख्यादीनां लक्षणोदाहरणादीनि प्रस्तुवन्प्रकरणमारभते—तदित्यादिना। तत्। उक्तं कथितम्—तन्त्रवार्तिके ( १।२।३४ ) इति शेषः। तदेवानुवदति—विधिरित्यादिना। अत्यन्तम् अप्राप्ते ( प्रापकः ) विधिः पाक्षिके सति नियमः तत्र च अन्यत्र च प्राप्ते परिसङ्ख्या इति गीयते इत्यन्वयः। अत्यन्तं सर्वथा। अप्राप्ते विधानाभावे। प्रापकः विधिः विधिरित्युच्यते। तादृशं हि विधानवाक्यं विधिर्यदेतादृशस्य विधानं करोति यदेतत्पूर्वं न केनापि विहितं भवति। अतोऽसौ अपूर्वविधिरप्युच्यते यतो ह्येतदपूर्वविहितस्य विधानं करोति। यथा—'स्वर्गकामोऽश्वमेधेन यजेत' इति। वाक्यमिदं विधिर्यतो ह्येतदेतत्पूर्वं न केनापि

विहितम् । पाक्षिके उभयपक्षसम्बद्धे विधौ एकपक्षग्राहके । विधौ । सति । सः । **नियमः** नियम इत्युच्यते । उभयपक्षप्राप्तावेकपक्षनियामको विधिर्नियमः । तेन पाक्षिके इति पक्षमात्रग्राहके सतीति । यथा 'स्वर्गकामो यजेत' इत्यत्र समे विषमे वाऽपि स्थले यज्ञविधानं कृतमस्ति । तत्र 'समे देशे यजेत' इति वाक्येन विषमस्थले यज्ञनिवृत्तिरिति नियमवाक्यमिदम् । **तत्र** अभीष्टस्थले । **च** । **अन्यत्र** तदितरस्थले । **च** अपि । **प्राप्ते** विधौ प्राप्ते । **परिसङ्ख्या** तदाख्यविधिः । **इति** । **गीयते** कथ्यत इति । यत्र प्रमाणान्तरेण सामान्यतया प्राप्तस्य वस्तुनः पुनः विशेषस्थितौ विधानं यतो हि सामान्यतया प्राप्तस्य विध्यन्तरस्य निवृत्तिः परिसङ्ख्या । परिसङ्ख्योऽन्यत्र परि इति निषेधः सङ्ख्येति बुद्धिः । तेन परिसङ्ख्येति निषेधात्मिका बुद्धिः । यथा 'पञ्च पञ्चनखा भक्ष्या' इति । अत्र मांसभक्षणस्य रागतः प्राप्तौ पञ्चनखेषु पञ्चैव भक्ष्याः इति पुनर्विधानं तदितरभक्षणनिषेधपरमिति । यथोक्तम्—उभयोश्च युगपत्प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसङ्ख्याविधिः । यथा 'पञ्च पञ्चनखा भक्ष्या' इति । इदं हि वाक्यं न पञ्चनखभक्षणपरं तस्य रागतः प्राप्तत्वात् । न च नियमपरं पञ्च पञ्चनखापञ्चनखभक्षणस्य युगपत्प्राप्तेः । पक्षे प्राप्त्यभावात् । अत इदमपञ्च पञ्चनखभक्षणनिवृत्तिपरमिति भवति परिसङ्ख्याविधिः ।

तदुदाहरति—**स्वर्गकाम इत्यादिभिः** । **स्वर्गकामोऽश्वमेधेन यजेत'** इति **विधिः** । अपूर्वविधानमेव विधेर्विधित्वम् । वाक्यस्यास्य विधित्वमितः पूर्वमेतद्विधानाभावात् । **क्षुत्प्रतिघातः** क्षुतः क्षुधायाः प्रतिघातो निवृत्तिः । **यद्यपि** । **शशकादिमांसैः** शशकप्रभृतिजन्तुमांसैः । **श्वादिमांसैः** कुक्कुरप्रभृतिमांसैः । **च** अपि । **भवति** सञ्जायते । **तथापि** तथाभूते सत्यपि । **शशकादिमांसैः** । **एव न त्वन्येषाम्** । **कर्तव्यः** विधातव्यः । **इति** इत्थम् । **परिसङ्ख्यायते** इतरनिवृत्त्यर्थं परिगणना क्रियते । 'पञ्च पञ्चनखा भक्ष्याः' **इत्यनेन** । रागतः प्राप्तस्य मांसभक्षणस्य पुनर्विधानं पञ्चपञ्चनखेतरभक्षणनिषेधपरमिति परिसङ्ख्या । नियमस्योदाहरणमाह—**नखेत्यादिना** । **नखविदलनवहननाभ्यां** नखैरङ्गुलिरुहैर्विदलनमुद्घाटनमवहननं मुसलेन ताडनञ्च ताभ्याम् । **व्रीहिनिस्तुषीकरणं** व्रीह्यादेस्तुषापाकरणम् । **प्राप्तम्** । **तत्र** नखविदलनावहननयोः । **अवहननेन** मुसलाघातेन । **निस्तुषीकरणं** तुषापाकरणम् । **पुण्यजनकं** पुण्याधायकम् । **इति** । **'व्रीहीनवहन्ति'** **इत्यनेन** वाक्येन । **नियम्यते** नियमः क्रियते इति ।

**यद्यपि** सामान्यतः **परिसङ्ख्यायां** परिसङ्ख्याविधौ । **नियमे** नियमाख्यविधौ । **च** अपि । **स्वार्थहानिः** स्वस्य वाच्यस्य हानिरकारणपरित्यागः । **प्राप्तबाधः** प्राप्तस्य स्वभावतोऽवाप्तस्यार्थस्य बाधस्तात्पर्योपपत्तावपि बाधः । **परार्थकल्पना** परार्थस्य लक्ष्यार्थस्य कल्पनाऽनुमानम् । **इति** इत्थम् । **दोषत्रयं** त्रयो दोषा एकत्र सन्ति । **तथापि** दोषत्रये सत्यपि । **अनन्यगत्या** उपायान्तराभावेन । **स्वीक्रियते** उररीक्रियते । **इति** इत्थम् । **वृद्धाः** शिष्टाः कथयन्तीति शेषः । **'पञ्च पञ्चनखाः भक्ष्या'** इत्यस्य वाक्यस्य । **नियमत्वेन** नियमविधिरूपेण । **भाष्ये** महाभाष्यग्रन्थे । **व्यवहृतत्वात्** गृहीतत्वात् **अन्यनिवृत्तिरूपफलेन** अन्यस्य स्वेतरस्य निवृत्तिर्निषेधस्तद्रूपं यत्फलं परिणतिस्तेन । **ऐक्यात्** उभयत्र

साम्यात् । च अपि । परिसङ्ख्या अपि च व्याकरणे शब्दशास्त्रे । नियमपदेन नियम-शब्देन । अपि च । गृह्यते व्यवह्रियते । इति इत्थम् । सङ्क्षेपः सङ्क्षेपेण निपातार्थ-निर्णय इति ।

नियमपरिसङ्ख्ययोर्नियमनस्थितिसाम्यादुभयत्रैव त्रयो दोषाः प्रदर्शिता आचार्यैः । यथा—

'श्रुतार्थस्य परित्यागादश्रुतार्थप्रकल्पनात् ।
प्राप्तस्य बाधादित्येवं परिसङ्ख्या विदूषणा ॥' इति ।

तत्र स्वार्थत्यागो यथा—व्रीहीनवहन्ति इत्यत्र व्रीहीनामवहननार्थस्य पञ्च पञ्चनखा भक्ष्या इत्यत्र पञ्चपञ्चभक्ष्यार्थस्य च त्यागः । प्राप्तबाधो यथा आद्ये नखविदलननिस्तु-षीकरणार्थस्य द्वितीये श्वादिमांसभक्षणस्य परार्थकल्पना यथा आद्ये नखनिस्तुषीकरण-निषेधरूपार्थजन्यार्थकल्पना द्वितीये पञ्चपञ्चनखेतरपञ्चनखजन्तुभक्षणनिषेधरूपान्यार्थ-कल्पना चेति । सत्स्वपि दोषेषु नियमपरिसङ्ख्ययोरस्वीकारे प्रमाणान्तरादनिष्टविधि-प्राप्तिभिया एतयोः स्वीकार आवश्यक इति ।

मीमांसाशास्त्रे नियमपरिसङ्ख्ययोर्भेदः स्पष्टरूपेण निरूपितोऽस्ति । तत्र पाक्षिक-प्राप्तौ यद्विधानं तन्नियमः सामान्यविशेषोभयरूपेण विधौ प्राप्ते केवलविशेषविधानं परिसङ्ख्येति परिसङ्ख्यास्थले एकत्र विधिद्वयसम्भवान्नियमस्थले त्वेकस्यैव ( समे विषमे वा ) सम्भवात्तयोर्भेदः स्पष्ट एव । तथापि भाष्यकारादयो हि तयोरैक्यं मन्यन्ते उभयत्रान्यनिवृत्तिरूपप्रयोजनैक्यात् । यथोक्तं भाष्ये—'भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते अभक्ष्यप्रतिषेधेन वा भक्ष्यनियम' इति । एतदेवाधिकृत्योद्द्योतकारैरुक्तम्—'नन्वस्य परिसङ्ख्यात्वात्कथं नियमत्वेन व्यवहारः ? अस्ति च नियमपरिसङ्ख्ययो-र्भेदः । पाक्षिकाप्राप्तांशपरिपूरणफलो नियमः अन्यनिवृत्तिफला च परिसङ्ख्या, इति चेन्न । नियमेऽप्यप्राप्तांशपरिपूरणरूपफलबोधनद्वारा अर्थादन्यनिवृत्तेः सत्त्वेनाभेद-माश्रित्योक्तेः' इति । तेन हि व्याकरणे परिसङ्ख्याऽपि नियमपदेनाऽप्युच्यत इति ।

श्रीपर्शुरामतनयश्रीलोकमणिनिर्मिता ।
निपातार्थकसम्बद्धा समाप्ता किरणावली ॥

---

हिन्दी—जैसे कि कहा गया है—

विधान की सर्वथा अप्राप्ति में विधि एक पक्ष में प्राप्ति तथा एक पक्ष में प्राप्ति न होने पर नियम तथा उस अभीष्ट और अन्य में भी प्राप्ति होने पर परिसंख्या कही जाती है ।

'स्वर्गकामोऽश्वमेधेन यजेत' ( स्वर्ग चाहने वाले को अश्वमेध यज्ञ करना चाहिए ) यह विधि है । यद्यपि भूख की निवृत्ति तो खरगोस आदि के मांस तथा कुत्ते आदि के मांस से भी होती है, तथापि खरगोस आदि के मांस से ही करना चाहिए—इस तरह 'पञ्च पञ्चनखा भक्ष्याः' इस वाक्य से परिसंख्यान किया जाता है । नाखून से हटाकर अथवा मूसल से कूट करके भी धान की भूसी हटाना हो सकता है । उसमें

मूसल से कूट कर भूसी हटाना पुण्यजनक है—ऐसा 'व्रीहीनवहन्ति' इस नियम से नियमित होता है।

यद्यपि परिसंख्या एवं नियम में भी अपने अर्थ का त्याग, प्राप्त अर्थ का बोध तथा परार्थ अर्थात् लक्ष्य अर्थ की कल्पना आदि तीन दोष होते हैं, तथापि दूसरी गति न होने से उनका स्वीकार किया जाता है—ऐसा वृद्ध लोग कहते हैं। 'पञ्च पञ्च-नखा भक्ष्याः' इसका नियम के रूप में भाष्य में व्यवहृत होने से अन्य निवृत्ति रूप फल के एक समान होने से नियम पद से परिसंख्या भी व्याकरण में गृहीत है। यह निपातार्थ का सङ्क्षेप है।

इस प्रकार निपातार्थ-निर्णय समाप्त हुआ।

---

## ( ११ ) दशलकारादेशार्थनिर्णयः

( १०२ ) यद्यपि लकाराणामेवार्थनिरूपणं तार्किकैः कृतं तथापि उच्चारित एव शब्दोऽर्थप्रत्यायको नानुच्चारित इति भाष्याल्लोके तथैवानुभवाच्च तदादेशतिङामर्थो निरूप्यते। 'वर्तमाने लट्' इत्यादिविधायक-लः कर्मणि इति शक्तिग्राहकसूत्राणामादेशार्थं स्थानिन्यारोप्य प्रवृत्तिः।

**व्याख्या**—व्याख्यायैवं निपातार्थं लादेशार्थविवेचनम्।
व्याख्यातुं सम्प्रवृत्तेयं टिप्पणी किरणावली॥

लादेशभूततिङामर्थवाचकताविचाराय प्रकरणमारभते—**यद्यपीत्यादिना**। **यद्यपि**। **तार्किकैः** नैयायिकैः। **लकाराणां** धातोर्विहिता ये लकारास्तेषाम्। **एव** हि। **अर्थनिरूपणं** अर्थविचारणा। **कृतं** विहितम्। लकार एवाख्यातार्थवाचको लादेशतिङां वाचकत्वे तेषामनेकत्वेनानन्तशक्तिकल्पनायां गौरवादिति नैयायिकमतम्। **तथापि** तेषां तथामते सत्यपि। **उच्चारितः** उच्चारणविषयीभूतः। **एव** नान्यः। **शब्दः**। **अर्थप्रत्यायकः** अर्थाववोधकः। **न** नैव। **अनुच्चारितः** उच्चारणविषयीभूतः। **इति**। **भाष्यात्** भाष्यवचनात्। **लोके** व्यवहारे। **तथैव** उच्चारितशब्दस्यैवार्थप्रत्यायकत्वमिति। **अनुभवात्** अभ्यासात्। **च** अपि। **तदादेशतिङां** तस्य लकारस्य ये आदेशास्तिङस्तेषाम्। **अर्थः**। **निरूप्यते** विचार्यते। 'वर्तमाने लट्' ( पा० सू० ३।२।१२३ ) इत्यादीनां विधायकानां विशेषविधानकर्तॄणां 'लः कर्मणि च भावे चाकर्मकेभ्यः' ( पा० सू० ३।४।६९ ) इति शक्तिग्राहकसूत्राणां लकाराणामर्थवाचकसूत्राणाम्। **आदेशार्थं** तिवाद्यादेशार्थनिमित्तम्। **स्थानिनि** स्थानिभूते लकारे। **आरोप्य** आरोपं कृत्वा। **प्रवृत्तिः** प्रवर्तनमिति। **अयमाशयः**—नैयायिका हि लकारस्यैवार्थवाचकत्वं मन्यन्ते, न तु लादेशानाम्। तदनुसारेण लादेशानां तिवादीनामनेकत्वात् तत्र शक्तिकल्पने अनन्तवाचकताशक्तीनां कल्पनमावश्यकं, यद्धि भवेत्सुमहद्गौरवाय। अपरञ्च तिबादीनां वाचकत्वे एधाञ्चक्रे इत्यादौ तेषां लुकि अभावरूपतयाऽभीष्टार्थप्रतीतिरेव न स्यात्। लकाराणां जातिरूपताधारेणैक्यत्वात्तेषां वाचकत्वे एकयैव शक्त्या कार्यं सम्पद्यते। एतदतिरिक्तं सूत्रकारेणापि 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रेण लकाराणामेव वाचकत्वं समर्थितमस्ति, यतोऽभीष्टार्थेऽनेन लकाराणां विधानं क्रियते। यथा हि सूत्रेषु लकाराणामर्था निर्दिष्टा न तथा तिवादीनामिति लाघवाच्छास्त्रसम्मतत्वाच्च लकाराणामेव वाचकत्वं सिध्यति, न तु तिवादीनां लादेशानामिति तेषां मतम्।

शाब्दिकास्तन्न मन्यन्ते। तन्मते उच्चारितस्यैवार्थप्रत्यायकत्वं न त्वनुच्चारितस्येति भाष्यवचनादाख्यातप्रयोगे तिवादीनामेवोच्चारणात् व्यवहारेऽपि अज्ञातलकाराणामपि तिबादिभ्य एवार्थवाधादर्शनादनुभवस्य प्रमाणान्तरश्रेष्ठ्याच्च तिबादीनामेव वाचकत्वं न तु लकाराणामिति तन्मतम्। यदि तिवादीनामेव वाचकत्वं मन्यते

तर्हि कथं भगवता सूत्रकारेण 'वर्तमाने लट्' 'लः कर्मणि च भावे चाकर्मकेभ्यः' इत्यादि सूत्रेषु तत्तद्विशिष्टार्थवाचकरूपेण लकाराणां विधानं कृतमिति चेदुच्यते । तिबादीनामर्थवाचकानां शास्त्रीयप्रक्रियानिर्वाहाय स्थानित्वेन कल्पितेषु लकारेषु आरोपं कृत्वा तथा सूत्राणि प्रणीतानि सूत्रकारेण न तु लकाराणां वस्तुतोऽर्थवाचकत्वमवधार्येति ।

**हिन्दी**—'यद्यपि नैयायिक लकारों का ही अर्थनिरूपण करते हैं, तथापि उच्चारण किया गया शब्द ही अर्थ का बोध कराने वाला होता है, न कि उच्चारण नहीं किया गया' इस प्रकार के भाष्य के वचन से तथा लोक ( व्यवहार ) में ही उसी प्रकार के अनुभव होने से उन लकार के स्थान में आदेश बने तिङ् के ही अर्थ का निरूपण किया जाता है ।

'वर्तमाने लट्' ( पा० सू० ३।२।१२३ ) इत्यादि लकारों का विशेष विधान करने वाले सूत्रों तथा 'लः कर्मणि च भावे चाकर्मकेभ्यः' ( पा० सू० ३।४।६९ ) इत्यादि शक्तिग्राहक अर्थात् लकारों का अर्थ बतलाने वाले सूत्रों के आदेश का अर्थ स्थानी में आरोप करके प्रवर्तन ( रचना ) हुआ है ।

अभिप्राय यह है कि नैयायिक लकारों में शक्ति मानते हैं, किन्तु वैयाकरण उनके आदेश तिबादि में । नैयायिकों का यह कहना है कि आदेश तो अनेक होते हैं और उनमें शक्ति मानने पर अनन्तवाचकता शक्ति की कल्पना करनी पड़ेगी । इसके विपरीत लकार में जाति-रूपता मानने पर एक ही शक्ति की कल्पना से काम चलेगा । इसके अलावा तिबादि आदेशों की वाचकता मानने में यह भी आपत्ति है कि जहाँ उनका लुक् होता है और अभाव-रूपता होती है; जैसे कि एधाञ्चक्रे आदि में उनकी वाचकता नहीं बन पाएगी । तीसरी बात यह है कि स्वयं सूत्रकार ने भी 'वर्तमाने लट्' 'लः कर्मणि' आदि सूत्रों में लकारों की ही वाचकता मानी है, न कि तिबादि आदेशों की ।

शाब्दिकों का कहना है कि 'उच्चारण होने वाले शब्द ही अर्थ का प्रत्यायन कर सकते हैं उच्चारण न होने वाले नहीं' ऐसा भाष्यकार का मत है और व्यवहार में भी ऐसा ही अनुभव किया जाता है । जो लकारों को जानते ही नहीं, वे भी तिबादि के अर्थ को समझ पाते हैं । व्यवहार में तिबादि का ही प्रयोग होता है, लकार का नहीं । अतः तिबादि आदेशों में ही शक्ति है, लकारों में नहीं । लकार तो केवल शास्त्रीय-प्रक्रिया के निर्वाहक मात्र हैं । सूत्रकार ने भी आदेशों के अर्थ को ही स्थानी में आरोप कर सूत्रों की रचना की, न कि लकारों की वाचकता को मान कर ।

( १०३ ) तत्र सङ्ख्याविशेषकालविशेषकारकविशेषभावाः लादेशमात्रस्यार्थाः । तथा हि—लडादेशस्य वर्तमानकालः, शबादिसमभिव्याहारे कर्ता, यक्-चिण्-समभिव्याहारे भावकर्मणी, उभयसमभिव्याहारे एकत्वादिसङ्ख्या चार्थः । तदाह—

फलव्यापारयोस्तत्र फले तङ्-यक्-चिणादयः ।
व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयान्वयम् ॥

फलव्यापारौ तु धात्वर्थावित्युक्तमेव। तत्र तिङ्समभिव्याहारे तदर्थसङ्ख्या तदर्थकारके विशेषणम्। कालस्तु व्यापारे। तदाह—

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्॥

तिङर्थः कर्ता व्यापारे, कर्म च फले विशेषणम्। क्रियाप्रधानमाख्यातमिति यास्कोक्तौ क्रियापदं करणव्युत्पत्त्या व्यापारपरं कर्मव्युत्पत्त्या फलपरमिति बोध्यम्। तथा च 'ग्रामं गच्छति चैत्रः' इत्यत्र एकत्वावच्छिन्नचैत्राभिन्नकर्तृको वर्तमानकालिको ग्रामाभिन्नकर्मनिष्ठो यः संयोगस्तदनुकूलो व्यापारः। ग्रामो गम्यते मैत्रेण इत्यत्र तु मैत्रकर्तृकवर्तमानकालिकव्यापारजन्यो ग्रामाभिन्नकर्मनिष्ठः संयोग इति बोधः।

**व्याख्या**—लादेशार्थं विवृण्वन् तेषां परस्परमन्वयं निरूपयति—तत्रेत्यादिना। **तत्र** प्रकरणेऽस्मिन्। **सङ्ख्याविशेषकालविशेषकारकविशेषभावाः** सङ्ख्याविशेषः एकत्वादिसङ्ख्याविशेषः, कालविशेषः वर्तमानादिकालविशेषः, कारकविशेषः कर्तृकर्मादिकारकाणि भावो धात्वर्थः एते। **लादेशमात्रस्य** लादेशभूततिङः। **अर्थाः** इति। लादेशा हि सामान्यतया एकत्वादिसङ्ख्या वर्तमानादिकालकर्तृकर्मान्यतरकारकधात्वर्थमात्रस्यापि वाचका भवन्ति। **तथाहि** इति निदर्शने। **लडादेशस्य** लटः स्थाने ये तिबादय आदेशास्तेषाम्। **वर्तमानकालः** प्रारब्धया किन्त्वपरिसमाप्तया क्रिययोपलक्षितः कालः। **शबादिसमभिव्याहारे** कर्तरि शप्' इत्यादिसूत्रविहितशप्प्रत्ययादिसान्निध्ये। **कर्ता** कर्तृकारकार्थः। **यक्चिण्समभिव्याहारे** भावकर्मणोरित्यनुवृत्य विहितस्य यकश्चिणश्च सान्निध्ये। **भावकर्मणी** भावः कर्मकारकश्च ते। **उभयसमभिव्याहारे** उभयस्य शबादेर्यक्चिणोश्च समभिव्याहारे सामीप्ये **एकत्वादिसङ्ख्या** विवक्षानुसारेण एकत्वद्वित्वबहुत्वादिसङ्ख्यार्थः। **च**। अर्थः। यथा गच्छति इत्यत्र वर्तमानकालः कर्तृकारकं एकत्वसङ्ख्या लडादेशतिपोऽर्थः। भूयते इत्यत्र वर्तमानकालः भावः एकत्वसङ्ख्या च लडादेशतस्यार्थः। गम्यते इत्यत्र वर्तमानकालः कर्मकारकमेकत्वसङ्ख्या लडादेशतस्यार्थ इति। उक्तार्थे वैयाकरणभूषणकारिकाकारं प्रमाणयति—तदित्यादिना। तत्र फलव्यापारयोः फले तङ्यक्चिणादयः व्यापारे तु शप्श्नमाद्याः आश्रयान्वयं द्योतयन्ति इत्यन्वयः। **तत्र** तयोर्धात्वर्थभूतयोः। **फलव्यापारयोः** कर्मकर्त्राश्रययोर्मध्ये। **फले** कर्माश्रये फले। **तङ्यक्चिणादयः** आत्मनेपदं यक्चिण्प्रत्ययौ च। **व्यापारे** कर्ताश्रयभूते व्यापारे। **तु** तद्व्यतिरिक्तम्। **शप्श्नमाद्याः** शप्श्नम्प्रभृतिप्रत्ययाः। **आश्रयान्वयं** स्वाश्रयेन सह सम्बन्धम्। **द्योतयन्ति** तात्पर्यं ग्राहयन्ति इति कारिकाशयः। लादेशानां यक्चिण्प्रत्ययसान्निध्ये फलाश्रयभूतकर्मणाऽन्वयो भवति, फलान्वयाश्रयस्य कर्मत्वात्। तद्विपरीतं शप्श्नमादिप्रत्ययानामुपस्थितौ तु लादेशानां व्यापाराश्रयभूतकर्त्रान्वयः व्यापारान्वय्याश्रयस्य कर्तृत्वात्। **फलव्यापारौ** फलं व्यापारजन्योऽर्थः च व्यापारस्तज्जन्यत्वे सति तज्जन्यजनकस्तौ। **तु** हि। **धात्वर्थौ** धातुजन्यार्थौ। **इति** इत्थम्। **उक्तं** कथितम्। **एव**। **तत्र**। **तिङ्समभिव्याहारे** तिङ्सामीप्ये। **तदर्थसङ्ख्या** तस्य तिङोऽर्थः सङ्ख्या

एकत्वादिः । **तदर्थकारके** तस्य तिङः अर्थः कारके कर्तृकर्मणोः । **विशेषणम्** । **कालः** वर्तमानादिकालः । **तु** तद्व्यतिरिक्तम् । **व्यापारे** धात्वर्थभूतव्यापारे । विशेषणमिति । उक्तार्थे भूषणकारिकाकारं प्रमाणयति—**तदित्यादिना** । **तत्** तदेव । **आह** कथयति । तदनुवदति—**फलेत्यादिना** । फलव्यापारयोः धातुः तिङः तु आश्रये स्मृताः फले प्रधानं व्यापारः तिङर्थः तु विशेषणम् इत्यन्वयः । **धातुः** क्रियावाचिशब्दः । **फलव्यापारयोः** फले व्यापारे च भवति फलव्यापारौ धात्वर्थं इति । **तिङः** तिबादिलादेशाः । **तु** तद्व्यतिरिक्तम् । **आश्रये** फलाश्रये कर्मणि व्यापाराश्रये कर्तरि च । **स्मृताः** मताः । तत्रापि **फले** व्यापारजन्येऽर्थे । **प्रधानं** मुख्यम् । **व्यापारः** तज्जन्यत्वे सति तज्जन्यजनकः । **तिङर्थः** तिङर्थभूतः कर्तृकर्मकालसङ्ख्याभावादिः । **व्यापारे विशेषणं** भवतीति । तदेव व्याख्याति—**तिङर्थ** इत्यादिना । **तिङर्थः** तिङर्थभूतः । कर्ता आधारः । **व्यापारे** आधेये यत्ने । **कर्म** फलाश्रयः । **च** तु । **फले** विक्लित्यादौ । **विशेषणम्** । '**क्रियाप्रधानमाख्यातम्**' इति **यास्कोक्तौ** यास्ककथने । **क्रियापदं** क्रियेतिपदम् । **करणव्युत्पत्त्या** क्रियतेऽनयेति करणव्युत्पत्त्याश्रये । **व्यापारपरं** यत्नार्थकम् । **कर्मव्युत्पत्त्या** क्रियते यत्सेति कर्मपरकव्युत्पत्त्या । **फलपरं** व्यापारजन्यार्थपरम् । **इति** इत्थम् । **बोध्यं** ज्ञेयम् । **तथा च** तथैव । '**ग्रामं गच्छति चैत्रः**' **इत्यत्र** । **एकत्वावच्छिन्नचैत्राभिन्नकर्तृकः** एकत्वावच्छिन्नः एकत्वसङ्ख्यायुक्तो यश्चैत्रस्तदभिन्नः कर्ता यस्य तादृशः । **वर्तमानकालिकः** प्रारब्धापरिसमाप्तक्रियः । **ग्रामभिन्नकर्मनिष्ठः** ग्रामादभिन्नं यत्कर्म तत्र निष्ठा वृत्तिर्यस्य सः तादृशः यः **संयोगः** । **तदनुकूलस्तत्साधनपरः** । **व्यापारः** यत्नः । '**ग्रामो गम्यते चैत्रेण**' **इत्यत्र** इत्यादिवाक्ये । **तु** । **मैत्रकर्तृकवर्तमानकालिकव्यापारजन्यः** मैत्रः कर्ता यस्य तादृशो यो वर्तमानकालसम्बद्धो व्यापारो यत्नस्तज्जन्यः । **ग्रामाभिन्नकर्मनिष्ठः** ग्रामादभिन्नं यत्कर्म तत्र निष्ठा यस्य तादृशः । **संयोगः** । **इति** इत्थम् । **बोधः** शाब्दज्ञानमिति ।

**अयमाशयः**—सङ्ख्याकालकारकभावास्तिङां लादेशानामर्थाः । लडादेशस्य हि वर्तमानकालोऽर्थः शबादिसामीप्येऽर्थात्कर्तरि प्रयोगे कर्तृकारकार्थः यक्चिण्सामीप्येऽर्थात् कर्मणि भावे च प्रयोगे कर्मकारकार्थो भावमात्रार्थश्च उभयत्र कर्तरि कर्मणि च विवक्षानुसारेण एकत्वादिसङ्ख्यार्थः । फलव्यापारौ धात्वर्थः । फलं व्यापारजन्योऽर्थो विक्लित्यादिः । व्यापारस्तन्निमित्तको यत्नः । तत्र तिङर्थसङ्ख्या तिङर्थकारके विशेषणम् । तिङर्थकालस्तु धात्वर्थव्यापारे विशेषणम् । एवमेव तिङर्थः कर्ता धात्वर्थव्यापारे तिङर्थकर्म तु धात्वर्थफले विशेषणम् । क्रियाप्राधान्यं च क्रियतेऽनयेति करणव्युत्पत्त्या धात्वर्थव्यापारपरं क्रियते यत्सेति कर्मव्युत्पत्त्या फलपरम् । 'ग्रामं गच्छति चैत्रः' इत्यत्र चैत्रकर्तृकव्यापारप्रधानो बोधः । ग्रामं गम्यते मैत्रेणेत्यत्र तु व्यापारजन्यफलप्रधानो बोधः । कर्तृव्यापारयोः कर्मफलयोश्चाधाराधेयसम्बन्धः । तत्र कर्ता व्यापारस्य कर्मफलस्य विशेषणम् । सङ्ख्या हि कर्तृकर्मणोर्विशेषणम् । कालो हि व्यापारे विशेषणम् । भावः क्रिया स च करणव्युत्पत्त्या व्यापारपरं कर्मव्युत्पत्त्या फलपरम् ।

**हिन्दी**—उसमें एकत्व आदि सङ्ख्याविशेष वर्तमान आदि कालविशेष, कर्ता,

कर्म आदि कारकविशेष एवं भाव लादेशमात्र के अर्थ हैं। जैसे कि 'लट्' के स्थान में होने वाले आदेश का वर्तमान काल अर्थ है और शप् आदि कर्तरि प्रत्ययों के सामीप्य में कर्ता अर्थ है। यक्, चिण् आदि भाव एवं कर्म में होने वाले प्रत्ययों के सामीप्य में भाव एवं कर्म अर्थ हैं और दोनों के सामीप्य में एकत्व आदि सङ्ख्या अर्थ है। जैसे कि कहा गया है—

उन फल एवं व्यापार में से तङ्, यक्, चिण् आदि फल में शप्, श्नम् आदि तो व्यापार में आश्रय का अन्वय द्योतित करते हैं।

फल एवं व्यापार तो धात्वर्थ हैं, ऐसा पहले ही कहा जा चुका है। उसमें तिङ् के सामीप्य में वह तिङर्थ सङ्ख्या तिङर्थ कारक में विशेषण होती है। काल तो व्यापार से विशेषण होता है। जैसे कि कहा गया है—

फल एवं व्यापार धातु के अर्थ हैं। तिङ् का अर्थ आश्रय अर्थात् कर्म एवं कर्ता। फल में व्यापार की प्रधानता रहती है। सङ्ख्या, काल, कारक एवं भाव जो तिङ् के अर्थ हैं, ये व्यापार के प्रति विशेपण होते हैं।

तिङर्थ कर्ता व्यापार में और तिङर्थ कर्म फल में विशेषण होते हैं। 'आख्यात क्रिया-प्रधान होता है' इस तरह के यास्क के कथन में क्रिया शब्द 'जिसके द्वारा किया जाता है' ऐसे करणव्युत्पत्ति व्यापारपरक है; जो किया जाता है, ऐसे कर्मव्युत्पत्ति से फलपरक है, ऐसा जान लेना चाहिए। इस तरह 'ग्रामं गच्छति चैत्रः' इस वाक्य में एकत्व सङ्ख्या युक्त चैत्र से अभिन्न कर्ता वाला वर्तमानकाल से सम्बद्ध ग्राम से अभिन्न कर्म में निष्ठा वाला जो संयोग है, उसके अनुकूल व्यापार—ऐसा बोध होता है और 'ग्रामो गम्यते मैत्रेण' इसमें तो मैत्र है कर्ता जिसमें, ऐसे वर्तमानकालिक व्यापार से जन्य ग्राम से अभिन्न कर्म में निष्ठा वाला संयोग, ऐसा बोध होता है।

## ( १०४ ) वर्तमानकालत्वञ्च प्रारब्धापरिसमाप्तक्रियोपलक्षितत्वम्।

**व्याख्या**—वर्तमानकालं विवृणोति—**वर्तमानेत्यादिना**। **वर्तमानत्वं** वर्तमानभावः। **च** हि। **प्रारब्धापरिसमाप्तक्रियोपलक्षितत्वम्** प्रारब्धा भूतकाले उपक्रान्ता किन्तु अपरिसमाप्ता अपूर्णा या क्रिया भावस्तया उपलक्षितत्वं निर्दिष्टत्वम्। स कालो वर्तमानो यो हि एतादृश्याः क्रियाया आश्रयो या हि समारब्धा किन्तु सर्वथाऽसमाप्ता। क्रिययोपलक्षितत्वं क्रियाया आश्रयत्वम्। अन्तरालेऽस्मिन् प्रवर्तमाना या पचनादिमुख्यक्रिया तस्या अवयवभूतक्रियानिमित्तं पचत्यादिलडन्तशब्दप्रयोगः क्रियते। आत्माऽस्तीत्यत्र आत्मनो नित्यत्वात्तस्यात्मधारणानुकूलव्यापारस्य च नित्यत्वात्कथं तत्र वर्तमानत्वमिति चेदुच्यते आत्मनो नित्यत्वेऽपि तदाश्रयभूतशरीरस्योत्पत्त्यादिधर्मयुक्तत्वाच्छरीरविशिष्टात्मन उत्पत्त्यादिकल्पनया आत्मास्तीत्यत्र वर्तमानत्वमुपपद्यते। यथोक्तं वाक्यपदीये—

'परतो भिद्यते सर्वमात्मा तु न विकल्प्यते।
पर्वतादिस्थितिस्तस्मात् पररूपेण भिद्यते॥' इति।

व्याख्यातञ्च यथा—'पर्वतनद्यादीनामपि नित्यानामपरतत्सहचरितपदार्थगतसत्तोपाश्रयेण सत्ताभेदात् कालभेदोपपत्तिः। सर्वमेव भावजातमुपाधिसंसर्गवशेन भिद्यते न तु स्वरूपेणेति भिन्ना इति परोपाधिरित्युक्तमेव। राज्ञां हि क्रियाः पर्वतादिस्थितेर्भेदकत्वादाश्रयत्वेन व्यवह्रियन्ते। यथा हि—राजक्रियाणां त्रैकाल्यं क्रमिकत्वं साध्यमानता च तथा तत्सहचरितानामपि पर्वतादीनां स्थितेस्तदध्यारोप इति गौणस्त्रिकालविषयः प्रयोगोऽत्रोपपन्न इति न्याय्या भवन्ती' इति।

हिन्दी—वर्तमानकता है प्रारम्भ की गई, किन्तु अपरिसमाप्त क्रिया से उपलक्षित होना।

(१०५) लिट्तिङस्तु भूतानद्यतनकालः परोक्षत्वञ्चाधिकोऽर्थः। शेषं लड्वत्। परोक्षत्वञ्च कारके विशेषणं न तु क्रियायां, तस्या अतीन्द्रियत्वेन लिट्सूत्रे भाष्ये प्रतिपादनाद् व्यभिचाराभावात्।

व्याख्या—लिडादेशभूततिङामर्थं निर्दिशति—लिडित्यादिना। लिट्तिङः लिडादेशतिवादेः। तु हि। भूतानद्यतनकालः भूतो योऽनद्यतनः सः कालः। अद्य भवोऽद्यतनस्तद्भिन्नोऽनद्यतनः। स द्विविधो भूतानद्यतनो भविष्यदनद्यतनश्च। अत्र केचिदाहुः—अतीताया रात्रेः पश्चार्धेन आगामिन्याः पूर्वार्द्धेन च सहितो दिवसोऽद्यतनस्तत्परोऽनद्यतनः। परे त्वाहुः एकस्या रात्रेश्चतुर्थो यामो दिवसश्च सर्वो द्वितीयायाश्च रात्रेः प्रथमो यामोऽद्यतनः इति। अपरे तु भूतानद्यतनत्वञ्चाद्यतनाष्टप्रहरीव्यतिरिक्तत्वे सति भूतत्वमिति। परोक्षत्वमसाक्षाज्ज्ञानविषयत्वम्। च अपि। अधिकः भूतानद्यतनकालातिरिक्तः। अर्थः। शेषमेतदतिरिक्तं सर्वं लिट्यपि लड्वत्। लटीवेति। परोक्षत्वम् आसाक्षाज्ज्ञानविषयत्वम्। च अपि। कारके तिङर्थभूते कर्तरिकर्मणि वा। विशेषणम्। न नैव। तु हि। क्रियायाम्। तस्याः क्रियायाः। अतीन्द्रियत्वेन इन्द्रियविषयबाह्यत्वेन। लिट्सूत्रे 'परोक्षे लिट्' (पा० सू० ३।२।११५) इति सूत्रसम्बद्धे। भाष्ये महाभाष्यग्रन्थे। प्रतिपादनात् निरूपणात्। तत्र व्यभिचाराभावात् परोक्षताऽभावाभावात्। अयम्भावः—ये खलु लिडादेशास्तिबादयस्तेषां भूतानद्यतनकालोऽर्थः परोक्षत्वञ्च। सङ्ख्याकारकभावादयस्तु लिट्यपि लटीव भवन्ति। परोक्षत्वं तु कारके भवति विशेषणं न तु क्रियायां तस्यास्तु सदाऽतीन्द्रियत्वात्। यथोक्तम्—"क्रिया नामेयमत्यन्ता परिदृष्टाऽनुमानगम्याऽशक्या पिण्डीभूता निदर्शयितुम्"। इति।

हिन्दी—लिडादेश तिङ् का तो भूत अनद्यतकाल अर्थ है और परोक्षत्व अधिक अर्थ। शेष सङ्ख्या कारक आदि लट् की तरह ही होते हैं। परोक्षत्व कारक में विशेषण होता है, न कि क्रिया में। क्रिया का अतीन्द्रिय के रूप में लिट् सूत्र के भाष्य में प्रतिपादित है और क्रिया में कभी भी परोक्षता का अभाव नहीं है।

(१०६) कृभ्वाद्यनुप्रयोगस्थले कृभ्वसां क्रियासामान्यमर्थः। आम्प्रकृतेस्तु तत्तत्क्रियाविशेषः। सामान्यविशेषयोरभेदान्वयः। अकर्मकप्रकृतिकामन्तप्रयुक्तकृभ्वसामकर्मिकैव क्रिया। वस्तुतस्तु अनुप्रयुक्तानां कृभ्वसां फलशून्य-

क्रियावाचकत्वमेव। सकर्मकाकर्मकव्यवहारस्तु आम्प्रकृतिभूतधातोरेवेति निष्कर्षः। एवञ्च 'एधाञ्चक्रे चैत्रः' इत्यत्र एकत्वावच्छिन्नपरोक्षत्वावच्छिन्न-चैत्रकर्तृका भूतानद्यतनकालाधिकरणिका वृद्ध्यभिन्ना क्रिया इति बोधः। परोक्षत्वं च साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वम्। भूतानद्य-तनत्वञ्चाद्यतनाष्टप्रहरीव्यतिरिक्तत्वे सति भूतत्वम्।

**व्याख्या**—आमनुप्रयुक्तानां कृभ्वसामामश्चार्थनिर्णयं निरूपयति—**कृभ्वादीत्या-दिना**। **कृभ्वाद्यनुप्रयोगस्थले** यत्र कृभ्वस्तत्र आमोऽनुप्रयुज्यन्ते 'कृञ्चानुप्रयुज्यते लिटि' इति एतादृशस्थले। **कृभ्वसां** करोतेर्भवतेरस्तेश्च तेषाम्। **क्रियासामान्यम् अर्थः** सामान्य-व्यापारस्य वाचका इति। व्यवस्था चेयम्—लिटि 'कास्प्रत्ययादाममन्त्रे लिटि' (पा० सू० ३।१।३५) 'इजादेश्च गुरुमतोऽनृच्छः' (३।१।३६) 'दयायासश्च' (३।१।३७) 'उषविदजागृभ्योऽन्यतरस्याम्' (३।१।३८) 'भीह्रीभृहुवां श्लुवच्च' (३।१।३९) इत्यादिसूत्रैर्धातोराम्प्रत्ययो विधीयते। आमः परस्य लस्य 'आमः' (२।३।८१) इति लुक् क्रियते। ततः 'कृञ्चानुप्रयुज्यते लिटि' (३।१।४०) इति कृभ्वसामन्यतमस्यामनुप्रयोगः। एतादृशस्थले कृभ्वसां सामान्यव्यापार एवार्थो न तु विशिष्टः। **आम्प्रकृतेः** आमः प्रकृतिर्यंत आम् विधीयते तस्य। **तु** तद्व्यतिरिक्तम्। **तत्तत्क्रियाविशेषः** तस्यास्तस्याः क्रियायाः विशेषो यासां ते ते वाचकाः। एधाञ्चक्रे इत्यत्रानुप्रयुक्तस्य कृञस्तु क्रियासामान्यमर्थो न तु धातोर्विशेषार्थः। आम्प्रकृतिभूतस्य एधेस्तु वृद्धिरूपविशेषार्थं एवेत्याशयः। **सामान्यविशेषयोः** अनुप्रयुक्तकरोत्यादेः सामा-न्यार्थस्य आम्प्रकृतिभूतस्य एधेर्विशेषार्थस्य च तयोः। **अभेदान्वयः** अभेदेन एकार्थ-वाचकत्वेन अन्वयः सम्बन्धः। उभे एव सम्भूयैकमेवार्थं ब्रूतः। **अकर्मकप्रकृतिकामन्तप्रयुक्त-कृभ्वसाम्** अकर्मकप्रकृतिकः अकर्मको धातुः प्रकृतिर्यस्य तादृशो य आम् तदन्ते प्रयुक्ता ये कृभ्वसस्तेषाम्। **क्रिया**। **अकर्मिका**। **एव**। एधाञ्चक्रे इत्यत्र कृधातुरकर्मकः किन्तु कथयाञ्चकार इत्यत्र तु सकर्मकः आम्प्रकृतेस्तथात्वात्। **वस्तुतः** यथार्थतः। **तु** हि। **अनुप्रयुक्तानाम्** आमनुप्रयुक्तानाम्। **कृभ्वसां** कृ-भू-अस् इत्येतेषाम्। **फलशून्यक्रिया-वाचकत्वं** फलरहिता या क्रिया तस्या वाचकत्वं केवलं व्यापारमात्रवाचकत्वमिति। **सकर्मकाकर्मकव्यवहारः** सकर्मकत्वमकर्मकत्वञ्चेति यो व्यवहारः। **तु** हि। **आम्प्रकृति-भूतधातोः** यत आम्प्रत्ययो विधीयते तस्य धातोः। **एव**। **इति**। **निष्कर्षः** सारम्। **एवञ्च** एवमेव। **एधाञ्चक्रे चैत्रः**। **इत्यत्र**। **एकत्वावच्छिन्नपरोक्षत्वावच्छिन्नचैत्रकर्तृका** एकत्वावच्छिन्नः एकत्वसङ्ख्याविशिष्टः परोक्षत्वावच्छिन्नः परोक्षताविशिष्टो यश्चैत्रः स कर्ता यस्याः सा तादृशी। **भूतानद्यतनकालाधिकरणिका** भूतानद्यतनकालाश्रिता। **वृद्ध्य-भिन्ना** वृद्धिरूपा। **क्रिया**। **इति**। **बोधः**। तत्र **परोक्षत्वम्**। **च** हि। **साक्षात्कृतं** प्रत्य-क्षतः स्वयमेव कृतम्। **इति** इत्थम्। **एतादृशविषयताशालिज्ञानाविषयत्वम्** एतद्विधविषय-त्वयुक्तज्ञानबाह्यत्वम्। **भूतानद्यतनत्वम्**। **च** हि। **अद्यतनाष्टप्रहरीव्यतिरिक्तत्वे** अद्य-तनी या अष्टप्रहरी तद्व्यतिरिक्तत्वे तद्बाह्यत्वे। **सति**। **भूतत्वम्** अतीतत्वम्। **अय-माशयः**—यत्र कृभ्वसामामोऽनुप्रयोगस्तत्र कृभ्वसः फलरहितव्यापारमात्रसम्बद्धक्रिया-

सामान्यमात्रबोधकाः । क्रियाविशेषस्तु आम्प्रकृतिकधातोरेव । तेन सकर्मकाकर्मकत्वमपि तस्यैव न त्वनुप्रयुक्तानाम् । तेन 'एधाञ्चक्रे चैत्रः' इत्यत्र एकत्वसङ्ख्यायुक्तपरोक्षत्वविशिष्टो यश्चैत्रस्तत्कर्तृकायाः भूतानद्यतनकालसम्बद्धायाः वृद्धिरूपाया एव क्रियाया बोधः । अत्र क्रियासामान्यक्रियाविशेषयोरभेदेनान्वयः । अत्र परोक्षत्वं हि साक्षाज्ज्ञानभिन्नत्वं भूतानद्यतनत्वञ्च अद्यतनी या अष्टप्रहरी तद्व्यतिरिक्तातीतत्वम् ।

हिन्दी—कृ, भू आदि के अनुप्रयोग के स्थल में कृ-भू-अस् इनका क्रियासामान्य ही अर्थ है । आम् के प्रकृतिभूत जो धातु हैं, उन-उन क्रियाओं का ही विशेष अर्थ होता हैं । इन सामान्य एवं विशेष का अभेदसम्बन्ध से अन्वय होता है । अकर्मक प्रकृति वाले धातु से हुए आम् के बाद प्रयुक्त कृ-भू-अस् की क्रिया अकर्मक ही होती है । वास्तव में आम् के बाद प्रयुक्त कृ-भू-अस् धातुओं का फल से शून्य ( केवल व्यापार से युक्त ) क्रिया का ही वाचकत्व होता है । सकर्मक एवं अकर्मक का व्यवहार तो आम् की प्रकृति बने धातु का ही होता है । इसका यही निष्कर्ष है । इस प्रकार 'एधाञ्चक्रे चैत्रः' में एकत्वसङ्ख्याविशिष्ट परोक्षत्वविशिष्ट जो चैत्र है, वह है कर्ता जिसका, ऐसी भूतानद्यतनकाल में आश्रित वृद्धिरूप क्रिया का बोध होता है । परोक्षत्व है—'साक्षात् किया गया' ऐसी विषयता से युक्त ज्ञान का विषय न होना । भूतानद्यतन है—आज के आठ पहरों से भिन्न ( बाहर ) होकर भूत ( अतीत ) होना ।

( १०७ ) लुडादेशस्य तु भविष्यदनद्यतनार्थोऽधिकः । शेषं लङ्वत् । भविष्यत्त्वञ्च वर्तमानप्रागभावप्रतियोगिक्रियोपलक्षितत्वम् ।

**व्याख्या**—लुडादेशार्थं निरूपयति—लुडादेशस्येत्यादिना । **लुडादेशस्य** लुडादेशतिबादेः । **तु** हि । **भविष्यदनद्यतनार्थः** भविष्यद् यदनद्यतनं तदर्थः । **अधिकः** विशेषः । **शेषम्** अवशिष्टसङ्ख्याद्यर्थः । **लङ्वत्** लटीव भवति । **भविष्यत्त्वं** भविष्यत्कालता । **च** हि । **वर्तमानप्रागभावप्रतियोगिक्रियोपलक्षितत्वं** वर्तमानस्य वर्तमानकालस्य प्रागभावप्रतियोगिनी या क्रिया तया उपलक्षितत्वम् । तादृशी क्रिया यस्या वर्तमाने प्रागभाव इति । **अयम्भावः**—लुडादेशतिङः सङ्ख्यादिविषयो लङ्वद् भवति, विशेषस्तु भविष्यदनद्यतनार्थः । 'अनद्यतने लुट्' इति व्यवस्थया । भविष्यत्त्वं हि तादृश्या क्रिययोपलक्षितत्वं यस्याः वर्तमाने प्रागभावः ।

हिन्दी—लुडादेश तिङ् का भविष्यदनद्यतन अर्थ अधिक होता है । शेष लडादेश की तरह होता है । भविष्यत्त्व है—वर्तमानकालीन प्रागभाव की प्रतियोगिनी क्रिया के द्वारा उपलक्षित होना ।

( १०८ ) लृट्तिङस्तु भविष्यत्सामान्यमर्थः ।

**व्याख्या**—लृट्स्थानीयतिङोऽर्थं निर्दिशति—लृडित्यादिना । **लृट्तिङः** लृडादेशतिङः । **तु** हि । **भविष्यत्सामान्यं** सामान्यभविष्यत्कालोऽद्यतनानद्यतननिर्विशेषः । **अर्थः** ।

**अयम्भावः**—लृडादेशतिङो हि सामान्यभविष्यत्कालोऽर्थः । शेषं तु लङ्वदेव ।

सूत्रं तु 'भविष्यति गम्यादयः' ( ३।३।३ ) इत्यनुवृत्त्य 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' ( ३।३।१० ) इत्यप्यनुवृत्त्य 'लृट् शेषे च' ( ३।३।१३ ) इति भविष्यति क्रियार्थकक्रिया-भावे चात्तद्भावे वा लृड्विधानम् ।

हिन्दी—लृडादेश तिङ् का अर्थ सामान्य भविष्यत् काल है । शेष लट् में जैसा ही होता है ।

( १०९ ) लेट्तिङस्तु विध्यादिरर्थश्छन्दसि 'लिङर्थे लेट्' इति सूत्रात् । लट्प्रक्रियातो 'लेटोऽडाटौ' इति विशेषः; भवति भवाति इति प्रयोगदर्शनात् ।

**व्याख्या**—लेडादेशतिङर्थं निरूपयति—**लेट्तिङ** इत्यादिना । **लेट्तिङः** लेडादेश-तिङः । तु हि । **विध्यादिः** विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनानि आशीश्च । **अर्थः** । **छन्दसि 'लिङर्थे लेट्'** छन्दसि लिङर्थे लेट् ( पा० सू० ३।४।७ ) भवतीति इति । **सूत्रात्** सूत्रपाठात् । लेटि **लट्प्रक्रियातः** लटि या प्रक्रिया शबादिका ततः । **लेटोऽडाटौ** लेटः अट् आट् च भवतः इति । **विशेषः** वैशिष्ट्यं शेषं लड्वदिति । **भवति भवाति** अटि भवति आटि भवाति । **इति** । **प्रयोगदर्शनात्** प्रयोगोपलब्धेः ।

**अयमाशयः**—छन्दसि 'लिङर्थे लेट्' ( पा० सू० ३।४।७ ) इति सूत्रात् लेटोऽपि लिङ्वत् 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' 'आशिषि लिङ्लोटौ' इति व्यवस्थापिता अर्थाः । लेटयपि लटीव सर्वाः प्रक्रिया विशेषस्तु 'लेटोऽडाटौ' इति अटः आटश्च प्रबन्ध एव । प्रयोगश्च भवति भवाति इति ।

**हिन्दी**—लेडादेश तिङ् के विध्यादि अर्थ हैं । छन्द में 'लिङर्थे लेट्' ऐसा सूत्र है । लट् की प्रक्रिया से अट् एवं आट् आगम में ही विशेष है, क्योंकि भवति भवाति ऐसे प्रयोग देखे जाते हैं ।

( ११० ) लोट्तिङस्तु विध्यादिरर्थः । तत्राधीष्टं सत्कारपूर्वको व्यापारः 'आगच्छतु भवान् जलं गृह्णातु' इत्यादौ । सम्प्रश्नोऽनुमतिः, 'गच्छति चेद् भवान् गच्छतु' इत्यादौ ।

**व्याख्या**—लोडादेशतिङोऽर्थं निरूपयति—**लोट्तिङ** इत्यादिना । **लोट्तिङः** लोडा-देशतिङः । **तु** हि । **विध्यादिः** विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनानि आशीश्च । **अर्थः** । **तत्र** तेष्वर्थेषु । **अधीष्टम्** **सत्कारपूर्वकः** आदरभावसहितः । **व्यापारः** क्रिया । **आगच्छतु भवान् जलं गृह्णातु इत्यादौ** इत्यादिवाक्ये । **सम्प्रश्नः** इति अनुमतिः यथा **'गच्छति चेद् भवान् गच्छतु' इत्यादौ** इत्यादिवाक्ये ।

**हिन्दी**—लोडादेश तिङ् के भी विध्यादि अर्थात् विधि-निमन्त्रणा-आमन्त्रणा-अधीष्ट-सम्प्रश्न-प्रार्थना अर्थ है । उनमें अधीष्ट का अर्थ है—'आगच्छतु भवान् जलं गृह्णातु' इत्यादि में सत्कारपूर्वक व्यापार । सम्प्रश्न का अर्थ है—'गच्छति चेद् भवान् गच्छतु' इत्यादि में अनुमति ।

( १११ ) लङादेशस्य तु भूतानद्यतनत्वमधिकोऽर्थः । शेषं लड्वत् ।

**व्याख्या**—लङादेशतिङामर्थं निरूपयति—**लङादेशस्येत्यादिना । लङादेशस्य** लङादेशभूततिङः । **तु** हि । **भूतानद्यतनत्वं** भूतानद्यतनकालः । **अधिकः** विशेषः । **अर्थः** । **शेषं** सङ्ख्यादिकं **लड्वत्** लटीवेति । **'अनद्यतने लङ्'** ( ३।२।१११ ) इति भूतानद्यतने काले लङ् विधीयते । भूतानद्यतनत्वञ्च अद्यतनाष्टप्रहरी व्यतिरिक्तत्वे सति भूतत्वम् । लङादेशे भूतानद्यतनत्वं विशेषः । शेषं सर्वं तु लड्वदेव ।

**हिन्दी**—लङादेश का तो भूतानद्यतन अधिक अर्थ होता है और शेष लट् की ही तरह होते हैं ।

( ११२ ) लिङादेशस्य तु विध्यादिरर्थः । तत्र विध्यादिचतुष्टयस्यानुस्यूतप्रवर्तनात्वेन चतुर्णां वाच्यता लाघवात् ।

तदुक्तं हरिणा—

अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि ।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ।। इति ।

प्रवर्तनात्वञ्च प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम् । तच्चेष्टसाधनत्वमेवेति तदेव लिङर्थः । न तु कृतिसाध्यत्वं, तस्य यागादौ लोकत एव लाभादिति अन्यलभ्यत्वात् । न च बलवदनिष्टाननुबन्धित्वं, द्वेषाभावेनान्यथासिद्धत्वादित्यन्यत्र विस्तरः ।

**व्याख्या**—लिङादेशतिङामर्थं निरूपयति—**लिङादेशस्येत्यादिना । लिङादेशस्य** लिङादेशतिङः । **तु** हि । **विध्यादिः** विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनानि । **अर्थः** । **तत्र विध्यादिचतुष्टयस्य** विधिनिमन्त्रणामन्त्रणाधीष्टेति चतुर्णाम् । **अनुस्यूतप्रवर्तनात्वेन** समानरूपेण विद्यमानं यत्प्रवर्तनात्वं प्रवर्तनारूपधर्मस्तत्त्वेन । **चतुर्णां** विध्यादीनां चतुर्णामेव । **वाच्यता** वाच्यार्थत्वम् । **लाघवात्** तथा सति लाघवापत्तेः । उक्तार्थे हरिं प्रमाणयति—**तदित्यादिना । तत्** तदेव । **हरिणा** वाक्यपदीयकृता तदाख्येन । **उक्तं** कथितम् । तदनुवदति—**अस्तीत्यादिना** । चतुर्षु अपि अनुस्यूतम् प्रवर्तनारूपम् अस्ति, तत्र एव लिङ् विधातव्यः, भेदस्य विवक्षया किम् इत्यन्वयः ।

**चतुर्षु** विधिनिमन्त्रणाऽऽमन्त्रणाऽधीष्टेषु । **अपि** हि । **अनुस्यूतं** व्याप्तम् । **प्रवर्तनारूपं** प्रवृत्तिजनकज्ञानविषयतारूपम् । **अस्ति** विद्यते । **तत्र** प्रवर्तनारूपेऽर्थे । **एव** हि । **लिङ्** लिङ्लकारः । **विधातव्यः** कर्तव्यः । **भेदस्य** विध्यादिभेदस्य । **विवक्षया** ग्रहणेन । **किम्** किम्प्रयोजनमिति । **प्रवर्तनात्वं** प्रवर्तनारूपधर्मः । **च** हि । **प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वं** प्रवृत्तिजनकं प्रवृत्त्युत्पादकं यज्ज्ञानं तस्य विषयतायाः अवच्छेदकत्वं बोधकत्वम् । **तत्** अवच्छेदकत्वम् । **च** हि । **इष्टसाधनत्वम्** इष्टसाधनता । **एव** । **इति** । **तत्** इष्टसाधनत्वम् । **एव** हि । **लिङर्थः** । **न** नैव । **तु** तद्व्यतिरिक्तम् । **कृतिसाध्यत्वं** यत्नविषयता लिङर्थ इति । **तस्य** यत्नसाध्यतारूपार्थस्य । **यागादौ** यज्ञादिकर्मणि । **लोकतः** व्यवहारतः । **एव** हि । **लाभात्** सिद्धेः । **इति** इत्थम् । **अन्यलभ्यत्वात्** इतरज्ञेयत्वात् । **न** नैव । **च** हि । **बलवदनिष्टाननुबन्धित्वं** बलवत् प्रबलं यदनिष्टं

तस्यानुबन्धित्वमुत्पादकत्वाभावः। लिङर्थ इति। द्वेषाभावेन कार्यविशेषविषयक-प्रवृत्तौ द्वेषस्याभावेन। बलवदनिष्टानुत्पादकतारूपार्थस्य। अन्यथासिद्धत्वात्। इति। अन्यत्र ग्रन्थान्तरे लघुमञ्जूषादौ। विस्तरः सप्रपञ्चं निरूपणमिति। अयमाशयः—लिङादेशतिङो हि विध्यादिरर्थः, विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् इति व्यवस्थया। तेष्वपि विधेः प्राधान्येनासौ विधिलिङप्युच्यते। 'आशिषि लिङ्लोटौ' इति व्यवस्थया त्वाशीर्लिङः। तत्र विधिर्नाम कार्ये प्रवृत्त्यर्थं प्रेरणाप्रेषणं क्रियायां नियोजनं वा। निमन्त्रणा ह्यवश्यकर्तव्येन कार्ये प्रेरणम्। यन्नियोगतः कर्तव्यं तन्निमन्त्रणम्। असत्यामपीच्छायामकरणे सत्यधर्मोत्पत्तिनियमेनावश्यम्भावेन यत्करणं तन्निमन्त्रणम्। आमन्त्रणा हि कामचारः यदिच्छयैव करणं नानिच्छयाऽकरणेऽपि दोषाभावात्। अधीष्टः सत्कारपूर्वको व्यापारः, सम्प्रश्नोऽनुमतिः। तेषु विध्यादिचतुर्षु प्रवर्तनारूपस्य व्याप्तत्वात् प्रवर्तनाऽर्थे एव लिङ् विधातव्यः। तेन सूत्रमपि प्रवर्तनासम्प्रश्नप्रार्थनेषु लिङ् इत्येव पठितव्यम्। तथाकरणे सति लाघवं भवति। तत्र प्रवर्तनात्वं हि प्रवृत्त्यु-त्पादकज्ञानविषयताबोधकत्वम्। तच्च बोधकत्वमिष्टसाधनत्वमेवेति इष्टसाधनमेव लिङर्थः। न च यत्नसाध्यत्वं न वा प्रबलानिष्टाननुबन्धित्वमेव लिङर्थस्तयोरन्य-लभ्यत्वात्।

हिन्दी—लिङादेश तिङ् का विध्यादि (अर्थात् विधि-निमन्त्रणा-आमन्त्रणा-अधीष्ट-सम्प्रश्न-प्रार्थना, ये छः) अर्थ हैं। उसमें विध्यादि चारों में प्रवर्तनारूप धर्म व्याप्त रहने से चारों का प्रवर्तना ही वाच्य अर्थ माना जाय, ऐसा करने में लाघव होता है। जैसे कि हरि ने कहा है—

चारों में ही व्याप्त प्रवर्तनारूप धर्म है और उसीमें लिङ् का विधान करना चाहिए। भेदों की विवक्षा से क्या लाभ? प्रवर्तनात्व है—प्रवृत्ति के उत्पादक ज्ञान की विषयता का बोधक होना। वह इष्टसाधनता ही है और इस कारण इष्टसाधनता ही लिङ् का अर्थ है। न तो यत्नसाध्यता ही लिङ् का अर्थ है, क्योंकि उसका तो यज्ञ आदि में लोक से लाभ होता है, अतः अन्यलभ्य है। न ही बलवान् अनिष्ट का अनुत्पादकत्व ही लिङ् का अर्थ हो सकता है, क्योंकि वह तो द्वेष के अभाव से अन्यथासिद्ध हो जाता है। ये सब दूसरे ग्रन्थों में विस्तार से कहे गए हैं।

(११३) लुङादेशस्य तु भूतसामान्यमर्थः। भूतत्वञ्च वर्तमानध्वंसप्रति-योगिक्रियोपलक्षितत्वम्।

व्याख्या—लुङादेशतिङोऽर्थं निरूपयति—लुङादेशस्येत्यादिना। लुङादेशस्य लुङा-देशतिङः। तु हि। भूतसामान्यं सामान्यभूतकालोऽद्यतनानद्यतननिर्विशेषः। अर्थः। शेषं लड्वत्सङ्ख्यादि। भूतत्वं भूतकालत्वम्। च हि। वर्तमानध्वंसप्रतियोगिक्रियोपलक्षित-त्वम् वर्तमाने वर्तमानकाले ध्वंसो नाशो वर्तमानध्वंसस्तस्य प्रतियोगिनी या क्रिया अतीत-कालीना क्रिया तयोपलक्षितत्वं निर्दिष्टत्वम्। अयमाशयः—लुङादेशतिङ्सामान्यभूत-कालोऽर्थः, शेषं तु लटीव। भूतत्वं हि वर्तमाने ध्वंसस्य प्रतियोगिनी (अतीतकालीना)

या क्रिया तयोपलक्षितत्वम् । यदा हि वर्तमानकालध्वंसिन्याः क्रियायाः अस्तित्वं स कालो भूतकाल इति ।

हिन्दी—लुङादेश तिङ् का अर्थ है—सामान्य भूतकाल । भूतत्व है—वर्तमान में ध्वंस की प्रतियोगी क्रिया के द्वारा उपलक्षित होना ।

( ११४ ) लृङादेशस्य तु क्रियातिपत्तौ गम्यमानायां हेतुहेतुमद्भावे च गम्यमाने भूतत्वं भविष्यत्त्वं चार्थः । आपादना तु गम्यमाना । भूते एधश्चेदलप्स्यतौदनमपक्ष्यत । भविष्यति सुवृष्टिश्चेदभविष्यत् सुभिक्षमभविष्यत् । इति सङ्क्षेपः ।

व्याख्या—लृङादेशतिङोऽर्थं निरूपयति—लृङादेशस्येत्यादिना । लृङादेशस्य लृङादेशतिङः । क्रियातिपत्तौ क्रियाया अतिपत्तौ अनिष्पत्तौ असिद्धौ वा । गम्यमानायां द्योत्यमानायाम् । हेतुहेतुमद्भावे कार्यकारणभावे । च अपि । गम्यमाने द्योत्यमाने । भूतत्वं भूतकालः । भविष्यत्त्वं भविष्यत्कालः । च अपि । अर्थः । आपादना एकस्याभावेऽपरस्याप्यसिद्धिः । तु हि । गम्ययाना द्योत्यमाना । भूते भूतकालार्थे । एधश्चेदलप्स्यतौदनमपक्ष्यत । भविष्यति भविष्यत्कालार्थे । सुवृष्टिश्चेदभविष्यत्सुभिक्षमभविष्यत् । इति । सङ्क्षेपः सङ्क्षेपेण दशलकारादेशार्थनिर्णयः । अयमाशयः—'भविष्यति मर्यादावचनेऽवरस्मिन्' ( ३।३।१३८ ) इत्यतः भविष्यति इत्यनुवृत्त्य 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' ( ३।३।१३९ ) इत्यनेन 'भूते च' ( ३।३।१४० ) इत्यनेन च लृङो विधानम् । लिङः निमित्तञ्च 'हेतुहेतुमतोर्लिङ्' ( ३।३।१५६ ) इति । एतर्हि क्रियाया असिद्धिः हेतुहेतुमद्भावः आपादना चेति लृङ्निमित्तकस्थितयः । त्रिष्वेतेषु सत्सु भविष्यति भूते चार्थे लृङो विधानमिति । आद्ये हि एधप्राप्तिरूपायास्तण्डुलपाकरूपायाश्च क्रियाया असिद्धिः, तत्र एधाभावरूपं कारणं तथा ओदनपाकाभावरूपं कार्यम् एधप्राप्तौ ओदनपाक इति त्वापादना । तेन भूतेऽर्थे लृङ् । एवमेव द्वितीयेऽपि । सुवृष्टिभवनरूपक्रियायाः सुभिक्षभवनरूपक्रियायाश्चानिष्पत्तिः सुवृष्टयभावरूपक्रियायाः कारणता सुभिक्षाभावरूपक्रियायाः कार्यता यदा यदा नैव सुवृष्टिस्तदा तदा नैव सुभिक्षमित्यापादना । आपादनाऽत्र तर्कः स च व्याप्यारोपेण व्यापकारोपः ।

हिन्दी—लृङादेश लिङ् का क्रिया की असिद्धि गम्यमान होने पर और कार्यकारण भाव के भी गम्यमान होने पर भूतकाल एवं भविष्यत्काल अर्थ होता है । आपादना अर्थात् एक वस्तु के अभाव में दूसरी वस्तु का न होना गम्यमान होती है । भूत में 'एधश्चेदलप्स्यत ओदनमपक्ष्यत' ( इन्धन मिल जाता तो चावल पक जाता ) । भविष्यत् में 'सुवृष्टिश्चेदभविष्यत् सुभिक्षमभविष्यत्' ( अच्छी वृष्टि होगी तो सुभिक्ष होगा ) । इस तरह सङ्क्षेप में दशलकारार्थ-निर्णय किया गया ।

( ११५ ) अथ नैयायिकानां मते सङ्क्षेपाल्लकाराणामर्थो निरूप्यते । तत्र लडादिलङन्ता दश लकाराः । तत्र लकारस्य कर्ता कालः सङ्ख्या चेति त्रयोऽर्थाः । तत्र कर्तेति पातञ्जलाः । लः कर्मणि च इति सूत्रे चकारेण कर्तुः परामर्शात् ।

कर्तृस्थाने व्यापार इति भाट्टाः। यत्न इति नैयायिकाः। युक्तञ्चैतत्। व्यापारताद्यपेक्षया लाघवेन यत्नत्वस्यैव शक्यतावच्छेदकत्वात्।

**व्याख्या**—लकारार्थविषये मतमतान्तरोद्धरणाय प्रकरणमारभते—अथेत्यादिना। **अथेति** प्रकरणारम्भे। **नैयायिकानां** तार्किकाणाम्। **मते** नये। **सङ्क्षेपात्** सारतः। **लकाराणाम्**। **अर्थः**। **निरूप्यते** विचार्यते। **तत्र** लकारार्थप्रकरणे। **लडादिलङन्ताः** लट्-लिट्लुट्लृट्लेट्लोट्-लङ्लिङ्लुङ्लृङः इत्येते। **दश** दससङ्ख्याकाः। **लकाराः** लकारा भवन्ति। **तत्र**। **लकारस्य** लस्य। **कर्ता** व्यापाराश्रयः। **कालो** वर्तमानादिः। **सङ्ख्या** एकत्वादिका। **इति** इत्थम्। **त्रयः** त्रिसङ्ख्याकाः। **अर्थाः**। सामान्यत उक्ता इति। **तत्र** तेषु त्रिष्वर्थेषु। **कर्ता** लस्यार्थः कर्ता व्यापाराश्रयः। **इति** इत्थम्। **पातञ्जलाः** पतञ्जलिशिष्यास्तदनुगामिनो वा। **लः कर्मणि च इति** 'लः कर्मणि च भावे चाकर्मकेभ्यः' (पा० सू० ३।४।६९) **सूत्रे**। **चकारेण** कर्मणि च इत्यत्रत्य चकारेण। **कर्तुः** कर्तृ वाच्ये लार्थः कर्तेति तस्य। **परामर्शात्** संसूचनात्। **कर्तृस्थाने** कर्तुः स्थाने। **व्यापारः** लकारार्थ **इति**। **भाट्टाः** भट्टमतानुयायिनः कौमारिलाः। व्यापारस्याश्रयः कर्ता। तस्य च लक्षणया गम्यत्वमिति। यथोक्तम्—विशेषप्रयोजनेच्छाजनितक्रियाविशेषव्यापारः आर्थीभावना सा चाख्याततत्त्वांशेनोच्यते, आख्यातसामान्यस्य व्यापारवाचित्वात्। इति। विशेषप्रयोजनपूर्तीच्छोत्पन्नक्रियाविषयकमानसिकप्रवृत्तिरेव व्यापारः। इयमेव मानसिकी प्रवृत्तिर्मीमांसकैः आर्थीभावना इत्युच्यते। अयमेव व्यापारः क्रियाया वाच्यार्थः, आख्यातं हि सामान्यतया व्यापारवाचकम्। **नैयायिकाः** तार्किकाः। **यत्नः** कृतिः। **इति**। वदन्तीति शेषः। मीमांसकमते फलं धात्वर्थो व्यापारस्तु लकारार्थः। नैयायिकमते तु फलव्यापारौ धात्वर्थः यत्नोऽथवा कृतिर्लकारार्थः। **एतत्** यत्नो लकारार्थ इति। **युक्तम्** उपयुक्तम्। **च** अपि। **व्यापारताद्यपेक्षया** व्यापारताकर्तृत्वाद्यपेक्षया। **लाघवेन** लाघवत्वात्। **यत्नत्वस्य** कृतित्वस्य। **एव** हि। **शक्यतावच्छेदकत्वात्** शक्यताया वाच्यार्थतायाः अवच्छेदकत्वात्। यदि हि लकाराणामर्थः कर्ता मन्यते तदा कर्ता हि कृतियुक्तो भवति। अतः कर्त्रनुसारेण कृतेरपि विभिन्नरूपेणोपस्थितिर्मन्तव्या। इत्थमनन्तरूपेण कृतीनामुपस्थितिरेव गौरवम्। कृत्यर्थस्वीकारे तु सर्वास्वेव कृतिषु कृतित्वजातेरेकत्वात्तस्या वाच्यार्थतास्वीकारे लाघवम्। एतदतिरिक्तं कर्तुर्वाच्यार्थत्वेन स्वीकारे कृतिमतो वाच्यत्वं भवति। अतः कृत्यपेक्षया कृतिमति शक्तौ गौरवात् कर्तुर्लकारवाच्यत्वे गौरवं भवेत्। वाक्ये प्रथमान्तपदेनैव कर्तुर्बोधे अनन्यलभ्यः शब्दार्थं इति न्यायादपि न हि कर्ता लकारार्थ इति। एवमेव व्यापारस्य लकारवाच्यत्वेऽपि गौरवं स्यात्, यतो हि धात्वर्थफलजनकत्वे धातुवाच्यत्वं व्यापारः। व्यापारस्य लकारवाच्यत्वे एतद् दीर्घवाक्यं सदा सम्पृक्तं भवेदेवेति तत्र गौरवम्। अतो हि सर्वापेक्षया लाघवात्। कृतिजातिर्यत्नो वा लकारार्थ इति सुस्थमेव। शक्यस्य वाच्यार्थस्यैतादृशो धर्मो यो हि सदा वाच्यार्थमवलम्ब्य वर्तते स शक्यतावच्छेदकः। यथा घटस्य शक्यतावच्छेदको धर्मो घटत्वमिति, यतो हि घटत्वं घटे एव वर्तते नान्यत्र। एवमेव यत्नता हि लकारस्य शक्यतावच्छेदको धर्म इति।

**हिन्दी**—अब नैयायिकों के मत में सङ्क्षेप से लकारों के अर्थ का निरूपण किया जाता है। उसमें लट् से लेकर ऌङ् तक ( लट्, लिट्, लुट्, ऌट्, लेट्, लोट्, लङ्, लिङ्, लुङ् और ऌङ् ) दश लकार होते हैं। उसमें कर्ता, कारक, सङ्ख्या आदि लकार के तीन अर्थ माने जाते हैं। उसमें भी पातञ्जल अर्थात् पतञ्जलि के अनुयायी कर्ता को लकारार्थ मानते हैं। 'लः कर्मणि च भावे चाकर्मकेभ्यः' इस सूत्र में 'कर्मणि च' 'भावे च' इन दोनों चकारों से कर्ता का ही परामर्श किया गया है। कर्ता के स्थान में व्यापार लकार का अर्थ है, ऐसा भाट्ट अर्थात् भट्ट मत के अनुयायी मीमांसकों का मत है। न तो कर्ता और न ही व्यापार, किन्तु यत्न ही लकार का अर्थ है, ऐसा नैयायिकों का मत है। यह ठीक भी है, व्यापारता आदि की अपेक्षा लाघव होने से यत्नत्व की ही शक्यतावच्छेदकता है।

( ११६ ) शक्ततावच्छेदकश्च लकारसाधारणं लत्वमेव। भवतीत्यादौ चादेशेनादेशिनो लस्यैव स्मरणादन्वयधीः। आदेशेषु बहुषु शक्तिकल्पने गौरवात्। तदस्मरणे च शक्तिभ्रमादेवान्वयधीः। 'चैत्रो गन्ता' 'गतो ग्राम' इत्यादौ सामानाधिकरण्यानुरोधेन यथायथं कर्तृकर्मणि कृद्वाच्ये। न चैवं लटः शतृशानचा इत्यनेन शतृशानचोरादेशत्वात् कथं कर्तरि शक्तिः ? आदेशिशक्त्या निर्वाह एवादेशशक्त्यकल्पनात्। 'चैत्रः पचन्' इत्यादौ सामानाधिकरण्यानुरोधादादेशिशक्त्याऽनिर्वाहादत्रादेशेऽपि शक्तिः।

**व्याख्या**—लस्यैव वाचकत्वं युक्तं न तु लादेशानामिति प्रतिपादयति—शक्ततेत्यादिना। **शक्ततावच्छेदकं** शक्तताया वाचकताया अवच्छेदकत्वं निरूपकत्वम्। **च** अपि। **लकारसाधारणं** सर्वलकारसामान्यम्। **लत्वं** लकारता। **एव**। **भवति इत्यादौ** इत्यादिवाक्ये। **च** अपि। **आदेशेन** तिबादिना। **आदेशिनः** आदेशयोनेः। **लस्य** लकारस्य। **एव** हि। **अन्वयधीः** अन्वयज्ञानम्। **बहुषु** अनेकेषु। **आदेशेषु** आदेशभूततिबादिषु, **शक्तिकल्पने** वाचकताधाने। **गौरवात्**। **तदस्मरणे** तस्य आदेशिनः अस्मरणे ज्ञानाविषये। **च** अपि। **शक्तिभ्रमात्** शक्तेर्वाचकताया भ्रमो मिथ्याज्ञानम्। **एव** हि। **अन्वयधीः** अन्वयज्ञानम्। **'चैत्रो गन्ता' 'गतो ग्रामः' इत्यादौ** इत्यादिवाक्ये। **सामानाधिकरण्यानुरोधेन** समानाश्रयत्ववशात्। **यथायथं** क्रमशः। **कर्तृकर्मणी** चैत्रो हि कर्ता ग्रामो हि कर्म इत्युभे। **कृद्वाच्ये** कृत्प्रत्ययवाच्ये तृच् हि कर्तृवाचकः, क्तो हि कर्मणः। **न नैव**। **च** हि। **एवं** सामानाधिकरण्यानुरोधेन कर्तृकर्मणोः कृद्वाच्यत्वे। **लटः शतृशानचा इत्यनेन** 'लटः शतृशानचावप्रथमासमानाधिकरणे' ( ३।२।१२४ ) इति सूत्रेण। **शतृशानचोः** शतृशानच्प्रत्यययोः। **आदेशत्वात्** विधानत्वेन। **कथं** केन प्रकारेण। **कर्तरि**। **शक्तिर्वाचकता**। **'आदेशिशक्त्या** स्थानिगतशक्त्या। **एव** हि। **निर्वाहे** कार्यसिद्धौ। **आदेशशक्त्यकल्पनात्** आदेशे शक्तेरकल्पनात्। **चैत्रः पचन् इत्यादौ**। **सामानाधिकरण्यानुरोधात्** समानाधिकरणतावशात् अभेदान्वयादिति। **आदेशिशक्त्या** स्थानिगतशक्त्या। **अनिर्वाहे** कार्यासिद्धौ। **अत्र**

एतादृशप्रयोगे। आदेशे शतंरि शानचि च। शक्तिः वाचकतेति। अयमाशयः—नैयायिकमते सर्वलकारसामान्ये लत्वे एव जातौ शक्ततावच्छेदकता यत्नजातिरूपार्थस्यैव शक्यतावच्छेदकम्। न तु तिवाद्यादेशानां वाचकत्वं बहुषु शक्तिकल्पने गौरवात्। भवति इत्यादौ अपि आदेशभूततिपा आदेशिभूतलस्यैव संसूचनादन्वयज्ञानं न तु तिपो वाचकत्वेन। यत्र च लस्यास्मरणमज्ञानं वा तत्र तिबादौ शक्तिभ्रमादन्वयबोधः। 'चैत्रो गन्ता' 'गतो ग्राम' इत्यादौ कथं कृतः कारकार्थस्तत्रापि तस्य लादेशत्वाद्यत्नेनैवार्थेन भाव्यमिति चेन्न; चैत्र इत्येतस्य, गन्ता इत्येतस्य, गत इत्येतस्य ग्राम इत्येतस्य च समानविभक्तिकत्वात्समानविभक्तिकनामार्थयोरभेदान्वयः इति न्यायात् तयोरभेदान्वयसम्बन्धेन गन्ता इत्येतस्य तृचः कर्ता गत इत्येतस्य क्तस्य च कर्मेत्यर्थः, न तु भेदसम्बन्धमाधृत्य। एवमेव चैत्रः पचन् इत्यादावपि सामानाधिकरण्यवशादादेशिनः शक्त्याऽनिर्वाहेण आदेशस्यापि वाचकता स्वीकर्तव्या या हि कर्त्रर्थं बोधयतीति।

हिन्दी—शक्तता का जो अवच्छेदक है, वह सभी लकारों में रहने वाला लत्व ही है। 'भवति' इत्यादि में भी आदेशभूत तिप् के द्वारा आदेशी लकार के ही स्मरण होने से अन्वय बैठता है। आदेश अनेक प्रकार के हैं और उन अनेक प्रकार के आदेशों में शक्ति की कल्पना करने में गौरव पड़ता है। जहाँ भी आदेश के द्वारा आदेशी के स्मरण के विना ही अर्थबोध होता है, वहाँ शक्ति के भ्रम होने के कारण ही अन्वय का वोध होता है। 'चैत्रो गन्ता गतो ग्रामः' इत्यादि में समानाधिकरण्य के अनुरोध से जैसे के तैसे कर्ता एवं कर्म कृदन्त से वाच्य होते हैं अर्थात् 'चैत्रो गन्ता' में कर्ता, 'गतो ग्रामः' में कर्म कृद् वाच्य है। न भी यह कि 'लटः शतृशानचावप्रथमा समानाधिकरणे' ( पा० सू० ३।२।१२४ ) इस सूत्र से शतृ एवं शानच् के आदेश होने से कैसे कर्ता में शक्ति है? ऐसा कहना ठीक है। क्योंकि आदेशी के शक्ति से ही निर्वाह होने पर आदेश की शक्ति की कल्पना नहीं होती। 'चैत्रः पचन्' इत्यादि में सामानाधिकरण्य के अनुरोध से आदेशी की शक्ति के द्वारा निर्वाह न होने से यहाँ आदेश में भी शक्ति मानी जाती है।

( ११७ ) इयांस्तु विशेषः—लत्वेन यत्ने शक्तिरात्मनेपदत्वेन फले। 'मैत्रेण गम्यते ग्रामः' इत्यादौ मैत्रवृत्तिकृतिजन्यगमनजन्यफलशाली ग्राम इत्यन्वयबोधात्। कृतिश्चात्र तृतीयार्थः। जन्यत्वं संसर्गः। मैत्रः कृतौ विशेषणं, सा च गमने तच्च फले तच्च ग्रामे।

व्याख्या—लत्वात्मनेपदत्वयोः शक्तावन्तरं निरूपयति—इयानित्यादिना। इयान् एतावान्। तु हि। विशेषः अन्तरम्। लत्वेन लकारभावेन। यत्ने कृतौ। शक्तिः वाचकता। आत्मनेपदत्वेन तङानावात्मनेपदमिति परिभाषिततङाद्यादेशत्वेन। फले व्यापारजन्यफले। शक्तिरिति। 'मैत्रेण गम्यते ग्रामः' इत्यादौ इत्यादिवाक्ये। मैत्रवृत्तिकृतिजन्यगमनजन्यफलशाली मैत्रे वृत्तिर्निष्ठा यस्या सा तादृशी या कृतिर्यत्नस्तज्जन्यं यद् गमनं तज्जन्यं यत्फलं तच्छाली तद्युक्तः। ग्रामः। इति इत्थम्। अन्वय-

**बोधात्** अन्वयज्ञानात् । **अत्र** वाक्येऽस्मिन् । **कृतिर्यत्नः** । **तृतीयार्थः** मैत्रेण इत्यत्र या तृतीया तस्या अर्थः । **जन्यत्वं** कृतिजन्यत्वं गमनजन्यत्वञ्च । **संसर्गः** आकाङ्क्षाविषयः । **एवमेव मैत्रः कृतौ** यत्ने । **विशेषणम्** । **सा** कृतिः । **च** तु । **गमने** गमनव्यापारे विशेषणम् । **तत्** गमनम् । **च** अपि । **फले** । **विशेषणमिति** । **तत्** फलम् । **च** तु । **ग्रामे** विशेषणमिति । **फलञ्चात्र** मैत्रग्रामसंयोगः । **अयमाशयः**—कर्मवाच्ये हि लकारादेव यत्नस्य फलस्य प्रतीतिर्दृश्यते । तत्कथमेकस्य द्विविधार्थवाचकत्वमित्यपेक्षायामुच्यते—कर्मवाच्ये 'मैत्रेण गम्यतो ग्रामः' इत्यादौ यत्नस्य ( कृतेः ) वाचकं तु लत्वमेव, किन्तु फलस्य वाचकत्वमात्मनेपदत्वस्येति । कर्तृवाच्ये तु परस्मैपदत्वमात्मनेपदत्वञ्चोभे एव यत्नस्यैव वाचके न तु फलस्य । कर्मवाच्ये तु न तथा । यथा मैत्रेण गम्यते ग्रामः इत्यत्र कृतिस्तृतीयार्थः, मैत्रः कृतौ विशेषणं कृतिश्च गमने गमनञ्च फले मैत्रग्रामसंयोगरूपे फलञ्च ग्रामे विशेषणमिति सर्वं सुस्थमिति ।

**हिन्दी**—कर्मवाच्य में इतना अन्तर है कि वहाँ लकार के रूप में यत्न में शक्ति है, आत्मनेपद के रूप में फल में । 'मैत्रेण गम्यते ग्रामः' इत्यादि में मैत्र में रहने वाली कृति से जन्य जो गमन है, उससे जन्य जो मैत्रग्रामसंयोग रूप फल है, उससे युक्त ग्राम है, इस तरह का अन्वयबोध होता है । यहाँ कृति तृतीया का अर्थ है । जो कृतिजन्यत्व एवं गमनजन्यत्व हैं, दोनों जन्यत्व आकाङ्क्षा से प्रतीत होते हैं । मैत्र कृति में विशेषण होता है, कृति गमन में, गमन फल में और फल ग्राम में विशेषण होता है ।

( ११८ ) 'ग्रामं गच्छति मैत्रः' इत्यत्र तु ग्रामवृत्तिफलजनकगमनानुकूलकृतिमान् मैत्र इति बोधः । फलञ्च द्वितीयार्थः । जनकत्वं संसर्गः । ग्रामश्चात्र फले विशेषणम् । तद्गमने तच्च कृतौ सा मैत्रे इति विशेष्यविशेषणभावभेदेनैव कर्मकर्तृस्थलीयबोधयोर्विशेषः । तावन्तः पदार्थास्तूभयत्रैव तुल्याः ।

**व्याख्या**—कर्तृवाच्यस्थले शाब्दबोधप्रकारं निर्दिशति—**ग्राममित्यादिना** । **'ग्रामं गच्छति मैत्रः' इत्यत्र** इत्यादिकर्तृवाच्यस्थले । **तु** तद्व्यतिरिक्तम् । **ग्रामवृत्तिफलजनकगमनानुकूलकृतिमान्** ग्रामवृत्ति यत्फलं तज्जनकमुत्पादकं यद् गमनं तदनुकूला या कृतिस्तद्वान् । **मैत्रः इति** इत्थम् । **बोधः** शाब्दबोधः । अत्र फलं मैत्रग्रामसंयोगरूपं **द्वितीयार्थः** ग्राममित्यत्र या द्वितीया तदर्थः । **जनकत्वं** फलजनकत्वम् । **संसर्गः** आकाङ्क्षाविषयः । **अत्र** वाक्येऽस्मिन् । **ग्रामः** । **फले** संयोगे । **विशेषणम्** । **तत्** फलम् । **गमने** गमनव्यापारे । **तत्** गमनम् । **च** हि । **कृतौ** यत्ने । **सा** कृतिः । **मैत्रे** । **इति** इत्थम् । **विशेष्यविशेषणभावभेदेन** विशेष्यत्वविशेषणत्वभिन्नताहेतोः । **एव** हि । **कर्मकर्तृस्थलीयबोधयोः** कर्मवाच्यकर्तृवाच्यप्रयोगे शाब्दबोधस्य । **विशेषः** भिन्नता । **तावन्तः पदार्थाः** आख्यातार्थो यत्नः सङ्ख्या कालश्च फलव्यापारौ धात्वर्थः इति । **तु** । **उभयत्र** कर्मकर्तृवाच्ययोः । **एव** हि । **तुल्याः** समाना इति । **अयमाशयः**—कर्तृवाच्ये तु भिन्न एव शाब्दबोधप्रकारः परस्मैपदात्मनेपदनिर्विशेषम् । कर्मवाच्ये हि कृतिर्विशेष्यत्वं भजते कर्ता च तस्य विशेषणत्वम् । यथा 'मैत्रेण गम्यते ग्रामम्' इत्यत्र शाब्दबोधे कृतिमैत्र-

निष्ठा यत्र मैत्रो विशेषणं विशेष्यस्तु यत्नः। तद्विपरीतं कर्तृवाच्ये कर्ता हि विशेष्यः कृतिस्तस्य विशेषणम्। यथा 'ग्रामं गच्छति मैत्रः' इत्यादौ ग्रामनिष्ठं यत्संयोगरूपं फलं तस्य जनको यो गमनव्यापारस्तदनुकूला कृतिस्तद्विशिष्टो मैत्र इति बोधः। तेन कर्मवाच्ये फलं लार्थः कृतिस्तृतीयार्थः व्यापारो धात्वर्थः कर्तृवाच्ये तु कृतिर्लकारार्थः फलं द्वितीयार्थः।

सामान्यतया नैयायिकनये फलव्यापारौ धात्वर्थो यत्नस्तु लार्थः, किन्तु कर्मवाच्ये कृतिर्लर्थः फलमात्मनेपदार्थः इति प्रतीयतेऽसङ्गतमिव।

हिन्दी—'ग्रामं गच्छति मैत्रः' इत्यादि में तो ग्रामवृत्ति वाले फल ( संयोग ) का जनक जो गमन व्यापार है, उसके अनुकूल कृति से युक्त मैत्र—ऐसा बोध होता है। फल द्वितीया विभक्ति का अर्थ है और जनकत्व आकाङ्क्षा से प्रतीत है। ग्राम यहाँ फल में विशेषण है, फल गमन में, गमन कृति में और कृति मैत्र में—ऐसे विशेष्य-विशेषण भाव भेद से ही कर्मवाच्य एवं कर्तृवाच्य में होने वाले वोध में अन्तर होता है। उतने पदार्थ अर्थात् यत्न, सङ्ख्या, काल, आख्यात के अर्थ हैं और फल तथा व्यापार धातु के, ये तो दोनों कर्तृवाच्य एवं कर्मवाच्य में समान ही हैं।

( ११९ ) 'मैत्रेण ज्ञायते इष्यते क्रियते घटः' इत्यादौ तु वृत्तिस्तृतीयायाः, विषयता त्वाख्यातस्यार्थः। मैत्रवृत्तिज्ञानविषयो घट इति बोधः। घटं जानाति मैत्र इत्यादौ तु विषयता द्वितीयाया आश्रयत्वञ्चाख्यातस्यार्थः। घटविषयकज्ञानाश्रयो मैत्र इति बोधः।

व्याख्या—कर्मकर्तृवाच्ययोः प्रयोगान्तरमाह—मैत्रेणेत्यादिना। 'मैत्रेण ज्ञायते इष्यते क्रियते घटः' इत्यादौ इत्यादिकर्मवाच्ये। तु हि। वृत्तिः तन्निष्ठता। तृतीयायाः तृतीयाविभक्तेरर्थः। विषयता विषयभावः। तु हि। आख्यातस्य। अर्थः। मैत्रवृत्तिज्ञानविषयः मैत्रे वृत्तिर्निष्ठा यस्य तादृशं यज्ज्ञानं तद्विषयः। घटः इति इत्थम्। बोधः शाब्दबोधः। 'घटं जानाति मैत्रः' इत्यादौ इत्यादिवाक्ये। तु तद्व्यतिरिक्तम्। विषयता विषयभावः। द्वितीयायाः द्वितीयाविभक्तेः। अर्थः इति। आश्रयत्वं वृत्तिः। आख्यातस्य। अर्थः। घटविषयकज्ञानाश्रयः घटविषयकं यज्ज्ञानं तस्याश्रयः। मैत्रः। इति। बोधः शाब्दबोधः। कर्मवाच्यो मैत्रवृत्तिज्ञानविषयो घट इति कर्मप्रधानो बोधः कर्तृवाच्ये तु घटविषयकज्ञानाश्रयो मैत्र इति कर्तृप्रधानो बोध इति।

हिन्दी—'मैत्रेण ज्ञायते इष्यते क्रियते घटः' इत्यादि में तो वृत्ति अर्थात् तन्निष्ठता तृतीया का अर्थ है—विषयता अर्थात् विषय होना तो आख्यात का अर्थ है। मैत्र में वृत्ति वाला जो ज्ञान है, उसका विषय घट है, ऐसा कर्मप्रधान शाब्दबोध होता है। 'घटं जानाति मैत्रः' आदि कर्तृवाच्य प्रयोग में तो विषयता द्वितीया का अर्थ है और आश्रयत्व आख्यात का अर्थ है। घटविषयक ज्ञान का आश्रय मैत्र है, ऐसा कर्तृप्रधान शाब्दबोध होता है।

( १२० ) कालश्चातीतवर्तमानानागतात्मा यथायथं लडादेरर्थः। लटो

भवति इत्यादौ वर्तमानत्वं, लङ्-लुङ्-लिटाम् अभवत् अभूत् बभूव इत्यादौ भूतकालः, लुङ्-लृटोर्भविता भविष्यति इत्यादौ भविष्यत्कालः। लिङ्-लोट्-लेटां भवेत् भवतु आग्नेयोऽष्टाकपालो भवति इत्यादौ विधिः। सङ्ख्या च केवलार्थः। लेटस्तु छन्दस्येव प्रयोगः। तत्र दीर्घत्वमपि विकल्पेन भवति भवाति इति दर्शनात्।

**व्याख्या**—कालदृष्टया लकाराणामर्थं निरूपयति—**काल** इत्यादिना। **कालः**। **च** हि। **अतीतवर्तमानानागतात्मा** अतीतं भूतं वर्तमानं विद्यमानम् अनागतं भविष्यच्च तदात्मा। **यथायथं** क्रमशः। **लडादेः** लट्प्रभृतिलकाराणाम्। **अर्थः**। तत्र **लटः** 'वर्तमाने लट्' इति व्यवस्थया कृतस्य लटः। **भवति इत्यादौ**। **वर्तमानत्वं** प्रारब्धापरिसमाप्तक्रियोपलक्षितत्वम्। **लङ्लुङ्लिटाम्** अनद्यतने लङ् भूते इत्यनुवृत्त्य 'लुङ्' 'परोक्षे लिट्' इति व्यवस्थया विहितानां तत्तल्लकाराणाम्। **अभवत् अभूत् बभूव इत्यादौ**। **भूतकालः** वर्तमानध्वंसप्रतियोगिक्रियोपलक्षितकालः। **लुङ्लृटोः** 'अनद्यतने लुट्' 'लृट् शेषे च' इति व्यवस्थया विहितयोर्लयोः। **भविता भविष्यति इत्यादौ भविष्यत्कालः** वर्तमानप्रागभावक्रियोपलक्षितकालः। **लिङ्लोट्लेटां** 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' 'लोट् च' छन्दसि 'लिङ्‌र्थे लेट्' इति व्यवस्थया विहितानां लकाराणाम्। **भवेत् भवतु आग्नेयोऽष्टकपालो भवति इत्यादौ**। **विधिः** अनिवार्यकर्तव्यत्वेन नियोगः। **अर्थः**। **सङ्ख्या** एकत्वादिः। **केवलार्थः** केवलं लकारार्थः। क्वचित्तु लकारार्थं इति। **लेटः** लेट्लकारस्य। **तु** हि। **छन्दसि** वेदे। **एव** नान्यत्र। **प्रयोगः** व्यवहारः। **तत्र** लेटि। **विकल्पेन** विभाषया। **दीर्घत्वम्** अपि। **भवति भवाति इति दर्शनात्**। 'लेटोऽडाटौ' इति व्यवस्थया।

**हिन्दी**—भूत, वर्तमान एवं भविष्यत् रूप काल भी क्रमशः लट् आदि के अर्थ हैं। लट् का 'भवति' इत्यादि में वर्तमान अर्थ है। लङ् लुङ् लिट् लकारों का 'अभवत्' 'अभूत्' 'बभूव' इत्यादि में भूतकाल अर्थ है। लिङ् लोट् लेट् लकारों का 'भवेत्' 'भवतु' 'आग्नेयोऽष्टाकपालो भवति' इत्यादि में विधि अर्थात् प्रवर्तना अर्थ है। सङ्ख्या कहीं-कहीं लकार का अर्थ होता है। लेट् लकार का प्रयोग केवल वेद में ही होता है। उसमें विकल्प से दीर्घ भी होता है। 'भवति' 'भवाति' इस तरह के प्रयोग देखे जाते हैं।

(१२१) तत्र व्यापारादिबोधकेन लटा वर्तमानत्वं व्यापारादावेव बोध्यते। पचति इत्यादितो वर्तमानपाकानुकूलव्यापारवानिति बोधात्। एवमन्यत्रापि। व्यापारबोधकाख्यातजन्यवर्तमानत्वप्रकारकबोधे आख्यातजन्यव्यापारोपस्थितेर्हेतुत्वकल्पनान्नातिप्रसङ्गः।

**व्याख्या**—वर्तमानादिकालानां कृतौ व्यापारे वाऽन्वयं निर्दिशति—**तत्रे**त्यादिना। **तत्र** लकारेषु। **व्यापारादिबोधकेन** कृतिज्ञापकेन। **लटा** लट्लकारेण। **वर्तमानत्वं** प्रारब्धापरिसमाप्तक्रियोपलक्षितभावः। **व्यापारादौ** कृतौ। **एव** नान्यत्र। **बोध्यते** ज्ञायते।

**पचति इत्यादितः वर्तमानपाकानुकूलव्यापारवान्** वर्तमानो वर्तमानकालीनो यः पाकः पचनं तदनुकूलो यो व्यापारस्तद्वान्। **इति**। **बोधात्** ज्ञानात्। **एवम्** इत्थमेव। **अन्यत्र** लकारान्तरे। **अपि च**। **कालसम्बन्धो लार्थकृतावेवेति**। **यथा**—व्यापारादिबोधकेन लङा भूतानद्यतनत्वं व्यापारादावेव बोध्यते। **इति**। **व्यापारबोधकाख्यातजन्यवर्तमानत्वप्रकारकबोधे** व्यापारः कृतिस्तद्बोधकं यदाख्यातं तज्जन्यं यद्वर्तमानत्वं तत्प्रकारकस्य बोधे ज्ञाने। **आख्यातजन्यव्यापारोपस्थितेः** आख्यातजन्यो यो व्यापारः कृतिस्तस्योपस्थितेः सत्त्वस्य। **हेतुत्वकल्पनात्** कारणत्वविवक्षया। **न**। **अतिप्रसङ्गः** धात्वर्थफलव्यापारयोर्वर्तमानस्य नातिव्याप्तिरिति। **अयमाशयः**—वर्तमानादिकालस्यान्वयः सदैव लकारवाच्यार्थभूतकृतौ पुरुषनिष्ठव्यापारे एव भवति, न तु धात्वर्थभूतव्यापारे। यतो हि पाकानुकूलव्यापारस्य वर्तमानत्वेऽपि पुरुषनिष्ठयत्नाभावे पचति इत्येतस्य प्रयोगो नैव सम्भवति। **यथोक्तम्**—पचतीत्यादौ कृत्यादिरूपव्यापारबोधकप्रत्ययोपस्थाप्य कालस्तादृशव्यापारे एवान्वेति न तु क्रियायाम्। यदा पुरुषो व्यापारशून्यस्तदा तदधीनाग्निसंयोगादिरूपः पच्यादेरर्थो विद्यते तदा न पचतीति व्यवहारात्।

**हिन्दी**—उसमें भी व्यापार ( कृति ) आदि के बोधक लट् से वर्तमानत्व व्यापार आदि में ही जाना जाता है, क्योंकि 'पचति' इत्यादि से वर्तमानकालीन पाक के अनुकूल व्यापार से युक्त, ऐसा बोध होता है। इसी तरह दूसरे लकारों में भी होता है। व्यापार का बोधक आख्यात से उत्पन्न वर्तमानत्व है विशेषण जिसमें, ऐसे बोध में आख्यात से जन्य व्यापार की उपस्थिति का हेतुत्वकल्पना से अन्यत्र अतिव्याप्ति नहीं होगी।

( १२२ ) व्यापाराबोधकज्ञाधात्वादिसमभिव्याहृताख्यातजन्यवर्तमानत्वप्रकारकबोधे तु तादृशधातुजन्योपस्थितिर्हेतुः। कार्यताकारणतावच्छेदिका च प्रत्यासत्त्या विषयता एवेति नातिप्रसङ्गः। जानाति, इच्छति, यतते इत्यादौ वर्तमानत्वाश्रयज्ञानाश्रयत्वादिबोधस्यैवानुभविकत्वात्।

**व्याख्या**—ज्ञाप्रभृतिधातोर्विषये विशेषमाह—**व्यापारेत्यादिना**। **व्यापाराबोधकज्ञाधात्वादिसमभिव्याहृताख्यातजन्यवर्तमानत्वप्रकारकबोधे**—व्यापारस्य पुरुषनिष्ठयत्नरूपव्यापारस्य अबोधकोऽवाचको यो ज्ञाधात्वादिः ज्ञाप्रभृतिधातवस्तत्समभिव्याहृतं समोच्चारितं यदाख्यातं तज्जन्यं यद्वर्तमानत्वं तत्प्रकारकबोधे तद्विशेषणीभूतशाब्दबोधे। **तादृशजन्योपस्थितिः** तत्प्रकारकार्थयुक्तधातुजन्यार्थः। **हेतुः** कारणम्। **कार्यताकारणतावच्छेदिका** कार्यतायाः कारणतायाः अवच्छेदिका अवच्छेदकसम्बन्धः। **च** अपि। **प्रत्यासत्त्या** सामीप्येन। **विषयता** विषयभावः। **एव**। **इति**। **न** नैव। **अतिप्रसङ्गः** अतिव्याप्तिः। काले इति। **जानाति इच्छति यतते इत्यादौ वर्तमानत्वाश्रयज्ञानाश्रयत्वादिबोधस्य** वर्तमानत्वाश्रयं वर्तमानकालिकं यज्ज्ञानं तस्याश्रयत्वं तदादिबोधस्य। **एव** हि। **अनुभविकत्वात्** अनुभवसिद्धत्वात्। **अयमाशयः**—जानाति इच्छति यतते इत्यादिप्रयोगे ज्ञा-इच्छ्-यत्-धातूनां क्रमशः ज्ञानमात्रमिच्छामात्रं प्रयत्नमात्रमर्थः। एषु

हि फलत्वव्यापारत्वयोरारोपः क्रियते । अतो हि ज्ञानरूपफलाश्रयत्वाद् विषयताऽवच्छेदकसम्बन्धेन घटादिर्ज्ञानस्य कर्मज्ञानरूपव्यापाराश्रयत्वेन व्यापारतावच्छेदकसम्बन्धाद् घटादेर्ज्ञाता चैत्रादिर्ज्ञानस्य कर्ता । एतादृशस्थले लकारस्य शक्तिर्न कृतौ अपितु फलव्यापारयोराश्रये लक्षणा कर्तव्या । यतो ह्येतादृशस्थले न ज्ञानानुकूलकृतेर्बोधोऽपितु आश्रयबोधः । तन्नैतादृशधातुषु प्रयुक्तस्य लस्य न कृतिरूपव्यापारबोधकत्वम् । किन्त्वाख्यातार्थाश्रये यदि वर्तमानकालस्य सम्बन्धः स्वीक्रियेत तदा केवलाश्रयभूतघटादेर्वर्तमानकालिकत्वेऽपि ( घटादिविषयज्ञानाभावेऽपि ) जानातीत्यादीनां प्रयोगः सम्भवेत्, यदनभीष्टमेव । तेन ज्ञाधात्वर्थभूतज्ञानादावेव वर्तमानस्य सम्बन्धः स्वीकर्तव्यः । अत्र हि ज्ञादिधातुसमभिव्याहृताख्यातजन्यवर्तमानताप्रकारकज्ञानं कार्यं ज्ञादिधातुजन्यज्ञानार्थः कारणमिति कार्यकारणभावः । कार्यं हि येन सम्बन्धेन स्वोत्पत्तिस्थानेन सम्बध्यते स सम्बन्ध एव कार्यतावच्छेदकः । अत्र त्वाख्यातोत्पन्नवर्तमानकालिकज्ञानरूपकार्यं स्वोत्पत्तिस्थानभूतव्यापाररूपविषये विषयतासम्बन्धेन वर्तते । तेन विषयतासम्बन्ध एवात्र कार्यतावच्छेदकः । तथैव येन सम्बन्धेन कारणं कार्यम्प्रति सम्बद्धं भवति स सम्बन्धः कारणतावच्छेदकः । अत्र हि धातुजन्यं ज्ञानं कारणम् । इदमपि विषयतारूपसम्बन्धेनैव वर्तमानकालिकज्ञानरूपकार्येण सह तिष्ठति । वर्तमानकालिकज्ञानरूपव्यापारविषयकधातुजन्यज्ञानं कारणं धातुजन्यज्ञानविषयकं वर्तमानकालिकं ज्ञानं कार्यमिति कार्यतावच्छेदिका कारणतावच्छेदिका चोभे एव विषयता । इति ।

हिन्दी—व्यापार का बोध न कराने वाले ज्ञा आदि धातु के साथ समभिव्याहृत जो आख्यात ( लकार ) है, उससे उत्पन्न वर्तमानप्रकारक अर्थात् वर्तमान है विशेषण जिसमें, ऐसे शाब्दबोध में उस प्रकार के धातु से उत्पन्न अर्थ की उपस्थिति ही कारण है । उसमें कार्यता एवं कारणता दोनों का अवच्छेदक सामीप्य से विषयता ही है । अतः इसमें कोई अतिव्याप्ति नहीं है । जानाति ( जानता है ), इच्छति ( चाहता है ), यतते ( प्रयास करता है ) इत्यादि में वर्तमानत्व है आश्रय जिसका, ऐसे ज्ञान के आश्रयत्व आदि का बोध होता है । यह सबके अनुभव का विषय है ।

( १२३ ) तत्र लटा शक्त्या वर्तमानत्वं लक्षणयाऽऽश्रयत्वं बोध्यत इति विशेषः । लटा स्वाधिकरणकालोपाधिस्पन्द एव वर्तमानः प्रत्याय्यते । वर्तमानसामीप्ये विहितेन तु स्वानधिकरणसमीपवर्ती तादृशकालस्तत्रापि शक्तिर्लक्षणा वेत्यन्यदेतत् ।

व्याख्या—तत्र लट्प्रसङ्गे । लटा लट्लकारेण । शक्त्या अभिधया । वर्तमानत्वं वर्तमानकालः । लक्षणया लक्षणावृत्त्या तु । आश्रयत्वम् । बोध्यते ज्ञायते । इति । विशेषः वैशिष्ट्यम् । लटा वर्तमाने विहितेन लट्लकारेण 'वर्तमाने लडि'ति । स्वाधिकरणकालोपाधिस्पन्दः स्वस्य अधिकरणकाल आधारभूतकालः उपाधिर्विशेषणं यत्र तादृशः स्पन्दः क्रियारूपः । एवं हि । वर्तमानः वर्तमानकालः । प्रत्याय्यते ज्ञाप्यते । वर्तमानसामीप्ये 'वर्तमानसामीप्ये वर्तमानवद्वा' ( ३।३।१३१ ) इति व्यवस्थया वर्तमानविषये । विहितेन

कृतविधानेन लटेति । तु तद्व्यतिरिक्तम् । स्वानधिकरणसमीपवर्ती—स्वस्य अनधिकरणमनाश्रयं भूतं भविष्यद् वा तस्य समीपवर्ती । तादृशकालः तादृशवर्तमानकालः प्रत्याय्यत इति । तत्र वर्तमानसामीप्ये यो लट् तस्य वर्तमानत्वबोधे । शक्तिः अभिधा । लक्षणा वा । इति । एतत् अन्यत् भिन्नो विषय इति । अयमाशयः—जानातीत्यादौ वर्तमानकालस्य यत्नाश्रयस्य चोभयोरेव बोधो यत्राद्यो हि शक्त्याऽपरस्तु लक्षणया । लट्लकारो यस्मिन्नाधारभूतकाले उच्चार्यते स स्वाधिकरणकालो यस्याः क्रियायाः उपाधिः ( विशेषणं ) सा तत्कालविशिष्टक्रिया हि वर्तमानः । लटा स एव प्रत्याय्यते । एतद्विपरीतं 'वर्तमानसामीप्ये वर्तमानवद्वा ( ३।३।१३१ ) इति विहितो लट् तु स्वानधिकरणभूतभूतभविष्यत्कालसमीपवर्तीकालः प्रत्याययति । इति ।

**हिन्दी**—उसमें लट्लकार शक्ति से वर्तमानता का तथा लक्षणा से आश्रयता का बोध कराता है । यही विशेषता है । लट् से अपने अधिकरण बना काल है उपाधि अर्थात् विशेषण जिसमें, ऐसे क्रिया रूप वर्तमान का बोध होता है । ( जिस काल में उसका उच्चारण होता है, वही काल उसका अपना अधिकरण है । ) वर्तमान के सामीप्य में किया गया जो लट्लकार है, वह तो अपने अधिकरण न बने ( अपने उच्चारण काल से भिन्न भूत अथवा भविष्यत् ) काल के समीप में रहने वाले उसी प्रकार के काल का बोध कराता है । उसमें शक्ति अथवा लक्षणा होती है, यह बात दूसरी है ।

( १२४ ) नन्वेकपदोपस्थितयोः कृतिवर्तमानत्वयोः कथं मिथोऽन्वयस्तत्पदजन्यशाब्दबोधे पदान्तरजन्योपस्थितेर्हेतुत्वात् । कार्यतावच्छेदिका च प्रत्यासत्तिः प्रकारता । कारणतावच्छेदिका च विशेष्यतेति । अन्यथा हरिपदार्थयोर्दण्डेनेत्यादौ च करणत्वैकत्वयोर्मिथोऽन्वयापत्तेः । मैवम् । तत्तत्पदान्यत्वस्योक्तव्युत्पत्तौ प्रवेशात् । कथमन्यथा एवकारार्थयोरन्ययोगव्यवच्छेदयोर्मिथोऽन्वयः ।

**व्याख्या**—एकपदबोधितयोर्यत्नवर्तमानत्वयोरन्योन्यान्वयप्रकारं पूर्वपक्षदूषणपूर्वकं निर्दिशति—नन्वित्यादिना । ननु इति प्रश्ने । **एकपदोपस्थितयोः** एकपदे लटि उपस्थितयोराश्रितयोः । **कृतिवर्तमानत्वयोः** कृतेर्यत्नस्य वर्तमानत्वस्य च तयोः । **कथं** केन प्रकारेण । **मिथः** परस्परम् । **अन्वयः** सम्बन्धः । **तत्पदजन्यशाब्दबोधे**—सम्बद्धपदोत्पाद्यार्थबोधे । **पदान्तरजन्योपस्थितेः** अपरपदार्थविद्यमानतायाः । **हेतुत्वात्** कारणत्वात् । **कार्यतावच्छेदिका** कार्यतायाः अवच्छेदिका परिचायिका येन सम्बन्धेन कार्यं स्वस्मिन् हेतौ तिष्ठति तत्सम्बन्धरूपा । **प्रकारता** विशेषणता । अयमेव सम्बन्धः **प्रत्यासत्तिः** इत्युच्यते । **कारणतावच्छेदिका**—कारणतावच्छेदकसम्बन्धः । **विशेष्यता** येन सम्बन्धेन कारणं कार्ये तिष्ठति तत्सबन्धरूपा । इति । **अन्यथा** एकपदोपस्थापितयोर्द्वयोरर्थयोरन्वयस्वीकारे । **हरिपदार्थयोः** हरिपदस्यार्थभूतयोरश्वेन्द्रयोराधाराधेयभावसम्बन्धेन । **दण्डेन** । **इत्यादौ** । **च** अपि । **कारणत्वैकत्वयोः** करणत्वस्य एकत्वस्य च तयोः । **मिथः**

परस्परम् । अन्वयापत्तेः अन्वयसिद्धेः । समाधानमाह—मैवमित्यादिना । एवं यदुक्तं भवता तत् । मा नैव । तत्तत्पदान्यत्वस्य तत्तत्पदेभ्यो यत्रैकपदोपस्थापितयोरर्थयोः परस्परान्वयोऽभीष्टो यथा लटः एवकारस्य च अन्यत्वस्य भिन्नत्वस्य पदार्थस्य । उक्त-व्युत्पत्तौ तत्पदजन्यशाब्दबोधे पदान्तरजन्योपस्थितेर्हेतुत्वमिति व्युत्पत्तौ । प्रवेशात् विषय-त्वात् । अन्यथा नियमस्यास्यापवादाभावे । कथं केन प्रकारेण । एवकारार्थयोः एवशब्दार्थ-भूतयोः । अन्ययोगव्यवच्छेदयोः अन्ययोगस्य व्यवच्छेदस्य च । मिथः परस्परम् । अन्वयः इति । अयमाशयः—कृतिर्वर्तमानत्वञ्च जानातीत्यादौ लट् एवार्थ इत्युक्तं किन्तु कथमेकपदोपस्थापितयोरर्थयोः परस्परमन्वयः सम्भवति ? एकपदजन्यशाब्दबोधेऽपर-पदजन्योपस्थितिर्हेतुर्भवति । तयोश्च सम्बन्धः संसर्गमर्यादया आकाङ्क्षावशाद्भासते । एकपदोपस्थापितयोस्तु परस्परमाकाङ्क्षैव नैव सम्भवति । कार्यतावच्छेदकसम्बन्धो हि विशेषणत्वं भजते, कारणतावच्छेदकस्तु विशेष्यत्वम् । यथा नीलो घटः इत्यत्र नील-पदार्थे विद्यमानया घटपदार्थविषयकाकाङ्क्षयैव उपस्थाप्यत्वाद् घटो विशेष्यः नीलत्वञ्च विशेषणम् । एवमेव घटपदार्थविद्यमाननीलपदार्थविषयकाकाङ्क्षयैवोपस्थाप्यत्वान्नीलो विशेष्यो घटस्तु विशेषणमिति उभयोरेव विशेष्यविशेषणभावः सङ्गच्छते । अत्र तु न तथा । न हि वर्तमानत्वस्य यत्नाकाङ्क्षा न च यत्नस्य वर्तमानाकाङ्क्षा । आकाङ्क्षा-विहीनयोरप्यन्वयस्वीकारे हरिपदार्थयोरश्वेन्द्रयोः दण्डेनेत्यत्र करणत्वैकत्वयोरप्यन्वय-बोध आपतेदिति चेदुच्यते । भवन्ति नियमस्यापवादा अपि । सत्यमेव सामान्यत एक-पदजन्यशाब्दबोधे पदान्तरजन्योपस्थितेर्हेतुत्वमिति । किन्तु तदपवादरूपेण लट्लकार एवकारश्च स्थितौ । तदस्वीकारे तु एवकारस्य अन्ययोगव्यवच्छेदार्थयोरन्वयोऽसम्भवः । यथा एवकारस्य द्वयोरर्थयोः परस्परमन्वयस्तथैव लटो यत्नवर्तमानत्वार्थयोरपि नियमा-पवादरूपेण परस्परमन्वय इति ।

हिन्दी— एक ही पद से उपस्थापित एवं वर्तमानत्व अर्थों का कैसे परस्पर अन्वय होगा, क्योंकि उस पद से जन्य शाब्दबोध में दूसरे पद के अर्थ की उपस्थिति कारण होती है, कार्यता का अवच्छेदक प्रकारता अथवा विशेषणता है, जिसे प्रत्यासत्ति कहा जाता है और कारणता का अवच्छेदक विशेष्यता है । ऐसा न होने पर हरि पद के दो अर्थों घोड़ा एवं इन्द्र का 'दण्डेन' इत्यादि में करणत्व एवं एकत्व का परस्पर अन्वय होने लगेगा । ऐसी बात नहीं है । उन-उन ( लट् एवं एवकार ) से भिन्न पदों का ही उस व्युत्पत्ति में प्रवेश होता है अर्थात् उस नियम के भी कुछ अपवाद हैं, जिनका उसमें प्रवेश नहीं होता । नहीं तो कैसे एवकार के अर्थभूत अन्ययोग एवं व्यवच्छेद दो अर्थों का परस्पर अन्वय हो पाएगा ?

( १२५ ) घटो नश्यति इत्यादौ वर्तमानोत्पत्तिकत्वं प्रतियोगित्वञ्च लडर्थः । आद्यं नाशे प्रकारः, द्वितीयं घटे प्रकारः । वर्तमानोत्पत्तिकनाशप्रतियोगी घट इति बोधस्यानुभविकत्वात् । अत्र च वृत्तिद्वयस्य युगपद् बोधकत्वं सर्वै-रेषितव्यम् । तादृशोत्पत्तिकत्वप्रतियोगित्वयोरर्थयोर्युगपदेव बोधात् । न च तादृशोत्पत्तिकत्वमेवाऽर्थोऽस्तु । धात्वर्थस्य नाशस्य घटे प्रातिपदिकार्थे

साक्षादन्वयासम्भवात् । न च प्रतियोगित्वमेवाऽर्थोऽस्तु इति वाच्यम् । चिर-नष्टेऽपि नश्यतीति प्रसङ्गात् । एतेनात्र वर्तमानत्वमेवार्थो नोत्पत्तिरित्यपास्तम् ।

**व्याख्या**—घटो नश्यतीत्यादिवाक्ये लडर्थं निरूपयति—**घट** इत्यादिना । '**घटो नश्यति**' इत्यादौ इत्यादिवाक्ये । **वर्तमानोत्पत्तिकत्वं** वर्तमानकालीनोत्पत्तिकता । **प्रतियोगित्वं** प्रतियोगिता । **च** अपि । **लडर्थः** लट्लकारार्थः । तत्र **आद्यं** वर्तमानोत्पत्तिकता । **नाशे** नाशेऽर्थे । **प्रकारः** विशेषणम् । **द्वितीयं** प्रतियोगितार्थः **तु** । **घटे** घटपदार्थे । **प्रकारः** विशेषणमिति । **वर्तमानोत्पत्तिकनाशप्रतियोगी** वर्तमानोत्पत्तिको वर्तमानकालीनोत्पत्तिकताविशिष्टो यो नाशस्तस्य प्रतियोगी । **घटः** । **इति** । **बोधस्य** ज्ञानस्य । **अनुभविकत्वात्** अनुभवसिद्धत्वात् । **अत्र** प्रसङ्गेऽस्मिन् । **च** हि । **वृत्तिद्वयस्य** अभिधालक्षणयोः द्वयोरेव वृत्त्योः । **युगपत्** समकालमेव । **बोधकत्वं** ज्ञापकत्वम् । **सर्वैः** । **एषितव्यम्** मन्तव्यमेव । **तादृशोत्पत्तिकत्वप्रतियोगित्वयोः** तादृशं वर्तमानकालिकं यदुत्पत्तिकं यच्च प्रतियोगित्वं तयोः । **अर्थयोः** । **युगपत्** एककालम् । **एव** हि । **बोधात्** ज्ञानात् । **न** नैव । **च** हि । **तादृशोत्पत्तिकत्वं** वर्तमानोत्पत्तिकत्वम् । **एव** न तु प्रतियोगित्वम् । **अर्थः** । **अस्तु** । **धात्वर्थस्य** धात्वर्थभूतस्य । **नाशस्य** । **प्रातिपदिकार्थे** प्रातिपदिकार्थभूते । **घटे** घटपदार्थे । **साक्षात्** प्रत्यक्षतः । **अन्वयासम्भवात्** अन्वयाभावात् । **न** नैव । **च** अपि । **प्रतियोगित्वं** प्रतियोगिभावः । **एव** हि । **अर्थः** । **अस्तु** । **इति** इत्थम् । **वाच्यं** वक्तव्यम् । तथा सति **चिरनष्टे** चिरकालात्प्रणष्टे । **घटे** । **अपि** च । **नश्यति इति** । **प्रसङ्गात्** प्राप्तेः । **एतेन** अनेन । **वर्तमानत्वं** वर्तमानकालीनता । **एव** हि । **अर्थः** । **न** नैव । **उत्पत्तिः** । **इति** एतत्कथनम् । **अपास्तं** निराकृतमिति । अयम्भावः—घटो नश्यतीत्यत्र लटो द्वावर्थौ वर्तमानकालिकोत्पत्तिः प्रतियोगिता ( विशेषणभावश्च । तेन वर्तमानकालीना योत्पत्तिस्तद्विशिष्टनाशस्य प्रतियोगी घट इत्यर्थबोधात् । वर्तमानकालीनोत्पत्तिरूपार्थः धात्वर्थनाशस्य विशेषणं प्रतियोगिता तु घटस्य यस्यार्थं एतादृशो घटो यो नाशस्य प्रतियोगी यस्य नाश आसन्न इति । तत्र वर्तमानकालीनोत्पत्तिरूपार्थस्तु लटो वाच्यार्थः प्रतियोगितारूपार्थस्तु लटो लक्ष्यार्थः । सन्त्यन्यान्यप्येतादृशान्युदाहरणानि यत्राभिधालक्षणे सहैव स्वं स्वमर्थं प्रस्तुतः । अतो मुख्यार्थबाधे एव लक्षणा भवतीति न राजाज्ञा । यदि ह्यत्र लस्य वर्तमानकालीनोत्पत्तिरूप एवार्थः स्वीक्रियते तदा धात्वर्थभूतनाशस्य प्रातिपदिकार्थघटे नैव साक्षादन्वयः नामार्थधात्वर्थयोर्भेदसम्बन्धेन साक्षादन्वयोऽव्युत्पन्नः इति न्यायात् । तेन भेदसम्बन्धेन द्वयोरन्वयार्थं घटप्रतियोगिकेति ज्ञानमावश्यकम् । प्रतियोगितार्थमात्रस्वीकारे चिररात्राय प्रणष्टेऽपि नश्यतीति प्रयोगः सम्भवेत् । यतो ह्यत्रापि नाशप्रतियोग्येव घटः । तेन लटो वर्तमानकालीनोत्पत्तिरूपोऽर्थोऽपि ग्राह्य एव ।

अत्र नाशक्रियायां वर्तमानकालमात्रस्यान्वये प्रणष्टघटनिमित्तमपि नश्यतीति प्रयोगः स्यात्तेन लट् उत्पत्त्यर्थमपि स्वीकृत्य तत्रैव कालस्यान्वयः कर्तव्य इति दीधितिकाराः । धात्वर्थभूतनाशे उत्पत्त्यर्थोऽपि समाविष्टो भवति । नाशत्वं नाम उत्पत्तिमुक्ताभाव एव । अतो धातुवाच्यार्थसमाविष्टोत्पत्त्यर्थे एव कालस्यान्वयः कर्तव्य इति गदाधरप्रभृति-

नव्यनैयायिकाः। वर्तमानताया उत्पत्तिमत्वसम्बन्धतो धात्वर्थभूतनाशे एवान्वयान्न हि चिरनष्टघटार्थं नश्यतीति प्रयोगः। अत आख्यातस्य वर्तमानताप्रतियोगितारूपार्थं-द्वयमेव स्वीकार्यं न तु वर्तमानकालिकोत्पत्तिप्रतियोगितारूपार्थौ। इति।

हिन्दी —'घटो नश्यति' इत्यादि में वर्तमानकालीन उत्पत्तिकत्व एवं प्रतियोगित्व भी लट् के अर्थ हैं। पहला अर्थ नाश में विशेषण बनता है और दूसरा घट में, क्योंकि वर्तमानकालीन उत्पत्तियुक्त जो नाश है, उसका प्रतियोगी घट है, ऐसे अर्थबोध का अनुभव होता है। यहाँ भी दो वृत्तियों का एक साथ बोधकत्व सभी को मानना चाहिए। उस प्रकार के उत्पत्तिकत्व और प्रतियोगिकत्व अर्थों का एक बार ही बोध होता है। न तो उस प्रकार के उत्पत्तिकत्व मात्र को अर्थ माना जा सकता है, क्योंकि धात्वर्थभूत नाश का प्रातिपदिकार्थ घट में साक्षात् अन्वय सम्भव नहीं होता। न तो प्रतियोगित्व ही अर्थ हो, ऐसा ही कहना ठीक है, क्योंकि वैसा कहने से चिरकाल से प्रणष्ट घट में भी नश्यति का प्रयोग होने लगेगा। इससे यहाँ वर्तमानत्व ही अर्थ माना जाय, न कि उत्पत्ति, ऐसा कथन खण्डित हो जाता है।

(१२६) केचित्तु सत्यमेवात्र प्रतियोगित्वस्य वृत्त्यवच्छेदकं लट्त्वन्तु तादृशोत्पत्तिकत्वस्य। एकधर्मावच्छिन्नवृत्तिद्वयस्यैव न युगपद्बोधकत्वम्। अन्यथा दण्डेन इत्यादौ करणत्वैकत्वयोर्बोधो न स्यादित्याहुः।

अन्ये तु नश्यतीत्यादौ लटा नाशसामग्री एव बोध्यते। तेन न चिरनष्टे नश्यतीति प्रसङ्गः। अत एव विनश्यत्ता विनाशसामग्रीसान्निध्यमित्याहुः प्रामाणिकाः।

व्याख्या प्रसङ्गेऽस्मिन्मतान्तरमुल्लिखति—केचिदित्यादिना। केचित् कतिपये आचार्याः। तु हि। अत्र नश्यतीत्यादौ। लत्वं लकारसामान्यम्। एव हि। प्रतियोगित्वस्य प्रतियोगितार्थस्य। वृत्त्यवच्छेदकं वृत्तेर्लक्षणया अवच्छेदकम्। लट्त्वं लड्भावः। तु हि। तादृशोत्पत्तिकत्वस्य वर्तमानकालिकोत्पत्तिकत्वस्य अभिधाया इति। अवच्छेदकमिति। एकधर्मावच्छिन्नवृत्तिद्वयस्य एकधर्मादवच्छिन्नं यद् वृत्तिद्वयम् अभिधा-लक्षणाख्यं तस्य। एव हि। न नैव। युगपत् एककालमेव। बोधकत्वं ज्ञापकत्वम्। अन्यथा तदभावे। 'दण्डेन' इत्यादौ। करणत्वैकत्वयोः करणत्वस्य एकत्वस्य च तयोः। बोधः। न नैव। स्यात् भवेदिति। अयमाशयः—घटो नश्यतीत्यत्र लट् एव वर्तमान-कालीनोत्पत्तिः प्रतियोगिता चेति द्वौ अर्थौ यत्र प्रथम अभिधाश्रितो द्वितीयस्तु लक्षणा-श्रित इति यदुक्तं तत्र केचित्तन्न मन्यन्ते। तदनुसारेण एकधर्मावच्छिन्नवृत्तिद्वयस्य न युगपद्बोधकत्वं सम्भवति, किन्तु भिन्नभिन्नधर्मावच्छिन्नवृत्तिद्वयस्य युगपदर्थबोधकत्वे न क्षतिरिति लत्वं हि प्रतियोगित्वस्य वृत्त्यवच्छेदकम् (अभिधाश्रितम्), लट्त्वं वर्तमान-कालीनोत्पत्तिकत्वस्य (लक्षणाश्रितम्) इति। यदि हि भिन्नभिन्नधर्मावच्छिन्नवृत्ति-द्वयस्य युगपदर्थबोधकत्वं न स्वीक्रियते तदा दण्डेनेत्यत्र तृतीयाविभक्तौ करणत्वमेकत्वञ्च न बोधितं स्यादिति। अत्र ह्यभिधावच्छेदकधर्मः सुप्त्वं तथा लक्षणावच्छेदकधर्मस्तृतीया-त्वमिति न विरोध इति।

**अन्ये** अपरे । **तु** तद्व्यतिरिक्तम् । **नश्यति इत्यादौ** । **लटा** लट्लकारेण । **नाशसामग्री** नाशवस्तु । **एव हि** । **बोध्यते** ज्ञायते । **तेन** तस्माद्धेतोः । **चिरनष्टे** चिरकालप्रणष्टे । **न** नैव । **नश्यति** । **इति** । **प्रसङ्गः** व्यवहारः । **अत एव** अनेनैव कारणेन । **विनश्यत्ता** विनाशभावः । **विनाशसामग्रीसान्निध्यं** विनाशस्य सामग्र्याः सामीप्यमिति । **आहुः** कथयन्ति । **प्रामाणिकाः** प्रमाणत्वेन स्वीकृता वैयाकरणा इति । प्रामाणिका हि वैयाकरणाः । तन्नये नश्धातोरर्थो नाशरूपं फलं तथा विनाशकसामग्र्या एकत्रीभवनरूपव्यापारः । विनाशसामग्र्यैकत्रीभवनरूपव्यापारे लडर्थवर्तमानकालस्यान्वयो भवति । इत्थं विनाशसामग्र्या सत्त्वे नश्यति तत्समाप्तौ नष्टो भविष्यति तदुपस्थितौ नंक्ष्यति इत्यादि प्रयोगा भवन्ति । उक्तमेव यथा—घटो नश्यति इत्यादि घटाभिन्नाश्रयको नाशानुकूलो व्यापार इति बोधः । स च व्यापारः प्रतियोगित्वविशिष्टनाशसामग्रीसमवधानम् । अत एव तस्यां सत्यां नश्यति तदभावे नष्टः तद्भावित्वे नंक्ष्यति इति प्रयोगः इति ।

**हिन्दी**—कुछ आचार्य तो इस ( 'घटो नश्यति' ) में लत्व ही प्रतियोगिता का वृत्त्यवच्छेदक है और लट्त्व तो वर्तमानकालीन उत्पत्तिकत्व का । ( पहला अभिधा का विषय है तथा दूसरा लक्षणा का विषय है । ) एक धर्म से अवच्छिन्न दो वृत्तियों का एक ही बार बोधकत्व सम्भव नहीं है । ( भिन्न-भिन्न धर्म से अवच्छिन्न दो वृत्तियों का तो एक साथ अर्थावबोधकत्व तो सम्भव होता है । ) ऐसा न होता तो 'दण्डेन' इत्यादि में करणत्व एवं एकत्व का बोध नहीं होगा ( अर्थात् अभिधा का अवच्छेदक सुप्त्व तथा लक्षणा का अवच्छेदक धर्म तृतीयात्व है ), ऐसा कहते हैं ।

दूसरे प्रामाणिक विद्वान् ( वैयाकरण ) तो 'नश्यति' इत्यादि में लट् से नाश-सामग्री का बोध होता है । इस कारण चिरनष्ट घट में नश्यति का प्रयोग होने का प्रसङ्ग ही नहीं आता । इसी कारण से विनश्यता का अर्थ है—विनाश-सामग्री का सान्निध्य होना—ऐसा कहते है ।

**( १२७ ) आख्यातात् क्रियाविशेष्यको बोध इति वैयाकरणा भाट्टाश्च । आद्यनये धात्वर्थः क्रिया । 'चैत्रस्तण्डुलं पचति' इत्यादितश्चैत्रकर्तृकतण्डुलकर्मकपाक इति धीः । अन्त्यनये भावना क्रिया प्रत्ययार्थः । चैत्रीयपाककरणिका तण्डुलकर्मिका भावना इति बोधः । प्रथमान्तार्थविशेष्यक एव बोधः । ओदनकर्मकपाकानुकूलकृतिमांश्चैत्र इति नैयायिकाः । द्वितीयाद्यर्थकर्मकरणत्वादेः क्रियायामेव सर्वमतेऽन्वयः ।**

**व्याख्या**—आख्यातजन्यार्थबोधे वैयाकरणमीमांसकनैयायिकनयमनुवदति—**आख्यातादित्यादिना** । **आख्यातात्** लकारात् । **क्रियाविशेष्यकः** क्रियाऽस्ति विशेष्यो मुख्यो यत्र तादृशः । **बोधः** शाब्दबोधः । **इति** इत्थम् । **वैयाकरणाः** शाब्दिकाः । **भाट्टाः** भट्टमतानुयायिनो मीमांसकाः । **च** अपि । वदन्तीति शेषः । **आद्यनये** शाब्दिकमते । **धात्वर्थः** धातुजन्यार्थः । **क्रिया** व्यापारः । **'चैत्रः तण्डुलं पचति' इत्यादितः** इत्यादिवाक्यात् । **चैत्रकर्तृकतण्डुलकर्मकपाकः** चैत्रः कर्ता यस्मिंस्तादृशस्तण्डुलाः कर्म यस्मि-

स्तादृशः पाकः पचनक्रिया । इति । धीः शाब्दबोधः । अस्त्यनर्थे भाट्टमते । भावना भावना एव । क्रिया व्यापारः । सा च प्रत्ययार्थः तिबाद्यर्थः । न तु धातोरिति । 'चैत्रस्तण्डुलं पचति' इत्यादौ । चैत्रीयपाककरणिका चैत्रीयश्चैत्रकर्तृकः पाकः पचनक्रिया करणं यत्र तादृशी । तण्डुलाः कर्म यत्र तादृशी । भावना क्रिया । इति । बोधः शाब्दबोधः । प्रथमान्तार्थविशेष्यकः प्रथमान्तार्थो विशेष्यो मुख्यो यत्र तादृशः । एव नान्यथा । बोधः शाब्दबोधः । ओदनकर्मकपाकानुकूलकृतिमान् ओदनः कर्म यत्र तादृशो यः पाकस्तदनुकूलकृतिमान् । चैत्रः । इति इत्थम् । नैयायिकाः तार्किकाः । द्वितीयाद्यर्थकर्म-करणत्वादेः द्वितीयाप्रभृतिविभक्त्यर्थभूतकर्मत्वकरणत्वादीनाम् । क्रियायाम् आख्याते । एव नान्यत्र । सर्वमते सर्वेषामेव मते । अन्वयः इति ।

वैयाकरणा मीमाँसकाश्चाख्यातात्क्रियाप्रधानार्थप्रतीतिं मन्यन्ते, किन्तु तेषु विवेचना-पद्धतिमधिकृत्य पार्थक्यमपि दृश्यते । वैयाकरणा हि व्यापारं धात्वर्थं मन्यन्ते सङ्ख्या-कालकारकाणि यत्र कुत्र भावश्च आख्यातार्थः । आख्यातमत्र लकारः । चैत्रस्तण्डुलं पचतीत्यत्र एतादृशी पाकक्रिया प्रतीयते यस्याः कर्ता चैत्रः कर्म तु तण्डुलाः ।

मीमांसकास्तु आख्यातात्क्रियाप्रधानार्थाभिव्यक्तिं तु स्वीकुर्वन्ति, किन्तु तन्मते भावना क्रिया वा नैव धात्वर्थोऽपितु लिङादिप्रत्ययार्थो धातोस्तु फलमर्थः । पचतीत्यादौ विक्लित्तिरूपफलं धात्वर्थः, विक्लित्त्यनुकूलपाकव्यापारस्तु आख्यातार्थ एव । भावना हि लार्थः । सा द्विविधा—शाब्दी आर्थी च ।' लिङ्लकारप्रयोगे नियमतः एतत्प्रतीयते यद्वाचको हि श्रोतारं कार्यविशेषार्थं प्रेरयन्नस्तीति । एषा हि शाब्दीभावना । आर्थी-भावना तत्रैव भवति यत्र प्रेरणानुकूलव्यापाराभावेन धात्वर्थरूपफलानुकूलव्यापारो भवति । सा च लकारमात्रस्य वाच्यार्थः । लिङतिरिक्तलकारेष्वार्थीभावनोक्ता लिङि तूभये एव यतो ह्यत्राख्यातत्वं लिङ्त्वञ्चोभयमेव यत्र । आख्यातत्वेनार्थी लिङ्त्वेन शाब्दीभावनोच्यते इति ।

नैयायिकमते तु तिङन्तपदात्प्रथमान्तपदविशेष्यकबोधः । एतन्मते तु आख्यातार्थ-कृतिर्वा यत्नः । प्रथमान्तपदेऽर्थे आख्यातार्थो विशेषणं भवति । तेन चैत्रस्तण्डुलं पचतीति वाक्ये तण्डुलरूपकर्मणो यः पाकरूपव्यापारस्तदनुकूलयत्नवाँश्चैत्रः इत्यर्थबोधः ।

द्वितीयार्थः कर्मत्वं तृतीयार्थः करणत्वमित्यादेः सर्वेषामेव मते क्रियया सहैवान्वयः । वस्तुतः क्रियया सम्बद्धत्वमेव कारकाणां कारकत्वम् । तेनैवोक्तं क्रियानिर्वर्तकत्वं कार-कत्वमिति ।

हिन्दी—आख्यात से क्रियाविशेष्य का बोध होता है। ऐसा वैयाकरणों एवं मीमांसकों का मत है। पहले मत में धातु का अर्थ क्रिया है। 'चैत्रः तण्डुलं पचति' इत्यादि से चैत्र कर्ता वाला और तण्डुल कर्म वाला पाक, ऐसा बोध होता है। दूसरे मत में भावना ही क्रिया है और वह प्रत्यय का अर्थ है, धातु का नहीं। 'चैत्रः तण्डुलं पचति' आदि में चैत्र से सम्बद्ध पाक करण वाली तण्डुल कर्म वाली भावना—ऐसा बोध होता है। प्रथमान्त पद का अर्थ है—विशेष्य ( प्रधान ) जिसमें, ऐसा बोध होता है। ओदन कर्म वाला जो पाक है, उसके अनुकूल कृति से युक्त चैत्र है, ऐसा नैयायिक

मानते हैं। द्वितीया आदि के अर्थ कर्मत्व, करणत्व आदि का क्रिया में ही अन्वय सभी के मत में होता है।

( १२८ ) लङस्तु शक्यो ह्योऽनद्यतनकालः। लुङस्तु भूतसामान्यम्। भूतत्वञ्च वर्तमानध्वंसप्रतियोग्युत्पत्तिकत्वम्। न तु तादृशप्रतियोगित्वमेव। चिरोत्पन्नेऽपि पूर्वेद्युरभवदिति प्रत्ययापत्तेः। नष्ट इत्यादौ नाशे तदन्वयासम्भवाच्च। उत्पत्तेस्तु देशकालादावन्वयान्न दोषः। अभवदित्यादौ तु धातुनोत्पत्तिः प्रत्याय्यते, नष्ट इत्यादौ तादृशोत्पत्तिकत्वं प्रत्ययेनेति विशेषः।

व्याख्या—लङ्लुङोरर्थं निरूपयति—लङ इत्यादिना। लङः लङ्लकारस्य। तु हि। शक्यः वाच्यार्थः। ह्यः पूर्वेद्युः। अप्रत्यक्षेऽपि प्रत्यक्षसम्भव इति। अनद्यतनकालः अद्यतनाष्टप्रहरीपूर्वकालः। लुङः लुङ्लकारस्य। तु तद्व्यतिरिक्तम्। भूतसामान्यं सामान्यभूतकालः शक्योऽर्थः। भूतत्वम् अतीतत्वम्। च अपि। वर्तमानध्वंसप्रतियोग्युत्पत्तिकत्वं वर्तमाने ध्वंसः प्रतियोगी यस्य तादृशमुत्पत्तिकत्वमुत्पत्तेराश्रयत्वम्। न। तु। तादृशप्रतियोगित्वं वर्तमानध्वंसप्रतियोगित्वम्। एव। तथा सति। चिरोत्पन्ने चिरकालघटिते। अपि च। पूर्वेद्युः पूर्वदिने। अभवत्। इति प्रत्ययापत्तेः ज्ञानप्राप्तेः। उत्पत्तिकत्वग्रहणे न स दोष इति। नष्ट इत्यादौ। नाशे ध्वंसे। तदन्वयासम्भवात् तस्याः वर्तमानध्वंसप्रतियोगितायाः अन्वयस्यासम्भवात्। च अपि। उत्पत्तेः। तु हि। देशकालादौ देशे काले च। अन्वयात् अन्वयभावात्। न नैव। दोषः। अभवत् इत्यादौ इत्यादिवाक्ये। तु। धातुना क्रियावाचिशब्देन। उत्पत्तिः प्रादुर्भावः। प्रत्याय्यते ज्ञाप्यते। नष्टः इत्यादौ इत्यादिवाक्ये। तादृशोत्पत्तिकत्वं वर्तमानध्वंसप्रतियोगिक्रियायाः उत्पत्तिभूतदेशकालादिकत्वम्। प्रत्ययेन तिबादिना। इति एतावानेव। विशेषः वैशिष्ट्यमिति।

लङो ह्यनद्यतनभूतकालो लुङस्तु सामान्यभूतकालो वाच्योऽर्थः। भूतकालश्च क्रियायाः वर्तमानकालीनो यो ध्वंसस्तस्य प्रतियोगिनी या क्रिया तस्या आश्रयभूतकालः। यथा घटोऽभवत् इत्यत्र घटोत्पत्तिरूपक्रियायाः यो वर्तमानकालीनध्वंसस्तस्य प्रतियोगिनी क्रिया प्राग्घटिता घटोत्पत्तिरेव। तस्या उत्पत्तिरूपक्रियाया यः कालः स भूतकालः। तेन वर्तमानध्वंसप्रतियोग्यवच्छिन्नकालो भूतकालः। विद्यमानध्वंसप्रतियोगित्वं भूतत्वमिति। यत्प्रध्वंसेन कालोऽवच्छिद्यते स तस्य भूतकाल इति।

हिन्दी—लङ् लकार का शक्य ( वाच्य ) अर्थ है, बीते हुए कल से सम्बन्धित अनद्यतन भूतकाल। लुङ्लकार का अर्थ है—सामान्य भूतकाल। भूतत्व है—वर्तमान में ध्वंस की प्रतियोगिनी क्रिया की उत्पत्ति का आश्रयभूत अतीत काल। न कि केवल वैसी अर्थात् वर्तमानकालीन ध्वंस की प्रतियोगिता ही ( भूतकाल है )। ( वर्तमानकालीन ध्वंस की प्रतियोगिता को ही भूतकाल मानने पर ) बहुत समय पूर्व उत्पन्न घट के लिए ही 'पूर्वेद्युरभवत्' ( कल उत्पन्न हुआ ), ऐसा प्रयोग होने लगेगा ( क्योंकि वर्तमानकालीन ध्वंस की प्रतियोगिता उसमें भी है ) और नष्ट ( नाश

हुआ ) इत्यादि नाश में उस वर्तमानकालीन ध्वंस की प्रतियोगिता का अन्वय असम्भव होगा। उत्पत्ति का तो देश एवं काल के साथ अन्वय होने के कारण नष्ट इत्यादि प्रयोगों में दोष नहीं आता। 'अभवत्' इत्यादि प्रयोगों में उत्पत्ति रूप अर्थ का ज्ञान धातु के द्वारा ही प्रतीत होता है। नष्ट इत्यादि में तो वैसी वर्तमानकालीन ध्वंस की प्रतियोगिनी क्रिया की उत्पत्ति वाले देश-काल आदि का ज्ञान प्रत्यय से होता है। इतना ही दोनों में अन्तर है।

( १२९ ) लिटस्तु भूतकाल इव परोक्षत्वमप्यर्थः। अहं चकार इत्यादिप्रयोगादर्शनात्। न चैवं णलुत्तमो वा इति ज्ञापकादुत्तमपुरुषस्तत्र स्यादिति वाच्यम्। 'सुप्तोऽहं किल विललाप' 'मत्तोऽहं किल विचचार' इत्यादौ चित्तविक्षेपादिना पारोक्ष्यमुपपाद्य तत्र सूत्रसार्थक्यसम्भवात्। तत्र च परोक्षत्वेन पारोक्ष्यसादृश्ये तात्पर्यम्। 'चक्रे सुबन्धुः' इति तु न लिट्प्रयोगोऽपितु तिङन्तप्रतिरूपको निपातः।

व्याख्या लिटोऽर्थं निरूपयति—लिट इत्यादिना। **लिटः** लिट्लकारस्य। **तु** पूर्वोक्तविलक्षणम्। **भूतकालः** अतीतकालः। **इव** यथा। **परोक्षत्वम्** असाक्षाद्विषयत्वम्। **अपि** च। **अर्थः**। लिटो हि परोक्षत्वविशिष्टभूतकालोऽर्थः इति। **अहं चकार**। **इत्यादिप्रयोगादर्शनात्** इत्यादिप्रयोगस्य अदर्शनादप्रयोगात्। लिटचपि वर्तमानध्वंसप्रतियोग्युत्पत्तिकत्वभावाद् भूतत्वं त्वस्त्येव, तथैव तत्राधिकं परोक्षत्वमपि; अन्यथा अहमकरवम् अहमकार्षम् इत्यादिवत् अहञ्चकार इत्यादिप्रयोगोऽपि स्यात्, किन्तु न तथा प्रयोगो दृश्यते। **न** नैव। **च** हि। **एवम्** इत्थम्। **'णलुत्तमो वा'** ( ७।१।९१ ) इति। **ज्ञापकात्** संसूचकात्। **तत्र** लिटचपि। **उत्तमपुरुषः** उत्तमपुरुषप्रयोगः। **स्यात्** भवेत्। **इति** इत्थम्। **वाच्यं** कथनीयम्। 'सुप्तोऽहं किल विललाप' 'मत्तोऽहं किल विचचार' **इत्यादौ**। **चित्तविक्षेपादिना** चित्तव्याकुलतादिना। **पारोक्ष्यं** परोक्षताम्। **उपपाद्य** परिकल्प्य। **तत्र** तादृशे प्रयोगे। **सूत्रसार्थक्यसम्भवात्** 'णलुत्तमो वा' इति सूत्रस्य सार्थक्यात्। **तत्र** तादृशप्रयोगे। **च** अपि। **परोक्षत्वेन** परोक्षभावेन। **पारोक्ष्यसादृश्ये** परोक्षतासदृशे। **तात्पर्यम्** आशयः, न तु वस्तुतः परोक्षत्वमेव। तर्हि कथं चक्रे सुबन्धुः इत्यादौ लिटः प्रयोगो यतो ह्यत्र न चित्तविक्षेपादिना पारोक्ष्यमिति चेदुच्यते चक्रे इत्यादिना 'सुबन्धुः चक्रे' **इति** एतादृशप्रयोगः। **तु** हि। **न** नैव। **लिट्प्रयोगः** लिटि रूपम्। **अपितु**। **तिङन्तप्रतिरूपकः** तिङन्तसदृशः। **निपातः** निपातनात्सिद्ध एवेति।

लिटो हि परोक्षत्वविशिष्टभूतकालोऽर्थः। परोक्षत्वं हि ज्ञानेन्द्रियबाह्यत्वम्। स्पष्टञ्चेदं पाणिनीये 'परोक्षे लिट्' ( ३।२।११५ ) इति सूत्रे, यन्न हि लिटः प्रयोगः केवलं भूतेऽर्थेऽपितु परोक्षत्वविशिष्टभूतकाले एव। भूतमात्रेऽर्थे लिटि तु अहं चकार इत्यादिप्रयोगो दृश्येत किन्तु न तथा। 'णलुत्तमो वा' ( ७।१।९१ ) इति सूत्रे उत्तमपुरुषेऽपि लिटः प्रयोगव्यवस्था तु 'सुप्तोऽहं किल विललाप' 'मत्तोऽहं किल विचचार' इत्यादौ चित्तविक्षिप्तावस्थानिमित्तमेव। तत्रापि पारोक्ष्यं परोक्षसदृशमेव न तु स्पष्टतः

परोक्षत्वेनैव । यथोक्तं लिट्सूत्रभाष्ये—'भवति वैकश्चिज्जाग्रदपि वर्तमानकालं नोपलभते···किं पुनः कारणं वर्तमानं कालं नोपलभते ? मनसा संयुक्तानीन्द्रियाणि उपलब्धौ कारणानि भवन्ति । मनसोऽसान्निध्यात् । तर्हि किं 'चक्रे सुबन्धुः' इत्यत्र चक्रे इत्यस्य तथैव 'व्यातेने किरणावलीमुदयनः' इत्यत्र व्यातेने इत्यस्य च । केचित्त्वेतमसाधुप्रयोगं मन्यन्ते । परे त्वेतं लिट्प्रयोगं नैव मन्यन्तेऽपितु तिङन्तप्रतिरूपकनिपातमेव । अपरोक्षतायां परोक्षताया आरोपस्तु ग्रन्थस्य सुकरताऽल्पकालज्ञेयताद्योतनायेति ।

हिन्दी—लिट् लकार का तो भूतकाल की तरह परोक्षत्व भी अर्थ है । क्योंकि 'अहं चकार' इत्यादि प्रयोग देखे नहीं गये हैं । न तो ऐसा 'णलुत्तमो वा' ( ७।१।९१ ) इसके ज्ञापन से उसमें उत्तमपुरुष वहाँ हो, ऐसा कहना चाहिए । 'सुप्तोऽहं किल विललाप' 'मत्तोऽहं किल विचचार' इत्यादि में चित्त की व्याकुलता के चलते परोक्षता उत्पादन कर वहाँ वह सूत्र सार्थक होता है । वहाँ भी परोक्ष के रूप में परोक्ष-सदृश में ही तात्पर्य है । 'चक्रे सुबन्धुः' यह तो लिट् लकार का प्रयोग नहीं है, अपितु तिङन्त का प्रतिरूपक ( सदृश ) निपात ही है ( कोई तो इसे असाधु प्रयोग भी मानते हैं ) ।

( १३० ) लुङ्लृटोस्तु भविष्यत्कालः । भविष्यत्वं वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वम् । उत्पत्तौ च देशविशेषः कालविशेषश्चाधिकरणत्वेनान्वेति । 'गृहे घटो भविता' 'अद्य घटो भविष्यति' इत्यादौ धातुनोत्पत्तिः प्रत्याय्यते, वर्तमानप्रागभावप्रतियोगित्वमाश्रयत्वञ्च प्रत्ययेन । गृहाधिकरणकवर्तमानप्रागभावप्रतियोग्युत्पत्त्याश्रयो घटः अद्यतनप्रागभावप्रतियोग्युत्पत्त्याश्रयो घट इत्यन्वयबोधात् । वर्तमानप्रागभावप्रतियोगित्वमात्रस्य लुडाद्यर्थत्वे श्वो गृहे समुत्पद्य परश्वः प्राङ्गणे गमिष्यति मैत्रे परश्वः प्राङ्गणे मैत्रो भविष्यतीति प्रसङ्गः ।

व्याख्या—लुट्लृटोः भविष्यदर्थं निरूपयति—लुडित्यादिना । लुट्लृटोः लुट्लकारस्य लृटलकारस्य च तयोः । भविष्यत्कालः भविष्यत्कालोऽर्थः । भविष्यत्वं भविष्यत्कालश्च । वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वं वर्तमाने वर्तमानकाले प्रागभावः प्रतियोगितापूर्वकालिकोऽभावः तस्य प्रतियोगि उत्पत्तिकत्वम् उत्पत्तेराश्रयभूतः काल इति । वर्तमानप्रागभावप्रतियोग्युत्पत्तेराश्रयभूतः काल इत्याशयः । तत्र उत्पत्तौ कार्योत्पत्तौ । देशविशेषः स्थानविशेषः । कालविशेषः समयविशेषः । च अपि । अधिकरणत्वेन आश्रयरूपेण । अन्वेति अन्वितो भवति । 'गृहे घटो भविता' 'अद्य घटो भविष्यति' इत्यादौ इत्यादिवाक्ये । धातुना क्रियावाचिभूशब्देन । उत्पत्तिः घटभावः । प्रत्याय्यते ज्ञाप्यते । वर्तमानप्रागभावप्रतियोगित्वं वर्तमाने यः प्रागभावस्तस्य प्रतियोगित्वम् । आश्रयत्वं प्रतियोग्युत्पत्त्याश्रयताज्ञानञ्च । प्रत्ययेन लकारेण । प्रत्याय्यते इति । 'गृहे घटो भविता' इत्यतः । गृहाधिकरणवर्तमानप्रागभावप्रतियोग्युत्पत्त्याश्रयः गृहमधिकरणमाश्रयो यस्य तादृशो यो वर्तमानप्रागभावस्तस्य या प्रतियोगिनी उत्पत्तिस्तस्या आश्रयः आधारः । घटः इति बोधः । 'अद्य घटो भविष्यति' इत्यतः अद्यतनप्रागभावप्रतियोग्युत्पत्त्याश्रयः

अद्यतनो यः प्रागभावस्तस्य या प्रतियोगिनी उत्पत्तिस्तस्या आश्रयः आधारः। घटः। इति इत्थम्। अन्वयबोधात् अन्वयज्ञानात्। वर्तमानप्रागभावप्रतियोगित्वमात्रस्य वर्तमाने यः प्रागभावस्तस्य प्रतियोगित्वमात्रस्य न तूत्पत्तिकत्वस्य। लुडाद्यर्थत्वे लुट्-लृट्लकारार्थत्वेन ग्रहणे। श्वः आगामिदिवसे। समुत्पद्य उत्पन्नो भूत्वा। परश्वः तद्द्वितीयदिने। प्राङ्गणे गृहपरिसरे। गमिष्यति। मैत्रे। परश्वः प्राङ्गणे मैत्रो भविष्यति। इति इत्थम्। प्रसङ्गः प्रयोगः आपद्येत।

केचिद्धि भविष्यत्त्वं हि वर्तमानकालवृत्तिप्रागभावप्रतियोगित्वमिति, अपरे तु यत्प्रागभावेन च कालोऽवच्छिद्यते स तस्य भविष्यत्काल इत्यपि विवृण्वन्ति। किन्तु तत्र नव्या हि अतिव्याप्त्यव्याप्तिदोषं पश्यन्ति, तेन तदपवारणाय तत्र उत्पत्तिकत्त्वमर्थादुत्पत्तेराश्रयकाल इत्यपि संयोजयन्ति। एतेन वर्तमानकालिको यः प्रागभावस्तस्य प्रतियोगिनी क्रिया तस्या उत्पत्तेराश्रयभूतः कालो भविष्यत्काल इत्यर्थः सम्पद्यते।

हिन्दी—लुट् एवं लृट् का भविष्यत्काल अर्थ है। भविष्यत्त्व है—वर्तमान में प्रागभाव के प्रतियोगिनी क्रिया की उत्पत्ति का आश्रयभूत काल। उत्पत्ति में देशविशेष एवं कालविशेष भी अधिकरण ( आश्रय ) के रूप में अन्वित हो जाते हैं। 'गृहे घटो भविता' 'अद्य घटो भविष्यति' इत्यादि में धातु के द्वारा उत्पत्ति अर्थ प्रत्यायित होता है और वर्तमान में जो प्रागभाव है, उसकी प्रतियोगिता और क्रिया के उत्पत्ति की आश्रयता प्रत्यय अर्थात् लकार के द्वारा प्रत्यायित होते हैं। पहले में गृह अधिकरण ( आश्रय ) वाली वर्तमान में प्रागभाव वाली क्रिया की उत्पत्ति का आश्रय घट है, ऐसा बोध होता है और दूसरे में अद्यतन में प्रागभाव वाली क्रिया की उत्पत्ति का आश्रय घट है, ऐसा अन्वयबोध होता है। वर्तमान में प्रागभाव के प्रतियोगित्व मात्र को लुट्-लृट् के अर्थ मानने पर कल घर में उत्पन्न होकर परसों आँगन में होने वाले मैत्र में 'परश्वः प्राङ्गणे मैत्रो भविष्यति' इत्यादि प्रयोग होने लगेंगे।

( १३१ ) केचित्तु देशविशेषः कालविशेषश्च प्रागभावे प्रतियोगिनि चान्वेति। परश्वः प्राङ्गणे मैत्रो भविष्यति इत्यस्य परश्वोवृत्तिः प्राङ्गणवृत्तिर्यः प्रागभावस्तत्प्रतियोग्युत्पत्त्याश्रयः परश्वोवृत्तिः प्राङ्गणवृत्तिमैत्र इति बोधः। तेन नोक्तातिप्रसङ्गः। एतेन श्वोभाविनि घटे अद्य भविष्यतीति प्रसङ्गो निरस्त इत्याहुः।

व्याख्या – एतद्विषये मतान्तरमुल्लिखति—केचिदित्यादिना। केचित् कतिपये विपश्चितः। तु तद्व्यतिरिक्तम्। देशविशेषः स्थानविशेषः। कालविशेषः स्थानविशेषः। च अपि। प्रागभावे। प्रतियोगिनि अन्वेति सम्बद्धो भवति। 'परश्वः प्राङ्गणे मैत्रो भविष्यति' इत्यस्य वाक्यस्य। परश्वोवृत्तिः परश्वोभावी। प्राङ्गणवृत्तिः प्राङ्गणभावी। यः प्रागभावः उत्पत्तिक्रियायाः प्रागभावः। तत्प्रतियोग्युत्पत्त्याश्रयः तस्य प्रतियोगिनी या क्रिया तस्या उत्पत्तेराश्रयः। परश्वोवृत्तिः परश्वोभावी। प्राङ्गणवृत्तिः प्राङ्गणभावी। मैत्रः। इति। बोधः। तेन कारणेन। न नैव। उक्तप्रसङ्गः उक्तातिव्याप्तिदोष-

प्रसङ्गः । एतेन विवरणेनानेन । श्वः आगामिदिवसे । भाविनि भविष्यति । घटे कुम्भे । अद्य भविष्यति । इति प्रसङ्गः प्राप्तिः । निरस्तः अपास्तः । इति । आहुः कथयन्ति इति ।

अस्यायमाशयो यद्भविष्यत्काललक्षणे न हि उत्पत्तिपदावश्यकता, यतो हि देशस्य कालस्य वाधिकरणयोः प्रागभावे प्रतियोगिनि चान्वये एवोक्ताव्याप्तिदोषो निराकृतो भवति, यतो हि श्वोभाविनो मैत्रस्य परश्व इति कालरूपाधिकरणे प्राङ्गणमिति देशरूपाधिकरणे न हि प्रागभावसम्भवः । अतोऽत्र भविष्यत्कालाघटितत्वेनात्र परश्वः प्राङ्गणे मैत्रो भविष्यतीति प्रयोग एव न सम्भवतीति । इत्थं देशरूपकालरूपाधिकरणयोः प्रतियोग्युत्पत्तौ अन्वयेन या उत्पत्तिर्यस्मिन्काले भविष्यति स एव भविष्यत्कालो भविष्यति । अतः परश्वो भाविनि घटे अद्य भविष्यति इति प्रयोग एव न सम्भवति । किन्त्वत्रापि परे दोषं पश्यन्ति, यतो हि अधिकरणस्य प्रागभावेनान्वयो नैवाभीष्टो यतो हि परश्वोभाविप्रागभावो न हि वर्तमानप्रागभावस्तत्र वर्तमानत्वाभावात् । अतो भविष्यल्लक्षणे उत्पत्तिपदयोजनमेव वरमिति निष्कर्षः ।

हिन्दी—कुछ तो देशविशेष एवं कालविशेष प्रागभाव एवं उसके प्रतियोगी में अन्वित हो जाते हैं । 'परश्वः प्राङ्गणे मैत्रो भविष्यति' इसका परसों होने वाला और प्राङ्गण में होने वाला जो प्रागभाव है, उसके प्रतियोगी उत्पत्ति का आश्रय परसों होने वाला प्राङ्गण में होने वाला मैत्र है, ऐसा बोध होता है । इस कारण उक्त अतिव्याप्ति दोष नहीं आता । इससे कल होने वाले घट में 'आज होगा' ऐसा प्रसङ्ग ही निरस्त हो जाता है, ऐसा कहते हैं ।

( १३२ ) नङ्क्ष्यति इत्यादौ वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वं प्रतियोगित्वञ्च प्रत्ययार्थः । श्वो घटो नङ्क्ष्यति इत्यादौ श्वोवृत्तिः वर्तमानप्रागभावप्रतियोगिनी योत्पत्तिस्तदाश्रयनाशप्रतियोगी घट इत्यन्वयबोधः । यत्त्वत्र वर्तमानप्रागभावप्रतियोगित्वमेव प्रत्ययार्थ इति । तन्न । श्वोभाविनाशके घटे अद्य नङ्क्ष्यति इति प्रसङ्गात् ।

व्याख्या—नशेर्लुटि लृटि च प्रयोगविषयं निरूपयति—नङ्क्ष्यतीत्यादिना । नङ्क्ष्यति इत्यादौ इत्यादिवाक्ये । वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वं वर्तमाने यः प्रागभावस्तस्य प्रतियोगिनी उत्पत्तिर्यस्य तस्य भावस्तत्वम् । प्रतियोगित्वम् । च अपि । उभे एव । प्रत्ययार्थः लकारार्थः । इति । नङ्क्ष्यतीत्यत्र नाशस्तु धात्वर्थः वर्तमानप्रागभावप्रतियोगिक्रियोत्पत्त्याश्रयत्वं प्रतियोगिता च लृडर्थं इति । 'श्वो घटो नङ्क्ष्यति' इत्यादौ इत्यादिवाक्ये । श्वोवृत्तिः आगामिदिनभावी । वर्तमानप्रागभावप्रतियोगिनी वर्तमानकालीनप्रागभावस्य प्रतियोगिनी । या उत्पत्तिः प्रादुर्भावः । तदाश्रयनाशप्रतियोगि तस्या उत्पत्तेर्नाशस्य ध्वंसस्य प्रतियोगी । घटः । इति अन्वयबोधः सम्बन्धज्ञानमिति । यत् तु । अत्र वाक्येऽस्मिन् । वर्तमानप्रागभावप्रतियोगित्वं वर्तमानकालीनप्रागभावप्रतियोगिता । एव हि । प्रत्ययार्थः लृडर्थः । इति उच्यते चेत् । तत् कथनम् । न नैवो-

पयुक्तम् । श्वोभाविनाशके आगामिदिनभविष्यन्नाशे । घटे कुम्भे । 'अद्य नङ्क्ष्यति' प्रसङ्गात् प्रयोगसम्भवात् । इति ।

नशेः प्रयोगे लृट् प्रत्ययो द्वावर्थौ प्रत्याययति—वर्तमानकालीनप्रागभावप्रतियोगिनाशक्रियोत्पत्त्याश्रयः अदर्शनरूपक्रियाश्रयश्च । आद्यो नाशोऽन्त्यो घटः । एतयोः संयुक्तज्ञानं लृट्प्रत्ययः कारयति । यथा श्वो घटो नश्यति इत्यत्र नाशक्रियाया वर्तमानकालीनप्रतियोगिनी नाशक्रियैव । तस्या उत्पत्त्याश्रयकालभूतः श्वस्तस्य तथा च प्रतियोगिनी या अदर्शनक्रिया तस्याः प्रतियोगी यो घटस्तस्य चोभयोः ज्ञानं लृट्प्रत्ययाद्भवति । यदि केवलं वर्तमानप्रागभावप्रतियोगिता एव लृट्प्रत्ययार्थत्वेन गृह्यते तदा श्वोभाविनाशके घटेऽपि अद्य नङ्क्ष्यतीति प्रयोगः सम्भवेत् । यतो हि वर्तमानकालीनप्रागभावप्रतियोगिनाशक्रियोत्पत्त्याश्रयभूतो घटस्त्वद्यापि वर्तत एव । तत्र प्रतियोगितार्थग्रहणे न स दोष आपतति, नाशरूपक्रियोत्पत्तेः कालस्यापि तत्र समावेशात् ।

हिन्दी—नङ्क्ष्यति इत्यादि में वर्तमान में प्रागभाव के प्रतियोगी क्रिया की उत्पत्ति का आश्रय होना तथा प्रतियोगिता, ये दोनों लुट् एवं लृट् प्रत्ययों का अर्थ हैं । 'श्वो घटो नंक्ष्यति' इत्यादि में कल होने वाली वर्तमानकालीन प्रागभाव की प्रतियोगिनी जो उत्पत्ति है, उसके आश्रयभूत नाश का प्रतियोगी घट है, ऐसा अन्वयबोध होता है । जो कि यहाँ 'वर्तमानकालीन प्रागभाव का प्रतियोगित्व ही प्रत्यय का अर्थ है' ऐसा कहा जाता है वह ठीक नहीं है, क्योंकि कल होना है नाश जिसका, ऐसे घट के लिए 'अद्य नङ्क्ष्यति' ऐसा प्रयोग होने लगेगा ।

( १३३ ) पक्ष्यति इत्यादौ आद्यपाकव्यक्तिप्रागभावगर्भमेव भविष्यत्वम् । पक्ववान् इत्यादौ चरमपाकव्यक्तिध्वंसगर्भमेव भूतत्वं भासते । तत्तत्समभिव्याहारस्य तादृशबोधे हेतुत्वात् । तेन पाकमध्ये कस्याश्चित्पाकव्यक्तेरनुत्पादेऽपि कस्याश्चिदतीतत्वेऽपि न पक्ष्यति पक्ववान् इत्यादिप्रयोगः ।

व्याख्या—पक्ष्यति पक्ववानित्यादिप्रयोगेऽर्थं निरूपयति—पक्ष्यतीत्यादिना । 'पक्ष्यति' ( पचेर्लृटि रूपम् ) इत्यादौ इत्यादिवाक्ये । आद्यपाकव्यक्तिप्रागभावगर्भम् आद्या प्रथमापाकः व्यक्तिः पाकस्यावान्तरक्रियारूपस्य प्रागभावः गर्भेऽन्तर्यस्य तादृशम् । एव हि । भविष्यत्त्वमिति । पक्ववान् ( पचेः क्तवतौ रूपम् ) इत्यादौ । चरमपाकव्यक्तिध्वंसगर्भम्—चरमाऽन्तिमा या पाकव्यक्तिस्तस्याः ध्वंसो विनाशो गर्भेऽन्तर्यस्य तत् तादृशम् । एव हि । भूतत्वं भूतकालावस्था । भासते द्योतते । तत्तत्समभिव्याहारस्य तस्य तस्य पक्ष्यति पक्ववान् इत्येतस्य समभिव्याहारस्य समुदायस्य । तादृशबोधे तथाविधज्ञाने । हेतुत्वात् कारणत्वात् । तेन हेतुना । पाकमध्ये पाकक्रियावसरे । कस्याश्चित् कस्या अपि । पाकव्यक्तेः पाकक्रियाऽवान्तरभेदस्य । अनुत्पादे अनारम्भे । अपि च कस्याश्चित् । तु अतीतत्वे समाप्तौ । अपि च । न नैव । पक्ष्यति पक्ववान् इत्यादिप्रयोगः पाकक्रियामध्ये कस्या अपि अवान्तरक्रियारूपपाकव्यक्तेरनुत्पन्नत्वेऽपि कस्याश्चिद्भावित्वेऽपि कस्याश्चिदतीतत्वेऽपि न पक्ष्यतीत्यादिप्रयोग इति ।

हिन्दी—'पक्ष्यति' ( पच् धातु के लृट् लकार में रूप प्रथमपुरुष एकवचन ) इत्यादि में पहले होने वाली पाकव्यक्ति ( पाक का अवान्तर रूप ) का प्रागभाव समाविष्ट है, जिसमें ऐसे भविष्यत् काल का बोध होता है। पक्ववान् ( पच् धातु का क्तवतु-प्रत्ययान्त रूप ) अन्तिम पाकव्यक्ति का ध्वंस है गर्भ में जिसका, ऐसा भूतकाल भासित होता है, क्योंकि उन-उन समुदाय का उस प्रकार के बोध में हेतुत्व है। इस कारण पाक क्रिया के बीच में किसी पाकव्यक्ति के उत्पन्न न होने पर भी किसी के अतीत होने पर भी पक्ष्यति पक्वान् आदि के प्रयोग नहीं होते।

( १३४ ) लिङो विधिराशीश्चार्थः। यजेतेत्यादौ विधिराशीस्तु भूयादित्यादौ। सा च शुभाशंसनं तदिच्छेति यावत्। लोटस्तु विधिरनुमतिर्वा। गच्छतु इत्यत्र अनुमतिविषयगमनानुकूलकृतिमान् इति बोधस्यानुभविकत्वात्। विधिः प्रवर्तना इति भाट्टाः। लिङ्निष्ठो व्यापारः पदार्थान्तरं लिङ्पदज्ञानमेव वा। तस्य प्रवर्तनात्वेन ज्ञानं शब्दाधीनप्रवृत्तौ कारणम्। लिङ्श्रवणे आचार्यो मां प्रवर्तयति इति ज्ञानाद् गवानयनादौ प्रवृत्तेः। आचार्यनिष्ठप्रवर्तना तु अभिप्रायविशेष एव इत्याहुः। तन्न। स्तनपानादिप्रवृत्तौ इष्टसाधनताज्ञानस्य हेतुताया आवश्यकत्वात् तत एवोपपत्तौ प्रवर्तनाज्ञानस्य हेतुत्वे मानाभावात्। 'स्वर्गकामो यजेत' इत्यादौ प्रवर्तनाविषया यागकरणिका स्वर्गकर्मिका भावनेति बोधस्य परैरभ्युपगमात् प्रवर्तनाविषयत्वमात्रज्ञानात् प्रवृत्त्यनुपपत्तेः। आवश्यकस्वर्गसाधनत्वादिज्ञानादेव तत्र प्रवृत्तेः। कार्यं विधिरिति प्राभाकराः। स्वर्गकामो यजेतेत्यादौ स्वर्गकामनियोज्यकं यागविषयकं कार्यमिति प्राथमिको बोधः। सनियोज्यकं यागविषयकं स्थायिस्वर्गसाधनं कार्यमिति द्वितीयः। स्वर्गकामनियोज्यको यागः स्वर्गकामकार्यं इति तृतीयः। स्वर्गकामो यागकर्तेति चतुर्थः। अहं स्वर्गकामोऽतो यागो मत्कृतिसाध्य इति पञ्चमः।

**व्याख्या**—लिङ्लोटोरर्थविषयं निरूपयन् विधिशब्दार्थं विविनक्ति—लिङ इत्यादिना। लिङः लिङ्लकारस्य। विधिः अनिवार्यत्वेन नियोगः। आशीः शुभाशंसनम्। च अपि। अर्थः। यजेत इत्यादौ। विधिः नियोगः। अवश्यमेव यष्टव्यमन्यथा प्रायश्चितीयते इत्याशयः। आशीः। तु हि। भूयात्। इत्यादौ। सा आशीः। च हि। शुभाशंसनं कल्याणकथनम्। तदिच्छा शुभकामना। इति। यावत्। लोटः लोट्लकारस्य। तु हि। विधिः नियोगः। अनुमतिः आज्ञा। वा। गच्छतु इत्यत्र। अनुमतिविषयगमनानुकूलकृतिमान् अनुमतेराज्ञाया विषयो यद्गमनं तदनुकूला या कृतिर्यत्नस्तद्वान्। इति। बोधस्य शाब्दबोधस्य। अनुभविकत्वात् अनुभूतविषयत्वात्। विधिः विधिर्नाम। प्रवर्तना प्रेरणा। इति। भाट्टाः भट्टमतानुयायिनः। विधिर्हि। लिङ्निष्ठः लिङि निष्ठा वृत्तिर्यस्य स तादृशः। व्यापारः यत्नः। विधिर्हि लिङोच्यते इत्याशयः। पदार्थान्तरम् अन्योऽपि पदार्थः। लिङ्पदज्ञानं लिङ्लकारयुक्ततिङन्तप्रयोगज्ञानम्। एव हि। वा अथवा। तस्य

लिङ्पदज्ञानस्य । **प्रवर्तनात्वेन** प्रेरणात्वेन । **ज्ञानम्** अवबोधः । **शब्दाधीनप्रवृत्तौ** तत्तल्लिङ्लकारसम्बद्धनिष्ठप्रवृत्तौ । **कारणं** हेतुः । यतो हि **लिङ्श्रवणे** लिङ्लकारशब्दश्रवणे । **आचार्यः** । **मां प्रवर्तयति** प्रेरयति । इति । **ज्ञानात्** अवबोधात् । **गवानयनादौ** प्रवर्तनारूपज्ञानतो गोरूपस्थापनादौ कार्ये । **प्रवृत्तेः** **आचार्यनिष्ठप्रवर्तना** आचार्यवृत्तिप्रेरणा । **तु** हि । **अभिप्रायविशेषः** आशयविशेषः । **एव** हि । **इति** । **आहुः** कथयन्ति भाट्टा इति । लिङो हि विध्यर्थः । को विधिरित्यपेक्षायामुच्यते— प्रवर्तना हि विधिरिति भाट्टाः । प्रवर्तना हि प्रवर्तयितुः प्रवृत्त्यनुकूलो व्यापारविशेषः इति । इयमेव प्रेरणा शाब्दीभावना इत्यप्युच्यते । लौकिकवाक्यप्रयुक्तं विधिलिङ्प्रयोगप्रतीयमानप्रवर्तना हि वक्तृपुरुषविद्यमानाभिप्रायविशेषरूपेण गृह्यते । किन्तु स्वर्गकामो यजेतेत्यादि श्रुतिवाक्यप्रयुक्तविधिलिङ्प्रयोगे या प्रवर्तना सा नैव पुरुषनिष्ठा यतो हि वेदा अपौरुषेयाः । न हि तेषां कश्चिद्वक्ता कर्ता वा विद्यते । तेन तत्रत्या प्रवर्तना शब्दनिष्ठा भवति लिङभिव्यक्ता । उक्तमेव—तत्र पुरुषप्रवृत्त्यनुकूलो भावयितुर्भावनाशेषः शाब्दीभावना । सा लिङंशेनोच्यते । लिङ्श्रवणेऽयं मां प्रवर्तयतीति मत्प्रवृत्त्यनुकूलव्यापारवानयमिति नियमेन प्रतीतेः । स च व्यापारविशेषो लौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेषः । वैदिकवाक्ये तु पुरुषाभावाल्लिङादिशब्दनिष्ठ एव । अत एव शाब्दीभावनेति व्यवह्रियते । इति । एतद्व्यतिरिक्तमपरा भावना या आर्थीभावना इत्युच्यते । विशेषोद्देश्यप्रतिदृष्टया तदनुकूलक्रियासाधनाय पुरुषे या मानसिकप्रवृत्तिः क्रियाशीलता वा समुत्पद्यते सैवार्थीभावना । एषा हि आख्यातसामान्यस्य वाच्योऽर्थः । व्यापारो हि मीमांसकमते आख्यातार्थो नैव धात्वर्थः । यथोक्तम्—**प्रयोजनेच्छाजनितक्रियाविशेषव्यापार आर्थीभावना** । स च आख्यातांशेनोच्यते आख्यातसामान्यस्य व्यापारवाचित्वात् । इति । इत्थं हि लिङ्लकारप्रयोगे लिङ्त्वमाख्यातत्वञ्च द्वावंशौ । आख्यातत्वं सर्वलकारसुलभत्वात् तस्य वाच्यो व्यापार आर्थीभावना वा । किन्तु शाब्दीभावना तु केवलं लिङ्त्वस्यैवार्थः । उक्तमेव—

'अभिधाभावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वस्याख्यातगोचरा ॥' इति ।

शाब्दीभावना हि पदार्थान्तरमप्युच्यते । सा हि लिङि लिङ्त्वांशनिष्ठप्रेरणारूपव्यापार एव । तेनेषा आख्यातांशनिष्ठमानसिकतया पाररूपायाः आर्थ्याः भावनाया भिन्नैव । आर्थीभावना आख्यातरूपपदांशार्थः, यदा शाब्दी तु लिङ्त्वरूपपदांशार्थः । तेन हि शाब्दीभावना पदार्थान्तरमेव ।

यतो हि प्रवर्तना लिङ्निष्ठो व्यापारस्तेन लिङ्त्वरूपपदार्थज्ञानमेव प्रवर्तना वा तज्ज्ञानं प्रवर्तनाहेतुः । इति ।

तद्दूषयति— **तदित्यादिना** । **तत्** भाट्टमीमांसकमतम् । **न** नैवोपयुक्तम् । **स्तनपानादिप्रवृत्तौ** **शिशोः** दुग्धपानादिकार्ये । **इष्टसाधनताज्ञानस्य** अभीष्टपूर्तिसाधनरूपावबोधस्य । **हेतुतायाः** कारणतायाः । **आवश्यकत्वात्** अनिवार्यत्वात् । **ततः** इष्टसाधनताज्ञानात् । **एव** हि । **उपपत्तौ** **सिद्धौ** । **प्रवर्तनाज्ञानस्य** प्रेरणावबोधस्य । **हेतुत्वे** कारणत्वे । **मानाभावात्**

प्रमाणविरहात् । **'स्वर्गकामो यजेत इत्यादौ** इत्यादिश्रुतिवाक्ये । **प्रवर्तनाविषया** प्रेरणाविषययुक्ता । **यागकरणिका** यागो यज्ञः करणं साधनं यस्यां सा तादृशी । **स्वर्गकर्मिका** स्वर्गः कर्म यस्यां सा तादृशी । **भावना । इति** इत्थम् । **बोधस्य** ज्ञानस्य । **परैः** अन्यैः । **अभ्युपगमात्** स्वीकारात् । **प्रवर्तनाविषयत्वमात्रज्ञानात्** प्रवर्तनाविषयभावज्ञानमात्रादेव । **प्रवृत्त्यनुपपत्तेः** प्रवृत्तेः क्रियाशीलताया अनुपपत्तेरसिद्धेः । **आवश्यकस्वर्गसाधनत्वादिज्ञानात्** आवश्यकं प्रेरणार्थमपरिहार्यं यत्स्वर्गसाधनत्वादिज्ञानं तस्मात् । **एव हि । तत्र** यागादौ । **प्रवृत्तेः** क्रियाशीलतातः ।

प्रवर्तनामात्रं नैव कस्यापि कार्ये प्रवृत्तौ हेतुस्तदभावेऽपि कार्ये लोकस्य प्रवृत्तिदर्शनात् । प्रेरणानभिज्ञोऽपि नवजातशिशुः स्तनपानाय प्रवृत्तो भवति, एवं पशवोऽपि प्रवर्तनां विनैव कार्ये प्रवृत्ता दृश्यन्ते । तेनेष्टसाधनताज्ञानमेव प्रवृत्तौ हेतुर्न तु प्रवर्तना । कारणेनैकेन कार्यसिद्धौ कारणान्तरान्वेषणं व्यर्थमेव । एतत्तु मीमांसकैरपि स्वीक्रियते यत् स्वर्गकामो यजेतेत्यत्र एतादृशी भावना लभ्यते या हि प्रेरणाया विषयो यस्याः स्वर्गः कर्म यागस्तु करणमिति । तेनात्र न केवलं प्रवर्तनैव प्रवृत्तौ हेतुरिति स्पष्टमेव । यावद्धि कश्चिद् यागं स्वर्गसाधनेनाभीष्टसाधकत्वेन न जानाति न तावत्तस्य तत्र प्रवृत्तिः । तेन हि प्रवर्तनामात्रं न कार्यप्रवृत्तौ हेतुः कामं यत्र कुत्र प्रेरणाऽपि प्रवृत्तिहेतुः सम्भवति, किन्तु प्रवृत्तौ मुख्यहेतुस्तु इष्टसाधनताज्ञानमेव । नवजातशिशावपि इष्टसाधनताज्ञानस्य सूक्ष्मसंस्काररूपेण विद्यमानत्वादिष्टसाधनताज्ञानस्य प्रवृत्तौ हेतुत्वे न काऽपि क्षतिः ।

विषयेऽस्मिन् प्राभाकरमतमनुवदति—**कार्यमित्यादिना** । **प्राभाकराः** प्रभाकरमतानुयायिनो मीमांसकाः । **कार्यं** कार्यरूपमपूर्वं पुण्यं वा । **विधिः** विधिशब्दार्थं इति । **'स्वर्गकामो यजेत' इत्यादौ** इत्यादिश्रुतिवाक्ये । **स्वर्गकामनियोज्यकं** स्वर्गकामो नियोज्यः कर्ता यस्मिंस्तत् । **यागविषयकं** यागो यज्ञो विषयः क्षेत्रं यस्य तत् । **कार्यम्** एतादृशमदृष्टमपूर्वम् । **इति** इत्थम् । **प्राथमिकः** आरम्भिकः । **बोधः** शाब्दबोधः । **सनियोज्यकं** नियोज्यव्यक्तिसहितम् । **यागविषयकं** यागो यज्ञो विषयः क्षेत्रं यस्य तत्तादृशम् । **स्थायिस्वर्गसाधनं** स्थायि चिरगामि स्वर्गस्य साधनम् । **कार्यं** कर्तव्यबुद्ध्या विधेयमिति । **इति । तृतीयः । अर्थ** इति । **यागकर्ता** यज्ञसम्पादकः । **स्वर्गकामः** स्वर्गाभिलाषी । **इति** इत्थम् । **चतुर्थः अर्थः** इति । **अहं** यियक्षुः । **स्वर्गकामः** स्वर्गाभिलाषी । **अतः** हेतोरस्मात् । **यागः** यज्ञः । **मत्कृतिसाध्यः** मत्प्रयत्नसाध्यः । **इति** इत्थम् । **पञ्चमः** पञ्चमोऽर्थः ।

अत्र हि कार्यमिति कृतिसाध्योऽपूर्वोऽदृष्टो वा । कोऽसावपूर्व इत्यपेक्षायामुच्यतेऽपूर्वो हि स धर्मो यो हि यागात्समुत्पद्यते स्वर्गप्राप्तिपर्यन्तं स्थिरीभवति च । क्षणिके हि यागे निधनानन्तरमात्रप्राप्यस्वर्गसाधनत्वयोग्यता नैव सम्भवति । एष यागोत्पन्नो धर्मविशेषोऽपूर्वाख्यो यो हि यागस्वर्गप्राप्तिसंयोजनाय सेतोः कार्यं निर्वाहयति । एष एवादृष्टोऽपि कथ्यते । यागादपूर्वोत्पत्ति अपूर्वद्वारेण च स्वर्गप्राप्तिरिति परम्परयैव यागस्य स्वर्गसाधनत्वं सम्भवति । तेन कार्यं विधिरित्यत्र कार्यशब्दः कृतिसाध्येऽपूर्व-

विशेषे प्रयुक्त इति । लौकिकवाक्ये तु सद्यः फलप्राप्तेः तत्र कार्यताज्ञानमेवालं, किन्तु श्रुतिवाक्ये फलस्य परलोकप्राप्यतया तत्रापूर्वस्य कल्पनाऽऽवश्यकीति ।

यदा नैयायिका हि इष्टसाधनता कृतिसाध्यता बलवदनिष्टाननुबन्धित्वञ्चेति त्रिकं प्रवृत्तेः कारणं मन्यन्ते, किन्तु हेतुत्रयापेक्षया एकस्यैव कार्यस्य ( कार्यताज्ञानस्य ) प्रवृत्तेः कारणत्वस्वीकारे लाघवम् । अतो लौकिकप्रकरणे कार्यताज्ञानस्य प्रवृत्तेर्हेतुत्वेन स्वीकर्तव्यं, तेन तत्र विधेरर्थस्तदेव । श्रुतिवाक्ये तु यागस्य साक्षात्स्वर्गसाधनत्वाभावात्तत्रापूर्वं एव विधेरर्थो यतो यागः परम्परया स्वर्गसाधनत्वं भजते । एतदुपपत्तये 'स्वर्गकामो यजेते'त्यादि वैदिकवाक्यानां पञ्चार्थाः स्वीकृता मीमांसकैः ।

तत्र प्रथमेऽर्थे 'यजेते'त्यत्र यो लिङ् तस्यार्थं एतादृशस्यापूर्वस्य स्वकीयकृतितः प्राप्तिर्यत्र स्वर्गाभिलाषी नियोज्यो यागः कारणम् । शब्दान्तरेण कथने स्वर्गाभिलाषी हि यागतो हि अपूर्वं प्राप्नुयादिति प्रथमो बोधः । यागो हि क्षणिकोऽपि अपूर्वमाश्रित्य निधनानन्तरप्राप्यस्वर्गस्य परम्परया साधनं भवतीति द्वितीयोऽर्थः । यतो हि यागोऽपूर्वमाध्यमेन स्वर्गसाधकस्तेन स्वर्गकामेनावश्यं यष्टव्यमिति तृतीयोऽर्थः । अत्र हि यागे कार्यताया उपपत्तिर्यतो याजके यागभावनोदेति । तेनाऽयमेव मुख्यः शाब्दबोधः । कार्यं हि कृतिसाध्यं तेन कार्येण सहैव कृतेरप्युपस्थितिरनिवार्या । कृतेराश्रयस्तु स्वर्गकाम एव इति चतुर्थो बोधः । स्वर्गाभिलाष्यहमतो यागो मत्कृतिसाध्य इति निष्कर्षरूपः पञ्चमोऽर्थः । इति ।

हिन्दी — लिङ्लकार के विधि एवं आशीर्वाद अर्थ हैं । 'यजेत' इत्यादि में विधि अर्थ है और आशीर्वाद तो 'भूयात्' इत्यादि में है । वह आशीर्वाद शुभकामना अर्थात् उसकी इच्छा होना है । लोट् का अर्थ है—विधि अथवा अनुमति ( स्वीकृति ) । 'गच्छतु' इत्यादि में अनुमति का विषयभूत जो गमन है, उसकी अनुकूल कृति से युक्त ऐसे बोध का अनुभव होता है ।

विधि का अर्थ है—प्रवर्तना, ऐसा भट्ट के अनुयायी मानते हैं । प्रवर्तना का अर्थ लिङ् में रहने वाला व्यापार है तथा एक अन्य पदार्थ लिङ्लकार से युक्त तिङन्त पद का ज्ञान भी है । उसके प्रवर्तना के रूप में जो ज्ञान है, उसमें लिङ्लकार के शब्दों से होने वाली प्रवृत्ति में कारण होता है । क्योंकि लिङ्लकार के श्रवण में 'आचार्य मुझे प्रवृत्त कर रहे हैं' इस प्रकार के ज्ञान से गौ को लाने आदि कार्यों में शिष्य की प्रवृत्ति होती है । आचार्य में रहने वाली जो प्रवर्तना है, वह तो अभिप्रायविशेष ही है, ऐसा कहते हैं ।

( नैयायिकों के मत में ) विधि का अर्थ प्रवर्तना या प्रेरणा नहीं है, क्योंकि नवजात शिशु में स्तनपान आदि की प्रवृत्ति में इष्टसाधनताज्ञान ( यह अभीष्ट का साधन है, ऐसा ज्ञान ) की कारणता आवश्यक होती है । उसीसे ही उपपत्ति अर्थात् कार्यसिद्धि हो जाने के कारण प्रवर्तना ज्ञान के हेतुत्व में कोई प्रमाण नहीं है । 'स्वर्गकामो यजेत' इत्यादि में प्रवर्तना है विषय जिसका, ऐसा याग है करण जिसका, और स्वर्ग है कर्म जिसका, ऐसी भावना, इस तरह के बोध को दूसरे अर्थात्

मीमांसकों ने ही माना है। क्योंकि प्रवर्तना के विषयत्व मात्र के ज्ञान से प्रवृत्ति की उपपत्ति नहीं होती। आवश्यक स्वर्ग की साधनता आदि के ज्ञान से ही उसमें प्रवृत्ति सम्भव है।

प्रभाकर के मतानुयायी तो कार्य को ही विधि मानते हैं। 'स्वर्गकामो यजेत' इत्यादि में स्वर्ग चाहने वाला व्यक्ति नियोज्य (प्रवृत्त कराये जाने वाला) वाला, याग का विषय वाला कार्य, ऐसा प्राथमिक बोध होता है। नियोज्य के सहित याग-विषयक स्थायी स्वर्ग का साधन वाला कार्य, ऐसा दूसरा बोध होता है। स्वर्गकामी है नियोज्य जिसमें, ऐसा याग स्वर्ग चाहने वाले को करना चाहिए, ऐसा तीसरा बोध होता है। स्वर्ग चाहने वाला यज्ञ का कर्ता होता है, ऐसा चौथा ज्ञान हैं। मैं स्वर्ग चाहता हूँ, अतः याग मेंरे कार्य से सम्पाद्य है, ऐसा पाँचवाँ शाब्दबोध होता है।

(१३५) न च प्रथम एव स्वर्गकामकार्यो याग इति बोधोऽस्तु, तथा च कार्यत्वे एव शक्तिर्न कार्ये इति वाच्यम्। यागादिक्रियायां नियोज्यान्वयं विना कार्यत्वान्वयानुपपत्तेः। नियोज्यत्वं हि क्रियानिष्ठकाम्यसाधनताज्ञानाधीनं मत्कार्यमिति बोधवत्त्वम्। तच्च स्वर्गकामनाविशिष्टे योग्यतावच्छेदकतया भासते। 'घटेन जलमाहर' इत्यत्र घटे छिद्रेतरत्ववत्। न च यागे स्वर्गसाधनत्वज्ञानं विनेदृशं नियोज्यत्वं भातुमर्हति। न वा यागे स्वर्गसाधनत्वं प्रथममेव शक्यं ज्ञातुम्। तद्धि साक्षात्परम्परया वा। नाद्यः। आशुविनाशिनो यागस्य कालान्तरभाविस्वर्गरूपफले साक्षादहेतुत्वात्। नान्त्यः। परम्पराघटकानुपूर्वानुपस्थितेः। अतो यागविषयकं कार्यमिति प्रथमबोधादपूर्वोपस्थितौ तद्द्वारा यागे स्वर्गसाधनत्वग्रहात् तत्र कार्यत्वबोध इत्युक्तम्। नियोज्यत्वञ्च पदानुपस्थितमपि योग्यतया शाब्दबोधे भासते द्वारमित्यस्य पिधेहि इतिवत्।

**व्याख्या**—न चैकेनैवार्थेन कार्यबोधो भवतीति प्रतिपादयितुं प्रकरणमारभते—न चेत्यादिना। न नैव। च अपि। **प्रथमे** स्वर्गकामनियोज्यकं यागविषयकं कार्यम् इत्यर्थे। **एव** हि। **स्वर्गकामकार्यः** स्वर्गकामेन स्वर्गाभिलाषिणा कार्यः साध्यः। **यागः** यज्ञः। **इति** इत्थम्। **बोधः** शाब्दबोधः। **अस्तु** स्यात्। **तथा च** एवमेव। **कार्यत्वे** कर्तव्यमित्येवार्थे कार्यतायामिति। **एव** हि। **शक्तिः** वाचकता। **न** नैव। **कार्ये** अपूर्वे। **इति** इत्थम्। **वाच्यं** कथनीयम्। **यागादिक्रियायां** यागप्रभृतिकार्ये। **नियोज्यान्वयं** इदं कार्यं ममेष्टसाधकमिति ज्ञानोत्पन्नकर्तव्यताबुद्धिविशिष्टव्यक्तिसम्बद्धताम्। **विना**। **कार्यत्वान्वयानुपपत्तेः** कर्तव्यतासम्बन्धासिद्धेः। **नियोज्यत्वं** नियोज्यभावः। **हि**। **क्रियानिष्ठकाम्यसाधनताज्ञानाधीनं** क्रियागताभीष्टसाधनरूपधर्मज्ञानोत्पन्नम्। **मत्कार्यं** मम कर्तव्यम्। **इति** इत्थम्। **बोधवत्त्वं** भावनायुक्तत्वम्। **तत्** नियोज्यत्वम्। **च** हि। **स्वर्गकामनाविशिष्टे** स्वर्गाभिलाषयुक्ते। **योग्यतावच्छेदकतया** योग्यताबोधकरूपेण। **भासते** अवद्योतितं भवति। **घटेन जलमाहर इत्यत्र** इत्यादिवाक्ये। **घटे** कुम्भे। **छिद्रेतरत्ववत्** जलानयनयोग्यताबोधकच्छिद्ररहिततावत्। तथैव स्वर्गाभिलाषिणि यजनयोग्यता-

सूचकनियोज्यताऽस्तीति । **न** नैव । **च** हि । **यागे** यज्ञे । **स्वर्गसाधनत्वज्ञानं** स्वर्गसाधनतारूपज्ञानम् । **विना** । **ईदृशम्** उपर्युक्तम् । **नियोज्यत्वं** नियोजता । **भातुं** प्रकटयितुम् । **अर्हति** योग्यं भवति । **न** नैव । **वा** इति विकल्पे । **यागे** यज्ञे । **स्वर्गसाधनत्वं** स्वर्गप्राप्तिसाधनताम् । **प्रथमम्** । **एव** । **ज्ञातुं** बोधयितुम् । **शक्यं** सम्भवि । **तद्** यागस्य स्वर्गसाधनत्वम् । **हि** । **साक्षात्** प्रत्यक्षतः । **परम्परया** अन्यमाध्यमतः । **वा** इति विकल्पे । **न** नैव । **आद्यः** प्रथमः न हि यागः साक्षात्स्वर्गसाधनत्वं भजते इति । **आशुविनाशिनः** शीघ्रनाशशीलस्य क्षणिकस्येति । **यागस्य** यज्ञस्य । **कालान्तरभाविस्वर्गरूपफले** निधनानन्तरप्राप्यस्वर्गरूपफले । **साक्षात्** प्रत्यक्षतः । **अहेतुत्वात्** कारणाभावात् । **न** नैव **च** । **अन्त्यः** परम्परायाः घटकस्य यागस्वर्गप्राप्तिमध्यगतस्य अपूर्वस्य अनुपस्थितेः एकार्थमात्रस्वीकारेऽनुदयात् । **अतः** अस्मादेव हेतोः । **यागविषयकं** यज्ञसम्बद्धम् । **कार्यम्** अपूर्वोऽदृष्टो वा । **इति** इत्थम् । **प्रथमबोधात्** आद्य ज्ञानात् । **अपूर्वोपस्थितौ** अपूर्वोत्पत्तौ । **तद्द्वारा** अपूर्वद्वारेण । **यागे** यज्ञे । **स्वर्गसाधनत्वग्रहात्** स्वर्गसाधनतानिश्चयात् । **तत्र** यागे । **कार्यत्वबोधः** इदमवश्यमेव कर्तव्यमिति ज्ञानम् । **इति** इत्थम् । **उक्तं** कथितम् । **नियोज्यत्वं** नियोज्यभावः । **च** हि । **पदानुपस्थितं** पदेनानुक्तम् । **अपि च** । **योग्यता** आकाङ्क्षावशात् । **शाब्दबोधे** शब्दार्थज्ञाने । **भासते** द्योतते । **द्वारम्** इत्यस्य कथने । **पिधेहि** आवृतकपाटं कुरु । **इतिवत्** । यथा हि द्वारमित्युक्ते पिधेहि इत्यस्याकाङ्क्षावशात् पदानुक्तत्वेऽपि बोधस्तथैवात्र नियोज्यत्वस्येत्याशयः । एतेन पञ्चानामेवार्थानामुपयुक्तत्वं सिद्धमिति । कथनस्यास्यायमाशयः—ननु प्रथमबोधे एव स्वर्गकामेन यागः कर्तव्य इति ज्ञानमुत्पद्यते लिङ्वाच्यार्थत्वेन कार्यम् ( अपूर्वविशेषम् ) मत्वा तत्रैव कार्यता कर्तव्यभावना वा स्वीकार्या किमनेन प्रक्रियादैर्घ्येणेति चेदुच्यते इष्टसाधनतायाः कर्तव्यज्ञानोत्पत्तावेव कर्तव्यभावनोदेति तेनैव नियोज्यसम्बद्धतां विना यागादिक्रियासु कार्यतासम्बन्धोऽपि नोदेति । यागो मेऽभीष्टस्वर्गसाधकोऽतो मया यागः कर्तव्य इति ज्ञानविशिष्टव्यक्तिरेव नियोज्यपदेन गृह्यते । नियोज्यताधर्मो हि तत्कार्यसाधके तिष्ठति । यावत्सा कर्तव्यभावना नोदेति तावत्साधके तत्कार्ययोग्यताऽपि नोदेति । तेनेष्टसाधनताज्ञानोत्पाद्यकर्तव्यबुद्धिरेव कार्यस्य सिद्धौ हेतुः । कार्ये प्रवृत्त्यर्थं नियोज्यताऽवश्यकी । यागेऽपि तावन्नियोज्यता नोदेति यावद्यागो हि स्वर्गसाधनमिति न ज्ञायते । यागो हि साक्षान्नैव स्वर्गसाधनं तस्य क्षणिकत्वात्स्वर्गप्राप्तेः कालान्तरलभ्यत्वात् । परम्परयाऽपि न तावत्सः स्वर्गसाधनं यावत्तद्ग्राहकापूर्वोत्पत्तिर्नैव स्वीक्रियते । तेन प्रथमेऽर्थे यागोत्पन्नस्य साक्षात्स्वर्गसाधनभूतस्यापूर्वस्य प्रस्तुतिः । द्वितीयेऽर्थेऽपूर्वस्य साक्षात्स्वर्गसाधनत्वं तस्य च यागादेवोत्पत्तिरिति परम्परया यागस्य स्वर्गसाधनत्वं प्रतिपाद्यते । तृतीयेऽर्थे यतो हि यागः स्वर्गसाधनमतः स्वर्गाभिलाषिणा स विधातव्य इति ज्ञायते । यागविषयकप्रवृत्तौ हेतुत्वादयमेवार्थो मुख्यः । चतुर्थे कृतेराश्रयतोच्यते पञ्चमे तु यागविषयकप्रवृत्त्युत्पादनमिति सर्वेषामेवार्थानामुपयोगित्वमिति । तत्रापि प्रथमतृतीयार्थौ मुख्यौ, इतरे तु मानसिकत्वात्स्पष्टार्थमेव ।

**हिन्दी**—ऊपर बतलाया गया है कि 'स्वर्गकामो यजेत' इस वाक्य के पांच प्रकार

के अर्थ हैं—( १ ) स्वर्गकामव्यक्तिनियोज्य-विषयक कार्य । ( २ ) नियोज्यसहित याग-विषयक स्थायी स्वर्गसाधनवान् कार्य । ( ३ ) स्वर्गकामी नियोज्य है जिसमें, ऐसा याग स्वर्ग चाहने वाले को करना चाहिए । ( ४ ) स्वर्गकामी यज्ञ का कर्ता होता है । ( ५ ) मैं स्वर्ग चाहता हूँ, अतः याग मेरे द्वारा सम्पादनीय है ।

इन पाँचों अर्थों में से प्रथम वाक्य में ही 'स्वर्ग चाहने वाले के द्वारा सम्पादनीय याग है' ऐसा बोध क्यों नहीं होता ? क्योंकि कार्यता में ही शक्ति है, कार्य में नहीं। तो ऐसा नहीं कह सकते, यागादि क्रिया में नियोज्य के अन्वय में विना कार्यता की उपपत्ति ही नहीं होगी । क्योंकि 'क्रियानिष्ठकाम्यसाधनताज्ञान के अधीन मेरा कार्य है' यह बोध नियोज्यत्व कहलाता है । और वह बोध स्वर्गकामना-विशिष्ट कार्य में योग्यतावच्छेदकता के द्वारा प्रकाशित होता है । जैसे—'घड़े से जल लाओ' इस वाक्य में 'घड़ा छिद्ररहित है' यह बोध स्वयं स्पष्ट होता है । 'याग में स्वर्गसाधनता पहले ही जानी जा सकती है' ऐसा नहीं कह सकते । इसमें प्रश्न उठेगा कि वह साक्षात् या परम्परा से जानी जा सकेगी ? यहाँ साक्षात् पक्ष मानें तो आशुविनाशी याग का कालान्तरभावी स्वर्गरूप फल में हेतुत्व का अभाव होगा । यदि परम्परा पक्ष मानेंगे तो परम्पराघटक आनुपूर्वी की उपस्थिति का अभाव होगा । इसलिए 'यागादिविषयक कार्य' इस प्रथम बोध से अपूर्वोपस्थिति में उसके द्वारा याग में स्वर्ग-साधनता का ग्रहण होने लगेगा । यहाँ 'कार्यता का बोध' ऐसा कहा गया है। नियोज्यत्व तो पद की अनुपस्थिति में भी शाब्दबोध में स्वयं भासित होता है। जैसे 'दरवाजा' यह शब्द कहने पर 'बन्द करो' यह अर्थ स्वयमेव भासित होता है ।

( १३६ ) प्रवर्तकज्ञानविषयो विधिरिति नैयायिकाः । प्रवर्तकत्वञ्च कृतिसाध्यत्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वानां ज्ञानम् । अतस्तेषु लिङ्-शक्तित्रयम् । सुमेरुशृङ्गाहरणनिष्फलाचरणमधुविषसम्पृक्तान्नभोजनेषु प्रवृत्ति-वारणाय यथासङ्ख्यं त्रयाणामेव ज्ञानं प्रवर्तकम् ।

यत्तु समुदिते शक्तिरेकैवेति । तन्न । विशेष्यविशेषणविनिगमकाभावेन त्रिष्वेव पृथक् शक्तेः । एवञ्च स्वर्गकामो यजेतेत्यादौ स्वर्गकामीयो यागः कृतिसाध्यः इष्टसाधनं बलवदनिष्टाननुबन्धी च इति बोध इत्येके ।

**व्याख्या**—नैयायिकसम्मतं विधिशब्दार्थमुपपादयति—**प्रवर्तके**त्यादिना । **प्रवर्तक-ज्ञानविषयः** प्रवर्तकं प्रेरकं ज्ञानं विषय उत्पाद्यो यस्य स तादृशः प्रेरकज्ञानोत्पादकः । **विधिः** विधिशब्दार्थः । **इति** । **नैयायिकाः** तार्किकाः । **प्रवर्तकत्वं** प्रेरकता । **च** हि । **कृतिसाध्यत्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वानां** कृतिसाध्यत्वं यत्नसम्पाद्यत्वम् इष्टसाधनत्वम् अभीष्टपूर्तिसाधनता बलवदनिष्टाननुबन्धित्वं प्रबलानिष्टोत्पादकता-ऽभावश्च तेषाम् । **ज्ञानम्** अवबोधः । **अतः** हेतोरस्मात् । **तेषु** कृतिसाध्यत्वेष्टसाधनत्व-बलवदनिष्टाननुबन्धित्वेषु । **लिङ्शक्तित्रयं** लिङो हि त्रिविधा शक्तिः । **सुमेरुशृङ्गा-**

हरणनिष्फलाचरणमधुविषसम्पृक्तान्नभोजनेषु सुमेरुपर्वतशिखरानयनं निष्प्रयोजनकार्यसंलग्नता मधुविषमिश्रितान्नभोजनञ्चैतेषु एतद्विधेषु कार्येषु प्रवृत्तिवारणाय संलग्नतानिवारणाय। यथासङ्ख्यं क्रमेण। त्रयाणां कृतिसाध्यत्वादीनाम्। एव हि। ज्ञानम् अवबोधः। प्रवर्तकं प्रवृत्तिनिमित्तकम्। कृतिसाध्यत्वज्ञानाभावेऽपि प्रवृत्तौ सुमेरुशिखरानयनाद्यसम्भवकार्येऽपि प्रवृत्तिः स्यात्। इष्टसाधनत्वज्ञानाभावेऽपि प्रवृत्तौ निष्प्रयोजनकार्यकरणेऽपि प्रवृत्तिः स्यात्। प्रबलानिष्टाननुबन्धित्वाभावेऽपि प्रवृत्तौ मधुविषमिश्रितान्नभोजने प्रवृत्तिः स्यादित्येतेषां त्रयाणामेव ज्ञानं प्रवर्तकमित्युक्तम्। यत् यदेव। तु हि। समुदिते त्रिविधानामेव ज्ञानानां समुदाये। एका। एव। शक्तिः वाचकता। इति इत्थम्। उच्यते कथ्यते। तत् तादृशं कथनम्। न नैवोपयुक्तम्। विशेष्यविशेषणविनिगमकाभावेन प्रधानाप्रधाननिश्चायकप्रमाणाभावेन। त्रिषु कृतिसाध्यत्वेषु। एव हि। पृथक् शक्तेः। एवम् इत्थम्। च अपि। स्वर्गकामो यजेत इत्यादौ इत्यादिवाक्ये। स्वर्गकामीयः स्वर्गाभिलाषसम्बन्धः। यागः यज्ञः। कृतिसाध्यः यत्नसम्पाद्यः। इष्टसाधनं स्वर्गप्राप्तिरूपाभीष्टसाधनम्। बलवदनिष्टाननुबन्धी प्रबलानिष्टानुत्पादकः। च अपि। इति इत्थम्। बोधः शाब्दबोधः। इति इत्थम्। एके अपरे। अयमाशयः—नैयायिकमते विधिर्हि कार्ये प्रवृत्तिजनकस्तेन प्रवर्तकज्ञानमेव विधेर्विषयः। तेन प्रवर्तकज्ञानेनैव कश्चित्कस्मिन्नपि कार्ये प्रवृत्तो भवति। अतः प्रवृत्तिजनक ज्ञानमेव प्रवर्तकज्ञानम्। प्रवर्तकज्ञानं हि त्रिविधं कर्तव्यकार्यं न प्रयत्नासाध्यमिति ज्ञानं तत्कार्यं ह्यभीष्टप्रयोजनसाधनमिति ज्ञानं न हि तस्मात्प्रबलमनिष्टमिति ज्ञानम्। एतज्ज्ञानत्रयविशिष्ट एव तत्कार्ये प्रवृत्तो भवति। प्रयत्नासाध्यतया न कोऽपि मेरुशृङ्गोत्पाटने प्रवृत्तो भवति, कामं तस्मात्स्वर्णादिप्राप्तिः पर्याप्ता किं न भवेत्। अभीष्टासाधनत्वेन न कोऽपि समुद्रतरङ्गान् परिगणयति। तृप्तिरूपाभीष्टसाधनेऽपि ततोऽपि प्रबलानिष्टसाधनतया न कोऽपि मधुविषमिश्रितमन्नं भुङ्क्ते। अतः प्रवृत्तेरेतद्धेतुत्रयमालक्ष्यैव लिङस्त्रिविधा वाचकशक्तिः परिकल्पिता तार्किकैः। कृतिसाध्यतादृष्ट्या प्रथमा शक्तिः इष्टसाधनतादृष्ट्या द्वितीया प्रबलानिष्टानुत्पादकत्वेन तृतीयेति। केचित्तु कृतिसाध्यताबलवदनिष्टाननुबन्धितापेक्षया इष्टसाधनतायाः प्राधान्यात्सैव विध्यर्थो भवतु। यथा फलव्यापारयोर्धातोरेकैव शक्तिः स्वीकृता तथैवात्रापि स्यादिति। शक्तित्रयस्वीकारे शक्यतावच्छेदकत्रयमपि स्वीकर्तव्यं यद्धि भवेद् गौरवमिति। अत्रोच्यते—ज्ञानदृष्ट्या लिङः शक्तित्रयास्वीकारेऽर्थस्य प्राधान्याप्राधान्ययोर्निश्चयोऽसम्भवः। न हि शक्तेरतिरिक्तं किमपि प्रमाणं तद्विनिश्चये। शक्तित्रयस्वीकारे एव स्वर्गकामो यजेतेत्यस्य यागस्य यत्नसाध्यत्वमिष्टरूपस्वर्गसाधनत्वं प्रबलानिष्टानुत्पत्तिरिति बोध इति।

हिन्दी—प्रवर्तक ज्ञान है विषय ( उत्पाद्य ) जिसका, उसी को विधि कहना चाहिए, ऐसा नैयायिकों का मत है। प्रवर्तकता का अर्थ है—प्रयत्न से साध्य होना, इष्टपूर्ति का साधन होना एवं प्रबल अनिष्ट का अनुबन्धी ( उत्पादक ) न होना, इन तीनों का ज्ञान है। अतः इन तीनों अर्थों में लिङ् लकार की तीन प्रकार की शक्तियाँ हैं। सुमेरु

पर्वत की चोटी ले आना, विना प्रयोजन का काम करना, शुद्ध एवं विषमिश्रित भोजन, इन तीनों में प्रवृत्ति के निवारण के लिए क्रमशः तीनों के ही ज्ञान प्रवर्तक होते हैं।

समुदाय में शक्ति एक ही हो, ऐसा कहा जाता है, वह ठीक नहीं है। तीनों में कौन विशेष्य (प्रधान) है और कौन विशेषण (अप्रधान), इसके निश्चायक का अभाव होने से तीनों में ही पृथक्-पृथक् शक्ति है। इसी प्रकार 'स्वर्गकामो यजेत' इत्यादि में स्वर्गाभिलाषी से सम्बद्ध यज्ञ यत्नसाध्य है। यह स्वर्गप्राप्ति रूप इष्टप्राप्ति का साधन है, यह प्रबल अनिष्ट का अनुबन्धी नहीं है—इस प्रकार का बोध होता है, ऐसा कुछ लोग कहते हैं।

(१३७) वस्तुतो नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नतया तादृशयागानुकूलकृतिमान् स्वर्गकाम इत्येव बोधः। कृतिसाध्यत्वञ्च प्रवृत्तिसाध्यत्वम्। अतो न समुद्रतरणादौ प्रवृत्तिः। इष्टसाधनत्वञ्चेष्टनिष्ठसाध्यतानिरूपकत्वमतो न तृप्तस्य भोजने प्रवृत्तिः। बलवदनिष्टाननुबन्धित्वं तु स्वजन्येष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखा जनकत्वम्। 'न हि सुखं दुःखैर्विना लभ्यते। इति न्यायेन नान्तरीयकं किञ्चिद् दुःखमिष्टोत्पत्ताववश्यम्भावि। तदतिरिक्तदुःखराहित्यमेव तत्त्वम्।

व्याख्या—स्वर्गकामो यजेतेत्यत्र नैयायिकसम्मतमभेदान्वयमुपपादयति—वस्तुत इत्यादिना। वस्तुतः यथार्थतः। नामार्थधात्वर्थयोः प्रातिपदिकार्थधातुजन्यार्थयोः। भेदेन भेदसम्बन्धेन। साक्षात् प्रत्यक्षतः। अन्वयस्य सम्बन्धस्य। अव्युत्पन्नतया असिद्धतया। तादृशयागानुकूलकृतिमान् तादृशः प्रयत्नसाध्य इष्टसाधनं प्रबलानिष्टाननुबन्धी च। यो यागः यज्ञस्तदनुकूला तत्साधिका या कृतिर्यत्नस्तद्वान्। स्वर्गकामः स्वर्गाभिलाषी। इत्येव एतादृश एव। बोधः शाब्दबोधः। तत्र कृतिसाध्यत्वं प्रयत्नसम्पाद्यत्वम्। च हि। प्रवृत्तिसाध्यत्वं प्रवृत्त्या प्रवर्तनेन साध्यत्वं सम्पाद्यत्वमिति। अतः प्रयत्नासाध्यतया समुद्रतरणादौ बाहुभ्यां समुद्रतरणाद्यसम्भवकार्ये। न नैव। प्रवृत्तिः संलग्नता। इष्टसाधनत्वम् अभीष्टपूर्तिसाधनता। च तु। इष्टनिष्ठसाध्यतानिरूपकत्वम् इष्टनिष्ठा या साध्यता तन्निरूपकत्वं निश्चायकत्वम्। इष्टविद्यमानसाध्यतासाधनत्वमिति। अतः इष्टसाधनत्वाभावात्। तृप्तस्य कृतपर्याप्तभोजनस्य। भोजने भक्षणादौ। न नैव। प्रवृत्तिः प्रवर्तना। बलवदनिष्टाननुबन्धित्वं प्रबलानिष्टोत्पादकत्वम्। तु हि। स्वजन्येष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वं स्वजन्या यागादिकार्योत्पाद्या या इष्टोत्पत्तिः स्वर्गादिप्राप्तिस्तत्र नान्तरीयकमनिवार्यं यद् दुःखं ततोऽधिकं यद् दुःखं तस्य अजनकत्वमनुत्पादकत्वम्। इष्टोत्पत्तौ यदनिवार्यं भवति दुःखं न ततोऽधिकदुःखोत्पादकत्वमिति। सुखं शर्म। दुःखैः कष्टैः। विना। न नैव। लभ्यते प्राप्यते। इति इत्थम्। न्यायेन न्यायतः। नान्तरीयकम् अपरिहार्यम्। किञ्चित्। दुःखम्। इष्टोत्पत्तौ अभीष्टोत्पत्तौ। अवश्यम्भावि अपरिहार्यम्। तदतिरिक्तदुःखराहित्यं तादृशानिवार्यदुःखातिरिक्तदुःखाभावः। एव हि। तत्त्वं प्रबलानिष्टाननुबन्धित्वमिति।

स्वर्गकामो यजेतेत्यत्र स्वर्गकाम इति प्रातिपदिकार्थो यजेतेति धात्वर्थः। न हि नामार्थधात्वर्थयोर्भेदसम्बन्धेन साक्षादन्वयो व्युत्पन्नः। नात्र काचित् षष्ठ्यादिविभक्तिर्या भेदसम्बन्धेनान्वयं साधयति। तेनात्राभेदान्वयः कर्तव्यो यागानुकूलप्रयत्नवान् स्वर्गाभिलाषी इति।

हिन्दी—वास्तव में नामार्थ एवं धात्वर्थ का भेद सम्बन्ध से अन्वय व्युत्पन्न न होने से उस प्रकार के ( प्रयत्नसाध्य, इष्टसाधन एवं बलवदनिष्टाननुबन्धी ) यज्ञ के अनुकूल यत्न से युक्त स्वर्गाभिलाषी, ऐसा ही बोध होता है। कृति से साध्य होना, इसका अर्थ है—प्रवृत्ति ( प्रयत्न ) से साध्य होना। इस कारण ( यत्नसाध्य न होने से ) ( हाथों से ) समुद्र तरने आदि ( निरर्थक ) कार्यों में प्रवृत्ति नहीं होती। इष्ट की साधनता जो है, वह अभीष्ट में रहने वाली जो साध्यता है, उसका साधन बनना। इस कारण भोजन से तृप्त व्यक्ति की भोजन में प्रवृत्ति नहीं होती। प्रबल अनिष्ट का अनुबन्धी न होना जो है, वह अपने से उत्पाद्य इष्ट की उत्पत्ति में जो आवश्यक दुःख होता है, उस दुःख से अधिक दुःख न होना। 'दुःख के विना सुख नहीं मिलता' इस न्याय से इष्टोत्पत्ति में थोड़ा-सा नान्तरीयक अर्थात् अनिवार्य दुःख तो अवश्यम्भावी है ही। उससे ज्यादा दुःख से रहित होना ही प्रबल अनिष्ट का अनुत्पादकत्व है।

( १३८ ) ब्राह्मणो न हन्तव्य इत्यादौ नञः कृतिसाध्यत्वेष्टसाधनत्वनिषेधे स्वारस्याभावात्तेन बलवदनिष्टाननुबन्धित्वाद् ब्राह्मणवधो बलवदनिष्टजनकः इत्यर्थः पर्यवस्यति। एतेन समुदिते लिङ्शक्तिकल्पनमपास्तम्।

व्याख्या—ब्राह्मणो न हन्तव्य इति वाक्ये लिङर्थं निरूपयति—ब्राह्मण इत्यादिना। 'ब्राह्मणो न हन्तव्यः' इत्यादौ इत्यादिवाक्ये। नञः नञ्शब्दस्य। कृतिसाध्यत्वेष्टसाधनत्वनिषेधे कृतिसाध्यत्वं यत्नापाद्यत्वम् इष्टसाधनत्वमभीष्टप्राप्तिसाधनता तयोर्निषेधे निवारणे। स्वारस्याभावात् स्वारस्यं सङ्गतिस्तस्या भावाद्विरहात्। तेन नञा। बलवदनिष्ठाननुबन्धित्वनिषेधात् प्रवलदुःखानुत्पादकतानिषेधेन। ब्राह्मणवधः विप्रहत्या। बलवदनिष्टजनक प्रबलानिष्टोत्पादकः। इति इत्थम्। अर्थः। पर्यवस्यति अन्ततो ज्ञातो भवति। न हि ब्राह्मणवधो बलवदनिष्टाननुबन्धी अपितु तदनुबन्ध्येवेत्यर्थो ज्ञायत इत्याशयः। एतेन नञः केवलं बलवदनिष्टाननुबन्धित्वनिषेधे स्वारस्यात्। समुदिते अर्थत्रयसमुदाये। लिङ्शक्तिकल्पनं लिङः शक्तिरिति कथनम्। अपास्तं निरस्तमिति। यदि हि समुदिते शक्तिः स्यात्तदा ब्राह्मणो न हन्तव्यः इत्यत्रत्यनञः कृतिसाध्यत्वनिषेधे इष्टसाधनत्वनिषेधे वाऽर्थः पर्यवस्येत्, यत्र न हि तस्य किमपि स्वारस्यमपितु तत्स्वारस्यं तु प्रबलानिष्टानुत्पादकतानिषेधे एव। प्रबलानिष्टस्यानुत्पादकत्वं नेति द्वाभ्यां निषेधाभ्यां तदुत्पादकत्वं गम्यते। अतस्त्रिष्वेव शक्तिर्लिङो न तु समुदिते इति।

हिन्दी—'ब्राह्मणो न हन्तव्यः' इस वाक्य में नञ् का कृतिसाध्यत्व एवं इष्टसाधनत्व के निषेध में स्वारस्य अर्थात् उपयोग न होने से उससे प्रबल अनिष्ट के

अनुत्पादकता के निषेध से ब्राह्मणवध प्रबल अनिष्ट का जनक है, ऐसा अर्थज्ञान होता है। इससे तीनों के समुदाय में लिङ् शक्ति की कल्पना निरस्त हो जाती है।

( १३९ ) यद्यपि प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययस्येति व्युत्पत्त्या नञर्थे बलवदनिष्टाननुबन्धित्वान्वयोऽसंम्भवी तथाप्यन्यथानुपपत्त्या एतदतिरिक्तस्थले एव सा व्युत्पत्तिः। अत एव 'नातिरात्रे षोडशिनं गृह्णाति' इत्यादौ षोडशिग्रहणाभावे इष्टसाधनमिति बोध इति दीधितिकृतः। न हन्तव्य इत्यादौ हननाभावविषयकं कार्यमिति बोध इति गुरवः।

ननु पचति इत्यादौ लडाद्यर्थवर्तमानत्वादेर्यत्ने एवान्वयान्न सा व्युत्पत्तिः। मैवम्। यत्र प्रत्ययत्वं तत्र प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्याप्तेः। यः प्रत्ययार्थः सः प्रकृत्यर्थस्य विशेष्यतया भासते इति व्याप्तेश्च।

**व्याख्या**—ब्राह्मणो न हन्तव्य इति वाक्यस्यार्थविषयं पुनर्निरूपयति—**यद्यपी-त्यादिना**। **यद्यपि प्रत्ययस्य** लकारादेः। **प्रकृत्यर्थान्वितस्वार्थबोधकत्वं** यस्मात्प्रत्ययो विधीयते तत् प्रकृतिस्तस्या योऽर्थस्तेनान्वितस्य स्वार्थस्य स्वबोध्यार्थस्य बोधकत्वं ज्ञापकत्वम्। प्रत्ययो हि प्रकृत्यर्थान्वितस्वार्थं बोधयति। **इति**। **व्युत्पत्त्या** व्युत्पत्त्यनुसारेण। **नञर्थे** नञ्द्योत्यार्थे। **बलवदनिष्टाननुबन्धित्वान्वयः** प्रबलानिष्टोत्पादकत्वेऽन्वयः। **असम्भवी**। न हि तव्यत्प्रत्ययार्थो नञर्थेनान्वेत्यपितु प्रकृतिभूत हन्धातावेव यतस्तेन बलवदनिष्टाननुबन्धित्वनिषेधो नैव सम्भव इत्याशयः। **तथापि** तथाभूते सत्यपि। **अन्यथानुपपत्त्या** उपायान्तरेणार्थासङ्गत्या। **एतदतिरिक्तस्थले** नञ्युक्तलिङ्प्रयोगभिन्नस्थले। **एव** हि। **सा** प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति। **व्युत्पत्तिः**। **अत एव** हेतोरस्मादेव। नातिरात्रे षोडशिनं गृह्णाति **इत्यादौ** इत्यादिवाक्ये। बलवदनिष्टाननुबन्धित्वान्वयासम्भवेन **षोडशिग्रहणाभावः** तदाख्यपात्रग्रहणम्। **इष्ट-साधनम्** अभीष्टपूर्तिसाधनम्। **इति** इत्थम्। **बोधः** शाब्दबोधः। **इति** इत्थम्। **दीधितिकृतः** श्रीरघुनाथभट्टाचार्या इति। न हन्तव्यः **इत्यादौ** इति वाक्ये। **हननाभाव-विषयकं** हननस्य अभाव एव विषयो यस्य तत् तादृशम्। **कार्यम्** अपूर्वः। **इति** इत्थम्। **बोधः** शाब्दबोधः। **इति**। **गुरवः** प्रभाकरमतानुयायिनः। **ननु** इति प्रश्ने। **'पचति' इत्यादौ**। **लडाद्यर्थवर्तमानत्वादेः** लट्प्रभृतिप्रत्ययार्थभूतवर्तमानकालादेः। यो हि नापि प्रकृत्यर्थस्तथापि तस्य **यत्ने** कृतौ। **एव** हि। **अन्वयात्** सम्बन्धात्। **न** नैव। **सा** प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति। **व्युत्पत्तिः** इत्युच्यते चेदुच्यते **एवम्** एतादृशी व्युत्पत्तिः। **मा** नैवोपयुक्ता। **यत्र**। **प्रत्ययत्वं** प्रत्ययभावः। **तत्र** तादृशस्थले। **प्रकृत्यर्थान्वितस्वार्थबोधकत्वं** प्रकृतेर्योऽर्थस्तदान्वितो यः स्वार्थः प्रत्ययार्थस्तस्य बोधकत्वं ज्ञापकत्वम्। **इति** इत्थम्। **व्याप्तेः** व्याप्तिविषयत्वात्। **यः प्रत्ययार्थः** प्रत्ययबोध्यार्थः। **सः प्रकृत्यर्थस्य** प्रकृतिजन्यार्थस्य। **विशेष्यतया** विशेष्यरूपेण। **भासते** द्योतते। **इति** इत्थम्। **व्याप्तेः**। **च**। **इति**।

प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थावबोधकत्वमिति व्युत्पत्तिः। यदि सा नैव स्वीक्रियते

तदा 'दण्डिनमानय' इत्यादौ द्वितीयाविभक्तिरूपप्रत्ययार्थभूतकर्मत्वान्वयो यदा कदा दण्डेऽपि स्यात्। व्युत्पत्त्या यस्यां स्वीकृतायां ब्राह्मणो न हन्तव्य इत्यत्र न हि नञि प्रबलानिष्टाननुबन्धित्वस्यान्वयो यतो ह्यर्थोऽयं तव्यत्प्रत्ययस्यार्थो यो हि हन्धाता-न्वेति न तु नञि। तथापि उपायान्तराभावेन व्युत्पत्तिरियं नञ्विशिष्टलिङतिरिक्त-स्थले एव स्वीकार्या। तेन 'नातिरात्रे षोडशिनं गृह्णाति' इत्यत्र न बलवदनिष्टाननु-बन्धित्वनिषेधोऽपितु षोडशिग्रहणाभाव इष्टसाधनमिति दीधितिकृतां मतम्। प्राभा-करमते तु न हन्तव्य इत्येतस्य ब्राह्मणहननाभावोत्पन्नपुण्यमित्याशयः। ते हि हननस्य नञोऽभावेऽर्थेऽन्वयं कृत्वाऽभावस्य लिङर्थभूतापूर्वेण सहान्वयं कृत्वाऽभावस्य लिङर्थ-भूतापूर्वेण सहान्वयं कुर्वन्ति। तदनुसारेण हननाभावयोः स्वप्रतियोगिकतासम्बन्धः अभावपूर्वयोस्तु प्रयोज्यतासम्बन्धो यतोऽभावस्यापूर्वः प्रयोज्यः। हननाभावेनापूर्वो-त्पत्तिर्यतो हि ब्राह्मणहननाभावोत्पाद्यपुण्यमित्युपपत्तिः। एतद्विपरीतं नैयायिकमते तु ब्राह्मणवधो ह्यनिष्टोत्पादक एव। न च पचतीत्यादौ लडर्थभूतवर्तमानत्वादेर्यत्नेऽन्वयेन कथं सा व्युत्पत्तिरत्र सिद्धेति चेदुच्यते—लडादिप्रत्ययो हि स्वप्रकृतिभूतधात्वर्थान्वित-वर्तमानत्वादेरेव बोधं कारयति। लडादिप्रत्ययार्थभूतवर्तमानत्वादेः प्रकृत्यर्थभिन्ने यत्नेऽन्वयेऽपि सयत्नः प्रत्ययार्थः धात्वर्थेऽप्यन्वेतीति न दोषः। अपरञ्च प्रत्ययार्थः सदैव प्रकृत्यर्थस्य विशेष्यत्वं भजते। तेन पचतीत्यादौ प्रत्ययार्थभूतवर्तमानकालिकयत्नः प्रकृत्यर्थभूतकस्य विशेष्य इति न हि तत्र कश्चिद्विरोधः।

**हिन्दी**—यद्यपि 'प्रत्यय प्रकृति के अर्थ से अन्वित अपने अर्थ का बोध कराता है' इस व्युत्पत्ति से नञर्थ में प्रबल अनिष्ट का अनुत्पादकत्व का अन्वय सम्भव नहीं होता। वैसा होने पर भी दूसरी उपपत्ति न होने के कारण जहाँ नञ् के साथ लिङ् हो, उससे भिन्न स्थल में ही वह व्युत्पत्ति कारगर हो सकती है। इसी कारण 'नाति-रात्रे षोडशिनं गृह्णाति' इत्यादि में 'षोडशी' के ग्रहण का अभाव इष्टसाधन का बोध होता है, ऐसा दीधितिकार का मत है। 'न हन्तव्यः' इत्यादि में 'हनन के अभाव से उत्पन्न पुण्य' ऐसा बोध होता है, यह प्रभाकर के अनुयायी मीमांसकों का मत है। 'पचति' इत्यादि में लट् आदि के अर्थ वर्तमानत्व आदि का कृति में ही अन्वय होने से वह व्युत्पत्ति वहाँ सही नहीं है, ऐसी बात नहीं है। जहाँ-जहाँ प्रत्ययता है, वहाँ-वहाँ प्रकृति के अर्थ से अपने अर्थ की बोधकता है, ऐसी व्याप्ति है। जो प्रत्यय का अर्थ है, वह प्रकृति के अर्थ के विशेष्य के रूप में द्योतित होता है, ऐसी भी व्याप्ति है।

(१४०) लेटस्तु यच्छब्दासमभिव्याहृतस्यैव विधिरर्थः। 'समिधो यजति' इत्यादौ विधिप्रत्ययात्। 'देवांश्च याभिर्यजते ददाति च' 'य एवं विद्वानमावा-स्यायां यजते' इत्यादौ तदप्रत्ययात् इति।

**व्याख्या**—लेटोऽर्थविषयं निरूपयति—लेटः लेट्लकारस्य। तु हि। यच्छब्दा-समभिव्याहृतस्य यच्छब्देन असमभिव्याहृतस्य असहोच्चारितस्य। एव नान्यथा विधिः। अर्थः। 'समिधो यजति' इत्यादौ विधिप्रत्ययात् विध्यर्थावबोधनात्। 'देवांश्च याभिर्यजते

ददाति च, य एवं विद्वानमावास्यायां यजते'। इत्यादौ इत्यादिवाक्ये। तदप्रत्ययात् तस्य विधेरप्रत्ययादनवबोधनात् अपि शब्दसमभिव्याहारे एव शब्दसमभिव्याहारे च लेटो न विध्यर्थं इति। तन्त्रवार्तिकेऽप्युक्तम् —

'येषामाख्यातशब्दानां यच्छब्दाद्युपबन्धनात्।
विधिशक्तिः प्रणश्येत ते सर्वत्राभिधायका॥' इति

हिन्दी—लेट् लकार का 'यत्' शब्द के साथ प्रयुक्त न होने पर ही विधि अर्थ होता है। 'समिधो यजति' इत्यादि में विधि का बोध होता है। 'देवाँश्च याभिर्यजते ददाति च' 'य एवं विद्वानमावास्यायां यजते' इत्यादि में विधि का बोध नहीं होता (क्योंकि इन दोनों में यत् शब्द का प्रयोग है।)।

(१४१) लृङ्स्तु भूतत्वं क्रियातिपत्तिश्चार्थः। अतिपत्तिरनिष्पत्तिरापादनरूपा। सा च शक्या। सा चापादना तर्कः। तर्कत्वं मानसत्वव्याप्यो जातिविशेषः। एधाँश्चेदलप्स्यतौदनमपक्ष्यदित्यादौ एधकर्मको भूतत्वेनापादनाविषयो यो लाभस्तदनुकूलकृतिमान् ओदनकर्मको भूतत्वेनापादनाविषयो यः पाकस्तदनुकूलकृतिमाँश्चेति बोधः। भविष्यति क्रियातिपदनेऽपि लृङ्, यदि सुवृष्टिरभविष्यत्तदा सुभिक्षमभविष्यदिति प्रयोगदर्शनात्। भूतभविष्यत्वयोर्बोधनियमस्तात्पर्यात्। यदि स्यादित्यादौ लिङोऽप्यापादनायां शक्तिर्यदि निर्वह्निः स्यात्तर्हि निर्धूमः स्यादित्यादौ तस्या एव प्रतीतेः।

लाघवेन स्थानिनां वाचकत्वात्सङ्ख्याऽपि लकारार्थः।

इति लकारार्थनिर्णयः

---

व्याख्या—लृङोऽर्थविषयं निरूपयति—लृङ इत्यादिना। लृङः लृङ्लकारस्य। तु हि। भूतत्वं भूतकालः। क्रियातिपत्तिः क्रियायाः अतिपत्तिरनिष्पत्तिः। च अपि। अर्थः। अतिपत्तिः इति अनिष्पत्तिरसिद्धिः। सा च आपादनारूपा आपादना तर्कस्तद्रूपा। सा अतिपत्तिः। च हि। शक्या वाच्या। सा लृङ्वाच्यार्थभूता। आपादना इति तर्कः। तर्कत्वं तर्कभावः। मानसत्वव्याप्यः मानसरूपव्यापकजातिव्याप्यः। जातिविशेषः एवेति। भूतकाले क्रियाया असिद्धिरेव लृङर्थः। असिद्धिश्च केवलमापादनारूपेण प्रस्तूयते। आपादना हि तर्क एव। तर्कश्च मानसिको व्यापारविशेष इति। 'एधाँश्चेदलप्स्यतौदनमपक्ष्यत्' इत्यादौ इत्यादिवाक्ये। एधकर्मकः एधः दार्वादि कर्म यस्य तादृशः। भूतत्वेन भूतकालिकत्वेन। आपादनाविषयः तर्कविषयभूतः। यः। लाभः एधस्य भूतकाले प्राप्तिः। तदनुकूलकृतिमान् तदनुरूपयत्नयुक्तः। ओदनकर्मकः ओदनः कर्म यस्य तादृशः। भूतत्वेन भूतकालिकत्वेन। आपादनाविषयः तर्कविषयः। यः। पाकः पाककर्म। तदनुकूलकृतिमान् तदनुरूपयत्नवान्। च। इति इत्थम्। बोधः शाब्दबोधः। भविष्यति भविष्यत्काले। क्रियातिपदने क्रियाऽनिष्पत्तौ। अपि च। लृङ् लृङ्लकारः। यदि सुवृष्टिरभविष्यत्तदा सुभिक्षमभविष्यत् इति इत्थम्। प्रयोगदर्शनात् प्रयोगोपलब्धेः।

**भूतभविष्यत्त्वयोः** भूतकालभविष्यत्कालयोः। **बोधनियमः** ज्ञाननिश्चयः। **तात्पर्यात्** वक्तुरभिप्रायानुसारेणेति। **'यदि स्यात्'** **इत्यादौ** यदि स्यात् इत्यादिवाक्ये। **लिङः** लिङ्लकारस्य। **अपि च आपादनायां तर्के।** **शक्तिः** वाचकता। **'यदि निर्वह्निः स्यात् तर्हि निर्धूमः स्यात्** **इत्यादौ** इत्यादिवाक्ये। **तस्याः** आपादनायाः एव लिङर्थत्वेन। **एव हि। प्रतीतेः** अवभासनात्। आपादनारूपक्रियासिद्धेर्बोधात्।

**लाघवेन** लाघवप्रयोजनेन। **स्थानिनः** स्थानिभूतस्य लकारस्य। **वाचकत्वात्** अर्थावबोधकत्वात्। **सङ्ख्या** एकत्वादि। **अपि च। लकारार्थः** लकारवाच्यार्थः। **इति।**

---

**हिन्दी**—लृङ् लकार का भूतकाल एवं क्रिया की अतिपत्ति भी ( भूतकालीन क्रियातिपत्ति ) अर्थ है। अतिपत्ति का अर्थ है—आपादना रूप अनिष्पत्ति। वह वाच्य अर्थ है। वह आपादना तर्क है। तर्क मानसिक व्यापार है। अतः तर्कत्व मानसव्याप्य जातिविशेष है। 'एधाँश्चेदलप्स्यतौदनमपक्ष्यत्' इत्यादि में एध ( इन्धन ) कर्म वाला भूतकालीन आपादना विषय वाला जो लाभ है, उसके अनुकूल यत्न से युक्त ओदन कर्म वाला भूतकालीन आपादना का विषय वाला जो पाक है, उसके अनुकूल यत्न से युक्त भी, ऐसा शाब्दबोध होता है।

भविष्यत् काल में भी क्रिया की अनिष्पत्ति में लृङ् लकार होता है, क्योंकि यदि 'सुवृष्टिरभविष्यत्तदा सुभिक्षमभविष्यत्' ऐसा प्रयोग देखा जाता है। भूतत्व एवं भविष्यत्त्व के बोध का निश्चय वक्ता के तात्पर्य से होता है। 'यदि स्यात्' इत्यादि में आपादना में लिङ् की शक्ति होती है। यदि 'निर्वह्निः स्यात् तर्हि निर्धूमः स्यात्' इत्यादि में आपादना की ही प्रतीति होती है।

लाघव के कारण स्थानी ( लकार ) की ही वाचकता होने से सङ्ख्या भी लकार का ही अर्थ है।

**इस प्रकार लकारार्थ-निर्णय समाप्त हुआ।**

---

# अथ कारक-निरूपणम्

( १४२ ) अथ कारकाणि निरूप्यन्ते—

कर्ता कर्म च करणं सम्प्रदानं तथैव च।
अपादानाधिकरणमित्याहुः कारकाणि षट्॥

तत्र क्रियानिष्पादकत्वं कारकत्वम्। तच्च कर्त्रादीनां षण्णामपि।

**व्याख्या**—कारकं निरूपयन् प्रथमं तत्सङ्ख्यां परिगणयति—अथेत्यादिना। **अथ** इति प्रकरणारम्भे। **कारकाणि**। **निरूप्यन्ते** विचार्यन्ते तेषां स्वरूपं विवेच्यत इति। तदाह—कर्त्रेत्यादिना। कर्ता कर्म करणं सम्प्रदानं तथैव च अपादानाधिकरणम् इति षट् कारकाणि आहुः। **कर्ता** क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः। **कर्म** फलाश्रयः। **करणं** क्रियासिद्धौ साधकतमम्। **सम्प्रदानं** यमुद्दिश्य किञ्चिद् दीयते सः **अपादानं** यतो विश्लेषः। **अधिकरणम्** आधारः। **इति** इत्थम्। **षट्** षट्सङ्ख्याकानि। **कारकाणि** क्रियानिष्पादकानि। **आहुः** कथयन्तीति। कारकपरिभाषां प्रस्तौति—तत्रेत्यादिना। **तत्र** प्रकरणेऽस्मिन्। **क्रियानिष्पादकत्वं** क्रियायाः निष्पादकत्वमुत्पादकत्वम्। **कारकत्वं** कारकभावः। तदेव कारकं यद्धि साक्षात्परम्परया वा क्रियानिष्पादकं भवति। तत् क्रियानिष्पादकत्वेन कारकत्वम्। **कर्त्रादीनां** कर्तृप्रभृतीनाम्। **षण्णाम्**। **अपि** एव। षट्स्वेव कारकेषु क्रियानिष्पादकत्वं भवतीति।

शाब्दिकनयानुसारेण क्रियानिष्पादकत्वं कारकत्वमर्थात् क्रियोत्पादकरूपार्थयुक्तत्वं कारकत्वमिति। यदेव क्रियोत्पत्तौ कारणं तदेव कारकम्। महाभाष्ये उक्तम्—'कारकमिति महती संज्ञा क्रियते'''तत्र महत्या संज्ञायाः करणे एतत्प्रयोजनं यथाऽन्वर्थसंज्ञा विज्ञायेत—करोति इति कारकम्।' इति। कारकाणि हि स्वस्वव्यापारेणावान्तरक्रियाद्वारेण वा केनाऽपि रूपेण प्रधानक्रियोत्पत्तौ सहायकानि कारणानि वा भवन्ति। अतः सर्वेषामेव तेषां प्रधानक्रियायामन्वयः। यथा हि पचन्क्रियादृष्टचा पाकक्रियोत्पत्त्यनुकूलव्यापाराश्रयत्वेन देवदत्तः कर्ता क्रियोत्पादकः। तण्डुलादिकर्मणि विक्लित्याधाररूपव्यापारः इन्धनादौ ज्वालादिधारणारूपव्यापारः स्थाल्यादौ तण्डुलाधाररूपव्यापारः ऐते हि व्यापाराः पाकक्रियोत्पत्तौ कारणानि अतस्तेष्वस्ति कारकत्वम्। वाक्यपदीयेऽप्युक्तम्—

'निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके।
व्यापारभेदापेक्षायां करणत्वादिसम्भवः॥' इति।

**हिन्दी**—अब कारकों का निरूपण किया जाता है—

कर्ता-कर्म-करण-सम्प्रदान-अपादान एवं अधिकरण इन छः को कारक कहते हैं। उसमें क्रिया का निष्पादक होना ही कारक होना है। वह कारकत्व ( कारक होना ) कर्ता आदि छओं का धर्म है।

( १४३ ) तत्र प्रकृतधातुवाच्यव्यापाराश्रयत्वं कर्तृत्वम् ।
'धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते ।'

इति हर्युक्तेः । अन्य कारकनिष्ठो व्यापारस्तु न धातुवाच्यः । यथा—'वह्निना पचति' इत्यत्र वह्निनिष्ठः प्रज्वलनादिः । अन्यकारकनिष्ठव्यापाराश्रयस्य कर्तृत्ववारणाय धातुवाच्य इति । तत्रोक्ते तु कारकमात्रे प्रथमैव । 'तिङ्समानाधिकरणे प्रथमा' 'अभिहिते प्रथमा' इति वार्तिकद्वयात् ।

व्याख्या—कर्तृत्वं निरूपयति—तत्रेत्यादिना । तत्र षट्सु कारकेषु । धातुवाच्यव्यापाराश्रयत्वं धातुवाक्ये यो व्यापारस्तस्याश्रयत्वम् । कर्तृत्वं कर्तृभाव इति । उक्तार्थे हरिं प्रमाणयति—धातुनेत्यादिना । धातुना उक्तक्रिये कारके कर्तृता नित्यम् इष्यते इत्यन्वयः । धातुना क्रियावाचिशब्देन । उक्तक्रिये उच्चरितक्रिये । कारके क्रियानिष्पादके । कर्तृता कर्तृत्वम् । नित्यं सततम् । इष्यते । इति । हर्युक्तेः वाक्यपदीयकृद्धरिस्तेनोक्तेः । अन्यकारकनिष्ठः कर्त्रितरकर्मादिकारकवृत्तिः । व्यापारः क्रियानिष्पादकत्वम् । तु तद्व्यतिरिक्तम् । न नैव । प्रकृतधातुवाच्यः प्रकृतेन सम्बद्धेन धातुना क्रियावाचिशब्देन वाच्य इति । यथा इति निदर्शने । वह्निना पचति इत्यत्र इति वाक्ये । वह्निनिष्ठः अग्निवृत्तिः । प्रज्वलनादिः व्यापारो न हि पचेर्वाच्यार्थ इति । धातुवाच्यव्यापाराश्रयत्वं कर्तृत्वम्' इत्यत्र । अन्यकारकनिष्ठव्यापाराश्रयस्य अन्येषु कर्तृभिन्नेषु कर्मकरणादिषु कारकेषु क्रियानिष्पादकेषु निष्ठा वृत्तिर्यस्य स तादृशो यो व्यापारस्तस्याश्रयस्याधारस्य । कर्तृत्ववारणाय कर्तृभावनिरासाय । धातुवाच्य प्रकृत-'धातुवाच्य इति पदमिति । तत्र कर्तर्यपि । कारकमात्रे उक्ते अभिहिते । क्रियापदाधिकरणाभिन्नाधिकरणयुक्ते । प्रथमा प्रथमा विभक्तिः । एव नान्या । 'तिङ्समानाधिकरणे प्रथमा 'अभिहिते प्रथमा' इति इत्थम् । वार्तिकद्वयात् वार्तिकद्वयव्यवस्थातः । ( महाभाष्यम् । २।३।४६ ) । अनुक्ते तु कर्तरि तृतीया 'कर्तृकरणयोस्तृतीया' इति सूत्रव्यवस्थया । प्रकृतधात्वर्थव्यापाराश्रयत्वं कर्तृत्वमिति परिभाषितमत्र । भगवांस्तु 'स्वतन्त्रः कर्ता' ( १।४।५४ ) क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यादिति व्यवस्थां ददाति । यदि हि स्थालीनिष्ठव्यापारः प्रकृतपचिविवक्षितो भवति तदा स्थाल्याः स्वातन्त्र्येण कर्तृसंज्ञा भवति, परन्तु यदि पचेर्देवदत्तादिव्यापारो विवक्षित भवति तदा स्थाली पारतन्त्र्येणाधिकरणत्वं भजते देवदत्तस्तु कर्तृत्वं स्वातन्त्र्येण । यथोक्तं महाभाष्ये—'एवं तर्हि स्थालीस्थे यत्ने कथ्यमाने स्थाली स्वतन्त्रा कर्तृस्थे यत्ने कथ्यमाने परतन्त्रा' ( १।४।२३ ) । अत एवोक्तं स्वातन्त्र्यञ्च धात्वर्थव्यापाराश्रयत्वमिति । यस्य कस्यापि कारकस्य व्यापारस्य प्रस्तुतधातुवाच्यता तदेव कारकं कर्तेति । 'तेन स्थाली पचति' 'अग्निः पचति' 'एधांसि पचन्ति' 'तण्डुलः पच्यते स्वयमेव' इत्यादिप्रयोगाः सुसङ्गता भवन्ति । 'देवदत्तः काष्ठैः स्थाल्यां तण्डुलं पचति' इत्यत्र पचिर्देवदत्तस्यैव यत्नरूपव्यापारं कथयति नान्येषामिति तस्यैव कर्तृत्वमत्र । यदि हि कथ्यते तण्डुलः पच्यते स्वयमेवेति तदा तण्डुलः कर्तृत्वं भजते, तस्यैव व्यापारस्य पचिवाच्यत्वात् ।

**हिन्दी**—उनमें से प्रकृत धातु से वाच्य जो व्यापार है, उसका आश्रय कर्तृत्व है। हरि ने कहा है—

जिसकी क्रिया धातु से कह दी जाती है, ऐसे ही कारक में कर्तृता अभीष्ट है। दूसरे कारकों में रहने वाला व्यापार तो प्रकृत धातु से वाच्य नहीं होता। जैसे कि 'वह्निना पचति' इत्यादि में वह्नि में रहा प्रज्वलन आदि। दूसरे कारकों में रहे व्यापार के आश्रय के कर्तृत्व के निवारण के लिए 'प्रकृत धातु से वाच्य' कहा गया है। उसमें कर्ता के उक्त होने पर कारकमात्र में प्रथमा विभक्ति होती है। 'तिङ्समानाधिकरणे प्रथमा' 'अभिहिते प्रथमा' इन दो वार्तिकों ने ऐसी ही व्यवस्था की है।

(१४४) सूत्रमते तु कर्तृकर्माद्यर्थकप्रत्ययेन कर्त्रादेरुक्तत्वात् प्रथमायाः प्रातिपदिकार्थं एवार्थः। तस्य चाख्यातार्थकर्त्रादिनाऽभेदान्वयेन प्रथमार्थस्य कारकत्वम्। अत एवाख्यातार्थद्वारकक्रियान्वयात् तदर्थस्य क्रियाजनकत्वा-दस्याः कारकविभक्तित्वेन भाष्ये व्यवहारः। 'चैत्रो भवति' इत्यत्रैकत्वावच्छिन्न-चैत्राभिन्नकर्तृकं भवनमिति बोधः। आख्यातकृदादिना कर्त्रादेरभिधानेऽपि प्रथमयाऽनुद्भूतकर्तृत्वादिशक्तिः प्रतिपाद्यत इति तात्पर्यम्। कर्माख्याते तु चैत्रेण ग्रामो गम्यते इत्यत्र चैत्रकर्तृकव्यापारजन्य एकत्वावच्छिन्नग्रामाभिन्न-कर्मनिष्ठः संयोग इति बोधः।

**व्याख्या**—सूत्रकारानुसारेण प्रथमाविभक्तेरर्थं निरूपयति—**सूत्रमते** इत्यादिना। **सूत्रमते** 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' (पा० सू० २।३।४६) इत्येतदा-शयानुसारेण। **तु** हि। **कर्तृकर्माद्यर्थकप्रत्ययेन** कर्तृकर्मवाच्यादौ कर्त्रर्थककर्मार्थक-तिङादिप्रत्ययेन। **कर्त्रादेः** कर्तृकर्मणोः। **उक्तत्वात्** कथितत्वात्। **प्रथमायाः** प्रथमा-विभक्तेः। **प्रातिपदिकार्थः** प्रातिपदिकबोध्यार्थः। **एव** हि। **अर्थः** न तु कर्त्रादिरिति। **तस्य** प्रथमाविभक्तेः प्रातिपदिकरूपार्थस्य। **च** हि। **आख्यातार्थकर्त्रादिना** आख्यातार्थभूत-कर्तृकर्मणोः। **अभेदान्वयेन** अभेदरूपान्वयेन। **प्रथमार्थस्य** प्रथमाविभक्तेः प्रातिपदिक-रूपार्थस्य। **कारकत्वं** क्रियानिष्पादकधर्मवत्त्वम्। **अतः** अस्माद्धेतोः। **एव** हि। **आख्या-तार्थद्वारकक्रियान्वयात्** आख्यातार्थभूतकर्तृकर्मद्वारा क्रिययाऽन्वयात्। **तदर्थस्य** तस्याः प्रथमाविभक्तेरर्थस्य। **क्रियाजनकत्वात्** क्रियानिष्पादकत्वात्। **अस्याः** प्रथमाविभक्तेः। **कारकविभक्तित्वेन** कारकविभक्तिरूपेण। **भाष्ये** महाभाष्यग्रन्थे। **व्यवहारः** प्रयोगः। **'चैत्रो भवति'** **इत्यत्र** इति वाक्ये। एकत्वेन अवच्छिनो विशिष्टो यश्चैत्रस्तस्माद-भिन्नोऽनन्यः कर्ता यस्य तादृशं भवनम्। **इति** इत्थम्। **बोधः** शाब्दबोधः। **आख्यात-कृदादिना** आख्यातं तिङ्कृत्प्रत्ययादिना। **कर्त्रादेः** **अभिधाने** कथने। **अपि** च। **प्रथमया** प्रथमाविभक्तया। **अनुद्भूतकर्तृत्वादिशक्तिः** अव्यक्तकर्तृत्वादिवाच्यता। **प्रतिपाद्यते** निरूप्यते। **इति** एतादृशम्। **तात्पर्यम्** उक्तवार्तिकद्वयस्याशयः। **कर्माख्याते** कर्मवाच्य-प्रयोगे। **तु** हि। **'चैत्रेण ग्रामो गम्यते'** **इत्यत्र** इति वाक्ये। **चैत्रकर्तृकव्यापारजन्यः** चैत्रः

कर्ता यस्य तादृशो यो व्यापारस्तज्जन्यः। **एकत्वावच्छिन्नग्रामाभिन्नकर्मनिष्ठः** एकत्वेन अवच्छिन्नो विशिष्टो यो ग्रामस्तस्मादभिन्नं यत्कर्म तत्र निष्ठा वृत्तिर्यस्य स तादृशः। **संयोगः। इति। बोधः** शाब्दबोधः। **अयमाशयः**—'प्रातिपदिकार्थ······प्रथमा' (२।३।४६) इति सूत्रानुसारेण प्रथमाविभक्तेः प्रातिपदिकार्थं एव, किन्तु 'तिङ्समानाधिकरणे प्रथमा' 'अभिहिते प्रथमा' इत्येतद्वार्तिकद्वयानुसारेण तु कारकमेव प्रथमाविभक्तेरर्थं इति विवादे उच्यते प्रातिपदिकार्थस्यापि आख्यातार्थकर्तरि अभेदरूपान्वयेन कर्तरि क्रियानिष्पादकत्वात् प्रथमाविभक्तावपि परम्परया तस्य भावात्सर्वं सुस्थमेवेति।

**हिन्दी**—सूत्र ('प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' (२।३।४६) के मत में कर्ता, कर्म आदि अर्थ वाले प्रत्ययों से कर्ता आदि के कथित हो जाने के कारण प्रथमा विभक्ति का प्रातिपदिकार्थ ही अर्थ है। उस प्रातिपदिकार्थ का आख्यात के अर्थभूत कर्ता आदि से अभेद सम्बन्ध से अन्वय होने के कारण प्रथमा के अर्थ का कारकत्व हो पाता है। इसी कारण ही आख्यात के अर्थभूत कर्ता आदि के द्वारा क्रिया के साथ अन्वय होने से प्रथमा विभक्ति के अर्थ का क्रिया का निष्पादक होने से प्रथमा विभक्ति को भी कारकविभक्ति के रूप में भाष्य में व्यवहार किया गया है। 'चैत्रो भवति' इस वाक्य में एकत्व से विशिष्ट जो चैत्र है, उससे अभिन्न है कर्ता जिसमें, ऐसा होना, ऐसा शाब्दबोध होता है। आख्यात एवं कृत्प्रत्ययों के द्वारा कर्ता आदि का अभिधान होने पर भी प्रथमा विभक्ति के द्वारा अव्यक्त कर्तृत्व आदि शक्ति प्रतिपादित होती है, (वार्तिकों का) ऐसा तात्पर्य है। कर्मवाच्य में तो 'चैत्रेण ग्रामो गम्यते' इस वाक्य में चैत्र है कर्ता जिसका, ऐसे व्यापार से उत्पन्न एकत्वविशिष्ट ग्राम से अभिन्न कर्म में रहने वाला संयोग, ऐसा शाब्दबोध होता है।

(१४५) सम्बोधनप्रथमार्थस्यापि अनुवाद्यत्वेनोद्देश्यतया युष्मदर्थाभेदेन विधेयक्रियायामन्वयात्क्रियाजनकत्वरूपकारकत्वम्। देवदत्त! त्वं गच्छ इत्यादौ अभिमुखीभवद्देवदत्ताभिन्नयुष्मदर्थोद्देश्यकप्रवर्तनादिविषयो गमनमिति बोधः।

**व्याख्या**—सम्बोधननिमित्तकप्रथमाविभक्तेः कारकतां निरूपयति—**सम्बोधनेत्यादिना। सम्बोधनप्रथमार्थस्य** 'प्रातिपदिकार्थ····प्रथमा' (२।३।४६) इत्यनुवृत्य 'सम्बोधने च' (२।३।४७) इति विहितसम्बोधननिमित्तकप्रथमाविभक्तेरर्थस्य। **अपि च। अनुवाद्यत्वेन** विद्यमानस्याभिमुखीकरणीयत्वेन। **उद्देश्यतया** लक्ष्यत्वेन। **युष्मदर्थाभेदेन** युष्मच्छब्दबोध्यार्थाभेदतया। **विधेयक्रियायां** विधेयभूतक्रियायाम्। **अन्वयात्** सम्बन्धात्। **क्रियाजनकत्वरूपं** क्रियानिष्पादकरूपम्। **कारकत्वं** कारकभावः। **'देवदत्त! त्वं गच्छ' इत्यादौ** इत्यादिवाक्ये। **अभिमुखीभवद्देवदत्ताभिन्नयुष्मदर्थोद्देश्यकप्रवर्तनादिविषयः** अभिमुखीभवन्सम्मुखीभवन् यो देवदत्तस्तस्मादभिन्नो यो युष्मदर्थः स एव उद्देश्यं यस्यास्तादृशी या प्रवर्तना तदादेर्विषयः। **गमनं** व्यापारः। **इति। बोधः** शाब्दबोध इति। **अयम्भावः**—'सम्बोधने च' (२।३।४७) इति सूत्रानुसारेण प्रातिपदिकार्थे-

युक्तसम्बोधनमपि प्रथमार्थः। तत्र क्रियोत्पादकत्वात्कथं तस्य कारकत्वमिति विषयः। अत्रोच्यते—सम्बोधनस्याभिप्रायो हि अनभिमुखस्याभिमुखीकरणमेव। फलञ्च कार्ये प्रवृत्तिस्तस्मान्निवृत्तिर्वा। सम्बोधनस्यानुवाद्यता कथिता। अनुवाद्यत्वं हि प्रथमतो विद्यमानस्य सिद्धस्य वा वक्त्राऽभिमुखीकरणमेव। हरिरप्याह—

'सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः।
प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते'।' इति।

यथा हि सङ्ख्यायाः प्रकृत्यर्थेनान्वयस्तथैवानुवाद्यसम्बोधनविभक्तेर्युष्मच्छाब्दार्थेनाश्रयतासम्बन्धेनाभेदरूपेणान्वयः। वक्तुः प्रेरणाया उद्देश्यं प्रकृत्यर्थं एवात उद्देश्यतासम्बन्धेन प्रकृत्यर्थस्य प्रेरणायामन्वयः। 'देवदत्त! त्वं गच्छ' इत्यत्र प्रथमं देवदत्तस्य त्वं-पदेन सहाभेदसम्बन्धान्वयः। ततश्च देवदत्ताभिन्नयुष्मच्छब्दरूपभूतस्य त्वं-पदस्य गमनविषयकप्रेरणायामन्वयः। ततश्च देवदत्ताभिन्नयुष्मच्छब्दोद्देश्यकप्रेरणायाः स्वविषयीभूतगमनक्रियायामन्वयः। अतः परम्परया क्रियायामन्वयात् तत्रापि क्रियाजनकतारूपकारणताऽस्तीति सम्बोधनप्रथमाया अपि कारकत्वमिति।

हिन्दी—सम्बोधन अर्थ में जो प्रथमा होती है, उसका भी अनुवाद विषयता के कारण उद्देश्य होने से युष्मत् शब्द के अर्थ से अभेदसम्बन्ध से विधेय क्रिया में अन्वय होने से उसमें भी क्रियानिष्पादकत्व रूप कारकत्व है। 'देवदत्त! त्वं गच्छ' इत्यादि में अभिमुख होते हुए देवदत्त से अभिन्न युष्मद् शब्द के अर्थ है उद्देश्य जिसमें, ऐसी प्रवर्तना आदि का विषय गमन व्यापार है, ऐसा बोध होता है।

(१४६) अत एव—

आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा।
यथायथं विभक्त्यर्थाः सुपां कर्मेति भाष्यतः॥

इत्यभियुक्तोक्तं 'सुपां कर्मादयोऽप्यर्थाः सङ्ख्या चैव तथा तिङाम्' इति भाष्यञ्च सङ्गच्छते। अनुक्तकर्त्रादिषु तृतीयादयो विभक्तयोऽनभिहिताधिकारे तासां विधानात्। इत्यन्यत्र विस्तरः।

**व्याख्या**—प्रथमार्थस्य कारकत्वे प्रमाणमुपस्थापयति—अत इत्यादिना। अतः यतो हि प्रथमाविभक्तेरपि क्रियानिष्पादकत्वं तस्मात्। एव हि। कारिकामनुवदति—आश्रयः इत्यादिना। आश्रयः अवधिः उद्देश्यः सम्बन्धः वा शक्तिः एव यथायथं विभक्त्यर्थाः सुपां कर्म इति भाष्यतः इत्यन्वयः। आश्रयः कर्तृप्रातिपदिकसम्बोधनार्थबोधिका प्रथमा विभक्तिः, कर्मबोधिका द्वितीया, कर्तृकरणबोधिका तृतीया अधिकरणबोधिका सप्तमी चेत्येतासां विभक्तीनामाश्रयोऽर्थः। अवधिः अपादानबोधकपञ्चमीविभक्तेरवध्यर्थः। उद्देश्यः सम्प्रदानबोधकचतुर्थीविभक्तेरुद्देश्योऽर्थः। शेषार्थकषष्ठ्याः उपपदविभक्तीनाञ्च सम्बन्धोऽर्थः। वा इति विकल्पे। शक्तिः आश्रयत्वमवधित्वमुद्देश्यत्वं सम्बन्धत्वं चेति। एव हि। यथायथं प्रथमादिविभक्तिबोध्यकर्त्रादीनां स्वस्वसामर्थ्यानुसारेण। विभक्त्यर्थाः विभक्तिबोध्यार्थाः। सुपां सुबादिप्रत्ययानाम्। कर्म

कर्मादयोऽप्यर्थाः इति । इत्थम् । भाष्यतः भाष्यवचनात्सिध्यति । इति । इति अभियुक्तोक्तं शिष्टोक्तम् । सुपां कर्मेत्यादिभाष्यवचनमनुवदति—सुपामित्यादिना । सुपां कर्मादयः अर्थाः सङ्ख्यया अपि तथा तिङां च इत्यन्वयः । सुपां सुबादिप्रत्ययानाम् । कर्मादयः कर्मकर्तृकरणप्रभृतिकारकाणि । अर्थाः । सङ्ख्या एकत्वादिः । अपि च अर्था इति । तथा तथैव । तिङां तिबादिविभक्तीनाम् । च अपि कारकाणि सङ्ख्या चेति । किन्तु कारकेषु कर्तृकर्मणोरेव तिङर्थत्वं तिङतयोरेवाभिधानादिति । इति इत्थम् । 'भाष्यं भाष्यवचनम् (१।४।२१) । सङ्गच्छते सुसङ्गतं भवतीति । यदि हि प्रातिपदिकार्थसम्बोधननिमित्तकप्रथमार्थस्य नैव कारकता स्वीक्रियते तदोपर्युक्तवचनं निरर्थकमेव स्यादिति । उक्ते कर्तरि कर्मणि च प्रथमैव किन्तु अनुक्तकर्त्रादिषु यत्र कर्ता कर्म वा तिङादिना नाभिधीयते तत्र । तृतीयादयः यथायथं कर्तरि तृतीया कर्मणि द्वितीया । विभक्तयः सुबादिविभक्तयः । भवन्ति । तासां तत्तद्विभक्तीनाम् । अनभिहिताधिकारे 'अनभिहिते' इति सूत्रमधिकृत्य । विधानात् व्यवस्थातः । इति । अन्यत्र ग्रन्थान्तरे । विस्तरः सप्रपञ्चनिरूपणमिति । अयम्भावः—यदि नाम प्रथमाविभक्तेः क्रियानिष्पादकत्वं नैव स्वीक्रियते तदा आश्रयावध्युद्देश्यसम्बन्धाः यथायोग्यं विभक्त्यर्थाः, यत्र प्रथमाद्वितीयातृतीयासप्तमीनामाश्रयोऽर्थः, पञ्चम्या अवधिरर्थः, चतुर्थ्या उद्देश्यः, षष्ठ्याः सम्बन्धोऽर्थः, आश्रयत्वादिशक्तिरेव वा सुपां कर्मेत्यादि भाष्यवचनादिति शिष्टोक्तं सुपां कर्मादयः सङ्ख्या च तथैव तिङामप्यर्थाः इति भाष्यवचनमपि व्यर्थं स्यात् । यत्र कर्त्रादीनामनुक्तत्वं तिङादिभिस्तत्र तृतीयादयो विभक्तयो भवन्ति, तासामनभिहिताधिकारे एव विधानात् । इति ।

हिन्दी—इसी ( प्रथमा विभक्ति के भी क्रियानिष्पादक होने के ) कारण—

आश्रय ( प्रथमा, द्वितीया, तृतीया एवं सप्तमी का अर्थ ), अवधि ( पञ्चमी का अर्थ ), उद्देश्य ( चतुर्थी का अर्थ ) एवं सम्बन्ध ( षष्ठी का अर्थ ) यथायोग्य विभक्ति के अर्थ हैं अथवा शक्ति ( आश्रयत्व, अवधित्व, उद्देश्यत्व एवं सम्बन्धत्व ) ही विभक्ति का अर्थ है । 'सुपां कर्म' आदि भाष्य के वचन से यह सिद्ध होता है । ऐसा अभियुक्त (शिष्ट) व्यक्ति का कथन एवं 'सुबादि के कर्म आदि एवं सङ्ख्या अर्थ हैं और उसी तरह तिङ् के भी, ऐसा भाष्य भी सुसङ्गत होता है । कर्ता आदि के (तिङ् आदि के द्वारा) अनुक्त होने पर तृतीया आदि विभक्तियाँ होती हैं, क्योंकि उनका अनभिहित अधिकार में विधान किया गया है । यह सब दूसरे ग्रन्थों में विस्तार से कहा गया है ।

(१४७) ननु क्रियानिमित्तत्वं कारकत्वमिति स्वीकार्यमिति चेन्न । चैत्रस्य तण्डुलं पचति इत्यत्र सम्बन्धिनि चैत्रादावतिव्याप्तेः । अनुमत्यादिप्रकाशनद्वारा सम्प्रदानादेरिव तण्डुलादिद्वारा सम्बन्धिनोऽपि क्रियानिमित्तत्वात् । किन्तु क्रियान्वितविभक्त्यर्थान्वितत्वं क्रियानिवर्तकत्वं वा कारकत्वम् । विशेष्यतया क्रिया सुप्तिङन्यतरविभक्त्यर्थेऽन्वेति । स च विशेष्यतयैव चैत्रघटादौ । षष्ठ्यर्थस्य तण्डुलादिनामार्थान्वितत्तया क्रियाऽनन्वितत्वात् । अत एव षष्ठ्य-

र्थस्योपपदविभक्त्यर्थस्य च कारकत्वं क्रियान्वयाभावादिति शाब्दिकाः। उपपदविभक्तीनामपि सम्बन्ध एवार्थः। 'चैत्रस्य पचति' इत्यादावपि तण्डुलादिपदाध्याहारेणैव बोधः। षष्ठचर्थसम्बन्धस्य नामार्थेनैव क्रियायाः कर्मत्वादिनैव साकाङ्क्षत्वेन सम्बन्धक्रिययोर्निराकाङ्क्षत्वात्।

**व्याख्या**—कारकस्य परिभाषान्तरविषयं निरूपयति—**नन्वित्यादिना**। **ननु** इति प्रश्ने। **क्रियानिमित्तत्वं** क्रियायाः निमित्तत्वं कारणत्वम्। **कारकत्वम्**। यद्धि क्रियायाः कारणं तदेव कारकमिति। **इति** इत्थम्। **स्वीकार्यं** मन्तव्यम्। **इति** इत्थम्। कथ्यते **चेत्**। **न** तन्नैवोपयुक्तम्। **चैत्रस्य तण्डुलं पचति इत्यत्र** इति वाक्ये। **सम्बन्धिनि** सम्बन्धिभूते। **चैत्रादौ। अतिव्याप्तेः**। कथमिति चेदुच्यते—**अनुमत्यादिप्रकाशनद्वारा** स्वीकृतिसंसूचनद्वारेण। **सम्प्रदानादेः**। **इव** यथा। **तण्डुलादिद्वारा** तण्डुलद्वारेण। **सम्बन्धिनः** सम्बन्धिभूतचैत्रस्य। **क्रियानिमित्तत्वात्** पाकक्रियाकारणत्वात्। **किन्तु** वस्तुतः। **क्रियान्वितविभक्त्यर्थान्वितत्वं** क्रियायामन्विता ये विभक्त्यर्थास्तैरन्वितत्वं युक्तत्वम्। **वा** इति पक्षान्तरे। **क्रियानिर्वर्तकत्वं** क्रियायाः साक्षान्निर्वर्तकत्वं निष्पादकत्वम्। **कारकत्वम्**। **क्रिया**। **विशेष्यतया** प्रधानरूपेण। **सुप्तिङन्यतरविभक्त्यर्थे** सुप्तिङोः कस्याप्येकस्य विभक्त्यर्थे। **अन्वेति** सम्बद्धा भवति। **सः** विभक्त्यर्थः। **च** अपि। **विशेष्यतया** विशेष्यरूपेण। **एव** हि। **चैत्रघटादौ** प्रातिपदिके इति। **षष्ठचर्थस्य** चैत्रस्येत्यत्र या षष्ठी तदर्थस्य। **तण्डुलादिनामार्थान्विततया** तण्डुलादि यन्नाम तस्यार्थेन अन्विततया सम्बद्धतया। **क्रियानन्वितत्वात्** क्रियया सह अनन्वितत्वादसम्बद्धत्वात्। **अतः** यतो हि षष्ठ्यर्थो नामार्थेऽन्वेति तस्मात्। **एव** हि। **षष्ठचर्थस्य** षष्ठीविभक्तेरर्थस्य। **उपपदविभक्त्यर्थस्य** पदमनुसृत्य या विभक्तिर्भवति सोपपदविभक्तिस्तस्या अर्थस्य। **च** अपि। **न** नैव। **कारकत्वं** कारकभावः। **क्रियान्वितत्वाभावात्** तेषां नामार्थेऽन्वयात् क्रियया अन्वितस्य सम्बद्धत्वस्याभावाद्विरहात्। **इति** इत्थम्। **शाब्दिकाः** शब्दशास्त्रज्ञा वैयाकरणा इति। **उपपदविभक्तीनां** पदमनुसृत्य या विभक्तिर्भवति सोपपदविभक्तिस्तासाम्। **अपि** च। **सम्बन्धः**। **एव** हि। **अर्थः**। **'चैत्रस्य पचति' इत्यादौ** इत्यादिवाक्ये। **अपि** च। **तण्डुलादिपदाध्याहारेण** तण्डुलादि यत्पदं तस्य अध्याहारेण तत्रत्यस्थकल्पनेन। **एव** हि। **बोधः** शाब्दबोधः। **षष्ठचर्थसम्बन्धस्य** षष्ठ्यर्थभूतसम्बन्धस्य। **नामार्थेन** प्रातिपदिकार्थेन। **एव** हि। **क्रियायाः**। **तु**। **कर्मत्वादिना** कर्तृत्वकर्मत्वादिभिः। **एव**। **साकाङ्क्षत्वेन** आकाङ्क्षायुक्तत्वेन। **सम्बन्धक्रिययोः** षष्ठ्यर्थभूतसम्बन्धस्य क्रियायाश्च तयोः। परस्परम्। **निराकाङ्क्षत्वात्** आकाङ्क्षारहितत्वात्। **इति**। **अयमाशयः**—यदि हि क्रियानिमित्तत्वं कारकत्वमित्युच्यते चेत्तन्न; कारकस्य क्रियाप्रेरकनिमित्तत्वे हि चैत्रस्य तण्डुलं पचतीत्यादौ चैत्रस्यापि भावान्तस्यापि कारकत्वं स्यात्। यथा हि सम्प्रदाने दानानुमतिप्रकाशनद्वारा दातरि सम्प्रदानं भवति तस्यैव सम्बन्धिनो हि चैत्रस्यापि क्रियानिमित्तत्वं तु भवत्येव। षष्ठ्यर्थो हि नामार्थेनान्वेति न तु क्रियया। तत्र क्रियान्वयाभावान्न षष्ठ्यर्थस्योपपदविभक्तेश्च कारकत्वं सिध्यति। सम्बन्धक्रियेव परस्परं निराकाङ्क्षे। सम्बन्धो हि नामार्थ-

माकाङ्क्षति क्रिया तु कर्मत्वादि। क्रियान्वितविभक्त्यर्थान्वितत्वमेव कारकत्वम्। न हि षष्ठी क्रियायाऽन्वेत्यपितु नामार्थेनेति। अन्वयश्चायं क्रमः, क्रिया हि सुप्तिङन्यतरविभक्त्यर्थेन विशेष्यतयाऽन्वेति विभक्त्यर्थश्च चैत्रघटादौ विशेष्यतयैवान्वेति।

हिन्दी—यदि यह कहा जाय कि क्रिया का कारण बनना ही कारकता है, ऐसा स्वीकार करना चाहिए, तो यह ठीक नहीं है। 'चैत्रस्य तण्डुलं पचति' इत्यादि में सम्बन्धिभूत चैत्र आदि में अतिव्याप्ति होती है। अनुमति आदि प्रकाशन के द्वारा सम्प्रदान की तरह तण्डुल आदि द्वारा सम्बन्धी का भी क्रिया का निमित्तत्व (कारणत्व) तो बन जाता है। किन्तु क्रिया से अन्वित होने वाली विभक्ति के अर्थ से अन्वित होना अथवा क्रिया का निवर्तक (निष्पादक) होना कारकता है। क्रिया विशेष्य के रूप में सुप् अथवा तिङ् में से किसी एक विभक्त्यर्थ में अन्वित होता है। वह विभक्त्यर्थ भी विशेष्य के रूप में चैत्र, घट आदि में अन्वित होता है। षष्ठी के अर्थ का तण्डुल आदि नामार्थ के साथ अन्वय होने से क्रिया से अन्वय हो नहीं सकता। इसी कारण जो षष्ठी का अर्थ है, उसका और उपपद विभक्ति के अर्थ का भी क्रिया के साथ अन्वय हो न पाने से कारकत्व नहीं होता, ऐसा वैयाकरणों का मत है। उपपद विभक्तियों का भी सम्बन्ध ही अर्थ है। 'चैत्रस्य पचति' इत्यादि में भी तण्डुल आदि पद के अध्याहार से ही शाब्दबोध होता है। षष्ठी का अर्थ जो सम्बन्ध है, उसका नामार्थ से ही और क्रिया का कर्मत्व आदि से ही आकाङ्क्षा रहती है। सम्बन्ध एवं क्रिया दोनों परस्पर निराकाङ्क्ष होते हैं।

(१४८) यत्तु कारकान्तराप्रयोज्यत्वे सति कारकचक्रप्रयोज्यत्वकर्तृत्वमिति तन्न। स्थाली पचति असिश्छिनत्ति इत्यादौ स्थाल्यादेः कारकचक्राप्रयोजकत्वात् कारकान्तरप्रयोज्यत्वाच्च तत्त्वं न स्यादित्यलम्।

**व्याख्या**—कर्तृत्वविषयेऽन्यमतमनूद्य दूषयति—यदित्यादिना। यत् यदेव। तु हि। कारकान्तराप्रयोज्यत्वे अन्यत्कारकं कारकान्तरं तेन अप्रयोज्यत्वेऽप्रेरितत्वे। सति। कारकचक्रप्रयोजकत्वं कारकौघप्रेरकत्वम्। कर्तृत्वम् इति वदन्ति केचित्। तत् तादृशं कथनम्। न नैवोपयुक्तम्। (मीमांसकमतमिदमिति) स्थाली पचति असिश्छिनत्ति इत्यादौ इत्यादिवाक्ये। स्थाल्यादेः स्थाल्याः असेश्च। कारकचक्राप्रयोजकत्वात् कारकसमूहाप्रेरकत्वात्। कारकान्तरप्रयोज्यत्वात् कारकान्तरं चैत्रादि तत्प्रयोज्यत्वात्। च अपि। तत्त्वं कर्तृत्वम्। न नैव। स्यात् इति। अलम् अतिविस्तरेण न प्रयोजनमिति। मतमिदं केचिन्नोररीकुर्वन्ति। तदनुसारेण स्थाल्यामपि चेतनत्वारोपे तस्याः कारकान्तरप्रेरकत्वं कारकान्तराप्रयोज्यत्वञ्च सम्भवति। उक्तमेव—'स्थालीस्थे यत्ने पचिना कथ्यमाने स्थाली स्वतन्त्रा कर्तृस्थे यत्ने कथ्यमाने तु परतन्त्रे'ति। वस्तुतस्तु अचेतने चेतनत्वारोपेऽपि अचेतनस्य प्रयोजकस्तु चेतनपदार्थ एव। 'स्थाली पचति' इत्यत्र स्थालीस्थे यत्ने पचिना कथ्यमानेऽपि न हि स्थाली देवदत्तादि प्रेरणां विना पक्तुं प्रभवतीति तस्याः कारकान्तरप्रयोज्यत्वं तु नैव प्रतिकर्तुं शक्यते। इति।

हिन्दी—जो कि दूसरे कारक के द्वारा अप्रयोज्य ( प्रेरित न होना ) होकर कारक समूह का प्रेरक होना ही कर्तृभाव है अर्थात् जो दूसरे कारक के द्वारा प्रेरित नहीं है और स्वयं दूसरे कारकों का प्रयोजक है, वह कर्ता है—ऐसा कहा जाता है; वह ठीक नहीं है। 'स्थाली पचति' 'असिश्छिनत्ति' इत्यादि में स्थाली आदि का कारक-चक्र के प्रयोजक न होने से और दूसरे कारक ( चैत्र आदि ) से प्रयोज्य होने से भी कर्तृत्व नहीं होगा। यहाँ इतना ही।

( १४९ ) कर्मत्वञ्च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम्। इदमेव कर्मलक्षणे ईप्सिततमत्वम्। 'गां पयो दोग्धि' इत्यादौ पयोवृत्तिर्यो विभागस्तदनुकूलो व्यापारो गोवृत्तिः। तदनुकूलश्च गोपवृत्तिः। अत्र पयसः कर्मत्वसिद्धये प्रयोज्यत्वनिवेशो जन्यत्वनिवेशे तन्न स्यात्। 'प्रयागात्काशीं गच्छति' इत्यत्र प्रयागस्य कर्मत्ववारणाय प्रकृतधात्वर्थफलमिति। न हि विभागः प्रकृतधात्वर्थः। किन्तु नान्तरीयकतया गमने उत्पद्यते। प्रयागस्य फलतावच्छेदकसम्बन्धेन फलाश्रयत्वेनानुद्देश्यत्वाच्च।

व्याख्या—कर्मकारकं निरूपयति—कर्मत्वमित्यादिना। कर्मत्वं कर्मभावः। च अपि। प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेन प्रकृतः प्रस्तुतो यो धातुः क्रियावाचिशब्दस्तस्यार्थे प्रधानीभूतो मुख्यत्वेन विवक्षितो यो व्यापारस्तेन साक्षात्परम्परया वा प्रयोज्यं यत्प्रकृतधात्वर्थफलं प्रस्तुतधात्वर्थभूतफलं तस्य आश्रयत्वेनाधारत्वेन। उद्देश्यत्वम् उद्देश्यभावः। इदम् अनन्तरोक्तम्। एव हि। कर्मलक्षणे 'कर्तुरीप्सिततमं कर्मे'ति सूत्रे। ईप्सिततमत्वं कर्तुः क्रियया व्याप्तुमिष्टतमत्वम्। 'गां दोग्धि पयः' इत्यादौ इत्यादिवाक्ये। पयोवृत्तिः पयोनिष्ठः। यः। विभागः विश्लेषः। तदनुकूलः तत्साधकः। व्यापारः। गोवृत्तिः गोनिष्ठः। पयःसम्बद्धविभागसाधकव्यापारो गवि तिष्ठतीति। तदनुकूलः तस्य गोनिष्ठव्यापारस्यानुकूलः उत्पादकः। व्यापारः। गोपवृत्तिः गोपनिष्ठ इति। अत्र वाक्येऽस्मिन्। पयसः। कर्मत्वसिद्धये कर्मतोपपत्तये, प्रयोज्यत्वनिवेशः प्रयोज्यभावपाठः परिभाषायाम्। जन्यत्वनिवेशे जन्यत्वस्योत्पाद्यत्वस्य निवेशे पाठे तु। तत् पयसः कर्मत्वसिद्धिः। न नैव। स्यादिति। सामान्यतस्तु धात्वर्थरूपव्यापारात्फलस्य साक्षादेवोत्पत्तिः किन्तु यदा कदा तत्परम्परयाऽपि भवति। गां दोग्धि पय इत्यत्र न हि धात्वर्थभूतव्यापाररूपगोपान्न हि प्रत्यक्षतः विभागरूपफलोत्पत्तिरपितु गोपव्यापारेण गवि व्यापारोत्पत्तिर्गोव्यापारादेव पयसो विभागरूपफलोत्पत्तिरिति न ह्यत्र धात्वर्थव्यापारस्य फलजनकत्वमपितु प्रयोजकत्वमेवेति। जन्यत्वं नाम साक्षादुत्पाद्यत्वं प्रयोज्यत्वं तु परम्परया साक्षाद्वा साध्यत्वम्। आद्यमत्र पयसि नास्ति अन्त्यं त्वनिवार्यमेव। 'प्रयागात्काशीं गच्छति' इत्यत्र इति वाक्ये। प्रयागस्य प्रयागपदस्यापादानविषयस्य। कर्मत्ववारणाय कर्मतानिरासाय। प्रकृतधात्वर्थफलं प्रस्तुतधात्वर्थभूतफलम्। इति पदम्। न नैव। हि। विभागः विश्लेषः। प्रकृतधात्वर्थः प्रस्तुतगम्-धात्वर्थः। किन्तु तथापि। नान्तरीयकतया अपरिहार्यत्वेन। गमने गमनरूपव्यापारे। उत्पद्यते

समुत्पन्नो भवति । **प्रयागस्य** । **फलतावच्छेदकसम्बन्धेन** फलताया अवच्छेदकसम्बन्धेन येन सम्बन्धेन फलस्य तदाश्रयता स एव सम्बन्धः फलतावच्छेदकसम्बन्धः । असौ हि प्रतिधातु भिद्यते । यथा ग्रामं गच्छति इत्यत्र संयोगरूपफलं ग्रामे अनुयोगिताविशिष्ट-समवायसम्बन्धेन तिष्ठतीति स एव फलतावच्छेदकसम्बन्धः । एवं ग्रामं त्यजति इत्यत्र प्रतियोगित्वविशिष्टसमवायसम्बन्धो हि फलतावच्छेदकसम्बन्धेन विभागरूपं फलं ग्रामे । **फलाश्रयत्वेन** फलाधाररूपेण । **अनुद्देश्यत्वात्** उद्देश्यवाह्यत्वात् । **च** अपि । **प्रकरणस्यास्यायमाशयः**—किं कर्मेत्यपेक्षायामुच्यते प्रयुक्तधातोर्यः प्रधानीभूतो व्यापारोऽर्थस्तेन साक्षाद्वा परम्परया प्रयोज्यस्य प्रस्तुतधात्वर्थरूपफलस्याश्रयत्वेन यद्वक्तुरभीष्टं तदेव कर्मेति । यथा 'घटं करोति' इत्यत्र प्रस्तुतः कृधातुर्यस्य प्रधानोऽर्थं उत्पत्त्यनुकूलव्यापारो यत्प्रयोज्यकृधातुगौणीभूतार्थं उत्पत्तिरूपं फलम् । तदाश्रयत्वेनाभीष्टो घट इति घटस्य कर्मत्वम् । फलव्यापारौ हि धात्वर्थो यत्र व्यापारस्य प्राधान्यं फलस्य गौणता च । व्यापारो हि फलस्य जनकः सामान्यतः साक्षादेव क्वचित्तु परम्परयाऽपि । जनकत्वञ्च न केवलमुत्पादकत्वमपितु प्रयोज्यत्वमपि । व्यापारस्य फलप्रयोजकत्वेनैव गां दोग्धि पयः इत्यत्र पयसः कर्मत्वं सिध्यति तत्र धात्वर्थव्यापारस्य साक्षात्फलजनकत्वाभावात् । 'प्रयागात् काशीं गच्छति' विभागस्य प्रकृतधात्वर्थाभावात् प्रयागस्य फलतावच्छेदक-सम्बन्धेन फलाश्रयत्वेनोद्देश्यत्वाभावाच्चेति ।

हिन्दी—जो कर्मत्व है, वह प्रस्तुत धातु के अर्थों में प्रधानीभूत जो व्यापार है, उसके द्वारा साक्षात्सम्बन्ध में उत्पाद्य-परम्परया सम्बन्ध में प्रयोज्य प्रस्तुत धातु के गौण अर्थ फल के आश्रय के रूप में उद्देश्यता अर्थात् वक्ता को अभीष्टतम होना है । यही 'कर्तुरीप्सिततमं कर्म' सूत्र में ईप्सिततम होना है । 'गां दोग्धि पयः' इत्यादि में रहने वाला जो विभाग है, उसका अनुकूल व्यापार गौ में रहता है और गौ में जो व्यापार है, उसका अनुकूल व्यापार गोप में रहता है, जो कि यहाँ प्रकृतधात्वर्थ व्यापार है । यहाँ दूध के कर्मत्व की सिद्धि के लिए 'व्यापारप्रयोज्यत्व' पद का समावेश हुआ है, यदि उसके बदले व्यापारजन्यत्व कह दिया होता, तो पयस् को कर्मसंज्ञा नहीं हो पाती, क्योंकि वह प्रत्यक्षतः धात्वर्थ-व्यापार गोप से साक्षात् उत्पन्न नहीं है । होता यह है कि धात्वर्थ-व्यापार गोप गौ में व्यापार की सृष्टि करता है और गौ से पयस् में रहने वाला विभाग होता है । अतः पयस् में धात्वर्थव्यापार ( गोप ) का प्रयोजकत्व ही है, न कि साक्षाज्जनकत्व । 'प्रयागात् काशी गच्छति' इत्यादि वाक्य में प्रयाग के कर्मत्व के निवारण के लिए 'प्रकृतधात्वर्थफल' पद रखा गया है । विभाग तो प्रकृत गम् धातु का अर्थ ( फल ) नहीं है, यह तो संयोग है । फिर भी अनिवार्य होने के कारण गमन क्रिया में उत्पन्न होता है । प्रयाग का फलता के अवच्छेदक सम्बन्ध से फल के आश्रय के रूप में उद्देश्यत्व भी नहीं होता । जिस सम्बन्ध से फल का उसके आश्रय में रहना अभीष्ट हो, उस सम्बन्ध को फलतावच्छेदक सम्बन्ध कहते हैं । वह प्रयाग में नहीं है, न तो प्रयाग में फल फल के ही आश्रय के रूप में उद्देश्यत्व ही है । यह तो केवल काशी में है ।

( १५० ) ननु प्रकृतधात्वर्थग्रहणेनैवात्र वारणादुद्देश्यत्वनिवेशः किमर्थमिति चेन्न। तस्यासाधारणं प्रयोजनं 'काशीं गच्छन् पथि मृतः' इति काश्याः फलाश्रयत्वाभावेऽपि फलाश्रयत्वेनोद्देश्यत्वसत्त्वात् कर्मत्वम्।

**व्याख्या**—कर्मपरिभाषायामुद्देश्यत्वपदग्रहणस्य प्रयोजनमाह—**नन्वित्यादिना**। **ननु** इति प्रश्ने। कर्मण परिभाषायां **प्रकृतधात्वर्थग्रहणेन** प्रकृतधात्वर्थपदपाठेन। एव हि। **अत्र** प्रयागात् काशीं गच्छति इत्यत्र प्रयागादिशब्दे कर्मत्वस्य। **वारणात्** निरासात्। **उद्देश्यत्वनिवेशः** उद्देश्यत्वपदपाठः। **किमर्थं** किं निमित्तम्। **इति** इत्थमुच्यते **चेत्**। **न** नैव तदुपयुक्तम्। **तस्य** उद्देश्यत्वपाठस्य। **असाधारणं** विशिष्टम्। **प्रयोजनम्**। **काशीं गच्छन् पथि मृतः इति** इति वाक्ये। **काश्याः**। **फलाश्रयत्वाभावे** धात्वर्थसंयोगरूपफलविरहे। **अपि च**। **फलाश्रयत्वेन** संयोगरूपफलाश्रयतारूपेण। **उद्देश्यत्वसत्त्वात्** ईप्सिततमत्वात्। **कर्मत्वमिति**। प्रयागात्काशीं गच्छति इत्यादौ प्रयागे विभागस्य प्रकृतधात्वर्थत्वाभावेनैव कर्मत्वनिवृत्तौ परिभाषायामुद्देश्यत्वपदनिवेशो व्यर्थ इति चेन्न; तथा हि सति काशीं गच्छन् पथि मृतः इत्यादौ काश्याः धात्वर्थभूतसंयोगफलाश्रयत्वाभावेन कर्मत्वं न स्यात् तत्र तु धात्वर्थफलाश्रयत्वाभावेऽपि फलाश्रयत्वेन उद्देश्यत्वभावादेव कर्मत्वमिति परिभाषायामुद्देश्यत्वपदं सप्रयोजनमिति।

**हिन्दी**—कर्म की परिभाषा में 'प्रकृतधात्वर्थं' पद के ग्रहण से ही 'प्रयागात्काशीं गच्छति' इत्यादि में प्रयाग पद में ( विभाग के धात्वर्थ न होने से ) कर्मत्व की निवृत्ति हो जाने से उसमें उद्देश्यत्व पद का निवेश क्यों ? ऐसा कहना ठीक नहीं है। यहाँ उसके पाठ का असाधारण प्रयोजन है। 'काशीं गच्छन् पथि मृतः' इत्यादि में काशी का फल के आश्रयत्व के अभाव में भी फल के आश्रय के रूप में उद्देश्य होने से ही उसमें कर्मत्व है।

( १५१ ) ननु काशीं गच्छति चैत्रे 'चैत्रः काशीं गच्छति न प्रयागमि'ति प्रयोगानुपपत्तिः, प्रयागस्य फलाश्रयत्वेनोद्देश्यत्वाभावादिति चेदुच्यते—कर्मलक्षणे ईप्सिततमपदस्य स्वार्थविशिष्टयोग्यताविशेषे लक्षणा। तथा च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वयोग्यताविशेषशालित्वं कर्मत्वम्। तच्च प्रयागस्याप्यस्तीति कर्मत्वं तस्य सुलभम्।

**व्याख्या**—कर्मणः परिभाषायां परिष्कारमाह—**नन्वित्यादिना**। **ननु**। **काशीं गच्छति चैत्रे**। **चैत्रः काशीं गच्छति न प्रयागम्**। **इति**। **प्रयोगानुपपत्तिः** प्रयोगासिद्धिः। **प्रयागस्य फलाश्रयत्वेन** धात्वर्थभूतसंयोगरूपफलाश्रयत्वेन **उद्देश्यत्वाभावात्** ईप्सिततमत्वविरहात्। **इति**। **चेत्**। **उच्यते** अत्र कथ्यते। **कर्मलक्षणे** 'कर्तुरीप्सिततमं कर्मे'ति कर्मणां यल्लक्षणं तत्र। **ईप्सिततमपदस्य** ईप्सिततममिति यत्पदं तस्य। **स्वार्थविशिष्टयोग्यताविशेषे** स्वार्थयुक्ता या योग्यता तद्विशेषे। **लक्षणा** लक्षणावृत्तिः। **तथा च** एवमेव। **प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रत्वेन** प्रकृतस्य प्रकृतधात्वर्थे प्रस्तुतधातोरर्थे प्रधानीभूतो मुख्यो यो व्यापारस्तेन प्रयोज्यं यंत्प्रकृतधात्वर्थ-

फलं तस्याश्रयत्वेन । उद्देश्यत्वयोग्यताविशेषशालित्वम् उद्देश्यतासामर्थ्यविशेषयुक्तत्वम् । कर्मत्वम् । तत् उद्देश्यतायोग्यताविशेषशालित्वम् । च हि । प्रयागस्य । अपि । अस्ति । इति । कर्मत्वं कर्मभावः । तस्य प्रयागस्य । सुलभम् । इति । 'काशीं गच्छति चैत्रो न प्रयागम्' इत्यत्र प्रयागस्य फलाश्रयत्वेनोद्देश्यताभावात् कथं कर्तव्यमिति चेदुच्यते, तस्य उद्देश्यत्वसामर्थ्यविशेषयुक्तत्वेन कर्मत्वम् । ईप्सिततमपदस्य स्वार्थविशिष्टयोग्यताविशेषे लक्षणां मत्वा कर्मपरिभाषायामुद्देश्यत्वमिति उद्देश्यत्वविशेषयोग्यताशालित्वमिति बोद्धव्यम् ।

हिन्दी—काशी को जाते हुए चैत्र के लिए 'चैत्रः काशीं गच्छति प्रयागम्' ऐसा प्रयोग सिद्ध नहीं होता, क्योंकि प्रयाग का फल के आश्रय के रूप में उद्देश्यत्व का अभाव है, ऐसा कहना ठीक नहीं है। इसमें कहा जाता है कि कर्म के लक्षण में ईप्सिततम पद का स्वार्थ से विशिष्ट योग्यता-विशेष अर्थ में लक्षणा होती है। इस रूप में प्रकृत धातु के अर्थ में प्रधानीभूत व्यापार से प्रयोज्य प्रस्तुत धातु के अर्थ फल की आश्रयता के रूप में उद्देश्यता के सामर्थ्य-विशेष से युक्त होना कर्मता है। वह ( उद्देश्यता के सामर्थ्य विशेष से युक्त होना ) प्रयाग का भी है, अतः उसमें कर्म का होना सुलभ है।

( १५२ ) एतेन कार्यान्तरं कुर्वति चैत्रे 'किं ग्रामं गच्छति अथवा ओदनं पचति' इति प्रश्ने 'न ग्रामं गच्छति न ओदनं पचति' इत्यादिप्रयोगा व्याख्याताः। यत्र तु ताडनादिना पराधीनतया विषभोजनादिकं तत्र विषादिः तादृशफलाश्रयत्वेनोद्देश्यमेव । अत एव 'आतश्च विषमीप्सितं तद् भक्षयति ताडनात्' इति भाष्यं सङ्गच्छते । एतेन 'कशाभिहतः कारागारं गच्छति' इति व्याख्यातम् ।

व्याख्या—अन्यत्रापि कर्मण उपपत्तिं निर्दिशति—एतेनेत्यादिना । एतेन उद्देश्यत्वस्य उद्देश्यत्वयोग्यताशालित्वव्याख्यानेन । कर्मान्तरम् अन्यदेव कार्यम् । कुर्वति विदधति । चैत्रे । 'किं ग्रामं गच्छति अथवा ओदनं पचति' इति । प्रश्ने । 'न ग्रामं गच्छति न ओदनं पचति' इत्यादि प्रयोगाः । व्याख्याताः सिद्धाः इति निरूपिताः । ग्रामे ओदने चोद्देश्यत्वयोग्यताविशेषसत्त्वात्कर्मत्वमिति तादृशप्रयोगस्य साधुत्वम् । यत्र । तु हि । ताडनादिना प्रहारादिना । पराधीनतया परवशतया । विषभोजनादिकं गरलभक्षणादिकम् । तत्र तादृशस्थले । विषादिः । तादृशफलाश्रयत्वेन तथाविधफलाश्रयतया । उद्देश्यम् । एव । भक्षिते विषे सद्यः पीडाकरात्ताडनान्युक्तिर्भविष्यतीति तत्राप्युद्देश्यत्वमक्षतमेवेति ज्योत्स्नायाम् । अतः अस्माद्धेतोः । एव हि । 'आतश्च विषमीप्सितं यद् भक्षयति ताडनात्' अवश्यमेव विषमभीष्टं यतो हि ताडनभयाद् भक्षयति । इति । भाष्यम् महाभाष्यग्रन्थम् । सङ्गच्छते सुसङ्गतं भवति । तथैव 'कशाभिहतः कारागारं गच्छति' इति इत्थमपि । व्याख्यातं निरूपितम् । अत्रापि कारागारस्य उद्देश्यत्वमेवेति ।

हिन्दी—इससे ( उद्देश्यत्व का अर्थ उद्देश्यत्वयोग्यताविशेषशालित्व अर्थ मानने से ) दूसरे ही कार्य में लगे हुए चैत्र के विषय में 'किं ग्रामं गच्छति अथवा ओदनं पचति' ऐसे प्रश्न में 'न ग्रामं गच्छति न ओदनं पचति' इत्यादि प्रयोगों की भी व्याख्या की गई।

( ग्राम तथा ओदन दोनों में उद्देश्य होने से योग्यताविशेष पाया जाता है। अतः इनमें कर्मत्व सही है। ) जहाँ तो ताड़न आदि के द्वारा पराधीन होने के कारण विषभोजन आदि किया जाता है, उस प्रकार के फल के आश्रयता के कारण उद्देश्य ही है। इसी कारण अवश्य ही विष अभीष्ट है, जो ताडन से खाता है। ऐसा भाष्य सुसङ्गत हो जाता है। इससे 'कशाभिहतः कारागारं गच्छति' इसकी भी व्याख्या की गई। ( यहाँ कारागार भी उद्देश्य ही होता है। )

( १५३ ) कालत्रये काशीगमनशून्ये चैत्रे 'काशीं गच्छति चैत्रः' इति वारणाय विशेष इति। काश्याः फलाश्रयत्वेनोद्देश्यत्वयोग्यतासत्त्वेऽपि तद्विशेषभावान्न न कर्मत्वं तद्विशेषश्च व्यापारसमकालिकस्तटस्थजनगम्यः। किञ्चेदृशस्थले तद्विशेषवत्त्वेऽपि निषेध एवानुभवसिद्ध इति काशीं न गच्छति इति किमनुपन्नम् ?

**व्याख्या**—योग्यताविशेषशालित्वपदे विशेषपदप्रयोजनमाह—**कालत्रये** इत्यादिना। **कालत्रये** त्रिष्वेषु काले भूते वर्तमाने भविष्यति च। कदापीत्याशयः। **काशीगमनशून्ये** काशीगमनरहिते। **चैत्रे**। **'काशीं गच्छति चैत्रः'** इति इत्यत्र। **वारणाय** काशीपदं कर्मत्ववारणाय। **विशेषः** योग्यताविशेषशालित्वमित्यत्र विशेषपदपाठः। **इति**। **काश्याः**। **फलाश्रयत्वेन** संयोगरूपफलाधाररूपेण। **उद्देश्यत्वयोग्यतासत्त्वे** उद्देश्यतायोग्यताभावे। अपि च। **तद्विशेषभावात्** तादृशयोग्यताविशेषराहित्येन। **न** नैव। **कर्मत्वं** कर्मभावः। **तद्विशेषः** तस्याः योग्यतायाः विशेषः। **च** तु। **व्यापारसमकालिकः** व्यापारसमसामयिकः। **तटस्थजनगम्यः** कर्त्रीतरजनविषयः। **किञ्च** यतः। **ईदृशस्थले** एतादृशप्रयोगे। **तद्विशेषवत्त्वे** योग्यताविशेषयुक्तत्वे। **अपि** च। **निषेधः**। **एव** हि। **अनुभवसिद्धः** व्यवहारप्रमाणितः। **इति** इत्थम्। **'काशीं न गच्छति'**। **इति** इत्थम्। **किम्**। **अनुपपन्नम्** असङ्गतमपितु उपपन्नमेवेति।

कदापि काशीगमनशून्ये चैत्रे 'चैत्रः काशीं गच्छति' इत्यादिप्रयोगो न स्यादिति कर्मलक्षणे फलाश्रयतारूपेणोद्देश्यतायोग्यताविशेषवत्वमित्यत्र विशेषपदं पठितम्, विशेषस्तु कर्तुर्व्यापारकाले फलाश्रयतारूपेणाभीष्टे वर्तते, यो हि तटस्थस्यैव विषयो नान्यस्य। उक्तवाक्ये काश्याः फलाश्रयतारूपेणोद्देश्ययोग्यताभावात्तत्र कर्मत्वं प्राप्नोति किन्तु तत्र योग्यताविशेषाभावान्न कर्मत्वमिति। 'काशीं न गच्छति' इत्यत्र योग्यतावत्त्वेऽपि तत्र निषेधस्यानुभवसिद्धत्वादिदमुपपन्नमेव। केचित्तु विशेषपदस्यात्रोपयोगं न मन्यन्ते। तदनुसारेण तत्र विशेषपदाभावेऽपि न हि तादृशस्थले 'चैत्रः काशीं गच्छति' इति प्रयोगः। वक्ता हि चैत्रः कदापि काशीं न गच्छतीति जानन्नेव कथं तथावाक्यं प्रयुनक्ति ? स तु तादृशस्थले 'चैत्रः काशीं न गच्छति' इत्येव वदतीति।

**हिन्दी**—तीनों ही कालों में काशी न जाने वाले चैत्र के लिए 'काशीं गच्छति चैत्रः' ऐसा प्रयोग न हो, इसके निवारण के लिए कर्म के लक्षण में विशेष पद का संयोजन किया गया है। काशी का फल के आश्रय के रूप में उद्देश्यत्व योग्यता के

रहने पर भी उसका विशेष अभाव होने से कर्मत्व नहीं हो पाएगा। 'योग्यता का विशेष' वह हो, जो व्यापार के समकालिक होते हुए तटस्थ व्यक्ति मात्र का विषय होता है, अन्य का नहीं। इसके अलावा इस प्रकार प्रयोगों में योग्यता-विशेष के रहने पर भी निषेध ही अनुभवासिद्ध है। इस कारण 'काशीं न गच्छति' तो असिद्ध नहीं होता।

(१५४) ननु 'अन्नं भक्षयन् विषं भुङ्क्ते' 'ग्रामं गच्छंस्तृणं स्पृशति' इत्यादौ विषतृणयोरुद्देश्यत्वाभावात् कथं कर्मत्वमिति चेच्छृणु तथायुक्तम् ····इति लक्षणान्तरात्। प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोजनप्रकृतधात्वर्थ-फलाश्रयत्वमनीप्सितकर्मत्वमिति तदर्थात्। 'प्रयागात्काशीं गच्छति' इत्यत्र प्रयागस्य कर्मत्ववारणाय प्रकृतधात्वर्थफल इति। द्वेष्योदासीनकर्मसङ्ग्रहार्थ-मिदं लक्षणम्।

**व्याख्या**—कर्मकारकाणां प्रयोगान्तरमाह नन्वित्यादिना। ननु। 'अन्नं भक्षयन् विषं भुङ्क्ते' 'ग्रामं गच्छन् तृणं स्पृशति'। इत्यादौ इत्यादिवाक्ये। विषतृणयोः। 'विषं भुङ्क्ते' इत्यत्र विषस्य तृणं स्पृशति इत्यत्र तृणस्य च। उद्देश्यत्वाभावात् फलाश्रयं-त्वेनोद्देश्यत्वाभावात्। कथं कर्मत्वम्। इति चेत्। शृणु। तथायुक्तमिति। 'तथायुक्तं चानीप्सितम्' (१।४।५०) इति। लक्षणान्तरात् अन्यस्मादेव लक्षणात्। प्रकृतधात्वर्थ-प्रधानीभूतव्यापारप्रयोजनप्रकृतधात्वर्थफलाश्रयत्वं प्रस्तुतधात्वर्थभूतप्रधानभूतव्यापार-स्य प्रयोजनं यत्प्रकृतधात्वर्थफलं तस्याश्रयत्वम्। अनीप्सितकर्मत्वम् प्रासङ्गिककर्मत्वम्। इति इत्थम्। तदर्थात् तस्य सूत्रस्य अर्थात् आशयात्। 'प्रयागात् काशीं गच्छति' इत्यत्र इत्यस्मिन् वाक्ये। प्रयागस्य कर्मत्ववारणाय अनीप्सितकर्मत्ववारणाय। प्रकृतधात्वर्थ-फलमिति। विभागस्य धात्वर्थफलत्वाभावान्न प्रयागस्य कर्मत्वमिति। द्वेष्योदासीनकर्म-सङ्ग्रहार्थं द्वेष्यमनभीष्टमुदासीनं तटस्थं यत्कर्म तस्य सङ्ग्रहार्थम्। इदं तथायुक्तञ्चा-नीप्सितमिति। लक्षणमिति। 'अन्नं भक्षयन् विषं भुङ्क्ते' 'ग्रामं गच्छंस्तृणं स्पृशति' इत्यादौ विषतृणयोरुद्देश्यत्वाभावात्कर्मत्वाभावनिरासाय कर्मत्वस्य तथायुक्तं चानी-प्सितमिति लक्षणान्तरं कृतम्। धात्वर्थभूतव्यापारप्रयोजनप्रकृतधात्वर्थफलाश्रयत्वमनी-प्सितकर्मत्वमिति तदाशयः। अनेन विषादिकं द्वेष्यं तृणादिकमुदासीनं यत्कर्म तस्यापि सिद्धिरुक्ता।

**हिन्दी**—'अन्नं भक्षयन् विषं भुङ्क्ते' 'ग्रामं गच्छन् तृणं स्पृशति' इत्यादि वाक्यों में विष और तृण का उद्देश्यत्व के अभाव में कैसे कर्मत्व होगा? यदि ऐसा कहना हो तो सुनिए। 'तथायुक्तञ्चानीप्सितम्' (पा० सू० १।४।५०) ऐसा दूसरा लक्षण भी है। प्रस्तुत धातु के अर्थ में प्रधानीभूत जो व्यापार है, उसके प्रयोजन के रूप में जो प्रस्तुत धात्वर्थभूत फल का आश्रय होना अनीप्सितकर्मत्व है, ऐसा उसका अर्थ है। 'प्रयागात् काशीं गच्छति' इत्यादि में प्रयाग के कर्मत्व के निवारण के लिए 'प्रकृतधात्वर्थफल' ऐसा कहा गया है। द्वेष्य एवं उदासीन कर्म के सङ्ग्रह के लिए यह लक्षण की गई है।

( १५५ ) दुहादीनां व्यापारद्वयार्थकत्वपक्षे 'अकथितञ्च' इति व्यर्थं पूर्वेणैवार्थसिद्धेः। एकव्यापारबोधकत्वपक्षे तु सम्बन्धषष्ठीबाधनार्थम्। तत्पक्षे कर्मसम्बन्धित्वे सति अपादानादिविशेषाविवक्षितमकथितकर्मत्वमिति तृतीयलक्षणेन 'गां पयो दोग्धि' इत्यादौ गामित्यस्य कर्मत्वसिद्धिरिति अन्यत्र विस्तरः।

**व्याख्या**—द्विकर्मकधातुविषये प्रावधानमाह—**दुहादीनामित्यादिना**। **दुहादीनां** दुहिप्रभृतिधातूनां दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुष्नीहृकृष्वहः इत्येते दुहादयः। **व्यापारद्वयार्थकत्वपक्षे** यस्मिन् पक्षे व्यापारद्वयं कल्प्यते यथा 'गां दोग्धि पयः' इत्यत्र गोवृत्तिर्विभागरूपो व्यापारो गोपवृत्तिर्दोहनव्यापारश्चेति दुग्धसम्बद्धो विभागरूपव्यापारस्तदनुकूलो दोहनव्यापारश्चेति तत्पक्षे। **अकथितञ्च** 'अकथितञ्च' ( १।४।५१ ) इति सूत्रम्। **व्यर्थं** निरर्थकमेव। **पूर्वेण** 'कर्तुरीप्सिततमं कर्म'त्यनेनैव। **इष्टसिद्धेः** अभीष्टप्राप्तेः। फलस्य व्यापारप्रयोज्यत्वे ईप्सिततमत्वभावाद् गामित्यत्रापि तेनैव कर्मत्वमिति। **एकव्यापारबोधकत्वपक्षे** यस्मिन् पक्षे गोपवृत्तिरेक एव व्यापारः स्वीक्रियते तत्पक्षे। **तु** तद्व्यतिरिक्तम्। **सम्बन्धषष्ठीबाधनार्थं** शेषत्वेन या सम्बन्धार्थे गोपदे 'षष्ठी शेषे' ( पा० सू० २।३।५० ) इति षष्ठीं प्राप्नोति, तस्य बाधनाय 'अकथितञ्चे'ति सूत्रमावश्यकमेव। तत्पक्षे सूत्रसार्थकत्वपक्षे। **कर्मसम्बन्धित्वे** कर्मणः सम्बद्धत्वे। **सति**। **अपादानादिविशेषाविवक्षितत्वम्** अपादानादिकारकविशेषैरविवक्षितत्वमगृहीतत्वम्। **अकथितकर्मत्वम्**। **इति**। **तृतीयलक्षणेन** 'कर्तुरीप्सिततमं कर्म' 'तथायुक्तञ्चानीप्सितम्' इति सूत्रद्वयविषयातिरिक्तभूतेन लक्षणेन। **'गां दोग्धि पयः' इत्यादौ**। **'गाम्' इति अस्य**। **कर्मत्वसिद्धिः**। **इति**। **अन्यत्र** ग्रन्थान्तरे **विस्तरः** इति।

**हिन्दी**—दुह् आदि धातुओं के दो व्यापारों की कल्पना के पक्ष में ( जैसे दुह् का गोनिष्ठविभागरूप व्यापार एवं गोपनिष्ठदोहनरूप व्यापार ) 'अकथितञ्च' ( पा० सू० १।४।५१ ) व्यर्थ है, क्योंकि पहले वाले ( 'कर्तुरीप्सिततमं कर्म' ) से ही कर्मत्व की सिद्धि हो जाती है। जो गोपनिष्ठ दोहन रूप एकमात्र व्यापार मानते हैं, उनके पक्ष में तो शेष अर्थ में जो सम्बन्धषष्ठी ( गोपद में ) प्राप्त होती है, उसके बाधन हेतु यह सूत्र आवश्यक है। सूत्र के पक्ष में कर्म से सम्बन्धी होने पर अपादानादि कारक-विशेष से अविवक्षित होना ही अकथितकर्मत्व है। ऐसे तीसरे लक्षण से 'गां दोग्धि पयः' इत्यादि में 'गाम्' इसकी कर्मत्वसिद्धि होती है। इसका दूसरे ग्रन्थों में विस्तार से विवेचना की गई है।

( १५६ ) यत्तु तार्किकाः कर्मत्वं तु न करणव्यापारवत्त्वं तद्धि करणजन्यव्यापारवत्त्वम्। दात्रेण धान्यं लुनातीत्यादौ हस्तादिकरणजन्यव्यापारवति दात्रादावतिव्याप्तेः। नापि क्रियाजन्यफलशालित्वं तत् चैत्रश्चैत्रं गच्छतीत्यापत्तेः संयोगरूपफलस्योभयकर्मकर्तृनिष्ठत्वात्। नापि परसमवेतक्रियाजन्यफलशालित्वं तत् गमिपत्योः पूर्वस्मिन् देशे त्यजेश्चोत्तरस्मिन् देशे कर्मत्व-

प्रसङ्गात्। नदी वर्धते इत्यादौ अवयवोपचयरूपवृद्धिक्रियायास्तीरप्राप्तिरूप-फलाश्रये तीरे कर्मत्वापत्तेश्च।

**व्याख्या**—कर्मलक्षणे कतिपयनैयायिकसम्मतमतमुद्धरति—यदित्यादिना। यत् यदेव। तु हि। तार्किकाः कतिपयनैयायिकाः। आहुरित्यनेन सम्बन्धः। **कर्मत्वं** कर्मभावः। तु हि। न नैव। **करणव्यापारवत्त्वं** करणस्य क्रियासिद्धौ प्रकृष्टोपकारक-कारकस्य यो व्यापारस्तद्वत्त्वं तेन युक्तत्वम्। न हि करणव्यापारयुक्तता हि कर्मत्वमिति। तत् करणव्यापारवत्त्वम्। हि तु। **करणजन्यव्यापारवत्त्वं** करणोत्पाद्यव्यापारमुक्तत्वम्। **दात्रेण धान्यं लुनाति। इत्यादौ** इत्यादिवाक्ये। **हस्तादिकरणजन्यव्यापारवति** हस्तादि करादि यत्करणं क्रियोपकारकं तज्जन्यस्तदुत्पाद्यो यो व्यापारस्तद्वति तद्युक्ते। **अति-व्याप्तेः**। दात्रव्यापारस्य करणजन्यव्यापारत्वात्।

न नैव। अपि च। **क्रियाजन्यफलशालित्वं** क्रियोत्पाद्यफलयुक्तत्वम्। **तत्** कर्मत्वम्। 'चैत्रश्चैत्रं गच्छति' इति आपत्तेः एतादृशप्रयोगप्राप्तेः। **संयोगरूपफलस्य** गमिधात्वर्थभूतसंयोगरूपफलस्य। **उभयकर्मकर्तृनिष्ठत्वात्** उभये कर्मणि कर्तरि च तयोर्निष्ठा वृत्तिर्यस्य तथात्वात्। संयोगरूपफलस्य कर्तृनिष्ठत्वे सति तत्र द्वितीया-प्राप्तेरिति।

नापि नैव च। **परसमवेतक्रियाजन्यफलशालित्वं** कर्मणाऽन्यस्मिन् समवायरूपेण सम्बद्धा या क्रिया तज्जन्यफलशालित्वम्। **तत्** कर्मत्वम्। **तथा सति**। **गमिपत्योः** गमेः पतेश्च धातोः। **पूर्वस्मिन्** यतो विभागो भवति तस्मिन् **देशे**। **त्यजेः** त्यजि धातोः। **उत्तरस्मिन्**। **देशे** स्थाने। **कर्मत्वप्रसङ्गात्** कर्मत्वप्राप्तेः। **तथैव**। **नदी वर्धते**। **अवयवोपचयरूपवृद्धिक्रियायाः** अवयवस्याङ्गस्योपचयस्तद्रूपा या वृद्धिः क्रिया तस्याः। **तीरप्राप्तिरूपफलाश्रये** तीरप्राप्तिरूपं यत्फलं तस्याश्रये। **तीरे** तटे। **कर्मत्वापत्तेः** इति। **अयम्भावः**—कर्मत्वं हि न करणव्यापारजन्यव्यापारवत्त्वमेव तथा सति दात्रेण धान्यं लुनातीत्यत्र दात्रस्य हस्तरूपकरणव्यापारजन्यव्यापारवत्त्वेन कर्मत्वं स्यात्। नापि क्रियाजन्यफलशालित्वमेव कर्मत्वं, तथा हि सति 'चैत्रश्चैत्रं गच्छति' इत्यादिप्रयोगापत्तेः संयोगरूपफलस्य कर्तृकर्मोभयनिष्ठत्वाच्चैत्रेऽपि कर्मत्वप्राप्तेः। न च कर्मान्यतरसमवेत-क्रियाजन्यफलशालित्वमेव कर्मत्वम्। तथा सति गमिपतोः पूर्वदेशे त्यजेरुत्तरदेशे कर्मत्वप्रसङ्गात्। 'नदी वर्धते' इत्यत्र तीरे कर्मत्वं स्यादङ्गोपचयरूपवृद्धिक्रियायाः तीरप्राप्तिरूपफलाश्रयत्वात्तीरस्येति। तेनैतत्परिभाषात्रयमनुपयुक्तमिति।

**हिन्दी**—जो कि तार्किक ( यह कहते हैं ) न कि करण के व्यापार से युक्त होना ही कर्मत्व है। वह ( करण के व्यापार से युक्त होना ) करणजन्य व्यापार से युक्त होना ही है। 'दात्रेण धान्यं लुनाति' इत्यादि में हस्त आदि करणजन्य व्यापार से युक्त दात्र आदि में अतिव्याप्ति होगी। न तो क्रियाजन्य फल से युक्त होना ही कर्मत्व है। 'चैत्रश्चैत्रं गच्छति' इत्यादि प्रयोगों की प्राप्ति इससे होगी, क्योंकि संयोग-रूप फल कर्म एवं कर्ता दोनों ही में रहता है। न तो कर्म से भिन्न में समवाय रूप से रही क्रियाजन्य फल से युक्त होना ही कर्मत्व है। ऐसा मानने पर गम् एवं पत्

धातु का पहले के देश में त्यज् धातु के रूप में उत्तरदेशे कर्मत्व की प्राप्ति होगी। 'नदी वर्धते' इत्यादि में अवयव के उपचय रूप वृद्धि क्रिया का तीरप्राप्ति रूप फल के आश्रय में तीर में कर्मत्व की प्राप्ति हो जाती है।

( १५७ ) अत्र ब्रूमः—धात्वर्थावच्छेदकफलशालित्वं कर्मत्वम्। तादृशफलञ्च गमेः संयोगः त्यजेर्विभागः पतेरधोदेशसंयोगः। अधोदेशरूपकर्मणो धात्वर्थनिविष्टत्वादकर्मकत्वेन पर्णं भूमौ वृक्षात्पतति इति। संयोगमात्रफलपक्षे वृक्षाद् भूमिं पततीति। ननु चतुर्थलक्षणेऽपि 'चैत्रश्चैत्रं गच्छती'त्यापत्तिः। तत्र हि धात्वर्थावच्छेदकफलं संयोग इति चेन्न; लक्षणे व्यापारानधिकरणत्वे सति इति विशेषणदानादित्याहुः।

**व्याख्या**—कर्मलक्षणे नैयायिकसम्मतं सिद्धान्तमुपस्थापयति—**अत्रे**त्यादिना। **अत्र** प्रसङ्गेऽस्मिन्। **ब्रूमः** कथयामः। **धात्वर्थतावच्छेदकफलशालित्वं** धात्वर्थताया अवच्छेदकं परिचायकमाश्रयभूतमिति यत्फलं तच्छालित्वं तद्युक्तत्वम्। **कर्मत्वमिति**। **तादृशफलं** तथाविधफलम्। **च** हि। **गमेः** गम् धातोः। **संयोगः** अपरदेशसम्पर्कः। **त्यजेः** त्यज्-धातोः। **विभागः** पूर्वदेशवियोगः। **पतेः** पत् धातोः। **अधोदेशसंयोगः** ऊर्ध्ववर्तिदेशवियोगेनाधोवर्तिदेशसम्पर्कः। **अधोदेशरूपकर्मणः** पतेरधोवर्तिदेशरूपस्य कर्मणः। **धात्वर्थनिविष्टत्वात्** धात्वर्थान्तर्भूतत्वात्। धातोः **अकर्मकत्वेन**। **पर्णं वृक्षाद् भूमौ पतति**। इति प्रयोगः साधुः। पतेः **संयोगमात्रफलपक्षे** यस्मिन् पक्षे संयोगमात्रमेव फलं न त्वधोदेशसंयोगः। **ननु**। **चतुर्थलक्षणे** कर्मणो धात्वर्थतावच्छेदकफलशालित्वलक्षणे। **अपि** च। **'चैत्रश्चैत्रं गच्छति'** इति। **आपत्तिः** प्राप्तिः। यतो **हि**। **तत्र** गम् धातौ। **धात्वर्थतावच्छेदकफलं** धात्वर्थतायाः अवच्छेदकमाश्रयभूतं फलम्। **संयोगः** अपरदेशसम्पर्कः। **इति**। **चेत्**। **न** नैवोपयुक्तम्। **लक्षणे** चतुर्थलक्षणे। **व्यापारानधिकरणत्वे** धात्वर्थभूतव्यापारस्याधिकरणाभावे। **सति**। **इति**। **विशेषणदानात्** कर्मलक्षणे विशेषणयोगेन। तथा दोषाभाव। **इति**। **आहुः** कथयन्ति इति।

अत्र हि नैयायिकोक्तानि चत्वारि कर्मलक्षणान्युक्तानि कर्मत्वं करणव्यापारवत्त्वं यस्याशयः करणजन्यव्यापारयुक्तत्वमिति। एतन्नैवोपयुक्तं, तथा हि सति 'दात्रेण धान्यं लुनाती'त्यादौ करादिकरणजन्यव्यापारवति दात्रादौ कर्मत्वं स्यात्। क्रियाजन्यफलशालित्वं कर्मत्वमिति द्वितीयम्। तच्च नैवोपयुक्तं संयोगरूपक्रियाजन्यफलस्य कर्तृकर्मोभयनिष्ठत्वात् 'चैत्रश्चैत्रं गच्छती'त्यादिप्रयोगापत्तेः। कर्मेतरसमवेतक्रियाजन्यफलशालित्वं कर्मत्वमिति तृतीयं यद्धि नैवोपयुक्तम्। तथा हि सति गमिपत्योः पूर्वस्मिंस्त्यजेरुत्तरस्मिन् देशे च कर्मत्वप्राप्तेः। एवमेव 'नदी वर्धते' इत्यादौ अवयवोपचयरूपवृद्धिक्रियायास्तीरप्राप्तिरूपफलाश्रये तीरे कर्मत्वप्राप्तेश्च। चतुर्थञ्च लक्षणं धात्वर्थतावच्छेदकफलशालित्वमिति। यथा गमेः संयोगस्त्यजेर्विभागः पतेरधोदेशसंयोगः। तत्र पतेरधोदेशरूपार्थे तस्य धात्वर्थनिविष्टत्वाद्धातोरकर्मकत्वेन पर्णं वृक्षाद् भूमौ पतति इति संयोगमात्रकफलपक्षे वृक्षाद् भूमिं पतति इति भूमेर्धात्वर्थतावच्छेदकसंयोगरूपफलशालि-

त्वात् । न चात्रापि संयोगस्य धात्वर्थतावच्छेदकफलत्वेन 'चैत्रश्चैत्रं गच्छति' इत्यापत्तिरिति वाच्यं लक्षणे धात्वर्थभूतव्यापारानधिकरणत्वे सति इत्याशयादिति ।

हिन्दी—इस प्रसङ्ग में यह कहना है कि धात्वर्थता के अवच्छेदक अर्थात् धात्वर्थभूत फल से युक्त होना ही कर्मत्व है । उस तरह का फल है गम् धातु का संयोग, त्यज् धातु का विभाग और पत् धातु का अधोदेश से संयोग । अधोदेशरूप कर्म का धात्वर्थ में समावेश होने से धातु के अकर्मक हो जाने पर 'पर्णं वृक्षाद् भूमौ पतति' ऐसा प्रयोग होगा । संयोग मात्र को ही धात्वर्थफल मानने के पक्ष में 'वृक्षाद् भूमिं पतति' ऐसा प्रयोग होगा । चौथे लक्षण में भी 'चैत्रश्चैत्रं गच्छति' ऐसा प्रयोग होने लगेगा, क्योंकि उसमें भी धात्वर्थता का अवच्छेदक ( धात्वर्थ ) फल संयोग है, ऐसा कहना ठीक नहीं है । 'लक्षण में व्यापार का अधिकरण न होने पर' ऐसा विशेषण रूप आशय होने से कोई दोष नहीं है ।

( १५८ ) तन्न । 'काशीं गच्छन् पथि मृतः' इत्यादौ काश्याः, 'काशीं गच्छति न प्रयागम्' इत्यादौ प्रयागस्य 'ग्रामं न गच्छति' इत्यादौ ग्रामस्य च तादृशफलशालित्वाभावादेतस्य लक्षणस्यात्र सर्वत्राव्याप्तेः ।

व्याख्या—चतुर्थमतमपि दूषयति ग्रन्थकृत्तदित्यादिना । तत् व्यापारानधिकरणत्वे सति धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति । न नैवोपयुक्तम् । 'काशीं गच्छन् पथि मृतः' । इत्यादौ इत्यादिवाक्ये । काश्याः । 'काशीं गच्छति न प्रयागम् ।' इत्यादौ । प्रयागस्य । ग्रामं न गच्छति । इत्यादौ ग्रामस्य । च अपि । तादृशफलशालित्वाभावात् धात्वर्थतावच्छेदकफलशालित्वाभावात् । एतस्य लक्षणस्य । अत्र एतादृशस्थले । सर्वत्र । अव्याप्तेः व्याप्त्यभावात् ।

नैयायिकसम्मतसिद्धान्तभूतं व्यापारानधिकरणत्वे सति धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति लक्षणमपि न दोषरहितम् । तथा हि सति काशीं गच्छति न प्रयागमित्यादौ प्रयागादेः कर्मत्वं न स्यात्तत्र तादृशफलशालित्वाभावात् ।

हिन्दी—नैयायिकों का यह कथन भी उचित नहीं है । वैसा मानने पर 'काशीं गच्छन् पथि मृतः' इत्यादि में काशी का, 'काशीं गच्छति न प्रयागम्' इत्यादि में प्रयाग का और 'ग्रामं न गच्छति' इत्यादि में ग्राम का भी उस प्रकार के फल से युक्त होना न होने से इस लक्षण का ऐसे सभी स्थानों में अव्याप्ति होगी ।

( १५९ ) ननु 'वृक्षं त्यजति खगः' इत्यत्र वृक्षस्य विभागरूपफलाश्रयत्वेनापादानत्वमस्त्विति चेन्न । अत्र हि विभागः प्रकृतधात्वर्थः । यत्र च विभागो न प्रकृतधात्वर्थस्तद्विभागाश्रयस्यैवापादानत्वम् । यथा वृक्षात् पततीत्यादौ । यत्र च प्रकृतधात्वर्थो विभागस्तत्र 'उभयप्राप्तावपादानमुत्तराणि कारकाणि बाधन्ते' इति भाष्ययुक्तेः कर्मत्वम् । अनुक्ते कर्मणि षष्ठीद्वितीये—'भारतस्य श्रवणं' 'भारतं शृणोति' इति यथा ।

व्याख्या—'वृक्षं त्यजति खगः' इति प्रयोगविषये यथार्थतां निरूपयति—नन्वित्यादिना। ननु। वृक्षं त्यजति खगः। इत्यत्र इत्यादौ वाक्ये। वृक्षस्य। विभागरूपफलाश्रयत्वेन विभागो विश्लेषस्तद्रूपं यत्फलं तस्याश्रयत्वेन। अपादानम्। अस्तु। इति कथ्यते। चेत्। तत्। न नैवोपयुक्तम्। यतो हि। अत्र एतादृशप्रयोगे। हि। विभागः विश्लेषः। न नैव। प्रकृतधात्वर्थः प्रस्तुतधातुवाच्यः। एतद्विपरीतम्। यत्र यस्मिन् वाक्ये। च तु। विभागः। न। प्रकृतधात्वर्थः प्रस्तुतधातुवाच्यः। तद् विभागाश्रयस्य तादृशो यो विभागस्तस्याश्रयस्य। एव हि। अपादानत्वम् अपादानकारकविषयत्वम्। यथा इति निदर्शने। वृक्षात् पतति इत्यादौ इत्यादिवाक्ये। यत्र यस्मिन् वाक्ये। च हि। प्रकृतधात्वर्थः प्रस्तुतधातुवाच्यः। विभागः। तत्र तादृशवाक्ये। उभयप्राप्तौ कर्मापादानोभयप्राप्तौ। उत्तराणि अपराणि। कारकाणि। अपादानम् अपादानकारकम्। बाधन्ते। इति इत्थम्। भाष्यमुक्तेः भाष्यकारवचनात्। कर्मत्वम्। एवेति। कर्मणि। अनुक्ते अनभिहिते। षष्ठीद्वितीये षष्ठी च द्वितीया च ते। भवत इति शेषः। भारतस्य श्रवणम्। भारतं शृणोति। इति इत्थम्। यथेति।

विभागो हि कर्मणोऽपादानस्य च विषयः। तत्रैतावदेवान्तरं यद्यत्र हि विभागः प्रकृतधात्वर्थस्तस्याश्रये कर्मत्वं यत्र च स न प्रकृतधात्वर्थस्तदाश्रयेऽपादानत्वमिति विवेकः। प्रकृतधात्वर्थविभागाश्रयस्य कर्मत्वं यथा वृक्षं त्यजति खगः इत्यत्र तदभावेन विभागस्यापादानत्वं यथा वृक्षात्पतति इत्यादौ। यत्र च कर्मणोऽनुक्तत्वं तत्र षष्ठीद्वितीये भवतः पर्यायेण यथा भारतस्य श्रवणं भारतं शृणोति इत्यादौ।

हिन्दी—'वृक्षं त्यजति खगः' इत्यादि में वृक्ष का विभाग रूप फल के आश्रय के रूप में अपादानत्व हो, ऐसा कहना ठीक नहीं है, क्योंकि यहाँ विभाग प्रस्तुत त्यज् धातु का अर्थ है। जहाँ विभाग प्रस्तुत धातु का अर्थ नहीं है, उस विभाग के आश्रय में ही अपादानत्व होता है। जैसे 'वृक्षात्पतति' इत्यादि में। जहाँ प्रस्तुत धातु का अर्थ विभाग है, वहाँ कर्मत्व एवं अपादानत्व दोनों की प्राप्ति में वाद में विहित कारक अपादान कारक को वाँध लेते हैं, ऐसे भाष्यवचनों से वहाँ कर्मत्व ही होगा। कर्म के अनभिहित होने पर षष्ठी एवं द्वितीया दोनों विभक्तियाँ होती हैं। जैसे 'भारतस्य श्रवणम्' 'भारतं शृणोति' इत्यादि में।

(१६०) सकर्मकत्वञ्च फलव्यधिकरणव्यापारवाचकत्वं फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम्। 'अद्य देवदत्तो भवति' उत्पद्यत इत्यर्थः। अत्रोत्पत्तिरूपं फलं बहिर्निस्सरणञ्च व्यापारो देवदत्तनिष्ठ एव। व्यापारमात्रवाचकत्वं वाऽकर्मकत्वम्। अस्ति भवति विद्यते वर्तते इत्यादिधातुषु फलस्य सर्वदुर्ज्ञेयत्वात्। सत्ता हि स्थितिरूपो व्यापारविशेषः। 'देवदत्तोऽस्ति' इत्यादौ देवदत्तकर्तृकासत्तेत्येव बोधाच्च। फलव्यापारयोर्धातुर्वाचक इति तु बाहुल्याभिप्रायेणेति दिक्।

व्याख्या—सकर्मकत्वाकर्मकत्वे धातोः पुनर्विचारयति सकर्मकत्वमित्यादिना। फल-

व्यधिकरणव्यापारवाचकत्वं फलाधिकरणभिन्नाश्रयव्यापारबोधकत्वम् । सकर्मकत्वं धातोः सकर्मकभावः । फलसमानाधिकरणव्यापारवाचकत्वं फलाधिकरणाभिन्नाधिकरणव्यापारबोधकत्वम् । अकर्मकत्वम् । यथा अद्य देवदत्तो भवति । इत्यत्र भवतेः । उत्पद्यते इत्यर्थः । अत्र वाक्येऽस्मिन् । उत्पत्तिरूपम् । फलं धात्वर्थभूतम् । बहिर्निस्सरणं गर्भाद् बाह्यागमनं व्यापारः । देवदत्तनिष्ठ देवदत्ताधिकरण एव । तेन फलसमानाधिकरणव्यापारवाचकत्वाद् भूधातुरत्राकर्मक इति । व्यापारमात्रवाचकत्वं व्यापारमात्रस्य न तु फलस्यापि वाचकत्वम् । वा इति पक्षान्तरे । अकर्मकत्वमिति । अस्ति । भवति । विद्यते । वर्तते । इत्यादिधातुषु । फलस्य व्यापारजन्यस्य । सत्त्वेऽपि सर्वैः साधारणैः । दुर्ज्ञेयत्वात् ज्ञातुमशक्यत्वात् । सत्ता सत्तानाम । हि । स्थितिरूपः । व्यापारविशेषः । एव न तु फलमिति । देवदत्तोऽस्ति इत्यादौ इत्यादिवाक्ये । देवदत्तकर्तृका देवदत्तः कर्ता यस्यां तादृशी । सत्ता । इति । एव न तु फलस्यापि । बोधात् ज्ञानात् । च इति । फलव्यापारयोः फलस्य व्यापारस्य च तयोः । धातुः क्रियावाचिशब्दः । वाचकः बोधकः । इति इत्थम् । तु हि । बाहुल्याभिप्रायेण प्रायिकस्थितिदृष्टया । कथितमिति । इति । दिक् । सारतो विषयविवेचनमिति ।

फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वं फलसमानाधिकरणव्यापारवाचकत्वं व्यापारमात्रवाचकत्वं वाऽकर्मकत्वम् । फलव्यापारयोर्धातुरिति तु प्रायोवादः । न हि सर्वे धातवो व्यापारेण सह फलस्यापि वाचकाः । तेनैवोक्तं धात्वर्थे व्यापारस्य प्राधान्यमिति । व्यापारो हि क्रिया । तस्य वाचकत्वे एव धातोर्धातुत्वं सम्भवति । फलं तु धातोर्द्वितीयोऽर्थः, न हि फलस्य वाचकत्वमेव धातोः सकर्मकत्वम् । सकर्मकत्वमिति तु फलव्यधिकरणव्यापारवाचकत्वे सत्येव धातोः । 'देवदत्तो भवति' इत्यादौ भूधातुरुत्पत्तिरूपफलबहिर्निस्सरणरूपव्यापारयोर्वाचकः, किन्तु तयोरुभयोरेव देवदत्तनिष्ठत्वेन धातोरकर्मकत्वम् । भूधातुः सत्तारूपव्यापारमात्रस्यापि वाचको यथा स भवति इत्यादौ । अत्र फलस्य सत्त्वेऽपि तस्य साधारणाविषयत्वाद्धातोर्व्यापारमात्रवाचकत्वमुक्तम् ।

हिन्दी—फल के अधिकरण से भिन्न अधिकरण वाले व्यापार का वाचक होना सकर्मकत्व है । फल के अधिकरण के समान अधिकरण वाले व्यापार का वाचक होना अकर्मकत्व है । 'अद्य देवदत्तो भवति' में भू धातु का उत्पन्न होता है' यह अर्थ है । यहाँ उत्पत्तिरूप फल एवं बाहर निकलना रूप व्यापार, दोनों देवदत्तनिष्ठ हैं । अथवा व्यापारमात्र का वाचक होना भी अकर्मकत्व है । अस्ति, भवति, विद्यते, वर्तते इत्यादि में अस्, भू, विद्,-वृत् धातुओं में फल सभी के लिए दुर्ज्ञेय है । स्थिति रूप व्यापारविशेष ही सत्ता है । 'देवदत्तः अस्ति' इत्यादि में देवदत्त है कर्ता जिसमें, ऐसी सत्ता का बोध होता है । धातु फल एवं व्यापार दोनों का बोधक होता है । यह तो प्रायिक स्थिति की दृष्टि से है । इस तरह क़र्म के विषय में संक्षेप में कहा गया ।

( १६१ ) स्वनिष्ठव्यापाराव्यवधानेन फलनिष्पादकत्वं करणत्वम् । इदमेव साधकतमत्वम् ।

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ।।

इति हर्युक्तेः । क्रियाया इत्यस्य फलात्मिकाया इत्यर्थः । 'रामेण बाणेन हतो बाली' इत्यादौ धनुराकर्षणादेर्व्यापारस्य बाणव्यापारात् पूर्वमपि कर्तरि सत्त्वात् । रामाभिन्नकर्तृनिष्ठव्यापारप्रयोज्यो यो बाणनिष्ठो व्यापारस्तज्जन्यं यत्प्राणवियोगरूपं फलं तदाश्रयो बाली इति बोधाच्च । 'रामो बाणेन बालिनं हन्ति' इत्यादौ कर्तृप्रत्यये बाणव्यापारजन्यो यो बालिनिष्ठप्राणवियोगस्तदनुकूलो रामकर्तृको व्यापारः इति बोधः । अर्थात् रामव्यापारप्रयोज्यो बाणव्यापारः इति पार्ष्णिको बोधः । कर्मादिपञ्चकारकाणां करणत्ववारणाय 'व्यापाराव्यवधानेन' इति दिक् ।

**व्याख्या**—अथ प्रसङ्गप्राप्तं करणकारकं निरूपयति—**स्वनिष्ठेत्यादिना** । **स्वनिष्ठव्यापाराव्यवधानेन**—स्वनिष्ठः स्वसम्बद्धो यो व्यापारस्तस्याव्यवधानेन । **फलनिष्पादकत्वं** फलोत्पादकत्वं **करणत्वम्** । **इदं** तादृशफलोत्पादकत्वम् । **एव हि** । **साधकतमत्वं** क्रियासिद्धौ प्रकृष्टोपकारकत्वं 'साधकतमं करणम्' ( १।४।४२ ) इति सूत्रसम्मतमिति । उक्तार्थे हरिं प्रमाणयति—**क्रियाया इत्यादिना** । यद् व्यापारात् अनन्तरम् क्रियायाः परिनिष्पत्तिः यदा यत्र विवक्ष्यते तदा तत् करणं स्मृतम् इत्यन्वयः । **यद् व्यापारात्** यस्मात् स्वसम्बद्धव्यापारात् । **अनन्तरं** पश्चात् । **क्रियायाः** धात्वर्थफलस्य । **परिनिष्पत्तिः** उत्पत्तिः सिद्धिर्वा । **यदा** । **यत्र** यस्मिन् वाक्ये । **विवक्ष्यते** अपेक्ष्यते वक्त्रेति । **तदा** । **तत्** क्रियोत्पत्तिनिमित्तभूतव्यापारः । **करणम्** । **स्मृतं** कथितमिति । वक्ता हि यद्व्यापारमनु क्रियोत्पत्तेर्विवक्षां करोति तद्व्यापाराश्रयः करणसंज्ञकमिति कारिकाशयः । **कारिकायां क्रियाया इत्यस्य फलात्मिकायाः** फलवाचिकायाः क्रियायाः । **इत्यर्थः** इत्याशयः । **'रामेन बाणेन हतो बाली' इत्यादौ** इति वाक्ये । **धनुराकर्षणादेः** चापसज्जीकरणादेः । **व्यापारस्य** कार्यस्य । **बाणव्यापारात्** बाणजन्यहननव्यापारात् । **पूर्वम्** प्राक् । **अपि च** । **कर्तरि** रामादौ । **सत्त्वात्** उपस्थितेः । **रामाभिन्नकर्तृनिष्ठव्यापारप्रयोज्यः** रामादभिन्नो यः कर्ता तस्मिन् निष्ठा यस्य तादृशो यो व्यापारस्तत्प्रयोज्यः । **यः** । **बाणनिष्ठः** इषुसम्बद्धः । **व्यापारः** । **तज्जन्यं** तदुत्पाद्यम् । **यत्** । **प्राणवियोगरूपं** प्राणत्यागात्मकम् । **फलम्** । **तदाश्रयः** तस्य फलस्याश्रयः । **बाली** । **इति** । **बोधात्** ज्ञानात् । **च** । **रामो बाणेन बालिनं हन्ति** । **इत्यादौ** । **कर्तृप्रत्यये** कर्तृवाच्यप्रयोगे । **बाणव्यापारजन्यः** बाणकृतव्यापारोत्पाद्यः । **यः** । **बालिनिष्ठः** बालिसम्बद्धः । **प्राणवियोगः** प्राणत्यागः । **तदनुकूलः** तत्साधकः । **रामकर्तृकः** रामः कर्ता यत्र तादृशः । **व्यापारः** । **इति** । **बोधः** शाब्दबोधः । **अर्थात्** स्पष्टतः कथने **रामव्यापारप्रयोज्यः** रामस्य य बाणप्रहाररूपव्यापारस्तत्प्रयोज्यः साध्यः । **बाणव्यापारः** इषुजन्यव्यापारः । **इति** । **पार्ष्णिकः** पश्चाद्भावी । **बोधः** शाब्दबोध इति । **कर्मादिपञ्चकारकाणां** करणभिन्नेतरकारकाणाम् । **करणत्ववारणाय** करणभावनिवर्तनाय । करणलक्षणे । **'व्यापाराव्यवधानेन'** इति पदम् । **इति** । **दिक्** सङ्क्षेपेण विचार इति ।

यस्य हि स्वनिष्ठव्यापाराव्यवधानेन क्रियायाः फलोत्पादकत्वं तत्कारकं हि करणम् । अयमेव 'साधकतमं करणमि'ति सूत्रे साधकतमपदस्यार्थः । अत्र हि तमप्प्रत्ययः प्रकर्ष-वोधकः । प्रकर्षत्वञ्च कारकस्य व्यवधानरहितत्वेन फलोत्पादकव्यापारयुक्तत्वमेव, तच्च कारकान्तरापेक्षया न तु स्वप्रकृतिककारकान्तरापेक्षया । यथा घटं करोति इत्यादौ दण्डनिष्ठव्यापारसमकालमेव घटरूपफलमुत्पद्यते इति दण्डस्य करणत्वम् ।

हिन्दी—अपने में स्थित व्यापार का व्यवधानरहित रूप से फल का उत्पादक होना करणत्व है । यही साधकतमत्व है ।

जिस व्यापार के तुरन्त बाद क्रिया ( के फल ) की उत्पत्ति की जहाँ जब वक्ता के द्वारा विवक्षा की जाती है वह तब करण कहा जाता है । ऐसा हरि का भी कथन है । कारिका में 'क्रिया' का अर्थ फलात्मिका क्रिया अर्थ है । 'रामेण वाणेन हतो वाली' इत्यादि में धनुष का खींचना आदि व्यापार का वाण के व्यापार से पहले भी रहता है । राम से अभिन्न जो कर्ता है, उसमें रहे व्यापार से प्रयोज्य जो वाणनिष्ठ व्यापार है, उससे जन्य जो प्राणवियोग रूप फल है, उसका आश्रय वाली है, ऐसा वोध होता है । 'रामो वाणेन वालिनं हन्ति' इत्यादि में कर्तृवाच्य में वाणव्यापारजन्य जो वालिनिष्ठ प्राणवियोग है, उसके अनुकूल राम के द्वारा किया गया व्यापार, ऐसा बोध होता है । अर्थात् राम के व्यापार से प्रयोज्य है वाण का व्यापार, ऐसा पश्चाद् बोध होता है । कर्म आदि पाँच कारकों का करणत्व निवारण के लिए करण लक्षण में व्यापाराव्यवधानेन यह पद पढ़ा गया है ।

**( १६२ ) क्रियामात्रकर्मसम्बन्धाय क्रियायामुद्देश्यं यत्कारकं तत्त्वं सम्प्रदानत्वम् । यथा ब्राह्मणाय गां ददाति इत्यादौ दानक्रियाकर्मीभूतगो-सम्बन्धाय ब्राह्मणो दानक्रियोद्देश्यः गोब्राह्मणयोः स्वस्वामिभावसम्बन्धः । 'चैत्रो मैत्राय वार्ताः कथयति' इत्यत्र मैत्रवार्तयोर्ज्ञेयज्ञातृभावः सम्बन्धः ।**

**व्याख्या** - सम्प्रदानकारकं विवृण्वन् तस्य परिभाषामुपस्थापयति—**क्रियेत्यादिना । क्रियामात्रकर्मसम्बन्धाय** क्रियामात्रस्य सर्वासामेव क्रियाणां यत्कर्म धात्वर्थभूतफला-श्रयस्तेन सह सम्बन्धायान्वयाय । **क्रियायाम् । उद्देश्यम्** उद्देश्यभूतम् । **यत् । कारकम् । तत्त्वं** कारकत्वमिति । **सम्प्रदानत्वम्** इति । **यथा—ब्राह्मणाय गां ददाति । इत्यादौ** इत्यादिवाक्ये । **दानक्रियाकर्मीभूतगोसम्बन्धाय** दानक्रियायाः ददातीत्येतस्या दानरूप-क्रियायाः कर्मीभूता धात्वर्थफलाश्रयभूता या गौस्तत्सम्बन्धाय । **ब्राह्मणः । दानक्रियो-द्देश्यः** दानक्रियाया उद्देश्यः । **गोब्राह्मणयोः** गोः ब्राह्मणस्य च । **स्वस्वामिभावः । सम्बन्धः । चैत्रो मैत्राय वार्ताः कथयति । इत्यत्र** इत्यादिवाक्ये । **मैत्रवार्तयोः** मैत्रस्य-वार्तयोः । **ज्ञेयज्ञातृभावः । सम्बन्धः । च** इति ।

धात्वर्थभूतकर्मसम्बन्धार्थं क्रियायामुद्देश्यभूतमर्थाद्यदुद्दिश्य कर्म क्रियते तत्कारकं सम्प्रदानं भवति । उद्देश्यकर्मणोः परस्परं स्वस्वामिभावज्ञेयज्ञातृभावादिसम्बन्धः । ब्राह्मणाय गां ददाति इत्यत्र दानक्रियायाः कर्म गौरुद्देश्यश्च ब्राह्मणस्तयोः सम्बन्धश्च

स्वस्वामिभावाख्यः चैत्रो मैत्राय वार्ताः कथयति इत्यादौ कथनक्रियायाः कर्म वार्ता उद्देश्यश्च मैत्रस्तयोः सम्बन्धश्च ज्ञेयज्ञातृभावाख्यः। तेन क्रियोद्देश्यत्वाद् ब्राह्मणमैत्रयोः सम्प्रदानत्वमिति।

हिन्दी—क्रियामात्र के कर्म के सम्बन्ध के लिए क्रिया में जो उद्देश्यभूत कारक है। उसका होना सम्प्रदानता है। जैसे—'ब्राह्मणाय गां ददाति' इत्यादि में दानरूप क्रिया के कर्म बने गौ के सम्बन्ध के लिए ब्राह्मण दानक्रिया का उद्देश्य है। गौ और ब्राह्मण का परस्पर स्वस्वामिभाव सम्बन्ध है। 'चैत्रो मैत्राय वार्ताः कथयति' इसमें मैत्र और वार्ता का ज्ञेयज्ञातृभाव सम्बन्ध है।

(१६३) यत्तु वृत्तिकाराः—सम्यक् प्रदीयते यस्मै तत्सम्प्रदानमित्यन्वर्थसंज्ञेयम्। तथा च गोनिष्ठस्वस्वत्वनिवृत्तिसमानाधिकरणपरस्वत्वोत्पत्त्यनुकूलव्यापाररूपक्रियोद्देश्यस्य ब्राह्मणादेरेव सम्प्रदानत्वम्। पुनर्ग्रहणाय रजकस्य वस्त्रदाने 'रजकस्य वस्त्रं ददाति' इति सम्बन्धसामान्ये षष्ठ्येवेत्याहुः। तन्न। 'खण्डिकोपाध्यायः शिष्याय चपेटां ददाति' इति भाष्यविरोधात् कर्मणा यमभिप्रैति इति सूत्रव्याख्यावसरे भाष्यकृता अन्वर्थसंज्ञाया अस्वीकाराच्च। अत एव—'तदाचक्ष्वासुरेन्द्राय स च युक्तं करोतु यत्' इति सप्तशतीश्लोकः सङ्गच्छते। तस्माद् 'रजकाय वस्त्रं ददाति' इत्यादि भवत्येव। अत्र आधीनीकरणेऽर्थे ददातिः चपेटां ददातीत्यत्र व्यसनेऽर्थे इति।

व्याख्या—सम्प्रदानत्वविषये वृत्तिकारमतमनूद्य दूषयितुमुपक्रमते—यदित्यादिना। यत् यदेव। तु हि। वृत्तिकाराः अनेके प्राचीना वृत्तिकृतः विशेषेण काशिकावृत्तिकृज्जयादित्यवामनाद्याः। सम्यक् साधुतया स्वस्वत्वनिवृत्तिपूर्वकम्। यस्मै। प्रदीयते। तत्। सम्प्रदानम्। इति। इयम्। अन्वर्थसंज्ञा अर्थानुसारिणी संज्ञेति। तथा च। विप्राय गां ददाति इत्यादौ। गोनिष्ठस्वस्वत्वनिवृत्तिसमानाधिकरणपरस्वत्वोत्पत्त्यनुकूलव्यापाररूपक्रियोद्देश्यस्य गोनिष्ठं गोवृत्ति यत्स्वस्य स्वत्वमधिकारस्तस्य निवृत्तिस्त्यागस्तत्समानाधिकरणो यः परस्य स्वत्वमधिकारस्तस्योत्पत्तिस्तदनुकूलो व्यापारस्तद्रूपो यः क्रियाया उद्देश्यस्तस्य तथाभूतस्य। ब्राह्मणादेः। एव हि। सम्प्रदानत्वम्। इति। पुनर्ग्रहणाय न तु स्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनेनापितु पुनरादातुमेव। रजकस्य वस्त्रक्षालकस्य। वस्त्रदाने वस्त्रादि हस्तान्तरणे। 'रजकस्य वस्त्रं ददाति'। इति। सम्बन्धसामान्ये सामान्यसम्बन्धमात्रबोधे। षष्ठी। एव। इति इत्थम्। आहुः कथयन्ति। इति। तत् वृत्तिकाराणां तथाविधं मतम्। न नैव समीचीनमिति। तत्र हेतुमाह—खण्डिकेत्यादिना।। खण्डिकोपाध्यायः शिष्याय चपेटां ददाति इति। भाष्यविरोधात् भाष्यकृत्कृतप्रयोगासङ्गतेः। तथामते 'शिष्याय' इत्यत्र सम्प्रदानत्वं न स्यादिति। कर्मणा यमभिप्रैति 'कर्मणा यमभिप्रैति स सम्प्रदानम्' (पा० सू० १।४।३२) इति। सूत्रव्याख्यावसरे सूत्रव्याख्यानप्रसङ्गे। भाष्यकृता सम्प्रदानस्य। अन्वर्थसंज्ञायाः अर्थानुसारिणी संज्ञेयमिति। अस्वीकारात् अननुमोदनात्। च। अत एव भाष्यकृदाशया-

नुसारेण एव । 'तदाचक्ष्वासुरेन्द्राय स च युक्तं करोतु यत्' इति इत्थम् । सप्तशतीश्लोकः चण्डीपठितं पद्यम् । सङ्गच्छते असुरेन्द्रायेत्यत्र सम्प्रदानत्वेन सिद्धो भवतीति । वृत्तिकारमतानुसारेण तु नात्र सम्प्रदानत्वमपि तु सम्बन्धमात्रे षष्ठ्येवेति । तस्मात् तेन । रजकाय वस्त्रं ददाति इति च । भवत्येव । अत्र प्रसङ्गेऽस्मिन् 'रजकाय वस्त्रं ददाती'-त्यत्र । ददातिः ददातिशब्दः । आधीनीकरणे अधीनस्थीकरणे । अर्थे । चपेटां ददाति । इत्यत्र । न्यसने न्यासे । अर्थे । ददातिरिति ।

'कर्मणा यमभिप्रैति स सम्प्रदानम्' ( १।४।३२ ) इति पाणिनीयं सूत्रम् । कर्मणा करणभूतेन कर्ता यमभिप्रैति तत्कारकं सम्प्रदानसंज्ञं भवति । अन्वर्थसंज्ञाविज्ञानाद् ददातिकर्मणेति विज्ञायते । उपाध्यायाय गां ददाति । माणवकाय भिक्षां ददाति । क्रियाग्रहणमपि कर्तव्यम् । क्रियया यमभिप्रैति स सम्प्रदानम् । श्राद्धाय निगल्हते । युद्धाय सन्नह्यते । पत्ये शेते । इति काशिकावृत्तौ तदर्थः । भाषावृत्तौ तु कर्मणा करणभूतेन यमभिसम्बध्नाति तत्कारकं सम्प्रदानं स्यात् । ब्राह्मणाय गां ददाति धार्मिकः । गुरवे धनं निर्यातयति रुष्टः । पट्टिकोपाध्यायः शिष्याय कर्णचपेटामदात् । शत्रवे भयं ददाति । भवानि दत्त सीतायै । कथं रजकस्य वस्त्रं ददाति घ्नतः पृष्ठं ददातीति ? अभिप्रैत्यर्थस्याविवक्षितत्वात् यथा 'सममब्राह्मणे दानमिति । इह प्रार्थनाध्यवसानादिक्रियाभिः कर्तुरीप्सिततमत्वात् क्रियाऽपि कर्म भवति तत्क्रियया यदभिसम्बध्यते तत्सम्प्रदाने सूत्रेणैव । युद्धाय सन्नह्यते । पत्ये शेते । निवेद्यतां सुग्रीवाय । प्रणम्य शास्त्रे सुगताय तायिने । इति । अस्ति चात्र श्लोकः—

'अनिराकरणात् कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां वा लभते सम्प्रदानताम् ॥' इति ।

त्यागो दानं त्यागस्याङ्गं शेषभूतं कर्मणा गवादिनेप्सितयाप्तुमिष्टं सम्प्रदानतां लभते अनिराकरणाद्वा एवमस्त्वित्यनुमानाद्वेति श्लोकार्थः पदमञ्जर्यां स्पष्टम् । भाष्यकृतस्त्वत्र न च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोपपादनमात्रमेव सम्प्रदानत्वं मन्यन्ते नापि च ते संज्ञामिमामन्वर्थामेव मन्यन्ते । तेन ते 'खण्डिकोपाध्यायः शिष्याय चपेटां ददाति' इति प्रयुनक्ति । न च ते क्रियाग्रहणमपि कर्तव्यमिति वार्तिकमेव पठन्ति । ते हि क्रियाऽपि कृत्रिमं कर्म ( १।४।३२ ) इति कर्मणा इत्येतस्यैव क्रियया इत्यर्थमपि आमनन्ति । भाष्यकृत इव प्रस्तुतग्रन्थकृदपि न हि कर्मणा इत्यस्य ददातेरेव कर्मणेति स्वीकुर्वन्ति ! न च संज्ञामिमामन्वर्थां मन्यन्ते । स हि सम्प्रदानमित्येतस्य न सम्यक्प्रदानमित्यर्थं गृह्णात्यपितु तस्याधीनीकरणन्यसनाद्यर्थानपि स्वीकरोति । स हि रजकाय वस्त्रं ददातीति प्रयोगमपि साधु मन्यते ।

हिन्दी—जो कि वृत्तिकार जिसके लिए अच्छी तरह से दिया जाय वह सम्प्रदान है । अतः यह अन्वर्थसंज्ञा है । इस तरह गो में रहने वाले अधिकार के त्याग के साथ समानाधिकरण वाले दूसरे अधिकार की उत्पत्ति के अनुकूल व्यापार रूप दान क्रिया के उद्देश्यभूत ब्राह्मण आदि की ही सम्प्रदानता होती है । फिर लेने के हिसाब से रजक को वस्त्र देने पर 'रजकस्य वस्त्रं ददाति' इसमें रजक को सम्प्रदान संज्ञा के

अभाव में सम्बन्ध सामान्य में षष्ठी ही होती है। ऐसा कहते हैं, वह कथन ठीक नहीं है। वैसा मानने पर 'खण्डिकोपाध्यायः शिष्याय चपेटां ददाति' ऐसे भाष्य के प्रयोग से विरोध होता है। 'कर्मणा यमभिप्रैति स सम्प्रदानम्' (१।४।३२) इस सूत्र के व्याख्यान के अवसर में भाष्यकार ने सम्प्रदान को अन्वर्थसंज्ञा भी नहीं माना है। इसी कारण 'तदाचक्ष्वासुरेन्द्राय स च युक्तं करोतु यत्' ऐसा दुर्गासप्तशती का श्लोक भी सुसङ्गत हो जाता है ('असुरेन्द्राय' में सम्प्रदानत्व सिद्ध होगा)। इसी कारण ही 'रजकाय वस्त्रं ददाति' इत्यादि सिद्ध होते ही हैं। यहाँ आधीनीकरण (सौंपना) अर्थ में है, 'ददाति' और 'चपेटां ददाति में इसमें 'न्यसन' अर्थात् लगाने के अर्थ में।

(१६४) सम्प्रदानचातुर्थ्यर्थं उद्देश्यः। तथा च ब्राह्मणोद्देश्यकं गोकर्मकं दानमिति बोधः। मैत्रोद्देश्यकं वार्ताकर्मकं कथनमिति च।

**व्याख्या**—सम्प्रदानकारकचतुर्थ्यर्थं निरूपयति—**सम्प्रदाने**त्यादिना। **सम्प्रदान-चतुर्थ्यर्थः** सम्प्रदाने या चतुर्थी तस्या अर्थः। **उद्देश्यः** यदुद्दिश्य कर्म क्रियते तत्। **तथा च** तेनैव। 'ब्राह्मणाय गां ददाति' इत्यत्र **ब्राह्मणोद्देश्यकं** ब्राह्मणो विप्र उद्देश्यो लक्ष्यं यस्मिंस्तत्तादृशम्। **गोकर्मकं** गौः कर्म दानधात्वर्थफलाश्रयो यत्र तादृशम्। **दानम्**। **इति**। **बोधः** शाब्दबोधः। 'चैत्रो मैत्राय वार्तां कथयति' इत्यत्र **मैत्रोद्देश्यकं** मैत्रः उद्देश्यो यत्र तथाभूतम्। **वार्ताकर्मकं** वार्ता कथा कर्म यत्र तथाभूतम्। **कथनम्** **इति**। **च**। शाब्दबोधः।

सम्प्रदाने या चतुर्थी भवति तस्या उद्देश्योऽर्थः। उद्देश्यश्च धात्वर्थोपस्थापितव्यापारोत्पाद्यफलाश्रयरूपकर्मसम्बन्धनाय कर्ता यमिच्छति सः। इदमेवोद्देश्यभूतं कारकं सम्प्रदानसंज्ञकं भवति। भवति च सम्प्रदाने चतुर्थी। तेन चतुर्थ्या उद्देश्य एवार्थः। उक्तमेव—सम्प्रदानत्वशक्तिमान् सम्प्रदानचतुर्थ्यर्थः। स एवोद्देश्य इत्युच्यते।

**हिन्दी**—सम्प्रदान में जो चतुर्थी विभक्ति होती है, उसका अर्थ है—उद्देश्य। इसी तरह 'विप्राय गां ददाति' इसमें 'ब्राह्मण उद्देश्य वाला, गौ कर्म वाला दान' ऐसा शाब्दबोध होता है। 'चैत्रो मैत्राय वार्ताः कथयति' इसमें 'मैत्र उद्देश्य वाला, वार्ता कर्म वाला कथन' ऐसा शाब्दबोध होता है।

(१६५) अकर्मकक्रियोद्देश्यत्वं सम्प्रदानत्वमिति लक्षणान्तरम्। यथा—'पत्ये शेते' इत्यादि। पत्युद्देश्यकं नायिकाकर्तृकं शयनमिति बोधः।

**व्याख्या**—सम्प्रदानकारकस्यार्थान्तरमुपस्थापयति—**अकर्मके**त्यादिना। **अकर्मक-क्रियोद्देश्यत्वम्** अकर्मिका फलसमानाधिकरणव्यापारशालिनी या क्रिया तस्या उद्देश्यत्वं लक्ष्यत्वम्। **सम्प्रदानत्वं** सम्प्रदानकारकत्वम्। **इति**। सम्प्रदानकारकस्य। **लक्षणान्तरम्** अपरं लक्षणम्। **यथा—पत्ये शेते**। **इत्यादि**। अत्र **पत्युद्देश्यकं** पतिरुद्देश्यो यत्र तत्तथाभूतम्। **नायिकाकर्तृकं** नायिका कर्ता यत्र तथाभूतम्। **शयनम्**। **इति**। **बोधः** शाब्दबोधः।

अकर्मकक्रियोद्देश्यत्वमपि सम्प्रदानत्वम् । यथा —पत्ये शेते । पतिमुद्दिश्य नायिका-कृतं शयनमिति बोधः, पत्युः सम्प्रदानत्वञ्च अकर्मकशीङ्धातुक्रियोद्देश्यत्वात् ।

**हिन्दी**—अकर्मक क्रिया का उद्देश्य होना भी सम्प्रदानता है, ऐसा सम्प्रदान का दूसरा लक्षण है । जैसे —'पत्ये शेते' इत्यादि । यहाँ पति उद्देश्य वाला नायिका कर्ता वाला शयन, ऐसा बोध होता है ।

( १६६ ) ननु दानादीनां तदर्थत्वात् तादर्थ्ये चतुर्थ्यैव सिद्धौ किं कर्मणा यम्—इति सम्प्रदानसंज्ञया ? 'चतुर्थी सम्प्रदाने' इति सूत्रं तु 'रुच्यर्थानाम्–' इति विषये चतुर्थ्यर्थमिति चेन्न । दानकर्मणो गवादेर्ब्राह्मणार्थत्वेऽपि दान-क्रियायाः परलोकार्थत्वात् । अत एव तादर्थ्यचतुर्थ्या दानकर्मणो गवादेः सम्प्र-दानार्थत्वेऽपि दानक्रियायास्तदर्थत्वाभावेन चतुर्थ्यन्तार्थस्य दानक्रियायामन्व-यानापत्त्या कारकत्वानापत्तिरिति हेलाराजः । उपकार्योपकारकत्वसम्बन्ध-स्तादर्थ्ये चतुर्थ्यर्थः । 'ब्राह्मणाय दधि' इत्यादौ ब्राह्मणोपकारकं दधि इति बोधादिति दिक् ।

**व्याख्या**—'कर्मण यमभिप्रैति स सम्प्रदानमि'ति सूत्रस्यावश्यकतां प्रतिपाद्य तादर्थ्यचतुर्थीं निरूपयति—**नन्वित्यादिना** । **ननु** । **दानादीनां** दानादिकर्मणाम् । **तदर्थत्वात्** उद्देश्यार्थत्वात् । **तादर्थ्ये** तदर्थनिमित्ते । **चतुर्थ्या** या चतुर्थी विभक्तिर्भवति तया । **एव** हि । **सिद्धौ** प्रयोगसम्भवे । **किम्** । तत्र । **कर्मणा यम्** 'कर्मणा यमभिप्रैति स सम्प्रदानम्' ( पा० सू० १।४।३२ ) **इति** । **सम्प्रदानसंज्ञया** सम्प्रदानसंज्ञाविधानेन । **'चतुर्थी सम्प्रदाने' इति सूत्रं** सम्प्रदाने चतुर्थीविधायकं सूत्रम् ( पा० सू० २।३।१३ ) । **तु** हि । **रुच्यर्थानां** 'रुच्यर्थानां प्रीयमाणः' ( पा० सू० १।४।३३ ) ( रुच्यर्थधातूनां प्रयोगे प्रीयमाणः सम्प्रदानसंज्ञको भवति ) **इति विषये** । **चतुर्थ्यर्थं** चतुर्थीनिमित्तम् । **इति** इत्थम् । **चेत्** कथ्यते चेत् तत् । **न** नैवोपयुक्तमिति । **दानकर्मणः** दानक्रियाकर्म-भूतस्य । **गवादेः** गोप्रभृतेः । **ब्राह्मणार्थत्वे** ब्राह्मणप्रयोजनत्वे । **अपि** च । **दानक्रियायाः परलोकार्थत्वात्** परलोकप्राप्तिनिमित्तत्वान्न तु ब्राह्मणनिमित्तत्वात् । **अत एव** अनेनैव हेतुना । **तादर्थ्यचतुर्थ्या** तादर्थ्ये या भवति चतुर्थी तस्याः । **दानकर्मणः** दानक्रिया-कर्मभूतस्य । **गवादेः** गोप्रभृतेः । **सम्प्रदानार्थत्वे** सम्प्रदाननिमित्तकत्वे । **अपि** च । **दानक्रियायाः** । **तदर्थत्वाभावेन** सम्प्रदाननिमित्तकत्वाभावेन । **चतुर्थ्यन्तार्थस्य** चतुर्थी-विभक्त्यन्तब्राह्मणाद्यर्थस्य । **दानक्रियायायाम्** । **अन्वयानापत्त्या** अन्वयाप्राप्त्या । **कार-कत्वानापत्तिः** कारकत्वस्या अनापत्तिरप्राप्तिः क्रियान्वितस्यैव कारकत्वनियमात् । **इति** । **हेलराजः** वाक्यपदीयवृत्तिकृत्तदाख्यः । **उपकार्योपकारकत्वसम्बन्धः** यन्निमित्तं किञ्चित्कर्तव्यत्वेन गृह्यते स उपकार्यः तथा कृदुपकारकस्तथात्वसम्बन्धः । तत्र हि चतुर्थ्यन्तं पदमुपकार्यं कर्म तूपकारकं भवतीति । **तादर्थ्ये चतुर्थ्यर्थः** तादर्थ्ये या भवति चतुर्थी तस्या अर्थः । **ब्राह्मणाय दधि** । **इत्यादौ** । **ब्राह्मणोपकारकं** ब्राह्मणस्य उपकारकं हितसाधकम् । **दधि** । **इति** । **बोधात्** । **इति** । **दिक्** सङ्क्षेपेण निरूपणम् ।

दानादीनामुद्देश्यपरकत्वाद् 'ब्राह्मणाय गां ददाती'त्यत्र तादर्थ्ये चतुर्थ्यैव सिद्धौ 'कर्मणा यमभिप्रैति स सम्प्रदानमि'ति सूत्रस्य न किमपि प्रयोजनम्। 'चतुर्थी सम्प्रदाने' इति सूत्रं तु 'रुच्यर्थानां प्रीयमाणः' इत्यादिसूत्रविहितसम्प्रदानसंज्ञाविषये चतुर्थीनिमित्त-मिति उच्यते चेत्तन्न समीचीनम्। दानक्रियाकर्मभूतस्य गवादेर्ब्राह्मणार्थत्वेन तत्र तादर्थ्ये चतुर्थी तु भवत्येव, किन्तु दानक्रियायाः परलोकाद्यर्थत्वाद् ब्राह्मणार्थत्वाभावेन न हि तस्य चतुर्थ्यन्तार्थस्य क्रियायामन्वय इति न तस्य कारकत्वमिति 'कर्मणा—' इत्ये-तस्य पाठोपपत्तिः। तादर्थ्यचतुर्थ्यर्थो हि उपकार्योपकारकत्वसम्बन्धः सम्प्रदानस्य तूद्देश्यः। 'ब्राह्मणाय दधि' इत्यत्र ब्राह्मणोपकारकं दधीति बोध इति।

हिन्दी—"दान आदि का तदर्थ होने से तादर्थ्य में जो चतुर्थी होती है, उसके द्वारा ही प्रयोग की सिद्धि हो जाने से 'कर्मणा यमभिप्रैति स सम्प्रदानम्' ( पा० सू० १।४।३२ ) इससे सम्प्रदान संज्ञा करने की क्या आवश्यकता है ? 'चतुर्थी सम्प्रदाने' ( पा० सू० २।३।१३ ) सूत्र तो 'रुच्यर्थानां प्रीयमाणः' ( पा० सू० १।४।३३ ) इत्यादि के विषय में चतुर्थी के लिए है अर्थात् 'रुच्यर्थानाम्' इत्यादि सूत्रों से जहाँ सम्प्रदान संज्ञा होती है वहाँ चतुर्थी विभक्ति के विधान करने के लिए है।" ऐसा कहना ठीक नहीं है। दान क्रिया के कर्मभूत गो आदि का ब्राह्मणार्थ अर्थात् ब्राह्मण के प्रयोजन हेतु होने पर भी दानक्रिया परलोक के निमित्त है, न कि ब्राह्मण के निमित्त। इसी कारण तादर्थ्य चतुर्थी दान क्रिया के कर्मभूत गो आदि का सम्प्रदान अर्थ होने पर भी दान क्रिया का उसके अर्थ के अभाव में चतुर्थ्यन्त अर्थ का दान क्रिया में अन्वय की आपत्ति से कारकत्व की सिद्धि नहीं होती। ऐसा हेलाराज का मत है। तादर्थ्य में होने वाली चतुर्थी का अर्थ है—उपकार्योपकारकत्वसम्बन्ध। 'ब्राह्मणाय दधि' इत्यादि में 'ब्राह्मण का उपकारक दही' ऐसा बोध होता है। यह संक्षेप में कहा गया।

( १६७ ) तत्तत्कर्तृसमवेततत्तत्क्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्व-मपादानत्वम्। तदेवावधित्वम्। विभागश्च न वास्तवसम्बन्धपूर्वको वास्तव एव। किन्तु बुद्धिपरिकल्पितसम्बन्धपूर्वको बुद्धिपरिकल्पितोऽपि। 'माथुराः पाटलिपुत्रकेभ्य आढ्यतराः' इत्यादौ बुद्धिपरिकल्पितापायाश्रयणेनैव भाष्ये पञ्चमीसाधनात्। अत एव 'चैत्रान्मैत्रः सुन्दर' इत्यादिर्लोके प्रयोगः।

व्याख्या—अपादानलक्षणं निरूपयति—तदित्यादिना। तस्मिन् तस्मिन् कर्तरि धातुवाच्यव्यापाराश्रये समवेतायाः समवायसम्बन्धेन विद्यमानायास्तस्यास्तस्याः क्रियायाः जन्यः उत्पाद्यो यः प्रकृतधात्ववाच्यः प्रस्तुतधात्वविषयो विभागो विश्लेष-स्तस्याश्रयत्वम्। अपादानत्वम् अपादानकारकत्वम्। तत् आश्रयत्वम्। एव हि। अव-धित्वम्। इति। विभागः। च तु। न नैव। वास्तवसम्बन्धपूर्वकः यथार्थसम्बन्ध-विशिष्टः। वास्तवः वास्तविकः। एव। किन्तु बुद्धिपरिकल्पितसम्बन्धपूर्वकः बुद्ध्या परिकल्पितो यः सम्बन्धस्तत्पूर्वकः। बुद्धिपरिकल्पितः। अपि च। माथुराः पाटलिपुत्रेभ्य आढ्यतराः। इत्यादौ बुद्धिपरिकल्पितापायाश्रयणेन—बुद्ध्या परिकल्पितो योऽपायो विभागस्तदाश्रयणेन। एव हि। भाष्ये महाभाष्यग्रन्थे। पञ्चमीसाधनात् पञ्चमी-

विभक्तिसिद्धेः । न हि माथुरपाटलिपुत्रकयोर्विभागो वास्तविकोऽपितु बुद्धिपरिकल्पित एव । अतः विभागस्य बुद्धिपरिकल्पितत्वादपि । एव । 'चैत्रान्मैत्रः सुन्दरः' इत्यादिः । लोके जगति । प्रयोगः व्यवहारः । इति ।

अपादानत्वं हि सम्बद्धकर्तरि समवायसम्बन्धेन स्थिता या क्रिया तज्जन्यो यः प्रस्तुतधात्वविषयविभागस्तदाश्रयत्वमेव । इदमेवाश्रयत्वमवधिः । यथा 'रामो गृहादागच्छति' इत्यत्र गृहस्य । अत्र हि कर्ता रामस्तेन सह समवायरूपेण सम्बद्धा आगमनक्रिया यतो हि विभाग उत्पद्यते । स च विभागो न हि आ+गम्धातुवाच्यः । तेन हि विभागाश्रयो गृहमतस्तत्रापादानत्वं यत्र पञ्चमीविधानम् । विभागो हि न केवलं वास्तविकोऽपितु बुद्धिपरिकल्पितोऽपि । विभागस्य बुद्धिपरिकल्पितत्वादपि 'माथुराः पाटलिपुत्रकेभ्य आढ्यतराः' इत्यत्र पाटलिपुत्रकेऽपादानत्वम् । तेनैव 'चैत्रान्मैत्रः सुन्दरः' इत्यत्र चैत्रस्यापादानत्वमपि ।

हिन्दी—उस-उस कर्ता में समवाय सम्बन्ध से विद्यमान रहने वाली उस-उस क्रिया से उत्पन्न एवं प्रस्तुत धातु के वाच्यार्थ से भिन्न जो विभाग है, उसका आश्रय होना अपादानत्व है । वही आश्रयत्व ही अवधि है । विभाग भी न केवल वास्तविक सम्बन्ध से युक्त वास्तविक ही है, किन्तु बुद्धि से परिकल्पत सम्बन्ध से युक्त बुद्धिपरिकल्पित भी है । 'माथुराः पाटलिपुत्रकेभ्यः आढचतराः' इत्यादि में बुद्धि से परिकल्पित विभाग के आश्रय से ही भाष्य में पञ्चमी की सिद्धि मानी है । इसीलिए 'चैत्रान्मैत्रः सुन्दरः' इत्यादि लोक में प्रयोग पाए जाते हैं ।

नागेश

( १६८ ) 'वृक्षं त्यजति खगः' इत्यादावपादानत्ववारणाय प्रकृतधात्ववाच्य इति । 'परस्परस्मान्मेषावपसरतः' इत्यत्रापादानत्वाय तत्तत्कर्तृ इति । तत्तत्पशुविशेषनिष्ठव्यापारजन्यविभागाश्रयस्तत्तत्पशुविशेषः । किञ्च मेषपदवाच्ययोः पशुविशेषयोर्विभागाश्रयत्वविवक्षा इत्यौपाधिकस्तयोर्भेदः । शब्दस्वरूपोपाधिकृतभेदोऽप्यर्थे गृह्यते । यथा आत्मानमात्मना वेत्ति इत्यादौ शरीरावच्छिन्नं कर्तृ अन्तःकरणावच्छिन्नं करणं निरवच्छिन्नं निरीहं कर्म । एकस्यैव शब्दभेदाद् भेदः शब्दालिङ्गितस्यैव सर्वत्र भानात् । तदाह—

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ।।'

व्याख्या—परिभाषांशद्वयं व्याचष्टे—वृक्षमित्यादिना । 'वृक्षं त्यजति खगः' इत्यादौ इत्यादिवाक्ये । अपादानत्ववारणाय वृक्षमित्यत्र अपादानसंज्ञा मा भूदिति । परिभाषायां प्रकृतधात्ववाच्य इति पदमिति । प्रकृतधातुवाच्यत्वे तु विभागेऽपि कर्मैव तस्य धात्वर्थभूतफलाश्रयात् । 'परस्परस्मान् मेषावपसरतः' इत्यत्र इति वाक्ये । अपादानत्वाय अपादानसंज्ञासिद्धये । तत्तत्कर्तृ इति । पदमिति । अत्र हि तत्तत्पशुविशेषनिष्ठव्यापारजन्यविभागाश्रयः तत्तत्पशुविशेषे मेषे निष्ठा वृत्तिर्यस्य तादृशो यो व्यापारोऽपसरणरूपस्तज्जन्यो यो विभागस्तस्याश्रयः । तत्तत्पशुविशेषः—भिन्न-भिन्नमेषः । किञ्च । मेषपदवाच्ययोः मेषपदार्थभूतयोः । पशुविशेषयोः । क्रियाश्रयत्वविवक्षा—अपसरण-

 

क्रियाश्रयभूतकर्तृत्वविवक्षा। परस्परपदवाच्ययोः परस्परपदार्थभूतयोः। तयोः मेषयोः। तु हि। विभागाश्रयत्वविवक्षा विभागस्याश्रयत्वेनपादानत्वविवक्षा। इति इत्थम्। तयोः द्वयोः कर्त्रपादानयोः। भेदः। औपाधिकः विशेषणकृतः इति। शब्दस्वरूपोपाधिकृतभेदः शब्दस्य स्वरूपं तदेव य उपाधिरर्थप्रकाशकत्वं तत्कृतो भेदः। अपि च। अर्थे। गृह्यते व्यवह्रियते। यथा। आत्मानमात्मना वेत्ति। इत्यादौ शरीरावच्छिन्नं विग्रहविशिष्टम्। आत्मा कर्तृ ज्ञाता। अन्तःकरणावच्छिन्नम् अन्तःकरणविशिष्टम्। करणं साधकतमम्। निरवच्छिन्नं केनापि विशिष्टम्। निरीहं सकलेहारहितम्। आत्मा कर्म धात्वर्थफलाश्रयः। एकस्य आत्मनः। एव हि। शब्दभेदात् शब्दस्वरूपोपाधिकृतभेदात्। भेदः इति। शब्दस्वरूपभेदाच्च यथा परस्परमेषयोः। सर्वत्र। शब्दालिङ्गितस्य शब्दाश्रितस्य। एव हि। भानात् अवभासनात्। उक्तार्थे हरिं प्रमाणयति—तदित्यादिना। तत् तदेव। आह कथयति। हरिरिति शेषः। तदनुवदति—नेत्यादिना। लोके सः प्रत्ययः न अस्ति यः शब्दानुगमात् ऋते भवति सर्वं ज्ञानं शब्देन अनुविद्धम् इव भासते इत्यन्वयः। लोके जगति। सः तादृशः। प्रत्ययः प्रतीतिर्ज्ञानम्। न नैव। अस्ति विद्यते सम्भवतीति। यः प्रत्ययः। शब्दानुगमात् शब्दस्य अनुगम आश्रयणम्। ऋते विना। भवतीति। सर्वमेव ज्ञानं शब्दविषयकमित्याशयः, शब्दार्थयोरभेदादर्थस्य शब्दप्रकाश्यत्वाच्च। तत्रानुव्यवसायरूपं प्रमाणमाह—सर्वं निखिलम्। ज्ञानं प्रत्ययः। शब्देन। अनुविद्धं संसृष्टम्। भासते द्योतत इति। यज्ज्ञानं यदाकारावग्रहं तत्तद्विषयकमिति व्याप्तेः ज्ञानमात्रस्य शब्दाकारावग्रहतया शब्दविषयकत्वनियम इति भाव इति भावप्रदीपे स्पष्टम्। ( वाक्यपदीये १।२३ )। अपादानत्वलक्षणे विभागस्य प्रकृतधात्ववाच्यत्वकथनं वृक्षं त्यजति इत्यत्र वृक्षपदेऽपादानत्वं मा भूदिति। तत्र हि विभागस्य धातुवाच्यत्वात्कर्मत्वमेव। केचित्त्वत्र 'अपादानमुत्तराणि कारकाणि बाधन्ते' इति नियमात् स्वत एव धात्वर्थभूतविभागरूपफलाश्रयत्वेन वृक्षस्य कर्मत्वमेव। न हि वाक्यांशस्यास्य प्रयोजनमिति। किन्तु नियमस्य साधारणत्वाद्विशेषप्राप्तिर्मा भूदिति धात्ववाच्यविशेषणमुपयुक्तमेवेत्यन्ये। लक्षणे तत्तत्कर्तृविशेषणं परस्परस्मान्मेषावपसरतः इत्यादौ सिद्ध्येऽपादानत्वस्य। तदभावे परस्परपदेऽपि प्रथमैव स्यादिति। अत्र हि प्रथमो मेषो द्वितीयमेषस्यापसरणक्रियादृष्ट्याऽपादानकारकं तथैव प्रथमस्य द्वितीयः। यदा प्रथममेषस्यापादानत्वं तदा कर्तृभूते द्वितीयमेषे यापसरणक्रिया समवायसम्बन्धेन तज्जन्यविभागाश्रयरूपेण प्रथमो हि विवक्षितः। एवं द्वितीयस्यापादानत्वे तु द्वितीयस्तथैव विवक्षितः। एवमेकदृष्ट्याऽपरस्यापसरणक्रियोत्पन्नविभागाश्रयत्वेनोभयोरेवापादानत्वं धात्वर्थापसरणव्यापाराश्रयत्वेन कर्तृत्वञ्च। तत्रापादानत्वं परस्परशब्दात् कर्तृत्वं तु द्विवचनान्तमेषशब्दाद् व्यज्यते। अत्र हरिरप्याह—

'उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मजे।
विभागे प्रविभक्ते तु क्रिये तत्र विवक्षते॥
मेषान्तरक्रियापेक्षमवधित्वं पृथक्पृथक्।
मेषयोः स्वक्रियापेक्षं कर्तृत्वञ्च पृथक्पृथक्॥' इति।

अत्र भेदो ह्यौपाधिकः परस्परमेषशब्दद्वयप्रयोगात्। उपाधिर्हि स्वगुणानामन्यत्र सङ्क्रमणमेव। उपेति समीपमेत्य स्वीयगुणमन्यस्मिन्नादधातीति व्युत्पत्तेः। व्यञ्जकत्वमपि उपाधित्वमेव व्यङ्ग्ये स्वगुणसङ्क्रमणात्। अत्र हि परस्परमेषशब्दौ स्वीयविभिन्नताहेतोः एकस्मिन्नेव मेषरूपवस्तुनि भेदमुत्पादयतः। तेनैव तावुपाधिपदेनोक्तौ। शब्दरूपोपाधिभिन्नताहेतोरर्थे यद्वैभिन्न्यं भवति तस्यापि बोधः। यथा 'आत्मानमात्मना वेत्ति' इत्यत्र शरीरविशिष्टमात्मा कर्तृ तदेवान्तःकरणविशिष्टं करणं तदेव निरवच्छिन्नं निरीहं कर्मेति। भेदोऽयमौपाधिकभिन्नतयैव। शब्दरूपोपाधिद्वाराऽर्थे वैभिन्न्यमर्थस्य शब्दप्रकाश्यत्वेनैव। न ह्यर्थः शब्दाश्रयं विना व्यक्तीभवति। सर्वमेव ज्ञानं शब्देन संसृष्टमिव भासते इति हरिरप्याहेति।

**हिन्दी**—'वृक्षं त्यजति खगः' इत्यादि में ( वृक्ष पद में ) अपादानत्व के निवारण के लिए प्रस्तुत धातु से जो विभाग वाच्य न हो ( प्रकृतधात्वंवाच्यः ), ऐसा विशेषण अपादान के लक्षण में पढा गया है। ( 'वृक्षं' में जो विभाग है, उसका प्रकृतधातुवाच्य होने से अपादानत्व की निवृत्ति है। वैसे तो 'अपादानमुत्तराणि कारकाणि बाधन्ते' इस नियम से भी काम चल सकता है, फिर भी अधिक स्पष्टता के लिए यह पढ़ना आवश्यक है।) 'परस्परस्मान्मेषावपसरतः' इसमें 'परस्परस्मान्' में अपादानत्व की सिद्धि के लिए तत्तत्कर्तृ यह विशेषण ( अपादान के लक्षण में ) पढ़ा गया है। उन-उन पशुविशेष में रहे व्यापार से उत्पाद्य विभाग का आश्रय वह-वह पशुविशेष है। मेष पद से वाच्य दोनों पशुओं का क्रिया के आश्रयत्व की विवक्षा है, परस्पर पद से वाच्य उन दोनों पशुओं का विभाग के आश्रयत्व की विवक्षा है, ऐसा उन दोनों में उपाधिकृत भेद है। शब्दस्वरूप उपाधि से किया गया भेद में अर्थ गृहीत होता है। जैसे 'आत्मानमात्मना वेत्ति' इत्यादि में शरीर से अवच्छिन्न आत्मा कर्ता है, अन्तःकरण से अवच्छिन्न आत्मा करण है, किसी से भी अवच्छिन्न न होने वाली निरीह आत्मा कर्म है। एक ही का भी शब्द के भेद से भेद होता है। शब्द से आलिङ्गित का ही सर्वत्र प्रतिभासन होता है। जैसे कि कहा गया है—

संसार में ऐसा कोई ज्ञान नहीं है, जो शब्द के अनुगमन के बिना ही प्रतीत हो। सभी प्रकार के ज्ञान शब्द से संसृष्ट की तरह भासित होते हैं।

( १६९ ) ननु ह्येतदौपाधिकभेदमादायैवात्रापादानत्वे सिद्धे किं तत्तत्कर्तृसमवेत इत्यनेनेति चेन्न। 'पर्वतात् पततोऽश्वात्पतत्यश्ववाहः' इत्यादावश्वस्यापादानत्वाय तत्स्वीकारात्।

**व्याख्या**—औपाधिकभेदेनैवापादानत्वसिद्धौ किं तत्तत्कर्तृसमवेतेत्यादिनेति सम्भाव्यशङ्कानिरासायाह—नन्वित्यादिना। ननु। हि यतः। एतत्। औपाधिकभेदम् औपाधिकभेदोत्पन्नार्थभेदम्। आदाय आश्रित्य। एव हि। अत्र परस्परस्मान्मेषावपसरतः इत्यादौ। अपादानत्वे। सिद्धे। किं किमर्थम्। तत्तत्कर्तृसमवेत इत्यनेन पदेन। इति इत्थम्। चेत्। न नैवोपयुक्तम्। तत्र औपाधिकभेदेनैवापादानत्वसिद्धावपि 'पर्वतात् पततोऽश्वात् पतत्यश्ववाहः'। इत्यादौ इत्यादिवाक्ये। अश्वस्य अश्वपदस्य। अपादान-

त्वाय अपादानत्वसिद्धये। अपि। तत्स्वीकारात् तत्तत्कर्तृसमवेतादिविशेषणस्वीकारस्यावश्यकत्वात्। काममौपाधिकभेदजन्यार्थभेदेन परस्परान्मेषावपसरतः इत्यत्रापादानत्वं सिध्येत्, किन्तु तत्तत्कर्तृसमवेतादिविशेषणाग्रहणे पर्वतात्पततोऽश्वात्पतति इत्यत्राश्वादित्यत्र कथमपादानत्वं स्यात्? तत्र हि अश्वकर्तृदृष्ट्या पर्वतस्य अश्ववाहकर्तृदृष्ट्या अश्वस्यापादानत्वमुभयत्र तत्तत्कर्तृसमवेततत्तत्क्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वादेवेति।

**हिन्दी**—यह जो है औपाधिक भेद को लेकर ही यहाँ ('परस्परस्मात् मेषावपसरतः' में) अपादानत्व सिद्ध हो जाने के कारण अपादानलक्षण में तत्तत्कर्तृसमवेत··· इत्यादि विशेषण से क्या प्रयोजन रहता है? ऐसा कहना ठीक नहीं है। 'पर्वतात् पततः अश्वात् पतति अश्ववाहः' इत्यादि में उस विशेषणांश के कारण ही अश्व को अपादान संज्ञा होती है। इसके लिए भी उस विशेषणांश का स्वीकार आवश्यक है।

(१७०) ननु 'वृक्षात्पर्णं पतती'त्यादौ तादृशफलाश्रयत्वात् पर्णस्याऽप्यपादानत्वं विभागस्य द्विष्ठत्वादिति चेन्न; परया कर्तृसंज्ञया बाधात्। अत एव 'अपादानमुत्तराणि कारकाणि बाधन्ते' इति भाष्यं सङ्गच्छते।

**व्याख्या**—वृक्षात्पर्णं पततीति प्रयोगे पर्णपदस्यापादानकर्तृत्वविवेकं निरूपयति—नन्वित्यादिना। ननु। वृक्षात् पर्णं पतति। इत्यादौ। तादृशफलाश्रयत्वात् तादृशस्य धात्ववाच्यविभागरूपस्य फलस्य आश्रयत्वात्। पर्णस्य। अपि। विभागस्य धात्ववाच्यविभागस्य। द्विष्ठत्वात् वृक्षपर्णयोर्द्वयोरेव स्थितत्वात्। अपादानत्वम्। इति। चेत्। न तन्नैवोपयुक्तम्। परया परपठितया। कर्तृसंज्ञया बाधात् 'विप्रतिषेधे परं कार्यमि'ति व्यवस्थामनुसृत्य। अत एव। अपादानमुत्तराणि कारकाणि बाधन्ते अपादानकारकं हि परवर्तीनि कारकाणि बाधन्ते। इति। भाष्यं भाष्यवचनम्। सङ्गच्छते सुसङ्गतं भवतीति। वृक्षात् पर्णं पततीत्यादौ वृक्षवत्पर्णस्यापि क्रियाजन्यधात्ववाच्यविभागरूपफलाश्रयत्वादपादानत्वमिति चेन्न, तत्रापादानस्य परया कर्तृसंज्ञया बाधात्। 'स्वतन्त्रः कर्ते'ति कर्तृसंज्ञा। 'विप्रतिषेधे परं कार्य'मिति परशास्त्रप्राप्तिनियमः।

**हिन्दी**—'वृक्षात्पर्णं पतति' इत्यादि में क्रियाजन्यधात्ववाच्य विभागरूप फल के आश्रय होने से पर्ण को भी अपादान संज्ञा होनी है, क्योंकि विभाग तो दोनों में रहता है—जहाँ से होना है और जिसको होना है। ऐसा कहना ठीक नहीं हैं। पर्ण में जो अपादानत्व की प्राप्ति होती है, उसे पर होने के कारण कर्तृसंज्ञा बाधित करती है। इसी कारण अपादान को उत्तरवर्ती कारक बाधित करते हैं, ऐसा भाष्यवचन सही बैठता है।

(१७१) यत्तु केचित् गत्यनाविष्टत्वे सति तज्जन्यविभागाश्रयत्वमिति तन्न, तत्तद्वाक्ये मेषाश्वयोरपादानत्वानापत्तेः।

**व्याख्या** – अपादानत्वस्य परिभाषान्तरमनूद्य तद् दूषयति—यदित्यादिना। यत् यदेव। तु हि। केचित् कतिपये पण्डिताः। गत्यनाविष्टत्वे गतेः क्रियायाः अनाविष्टत्वे-

ऽनाश्रयत्वे। सति। तज्जन्यविभागाश्रयत्वं क्रियाजन्यो यो विभागस्तस्याश्रयत्वम्। अपादानत्वमिति। इति। तत्। न नैवोपयुक्तम्। तत्तद्वाक्ये 'परस्परस्मान्मेषावपसरतः' 'पर्वतात्पततादश्वात्पतत्यश्ववाहः' इति वाक्ययोः। मेषाश्वयोः मेषयोरश्वस्य च। अपादानत्वानापत्तेः अपादानत्वासिद्धेः। मेषयोरपसरणक्रियायारश्वस्य पतनक्रियाया आश्रयत्वादिति। केचित्क्रियानाश्रयत्वे सति क्रियाजन्यविभागाश्रयत्वमपादानत्वमिति कुर्वन्त्यपादानलक्षणम्। तथा सति मेषाश्वयोरपसरणपतनक्रियाश्रयत्वेन तत्र तत्रापादानत्वं न स्यादिति नैतत्स्वीकार्यमिति।

**हिन्दी**—जो कि कुछ लोग ( कहते हैं )—'क्रिया का आश्रय न होते हुए क्रिया से उत्पाद्य विभाग का आश्रय होना अपादानत्व है' वह ठीक नहीं है। वैसा मानने पर उन-उन वाक्यों में मेष एवं अश्व को अपादान संज्ञा नहीं होगी, क्योंकि दोनों क्रमशः अपसरण एवं पतन क्रिया के आश्रय हैं।

( १७२ ) यदपि अपसरत इति सृधातुना गतिद्वयस्याऽप्युपादानादेकनिष्ठां गतिं प्रति इतरस्यापादानत्वमविरुद्धमिति चेन्न, क्रियाया एकत्वात्। अत एव—'न वै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वात्' इति भाष्यं सङ्गच्छते।

**व्याख्या**— क्रियानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वमपादानत्वमित्यत्रापि परस्परस्मादित्यत्रापादानत्वसाधकमतमनूद्य दूषयति—यदित्यादिना। यद् यदेव। अपि च। 'अपसरतः' 'परस्परस्मान्मेषावपसरतः' इत्यत्र अपसरतः। इति। सृधातुना। गतिद्वयस्य मेषद्वयसम्बद्धयोर्द्वयोरेव गत्योः। अपि च। उपादानात् स्वीकारात्। एकनिष्ठां एकसम्बद्धाम्। गतिम्। प्रति। इतरस्य अपरस्य। अपादानत्वम्। अविरुद्धम्। इति। तत् कथनम्। न नैवोपयुक्तम्। क्रियायाः अपसरणव्यापारस्य। एकत्वात्। धात्वर्थापसरणक्रिया त्वेकैवेति। अतः क्रियाया एकत्वात्। एव हि। न। वै। तिङन्तानि तिङन्तपदानि। एकशेषारम्भं 'सरूपाणामेकशेष एकविभक्तौ' ( सू० १।२।६४ ) इत्यस्य प्राप्तिम्। प्रयोजयन्ति साधयन्ति। हेतूनि भवन्तीति। क्रियायाः धातुवाच्यार्थभूतक्रियायाः। एकत्वात्। इति। भाष्यं भाष्यवचनम्। सङ्गच्छते सुसङ्गतं भवतीति।

**हिन्दी**—जो भी 'अपसरतः' इसमें सृ धातु के द्वारा दो गतियों का ग्रहण होने के कारण एक में रही गति के प्रति दूसरे का अपादानत्व अविरुद्ध है, ऐसा कहना ठीक नहीं है। क्योंकि क्रिया तो वस्तुतः एक ही है। इसी कारण तिङन्त एकशेष के आरम्भ के प्रयोजक नहीं होते, क्योंकि धातु का वाच्यार्थ क्रिया एक ही है, ऐसा भाष्य का वचन सुसङ्गत हो जाता है।

( १७३ ) पञ्चम्यर्थोऽवधिः। वृक्षावधिकं पर्णकर्तृकं पतनमिति बोधः। पर्वतावधिकपतनाश्रयाभिन्नाऽश्वावधिकमश्ववाहकर्तृकं पतनमिति बोधः। परस्परमेषावधिकं द्वित्वावच्छिन्नमेषकर्तृकमपसरणमिति बोधः इति दिक्।

**व्याख्या**—पञ्चम्यर्थं निरूपयति—पञ्चम्यर्थ इत्यादिना। पञ्चम्यर्थः पञ्चमी-

विभक्तेरर्थः। अवधिः। 'वृक्षात्पर्णं पतति' इत्यादौ वृक्षावधिकं वृक्षोऽवधिर्विभागारम्भ-सीमा यस्य तादृशम्। पर्णकर्तृकं पर्णं कर्ता यस्य तथाभूतम्। पतनम् इति। बोधः। पर्वतात्पततोऽश्वात्पतत्यश्ववाहः इत्यत्र। पर्वतावधिकपतनाश्रयाभिन्नाश्वावधिकं पर्वता-वधिकं यत्पतनं तदाश्रयादभिन्नो योऽश्वस्तदवधिकम्। अश्ववाहकर्तृकम् अश्ववाहः कर्ता यस्य तथाभूतम्। पतनम्। इति इत्थम्। बोधः। परस्परान्मेषावपसरतः इत्यत्र परस्परमेषावधिकं परस्परं मेषोऽवधिर्यत्र तथाभूतम्। द्वित्वावच्छिन्नमेषकर्तृकं द्विवचन-विशिष्टमेषकर्तृभूतम्। अपसरणम्। इति। बोधः। इति। दिक् सङ्क्षेपेण विचारः।

हिन्दी—पञ्चमी विभक्ति का अर्थ अवधि है। 'वृक्षात्पर्णं पतति' इसमें वृक्ष अवधि वाला पर्ण कर्ता वाला पतन, ऐसा बोध होता है। 'पर्वतात्पततोऽश्वात्पतत्यश्ववाहः' में पर्वत अवधि वाले पतन के आश्रय से अभिन्न अश्व अवधि वाला अश्ववाह कर्ता वाला पतन, ऐसा बोध होता है। 'परस्परस्मान्मेषावपसरतः' में परस्पर में मेष अवधि वाला द्विवचनान्तता से विशिष्ट मेष कर्ता वाला अपसरण, ऐसा बोध होता है। इस तरह विषय का संक्षिप्त निरूपण किया गया है।

(१७४) कर्तृकर्मद्वारकफलव्यापाराधारत्वमधिकरणत्वम्। यथा स्थाल्या-मोदनं गृहे पचतीत्यादौ कर्मद्वारकविक्लित्तिरूपफलाधारः स्थाली कर्तृद्वारक-व्यापाराधारो गृहमिति। ननु साक्षात्क्रियाधारयोरोदनचैत्रयोरधिकरणत्व-लब्धो परम्परया तदाधारयोर्गृहस्थाल्योस्तत्संज्ञा त्वयुक्तेति चेन्न; परत्वात्कर्तृ-कर्मसंज्ञाभ्यां साक्षादाधारीभूते बाधात्। स्थाल्यधिकरणिका या ओदननिष्ठा विक्लित्तिस्तदनुकूलो गृहाधिकरणको मैत्रकर्तृको व्यापार इति बोधात्।

व्याख्या—प्रसङ्गप्राप्तमधिकरणकारकं लक्षयति—कर्त्रित्यादिना। कर्ता धात्वर्थ-वाच्यव्यापाराश्रयः कर्म धात्वर्थवाच्यफलाश्रयश्च तद् द्वारकं यत् फलव्यापारयोराधारत्व-माश्रयत्वम्। तत् अधिकरणत्वम् इति। यथा—'स्थाल्यामोदनं गृहे पचति' इत्यादौ। कर्मद्वारकविक्लित्तिरूपफलाधारः कर्मद्वारकं यत् विक्लित्तिरूपं फलं तस्याधारः। स्थाली पात्रम्। कर्तृद्वारको यो व्यापारः पचनरूपस्तस्याधारः। गृहम्। इति स्थालीगृहयोरधि-करणत्वम्। ननु। साक्षात्क्रियाधारयोः प्रत्यक्षतः फलव्यापाराश्रयत्वेन क्रियाया आधारयोः। ओदनचैत्रयोः। अधिकरणत्वलब्धौ अधिकरणसंज्ञाप्राप्तौ। परम्परया। तदाधारयोः तयोरोदनचैत्रयोराधारयोः। गृहस्थाल्योः भवनपात्रयोः। तत्संज्ञा अधि-करणसंज्ञा। तु हि। अयुक्ता असङ्गता। इति इत्थम्। चेत् कथ्यते चेत् तत्। न नैवोपयुक्तम्। परत्वात् परशास्त्रत्वेन। कर्तृकर्मसंज्ञाभ्यां तत्तत्संज्ञाभ्याम्। साक्षादा-धारीभूते प्रत्यक्षतः धातुवाच्यफलव्यापाराश्रयीभूते। अधिकरणत्वस्य। बाधात् 'विप्रतिषेधे परं कार्यमि'ति शास्त्रेण बाधनात्। स्थाल्यधिकरणिका स्थाली अधिकरणं यस्यां सा तादृशी। या। ओदननिष्ठा ओदनसम्बद्धा। विक्लित्तिः कोमलत्वम्। तदनुकूलः। गृहाधिकरणकः गृहमधिकरणं यस्मिंस्तादृशः। मैत्रकर्तृकः मैत्रः कर्ता यस्मिंस्तथाभूतः। व्यापारः। इति बोधात् स्थालीगृहयोरेवाधिकरणत्वमिति।

कर्तृद्वारेण व्यापाराधारत्वं कर्मद्वारेण फलाधारत्वं वाऽधिकरणत्वम्। न च 'आधारोऽधिकरणम्' (१।४।४५) इति आध्रियते क्रियाऽस्मिन्नित्याधार इति व्याख्यानेन साक्षात्क्रियाधारभूतयोः कर्तृकर्मणोरधिकरणत्वमिति वाच्यम्, तयोस्तु परशास्त्रत्वेन कर्तृकर्मसंज्ञाभ्यामधिकरणत्वबाधनात्। तेन न साक्षात्क्रियाधारयोः कर्तृकर्मणोरधिकरणत्वमपि तु तत्तद् द्वारेण फलव्यापाराधारयोरेव तत्। हरिरप्याह—

'कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम्।
उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥' इति।

(वाक्य० ३।७।१४८)।

कर्तृकर्मव्यवहितत्वेन क्रियाया असाक्षादाधाररूपेण तत्सिद्धावुपकारकं कारकमधिकरणमुच्यते इति तस्यार्थः। यथा 'चैत्रः स्थाल्यां गृहे ओदनं पचति' इत्यत्र चैत्रः पचनव्यापाराश्रयत्वेन कर्ता विक्लित्तिरूपफलाधारत्वेन ओदनं कर्म तथैव कर्तृभूतचैत्रद्वारकव्यापाराधारो गृहं कर्मद्वारेण विक्लित्तिरूपफलाधारः स्थाली अर्थात् व्यापारो हि समवायसम्बन्धेन चैत्रे संयोगसम्बन्धेन गृहेऽस्तियेन स्वसमवायिसंयोगरूपपरम्परया व्यापाराधारो गृहं तथैव विक्लित्तिरूपफलं हि समवायसम्बन्धेनौदने संयोगसम्बन्धेन स्थाल्यां वर्ततेऽतः स्वसमवायिसंयोगरूपपरम्परया विक्लित्तिरूपफलस्याधारः स्थाली। इत्थं हि द्वयोराधारयोरधिकरणसंज्ञा व्यापाराश्रयकर्तुराधारः फलाश्रयकर्माधारश्च। पचनरूपव्यापारश्चैत्रे स च गृहेऽतः कर्तृपरम्परया व्यापाराधारो गृहं विक्लित्तिरूपफलाश्रयो ह्योदनमोदनस्याधारः स्थाली इति गृहस्थाल्योरधिकरणत्वम्।

हिन्दी—कर्ता एवं कर्म के द्वारा व्यापार एवं फल का आधार होना अधिकरणत्व है। जैसे—'स्थाल्याम् ओदनं गृहे पचति' इत्यादि में कर्म के द्वारा विक्लित्ति (कोमल होना) रूप फल का आधार स्थाली है और कर्ता के द्वारा व्यापार का आधार गृह है।

साक्षात् ही क्रिया के आधार बने ओदन और चैत्र के अधिकरणत्व की प्राप्ति रहने पर परम्परा से उनके आधारभूत गृह एवं स्थाली की अधिकरणसंज्ञा अयुक्त है, ऐसा कहना ठीक नहीं है। क्योंकि परशास्त्र होने से कर्तृसंज्ञा एवं कर्मसंज्ञा के द्वारा साक्षात् क्रिया के आधारभूत में अधिकरणसंज्ञा बाधित होती है। स्थाली अधिकरण वाली जो ओदन से सम्बद्ध विक्लित्ति है, उसके अनुकूल गृह अधिकरण वाला मैत्र है कर्ता जिसमें, ऐसा व्यापार—ऐसा बोध होता है।

(१७५) तच्चाधिकरणं त्रिधाऽभिव्यापकमौपश्लेषिकं वैषयिकञ्चेति। तत्र सकलावयवव्याप्तौ व्यापकाधारत्वम्। यथा—तिलेषु तैलमस्ति। उपसमीपे श्लेषः सम्बन्धः उपश्लेषस्तत्कृतमौपश्लेषिकम्। अत एव 'इको यणचि' इत्यादौ औपश्लेषिकाधारे सप्तम्युक्ता संहितायामिति सूत्रे भाष्ये। तत्राजादिसामीप्यमेवेगादीनाम्। यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधि-

करणम्। मासिकं धान्यमित्युक्तं 'तत्र दीयते' इति सूत्रे भाष्ये। यत्तु कटे आस्ते इत्यौपश्लेषिकोदाहरणमुक्तं कैयटेन तदयुक्तमुक्तभाष्यविरोधात्। एतद्द्वयातिरिक्तं वैषयिकमधिकरणम्। कटे आस्ते, जले सन्ति मत्स्या इत्यादि। अभिव्यापकातिरिक्तं गौणमधिकरणमिति बोध्यम्।

**व्याख्या**—अधिकरणस्य प्रकारत्रयं निरूपति—तदित्यादिना। तत् तादृशलक्षणं कर्तृकर्मद्वारकफलव्यापारधारत्वमधिकरणत्वमिति लक्षितम्। च हि। अधिकरणम्। त्रिधा त्रिप्रकारकं भवति— अभिव्यापकम्, औपश्लेषिकं वैषयिकञ्चेति। तत्र अभिव्यापकम्। हि। सकलावयवव्याप्तौ सम्पूर्णावयवव्याप्ते सति। व्यापकाधारत्वं व्यापकस्य आधारत्वमिति। यथा—तिलेषु तैलमस्ति—तिलेपु तैलं सकलावयवव्यापकत्वेन तिष्ठति यत्र तेलमाधेयस्तिलान्याधारः। द्वितीयं व्याख्याति उप इति समीपे पार्श्वे श्लेषः इति सम्बन्धः सामीप्येन सम्बन्धः उपश्लेषः। तत्कृतं तेन उपश्लेषेण कृतमौपश्लेपिकम्। अतः एव हेतोरस्मादेव। इको यणचि इत्यादौ 'इको यणचि' (पा० सू० ६।१।७७) इति सूत्रे। अचि इत्यत्र। औपश्लेषिकाधारे सामीप्यसम्बन्धाधारेण। सप्तमी सप्तमीविभक्तिः। इति। उक्ता। 'संहितायाम्' (पा० सू० ६।१।७२)। इति सूत्रे सूत्रसम्बद्धे। भाष्ये महाभाष्यग्रन्थे। तत्र अचि इत्यत्र। इत्यादीनाम् इ-उ-ऋ-ऌ-इत्येतेपाम्। अजादिसामीप्यम् अच् आदिर्यस्य तादृशशब्दसामीप्यम्। एव। अचि इति अजादि शब्दसामीप्ये इत्यर्थः यत् यदेव वस्तु। मासे पक्षद्वयात्मककाले। अतिक्रान्ते पूर्णे। दीयते। तस्य वस्तुनः। मासः। औपश्लेषिकम् उपश्लेषसम्बद्धम्। अधिकरणम्। मासिकं धान्यम्, मासे अतिक्रान्ते देयं धान्यम्। इति। उक्तम्। तत्र दीयते इति सूत्रे 'तत्र च दीयते कार्यं भववत्' (५।१।९६) इति सूत्रसम्बद्धे। भाष्ये भाष्यग्रन्थे। यत् यदेव। तु हि। कटे आस्ते। इति इत्थम्। औपश्लेषिकोदाहरम् उपश्लेषसम्बद्धाधिकरणस्योदाहरणम्। इति इत्थम्। उक्तं कथितम्। कैयटेन तत् तादृशं कथनम् अयुक्तमसङ्गतम्। उक्तभाष्यविरोधात् पूर्वोक्तेन भाष्यवचनेन विरोधात्। एतद्द्वयातिरिक्तम् अभिव्यापकौपश्लेषिकातिरिक्तम्। वैषयिकं विषयसम्बद्धम्। अधिकरणम्। कटे आस्ते, जले सन्ति मत्स्या इत्यादि अत्र कटे जले इत्युभयत्र वैषयिकाधिकरणे सप्तमी। अभिव्यापकातिरिक्तम् अभिव्यापकाधिकरणवर्जम् अन्यत् अधिकरणं गौणम् अप्रधानम्। इति इत्थम्। बोध्यं ज्ञेयम्।

अधिकरणं हि त्रिविधमभिव्यापकमौपश्लेषिकं वैषयिकञ्चेति। तत्र सम्पूर्णावयवव्याप्ते सति व्यापकाधारत्वम्। तथा तिलेषु तैलमिति। इदमेव मुख्यमधिकरणमेतदपेक्षाया इतरयोर्गौणत्वमेव। वर्गीकरणस्याधारः 'संहितायाम्' (पा० सू० ७।१।७२) 'तदस्मिन्नधिकमिति दशान्ताड्डः' (पा० सू० ५।२।४५) एतत्सूत्रद्वयभाष्यमेव। अभिव्यापकत्वं हि आधारस्य सम्पूर्णावयवे आधेयस्य सत्ताया व्याप्तिरेव। यथा दधनि सर्पिः। औपश्लेषिकं सामीप्येन सम्बन्ध एव। शब्दस्य शब्देन सम्बन्धोऽप्यौपश्लेषिक एव। 'इको यणचि' इत्यत्र अचि इत्यत्र औपश्लेषिकमेवाधिकरणमिगादीनामजादिसामीप्यमस्याशयः। वैषायिकमिति विषयसम्बद्धम्। यत्राधेय आधारे समवायसम्बन्धेन

तिष्ठति तदौपश्लेपिकं यत्र च तयोः सामीप्यसम्बन्धः संयोगसम्बन्धो वा तदौपश्लेषिकं तदुभयातिरिक्तं यत्राधेय आधारे विषयतासम्बन्धेन तिष्ठति तद्वैषयिकमधिकरणमिति । यथा कटे आस्ते । अन्ये तु कटे आस्ते इत्यत्र संयोगसम्बन्धेनौपश्लेपिकमेवाधिकरणं मन्यन्ते उदाहरन्ति च वैषयिकाधिकरणं मोक्षे इच्छास्तीत्यादौ । लघुशब्देन्दुशेखरेऽप्युक्तम्—कटे आस्ते इति तु नौपश्लेपिकोदाहरणं युक्तंमुक्तभाष्यविरोधात् । यद्वाएकदेशावच्छेदेन श्लेषेऽपि श्लेषस्थसमीपमुपश्लेषं तत्कृतमिति व्युत्पत्त्यौपश्लेषिकत्वमित्यभिप्रायेण तदुदाहरणमिति । सिद्धान्तमञ्जूषायामुक्तम्—तत्राधारस्त्रिधा—औपश्लेषिको, वैषयिकोऽभिव्यापकश्चेति । तत्र संयोगसमवायादिसम्बन्धेन कर्तृकर्मसम्बन्ध आद्यः । विषयतासम्बन्धेन तत्सम्बद्धो द्वितीयः व्यापकसम्बधेन तृतीयः । तत्र कटे शेते इत्यत्र स्ववृत्तिकर्तृकत्वसम्बन्धेन कटवृत्तिशयनमिति बोधः, मोक्षे इच्छास्तीत्यत्र स्वविषयकर्तृकत्वसम्बन्धेन मोक्षवृत्तिरिच्छाकर्तृका सत्तेति बोधः । सर्वस्मिन्नात्मास्तीत्यत्र स्वव्यापककर्तृकत्वसम्बन्धेन सर्ववृत्तिरात्मकर्तृका सत्तेति बोधः । इति । लघुमञ्जूषायां तु इत्थमुक्तम्—अधिकरणं त्रिधा—औपश्लेपिकं, वैषयिकमभिव्यापकञ्चेति । तदुक्तं हरिणा—

'उपश्लेषस्य चाभेदस्तिलाकाशकटादिषु ।
उपकारात्तु भिद्यन्ते संयोगिसमवायिनाम् ॥
अविनाशो गुरुत्वस्य प्रतिबन्धे स्वतन्त्रता ।
दिग्विशेषादवच्छेद इत्याद्या भेदहेतवः ॥'

इत्यौपश्लेषिकाभिव्यापकवैषयिकेषु त्रिष्वपि उपश्लेषोऽस्त्येव उपकारः सम्बन्धस्तद्भेदात्तु त्रित्वेन व्यवहारः । 'कटे आस्ते' इत्यादौ संयोगिन्याधारे कतिपयावयवव्याप्त्यैव सम्बन्धः । तिलेषु तैलमित्यादौ समवायिनि समस्तावयवव्याप्त्या खे शकुनय इत्यत्र । काशस्य तात्त्विकावयवाभावात्कल्पितदेशत्वाद् वैषयिकत्वं कल्पितदेशापेक्षया चात्राप्युक्तान्तर उपश्लेषः ।' इति ।

हिन्दी—वह अधिकरण तीन प्रकार का होता है—अभिव्यापक, औपश्लेषिक और वैषयिक । उनमें सम्पूर्ण अवयव में व्याप्त रहने पर व्यापक का आधार होना अभिव्यापक है । जैसे—'तिलेषु तैलमस्ति' । उप का अर्थ है—समीप, श्लेष का अर्थ है—सम्बन्ध, दोनों मिलाकर उपश्लेष । उपश्लेष के द्वारा किया गया औपश्लेषिक । इसी कारण 'इको यणचि' इत्यादि में औपश्लेषिक आधार में सप्तमी कही गई है 'संहितायाम्' सूत्र के भाष्य में । उसमें इ उ ऋ ऌ का अच् आदिवाले शब्दों का सामीप्य ही है । जिसको माह के बीत जाने पर दिया जाता है, उसका मास औपश्लेषिक अधिकरण है । 'मासिकं धान्यम्' ऐसा कहा गया है 'तत्र दीयते' इत्यादि सूत्र के भाष्य में । जो कि 'कटे आस्ते' इसको कैयट ने औपश्लेषिक का उदाहरण माना है, वह ठीक नहीं है, क्योंकि वैसा मानने पर उक्त भाष्यवचन का विरोध होता है । इन दोनो से अतिरिक्त जो है, वह वैषयिक अधिकरण है । 'कटे आस्ते' 'जले सन्ति मत्स्याः' इत्यादि । अभिव्यापक से भिन्न अधिकरण गौण है, ऐसा मानना चाहिए ।

( १७६ ) ज्ञापकक्रियाश्रयवाचकादुत्पन्नायाः सत्सप्तस्यास्तु क्रियान्तरज्ञापकत्वमर्थः। तत्रानिर्णीतकालिकायाः क्रियाया निर्णीतकालिका ज्ञापिका। 'गोषु दुह्यमानासु गत' इत्यादौ गोनिष्ठदोहनक्रियाज्ञापितगमनाश्रयश्चैत्र इति बोधः।

**व्याख्या**—भावसप्तम्या अर्थं निरूपयति—ज्ञापकेत्यादिना। **ज्ञापकक्रियाश्रयवाचकात्** ज्ञापिका क्रियान्तरस्य देशकालादिबोधिका या क्रिया तस्याः आश्रयस्य वाचकात्। **उत्पन्नायाः**। **सत्सप्तम्याः** भावसप्तम्याः। **तु** हि। **क्रियान्तरज्ञापकत्वम्** अन्या या क्रिया तस्याः ज्ञापकत्वम्। **अर्थः**। **तत्र** भावसप्तम्याम्। **अनिर्णीतकालिकायाः** यस्याः देशकालौ नैव निश्चितौ तस्याः **क्रियायाः निर्णीतकालिका** यस्याः कालो निश्चितः सा क्रिया। **ज्ञापिका**। **'गोषु दुह्यमानासु गतः' इत्यादौ** इत्यादिवाक्ये, **गोनिष्ठदोहनक्रियाज्ञापितगमनाश्रयः** गोनिष्ठा गोसम्बद्धा या दोहनक्रिया तया ज्ञापितं यद् गमनं तदाश्रयः। **चैत्रः**। **इति**। **बोधः** शाब्दबोधः। अत्र हि गमनक्रियाया दोहनक्रिया ज्ञापिका।

प्रसङ्गोऽयं 'यस्य च भावेन भावलक्षणम्' ( पा० सू० २।३।३७ ) इति सूत्रस्य यस्यार्थः यस्य च क्रिययाऽन्यस्य क्रियान्तरं लक्ष्यते ततः सप्तमी स्यादिति। 'गोषु दुह्यमानासु गतः' इत्यत्र गोदुह्यमानशब्दौ दोहनक्रियाश्रयवाचकौ दोहनक्रिया च गमनक्रियायाः कालवाचिका।

**हिन्दी**—ज्ञापक अर्थात् दूसरी क्रिया के देश काल आदि के वाचक जो क्रिया है, उसके आश्रय के वाचक शब्दों से उत्पन्न सत्सप्तमी अर्थात् भावसप्तमी का दूसरी क्रिया की ज्ञापकता ही अर्थ है। उसमें अनिर्णीत काल वाली क्रिया का निर्णीत काल वाली क्रिया ज्ञापिका होती है। 'गोषु दुह्यमानासु गतः' इत्यादि में गो में रहने वाली जो दोहन रूप क्रिया है, उसके द्वारा ज्ञापित गमन का आश्रय चैत्र है, ऐसा बोध होता है।

( १७७ ) कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः सम्बन्धः षष्ठ्या वाच्यः। तत्र 'राज्ञः पुरुष' इत्यादौ षष्ठीवाच्यसम्बन्धस्याश्रयाश्रयिभावसम्बन्धेन पुरुषेऽन्वयः। राजनिरूपितसम्बन्धवान् पुरुष इति बोधात्।

**व्याख्या**—षष्ठीविभक्तेरर्थं निरूपयति—कारकेत्यादिना। **कारकप्रातिपदिकार्थव्यतिरिक्तः** कारकाणां कर्मादीनां प्रातिपदिकार्थस्य प्रातिपदिकमात्रस्य च योऽर्थस्तद्व्यतिरिक्तस्तद्भिन्नः। **स्वस्वामिभावादिः** स्वस्वामिभावप्रभृतिरूपः। **सम्बन्धः**। **षष्ठ्याः** षष्ठीविभक्तेः। **वाच्यः** वाच्यार्थः। **तत्र** प्रसङ्गेऽस्मिन्। **राज्ञः पुरुषः**। **इत्यादौ**। **षष्ठीवाच्यसम्बन्धस्य** षष्ठ्या वाच्यो यः सम्बन्धः स्वस्वामिभावादिस्तस्य। **आश्रयाश्रयिभावसम्बन्धेन** आश्रयो राजा आश्रयी पुरुषस्तयोर्भावस्तत्सम्बन्धेन। **पुरुषे अन्वयः**। **राजनिरूपितसम्बन्धवान्** राज्ञा निरूपितो यः सम्बन्धस्तद्वान् राजसम्बन्धयुक्तः। **पुरुषः**। **इति**। **बोधात्** शाब्दबोधादिति।

'षष्ठी शेषे' इति सूत्रं ( २।३।५० ) प्रसङ्गस्यास्याधारः। तत्र शेष इति कर्मादिकारकप्रातिपादिकार्थव्यतिरिक्तार्थस्य सूचकः, स च स्वस्वामिभावादिसम्बन्ध एव। उक्त-

मेव—'कर्मादिभ्यो येऽन्येऽर्थाः स शेष इति'। अत एव कर्मादिकारकेभ्योऽन्यः प्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावसम्बन्धादिः शेष इति। यथा राज्ञः पुरुष इत्यादौ राजा पुरुषाय वृत्तिं ददातीति तेन स तस्य पुरुष इति पुरुषस्य सम्प्रदानत्वं राज्ञः कर्तृत्वं पुरुषो राजानं सेवते इति राज्ञः कर्मत्वं पुरुषस्य कर्तृत्वं वा तथा तत्र तत्र तेषां कर्मादीनामविवक्षया राज्ञः इत्यत्र पुरुषेण सह स्वस्वामिभावसम्बन्धेन षष्ठी। क्रिया तथा कारकाणि हि सम्बन्धस्य कारणं सम्बन्धस्तु कार्यं फलं वा। हरिरप्याह—

'सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः।
श्रुतायामश्रुतायां वा क्रियायामभिधीयते॥' इति।

क्रियायां श्रुतायां वा यथा मातुः स्मरति अश्रुतायां तस्यां यथा राज्ञः पुरुषः।

हिन्दी – कारकार्थ एवं प्रातिपदिकार्थ से भिन्न स्वस्वामिभाव आदि सम्बन्ध षष्ठी का वाच्य अर्थ है। उसमें 'राज्ञः पुरुषः' इत्यादि में षष्ठी के वाच्य अर्थ सम्बन्ध का आश्रय-आश्रयिभाव सम्बन्ध से पुरुष के साथ अन्वय होता है। उसमें राजा के द्वारा निरूपित सम्बन्ध से युक्त पुरुष, ऐसा बोध होता है।

( १७८ ) ननु सम्बन्धस्योभयनिष्ठत्वात् पुरुषशब्दादपि षष्ठ्युत्पत्तिरस्तु इति चेन्न। राजसम्बन्धिपुरुष इति विवक्षायां राजशब्दादेव षष्ठी प्रकृत्यर्थप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति व्युत्पत्त्यनुरोधात्। अन्यथा तद्विवक्षायां राजा पुरुषस्येति पुरुषशब्दात् षष्ठ्या पुरुषार्थं प्रति षष्ठ्यर्थस्य विशेषणत्वापत्त्या व्युत्पत्तिभङ्गापत्तेः। अत एवाहुः—

'भेद्यभेदकयोश्चैकः सम्बन्धोऽन्योन्यमिष्यते।
द्विष्ठो यद्यपि सम्बंधः षष्ठ्युत्पत्तिस्तु भेदकात्॥' इति।

भेदकः सम्बन्धनिरूपकः। भेद्यो निरूपितसम्बन्धाश्रयः।

इति षट्कारकाणि।

---

**व्याख्या**—सम्बन्धस्य द्विष्ठत्वाद्राज्ञः पुरुष इत्यत्र पुरुषपदेऽपि षष्ठी कथं न स्यादित्याशङ्कापरिहारायाह—नन्वित्यादिना। ननु। सम्बन्धस्य षष्ठ्यर्थभूतस्वस्वामिभावादेः। उभयनिष्ठत्वात् भेद्यभेदकोभयवृत्तित्वात्। पुरुषशब्दात् राजशब्दादिव पुरुषशब्दात्। अपि च। षष्ठ्युत्पत्तिः षष्ठीविभक्तिः। अस्तु। इति। चेत्। न तन्नैव समीचीनम्। राजसम्बन्धिपुरुषः राज्ञः सम्बन्धी राजसम्बन्धयुक्तः पुरुषः। इति इत्थम्। विवक्षायाम्। राजशब्दात् एव न तु पुरुषशब्दात्। षष्ठी षष्ठीविभक्तिः। प्रकृत्यर्थप्रत्ययार्थयोः यस्मात्प्रत्ययादिः सा प्रकृतिर्यश्च प्रकृतौ संयुज्यते स प्रत्ययस्तदर्थयोः। प्रत्ययार्थस्य। एव हि। प्राधान्यं प्राधान्येनोपस्थितिः। इति इत्थम्। व्युत्पत्त्यनुरोधात् व्युत्पत्तेरनुरोधात्। अन्यथा तदभावे। तद्विवक्षायां राजसम्बन्धीपुरुष इति विवक्षायाम्। राजा पुरुषस्य। इति। पुरुषशब्दात्। षष्ठ्यां षष्ठीविभक्तौ। पुरुषार्थं पुरुषशब्दबोध्यार्थम्। प्रति। सम्बन्धस्य षष्ठ्यर्थभूतसम्बन्धस्य। विशेषणत्वापत्त्या विशेषणत्व-

**प्राप्तेः । व्युत्पत्तिभङ्गापत्तेः** व्युत्पत्तिभङ्गस्य आपत्तेः प्राप्तेः व्युत्पत्तिविरोधात् । यत्र च पुरुषसम्बन्धी राजेति विवक्षा तत्र तु पुरुषस्य राजेति पुरुषपदादपि षष्ठी भवत्येव । उक्तार्थे हरिं प्रमाणयति— **अत** इत्यादिना । **अतः** हेतोरस्मात् । **एव** हि । **आह** कथयति । तदनुवदति—**भेद्येत्यादि** । भेद्यभेदकयोः च एकः सम्बन्धः अन्योन्यम् । इष्यते यद्यपि सम्बन्धः द्विष्ठः षष्ठ्युत्पत्तिः तु भेदकात् ( एव ) इति अन्वयः । **भेद्यभेदकयोः** भेद्यो ज्ञापितसम्बन्धाश्रयभूतो विशेष्यः भेदको हि सम्बन्धनिरूपकस्तयोः । **अन्योन्यं** परस्परम् । **एकः । सम्बन्धः । इष्यते** अभीष्टः । **यद्यपि सम्बन्धः । द्विष्ठः** द्विवृत्तिः । तथापि । **षष्ठ्युत्पत्तिः** षष्ठीविभक्तेरुत्पत्तिः । **तु** हि । **भेदकात्** सम्बन्धज्ञापकात् । एवेति ।

सम्बन्धो हि षष्ठ्यर्थ उक्तः । स च सदा द्विष्ठ एव भवति, यत्रैको भवति प्रतियोगी ( विशेषणम् ), अपरस्तु अनुयोगी ( विशेष्यः ) । 'राज्ञः पुरुषः' इत्यत्र राजा सम्बन्धस्य प्रतियोगी पुरुषस्तु अनुयोगी । अतः सम्बन्धस्य द्विष्ठत्वेन राजपदादिव पुरुषपदादपि षष्ठ्युत्पत्तिः कथं नेत्याकाङ्क्षायामुच्यते राजसम्बन्धयुक्तपुरुष इति विवक्षायां पुरुषस्य राज्ञः स्वत्वेन प्रत्ययत्वात्प्रत्ययार्थस्य विशेष्यत्वान्न हि तस्य विशेषणत्वं सम्भवति यद्धि षष्ठ्यर्थः । षष्ठ्यर्थसम्बन्धो हि सदा विशेषणत्वमेव भजते, न तु विशेष्यत्वम् । उक्तमेव सम्बन्धस्य भेद्यभेदकोभयनिष्ठत्वेऽपि षष्ठी तु भेदकादेव भवति, तस्यैव प्रतियोगित्वात् ।

---

**हिन्दी**—सम्बन्ध का भेद्य एवं भेदक दोनों में रहने के कारण पुरुष शब्द से भी षष्ठी की उत्पत्ति हो, ऐसा कथन ठीक नहीं है । राजा से सम्बन्धित पुरुष, इस विवक्षा में राजशब्द से ही षष्ठी होती है, क्योंकि प्रकृत्यर्थ एवं प्रत्ययार्थ में प्रत्ययार्थ की ही प्रधानता रहती है, ऐसी व्युत्पत्ति ( न्याय ) का अनुरोध है । अन्यथा उसकी विवक्षा में 'राजा पुरुषस्य' इस तरह पुरुष शब्द से षष्ठी विभक्ति होने पर पुरुष शब्द के अर्थ के प्रति षष्ठी के अर्थ सम्बन्ध की विशेषणत्व प्राप्ति से व्युत्पत्ति के विरुद्ध होता है । इसीलिए कहा है—

भेद्य एवं भेदक दोनों में परस्पर एक ही सम्बन्ध अभीष्ट है । यद्यपि सम्बन्ध दोनों में रहता है, फिर भी षष्ठी की उत्पत्ति तो भेदक से ही होती है ( न कि भेद्य से ) ।

भेदक सम्बन्ध का निरूपक है और भेद्य निरूपित सम्बन्ध का आश्रय है ।

इस प्रकार छहों कारक निरूपित किये गये ।

**इस प्रकार कारक-विचार समाप्त हुआ ।**

---

## ( १३ ) अथ नामार्थविचारः प्रातिपदिकार्थ

( १७९ ) अत्र मीमांसकाः शब्दानां जातौ शक्तिर्लाघवाद् व्यक्तीनामानन्त्येन तत्र शक्तौ गौरवात्। 'नागृहीतविशेषणा बुद्धिर्विशेष्ये उपजायते' इति न्यायस्य विशेषणे शक्तिर्विशेष्ये लक्षणा इति तात्पर्यात्। किञ्चैकस्यां व्यक्तौ शक्त्युपदेशे व्यक्त्यन्तरे तदभावेन तद्बोधाप्रसङ्गात्। गामानयेत्यादावन्वयानुपपत्त्या तदाश्रयलक्षकत्वेन निर्वाहश्चेत्याहुः। जाति

**व्याख्या**—व्याख्याय सारतः पूर्वे कारकार्थविचारणाम्।
व्याख्याति सारतो ह्यत्र नामार्थं किरणावली ॥

नामार्थं निरूपिपयिषुर्ग्रन्थकृन्मीमांसकमतमनूद्य दूषणाय प्रकरणमारभते—अत्रेत्यादिना। **अत्र** नामार्थविषये। **मीमांसकाः** मीमांसादर्शनानुयायिनः आचार्याः। आहुरित्यनेनान्वयः। **शब्दानां** वाचकशब्दानाम्। **जातौ** वस्तुनः प्राणप्रदधर्मे। **शक्तिः** वाचकता। शब्दा हि जातिरूपमर्थं बोधयन्तीति। **लाघवात्**। **व्यक्तीनाम्**। **आनन्त्येन** अपरिमिततया। **तत्र** व्यक्तौ। **शक्तौ** वाचकत्वस्वीकारे शब्दा हि व्यक्तिरूपमर्थं बोधयन्तीति स्वीकारे। **गौरवात्**। इति। तथैव **अगृहीतविशेषणा** अज्ञातविशेषणा। **बुद्धिः** मतिः। **विशेष्ये** अनुयोगिनि। **न** नैव। **उपजायते** प्रवर्तते। **इति** अस्य। **न्यायस्य**। **विशेषणे** जातौ। **शक्तिः** वाचकता। **विशेष्ये** व्यक्तौ। **लक्षणा**। **इति** इत्थम्। **तात्पर्यात्** आशयात्। **किञ्च** यतः। **एकस्याम्**। एव। **व्यक्तौ**। **शक्त्युपदेशे** वाचकतास्वीकारे। **व्यक्त्यन्तरे** अन्यान्यां व्यक्तौ। **तदभावेन** तस्याः शक्तेरभावे न। **तद्बोधाप्रसङ्गात्** तस्या व्यक्तेर्बोधस्य अप्रसङ्गात् असिद्धेः। **'गामानय'**। **इत्यादौ**। **अन्वयानुपपत्त्या** जातेरुपस्थित्यसम्भवेन 'गाम्' इत्येतस्य वाक्येऽन्वयासिद्धेः। **तदाश्रयलक्षकत्वेन**—तस्या जातेराश्रयो व्यक्तिस्तस्य लक्षकत्वेन लक्षणाविषयत्वेन। **निर्वाहः** प्रयोगसिद्धिः। **च**। इति। **आहुः** मीमांसका इति।

शब्दस्य वाचकत्वशक्तिर्जातौ व्यक्तौ वा स्यादिति प्राचीनो विवादः। तत्र जातिर्हि पदार्थस्यासाधारणो धर्मः, व्यक्तिस्तु द्रव्यविशेष एव। कथ्यते हि पुराकाले वाजप्यायनो नामाचार्यो जातौ शक्तिं मन्यते स्म। उक्तं यथा महाभाष्ये—'आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायनः' इति ( १।२।६४ )। तद्विपरीतं सङ्ग्रहकृद् व्याडिस्तु व्यक्तावेव। तन्मते शब्दो हि द्रव्यस्य वाचकः। उक्तं यथा महाभाष्ये—'द्रव्याभिधानं व्याडि'रिति ( १।२।६४ )। भगवान् पाणिनिस्तूभयमेव मन्यते स्मेति तदीयाभ्याम् 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' ( १।२।५८ ) 'सरूपाणामेकशेष एकविभक्तौ' ( १।२।६४ ) सूत्राभ्यां ज्ञायते। तत्राद्येन जातावपरेण व्यक्तौ शक्तिः स्वीकृता। वार्तिककृत्कात्यायनोऽपि 'आकृतिग्रहणात्सिद्धम्' 'सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणादनन्यत्वम्' इत्यादिवचनैर्जातौ रूपसामान्याद्वा सिद्धमित्यादिवचनैर्व्यक्तावपि शक्तिं मन्यते। महाभाष्यकृदपि क्वचिद् गोशब्देन जातेः क्वचित्तु व्यक्तेरपि बोधं मन्यते।

उक्तं यथा महाभाष्ये—'एवं हि कश्चिन्महति गोमण्डले गोपालकमासीनं पृच्छति अस्त्यत्र काञ्चिद् गां पश्यसीति। स पश्यति पश्यति चायं गाः पृच्छति च—काञ्चिदत्र गां पश्यसीति। नूनमस्य द्रव्यं विवक्षितमिति तद्यदा द्रव्याभिधानं तदा बहुवचनं भविष्यति, यदा सामान्याभिधानं तदैकवचनं भविष्यति' इति। (१।२।५८)। तत्र मीमांसका हि जातिशक्तिवादिनः। व्यक्तयो ह्यनन्तास्तत्र शक्तिस्वीकारे शब्देष्वनन्तवाचकताशक्तिः कल्पनीया भवति। तद्विपरीतं जातिस्त्वेकैव, तेन तत्र शक्तिस्वीकारे एकयैव शक्त्या निर्वाहाद् लाघवदृष्ट्या जातौ शक्तिः स्वीकार्येति तेषां मतम्। तथा चैकव्यक्तिविषयकशक्त्याऽन्यव्यक्तिबोधस्वीकारे गोव्यक्तिविषयकशक्त्या महिषव्यक्तिविषयकबोधापत्त्या व्यभिचारदोषश्च। तन्निरासाय शब्दाद्धि यद्व्यक्तिविषयकशक्तिज्ञानं ततो बोधोऽपि तद्व्यक्तिविषयक एव। तेन सर्वासामेव व्यक्तीनां बोधाय भवत्यनन्तशक्तिकल्पनाऽऽवश्यकी। जातेरेकत्वाज्जातौ शक्तिस्वीकारे त्वेकयैव शक्त्या निर्वाहाल्लाघवम्। जातेर्ज्ञानमन्तरा व्यक्तेर्ज्ञानं न भवति तद्विना च न व्यवहार इति उभयत्र शक्तिः स्वीकार्येति चेन्न; विशेष्यज्ञानं प्रति विशेषणज्ञानस्यैव हेतुत्वमतः प्राधान्याद्विशेषणे एव शब्दशक्तिर्न तु विशेष्ये। अत्र विशेषणं जातिर्व्यक्तिस्तु विशेष्यः। न हि विशेषणज्ञानं विना विशेष्यज्ञानं सम्भवतीति प्रथमं विशेषणभूतजातेरेव बोधः। ततश्च विशेष्ये लक्षणा। यतो हि विशेषणे क्षीणशक्तिरभिधा विशेष्यं न गच्छति तेन तत्र लक्षणैव। अभिधया जातेरुपस्थितिर्लक्षणया व्यक्तेरित्याशयः। अपरञ्च एकस्यां व्यक्तौ शक्तिस्वीकारे व्यक्त्यन्तरे तदभावेन कथं तस्य बोधः स्यात्। गामानय इत्यादौ जातौ शक्तिस्वीकारे जातेरुपस्थित्यसम्भवात्कथं निर्वाह इति चेन्न; वाक्ये तथाऽन्वयासिद्ध्या स्वसिद्ध्यो जात्या स्वाश्रयभूतव्यक्तेराक्षेपात्तल्लक्षकत्वेन सर्वं सुस्थमिति। यथोक्तम्—

'आनन्त्यव्यभिचाराभ्यां शक्त्यनेकत्वदोषतः।
आकृतेः प्रथमज्ञाने तस्या एवाभिधेयता॥
व्यक्त्याकृत्योरभेदाच्च व्यवहारोपयोगिता।
लिङ्गसङ्ख्यादिसम्बन्धः सामानाधिकरण्यधीः॥
सर्वं समञ्जसं ह्येतद् वस्त्वनेकान्तवादिनः।
लक्षणा चाभ्युपेतव्या जातेस्तेनाभिधेयता॥' इति।

हिन्दी—नामार्थ-विषय में मीमांसक (कहते हैं)—शब्दों की शक्ति जातिरूप अर्थ को कहने में है, क्योंकि ऐसा मानने में लाघव है। व्यक्ति के अनन्त होने से उसमें शक्ति मानने में गौरव पड़ता है। 'विशेषण से अपरिचित बुद्धि विशेष्य में प्रवृत्त नहीं हो पाती' इस न्याय का विशेषण में शक्ति है और विशेष्य में लक्षणा होती है, ऐसा तात्पर्य है। इसके अतिरिक्त एक व्यक्ति में शक्ति मानने से दूसरे व्यक्ति में उसका अभाव होने से उसका ज्ञान नहीं हो पाता है। 'गामानय' इत्यादि में अन्वय की अनुपपत्ति होने से उसके आश्रय (व्यक्ति) का लक्षक मानने से काम चल जाता है, ऐसा कहते हैं।

कहने का आशय यह है कि मीमांसक जाति में शक्ति मानते हैं और व्यक्ति में लक्षणा। उनके अनुसार जाति एक होती है और उसमें शक्ति मानने से एक ही शक्ति से काम चल जाने के कारण लाघव पड़ता है। इसके विपरीत व्यक्ति अनेक हैं और एक व्यक्ति में जो शक्ति मानी जाती है उसका दूसरे व्यक्ति में अभाव होने से दूसरे का उससे बोध नहीं होता और प्रत्येक व्यक्ति में शक्ति माननी होगी, जो कि बहुत ही गौरव है। एक व्यक्ति में मानी गई शक्ति से दूसरे व्यक्ति में भी बोध माना जाय तो फिर गो-विषयक शक्ति से महिष-विषयक शक्ति का ज्ञान भी होने लगेगा, जो कि व्यभिचार है। जो बुद्धि विशेषण में प्रवृत्त नहीं है, वह विशेष्य में प्रवृत्त नहीं होती। अतः जाति में शक्ति है और उसके द्वारा व्यक्ति का बोध न हो पाने के कारण उसका बाध लक्षणा से होता है, क्योंकि विशेषण में ही क्षीण शक्ति अभिधा विशेष्य का बोध नहीं करा सकती। 'गामानय' में आनयन कार्य जाति का नहीं हो सकता। अतः वाक्य में अन्वय न हो पाने से उसमें लक्षणा से व्यक्ति का बोध होता है।

(१८०) तन्न। गोत्वमस्तीत्यर्थेऽन्वयानुपपत्त्यभावेन गौरस्तीति प्रयोगे व्यक्तिभानानापपत्तेः। व्यक्तीनामानन्त्येऽपि शक्यतावच्छेदकजातेरुपलक्षणत्वेन तदैक्येन च तादृशजात्युपलक्षितव्यक्तौ शक्तिस्वीकारेणानन्तशक्तिकल्पनाविरहेणागौरवात्। लक्ष्यतावच्छेदकतीरत्वादिवच्छक्यतावच्छेदकस्यावाच्यत्वे दोषाभावात्। नागृहीत···इति न्यायस्य विशेषणविशिष्टविशेष्यबोधे तात्पर्येऽपि त्वदुक्ततात्पर्ये मानाभावात्। जातेरुपलक्षकत्वेन तदाश्रयसकलव्यक्तिबोधेन व्यक्त्यन्तरबोधाप्रसङ्गभङ्गाच्च। तदाह—

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्।
शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति॥

युक्तं ह्येतत्—

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥

इत्येतेषु शक्तिग्राहकशिरोमणिव्यवहारो व्यक्तावेव शक्तिं ग्राहयति। गवादिपदेन लोके व्यक्तेरेव बोधात्।

वस्तुतस्तु न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थ इति सरूपसूत्रभाष्याद् विशिष्टमेव वाच्यं, तथैवानुभवात्। अनुभवसिद्धस्यापलापानर्हत्वाच्च।

**व्याख्या**—मीमांसकसम्मतं जातिशक्तिवादं प्रदूष्य व्यक्तिशक्तिवादमतं प्रतिपादनाय प्रक्रमते—तदित्यादिना। तद् जातौ शक्तिरिति मतम्। न नैवोपयुक्तम्। गोत्वमस्ति। इति। अर्थे। अन्वयानुपपत्त्यभावेन अन्वयस्य अनुपपत्तिरसिद्धिस्तस्या अभावेन गौरस्ति। इति। प्रयोगे। व्यक्तिभानानापपत्तेः व्यक्तेः द्रव्यविशेषस्य भानस्यावभासनस्य अनापपत्तेरप्राप्तेः। गौरस्तीत्यादौ गोत्वमस्तीत्यर्थेऽन्वयलाभाल्लक्षणावृत्त्यविषयत्वेन न हि तया व्यक्तेर्बोध इति। व्यक्तीनाम्। आनन्त्ये अपरिमितत्वे। अपि च। शक्यतावच्छेदक-

**जातेः** शक्यताया अवच्छेदिका या जतिस्तस्याः । **उपलक्षणत्वेन** उपलक्षणरूपेण । **तदैक्येन** जात्यैक्येन । **च** अपि । **तादृशजात्युपलक्षितव्यक्तौ** तादृश्या तथाविधया जात्या उपलक्षितायां व्यक्तौ । **शक्तिस्वीकारेण** शक्तिसमर्थनेन । **अनन्तशक्तिकल्पनाविरहेण** अपरिमितशक्तिपरिकल्पनाभावेन । **अगौरवात्** गौरवाभावात् अनन्त एव व्यक्तयस्तथापि शक्यतावच्छेदिकाया जातेरुपलक्षणरूपेण तया सहैक्येन च जात्युपलक्षितव्यक्तौ शक्तिस्वीकारे न ह्यनन्तशक्तिकल्पनाप्रसङ्गो गौरवञ्च । न हि शक्यतावच्छेदकस्य । वाच्यत्वे दोषो लक्ष्यतावच्छेदकतीरत्वादिवत् । 'नागृहीतविशेषणा बुद्धिर्विशेष्ये उपजायते' इति न्यायस्य तात्पर्यन्तु विशेषणविशिष्टविशेष्यबोधे ( जातिविशिष्टव्यक्तिबोधे ) एव न तु विशेषणे शक्तिर्विशेष्ये लक्षणेति । जात्युपलक्षकतदाश्रयव्यक्तौ शक्तिस्वीकारे न च तया व्यक्त्यन्तरबोधाप्रसङ्गः ।

भावानामानन्त्येऽपि एकमुपलक्षणं कृत्वा शब्दः सुकरसम्बन्धो भवति, न च तत्र व्यभिचारः । व्यवहाराद् व्यक्तावेव शक्तिग्रहो न तु जातौ । लोके गवादिपदेन व्यक्तेरेव बोधो न तु जातेरिति । उक्तार्थं शिष्टेन प्रमाणयति—**तदित्यादिना** । **तत्** तदेव । **आह** कथयति । तदनुवदति—**आनन्त्ये** इत्यादिना । भावानाम् आनन्त्ये अपि हि एकम् उपलक्षणं कृत्वा शब्दः सुकरसम्बन्धः न व्यभिचरिष्यति च इत्यन्वयः । **भावानां** व्यक्तीनाम् । **आनन्त्ये** असीमितत्वे । **अपि** च । **हि** । **एकं** कञ्चिदेकम् । **उपलक्षणम्** आश्रयं चिह्नं वा । **कृत्वा** विधाय । **शब्दः** । **सुकरसम्बन्धः** सुग्राह्यार्थः । भवतीति । तथा च । **न** नैव । **व्यभिचरिष्यति** एकशक्त्याऽपरबोधेन व्यभिचारदोषमाप्नोतीति ।

**एतत्** कथनमिदम् । **युक्तमुपयुक्तम्** । **हि** । तदनुवदति—**शक्तिग्रहमित्यादि** । वृद्धाः शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यात् व्यवहारतः वाक्यस्य शेषात् विवृतेः सिद्धपदस्य सान्निध्यतः च वदन्ति इत्यन्वयः । **वृद्धाः** शिष्टजनाः । **शक्तिग्रहं** शब्दशक्तिज्ञानमयं कस्यार्थस्य वाचक इति बोधम् । **व्याकरणेति** व्याकरणं शब्दशास्त्रं पाणिन्यादिप्रोक्तम् । उपमानं सदृशवस्तुदर्शनं यथा गोसदृशो गवय इत्युक्ते वने तद्दर्शनेऽयमेव गवय इति ज्ञानम् । कोशः अमरसिंहादिप्रणीतं नामलिङ्गानुशासनम् । आप्तवाक्यम् आप्तो यथार्थवक्ता यः परिहासेऽपि नान्यथा वदति तस्य वाक्यं कथनम्, तस्मात् । व्यवहारतः स्वयं कृतानुभवात् । **वाक्यस्य** पदोच्चयस्य । **शेषात्** शेषपदात् । **विवृतेः** अयमेतदर्थबोधक इति व्याख्यानाद् व्युत्पत्तिज्ञानात् च । **सिद्धपदस्य** प्रसिद्धपदस्य । **सान्निध्यात्** सामीप्यात् । **च** अपि । **वदन्ति** कथयन्ति इति । **इति** इत्थम् । **एतेषु** व्याकरणादिशक्तिग्राहकेषु । **शक्तिग्राहकशिरोमणिः** शक्तिग्राहकेषु श्रेष्ठभूतः । **व्यवहारः** । **व्यक्तौ** द्रव्यविशेषे । **एव** । **शक्तिं** शब्दशक्तिम् । **ग्राहयति** बोधयति । **लोके** व्यवहारे । **गवादिपदेन** गोप्रभृतिपदेन । **व्यक्तेः** द्रव्यविशेषस्य । **एव हि** । **बोधात्** ज्ञानादिति ।

**वस्तुतः** यथार्थतः । **तु** हि । **आकृतिपदार्थकस्य** आकृतिरेव पदार्थो यस्य तस्य आकृतिरेव पदार्थ इति वादिनो मते इति । **द्रव्यं** वस्तु । **पदार्थः** पदवाच्योऽर्थः । **न** नैव । **इति** । **न** । **हि** । **अर्थात्** जातिवादिनां मतेऽपि द्रव्यं न पदस्यार्थं इति न । **इति** । **सरूपसूत्रभाष्यात्** 'सरूपाणामेकशेष एकविभक्तौ' ( पा० १।२।६४ ) इति सूत्रसम्बद्ध-

भाष्यग्रन्थात् । **विशिष्टं** जातिविशिष्टव्यक्तिर्व्यक्तिविशिष्टजातिर्वा । **एव हि । वाच्यं** शब्दस्य वाच्यार्थः । न केवलं भाष्यवचनादेवापितु । **तथैव** तथाविधस्यैव । **अनुभवात्** अनुभवसिद्धज्ञानात् । **अनुभवसिद्धस्य** अनुभवद्वारा प्रमाणितस्य । **अपलापानर्हत्वात्** अपलापस्य अन्यथाकथनस्य अनर्हत्वादयोग्यत्वात् । **च** । इति । वस्तुत एव न जातिर्व्यक्तिं विना स्पष्टीभवति, न च जातिं विना व्यक्तेरस्तित्वं सम्भवति । व्यक्तिर्हि जातेः शरीरं जातिर्हि व्यक्तेरसाधारणः प्राणप्रदो धर्मः । एकं विनाऽपरस्य सत्ताऽभावाज्जातिविशिष्टव्यक्तिर्व्यक्तिविशिष्टजातिर्वा पदार्थो न तु जातिरेव केवला न च व्यक्तिरेवेति ।

**हिन्दी**—जाति ही पदार्थ है, ऐसा मीमांसकों का मत ठीक नहीं, क्योंकि 'गोत्वमस्ति' इस अर्थ में अन्वय की अनुपपत्ति न होने के कारण 'गौरस्ति' इस प्रयोग में ( लक्षणा से ) व्यक्ति के भान की प्राप्ति नहीं होती । व्यक्ति के अनन्त होने पर भी जो शक्यता का अवच्छेदक जाति है, उसके उपलक्षण के रूप में उसके साथ एकता होने के कारण उस प्रकार की जाति से उपलक्षित व्यक्ति में शक्ति के स्वीकार से अनन्त शक्तियों की कल्पना की आवश्यकता न रहने से गौरवता नहीं रहेगी । लक्ष्यता के अवच्छेदक तीरत्व आदि की तरह शक्यतावच्छेदक का वाच्यार्थ न होने में कोई दोष नहीं है। 'नागृहीतविशेषणा...' इस न्याय का विशेषण से विशिष्ट विशेष्य के बोध में तात्पर्य होने पर भी आपके कथन के अनुसार विशेषण में शक्ति का होना विशेष्य का लक्षणा से बोध होना जो तात्पर्य है, उसके मानने में कोई भान नहीं है । जाति के उपलक्षक के रूप में उसके आश्रयभूत सभी व्यक्ति के बोध होने से दूसरे व्यक्ति के बोध का जो अप्रसङ्ग कहा गया है, उसका भङ्ग होता है । जैसे कि कहा गया है—

भावों के अनन्त होने पर भी किसी एक को उपलक्षण बना कर शब्द का वाच्यता रूप सम्बन्ध सुबोध्य हो जाता है और व्यभिचार दोष भी नहीं आएगा ।

यह कथन भी ठीक ही है—

'शिष्टजन कहते हैं कि शक्तिग्रह, व्याकरण, उपमान, कोश, आप्तवाक्य, व्यवहार वाक्यशेष, व्युत्पत्ति एवं सिद्धपद का सान्निध्य आदि से होता है ।'

इनमें शक्तिग्राहकों में मुख्य व्यवहार व्यक्ति में ही शक्ति का ग्रहण कराता है, क्योंकि गौ आदि पद से लोक में व्यक्ति का ही बोध होता है ।

वास्तविकता तो यह है कि 'आकृति ( जाति ) को ही पदार्थ मानने वाले के मत में भी पद का अर्थ द्रव्य नहीं है, ऐसी बात नहीं है' इस तरह 'सरूपाणामेकशेष एकविभक्तौ' ( १।२।६४ ) सूत्र के भाष्य के वचन से विशिष्ट ( जातिविशिष्टव्यक्ति वा व्यक्तिविशिष्टजाति ) ही वाच्यार्थ है और अनुभव ही उसी तरह का है एवं अनुभवसिद्ध का अपलाप करना भी ठीक नहीं ।

( १८१ ) लिङ्गमपि नामार्थः प्रत्ययानां द्योतकत्वात् । अन्यथा वागुपानदादिशब्देभ्य इयं तव वागिति स्त्रीत्वबोधानापत्तेः । अयमिति व्यवहारविष-

यत्वं पुंस्त्वम् । इयमिति व्यवहारविषयत्वं स्त्रीत्वम् । इदमिति व्यवहारविषयत्वं क्लीबत्वम् । इति विलक्षणं शास्त्रीयं स्त्रीपुंनपुंसकत्वम् । अत एव खट्वादिशब्दवाच्यस्य स्तनकेशादिमत्वरूपलौकिकस्त्रीत्वाभावेऽपि तद्वाचकाट्टाबादिप्रत्ययः ।

**व्याख्या**—जातिव्यक्तिवल्लिङ्गस्यापि नामार्थत्वं प्रतिपादयति—**लिङ्गमित्यादिना** । **लिङ्गं** पुंस्त्रीनपुंसकादि । **अपि च** । **नामार्थः** नामशब्दार्थः । **प्रत्ययानां** टाबादिप्रत्ययानाम् । **द्योतकत्वात्** प्रकाशकत्वात् । लिङ्गमपि नामशब्दार्थष्टाबादिप्रत्ययास्तस्य द्योतका न तु वाचका इति । प्रत्यया हि लिङ्गस्य द्योतका वाचकत्वं तु नाम्न एवेति सारम् । **अन्यथा** प्रत्ययानां लिङ्गस्य वाचकत्वे तु । **वागुपानदादिशब्देभ्यः** । 'इयं तव वाग्' । **इति** इत्थम् । **स्त्रीत्वबोधानापत्तेः** टाबादिप्रत्ययाभावे स्त्रीत्वस्य बोधाप्राप्तेः । यतो हि लिङ्गस्य नामार्थत्वं तेन वागित्यत्र स्त्रीत्वद्योतकप्रत्ययाभावेऽपि स्त्रीत्वम् । प्रत्ययानां लिङ्गस्य वाचकत्वे त्वत्र तद्बोधाभावेन इयं तव वागिति व्यवहारो न स्यादिति । **अयमिति व्यवहारविषयत्वम्** अयं जनः इत्यादिव्यवहारस्य विषयभावः । **पुंस्त्वम्** पुंल्लिङ्गत्वम् । **इयमिति व्यवहारविषयत्वम्** इयमिति इयं ते वाग् इति व्यवहारस्य विषयभावः **स्त्रीत्वं** स्त्रीलिङ्गत्वम् । **इदमिति व्यवहारविषयत्वम्** इदं पुस्तकमित्यादि व्यवहारस्य विषयत्वम् । **क्लीबत्वं** नपुंसकलिङ्गत्वम् । **इति** इत्थम् । **विलक्षणं** लोकप्रसिद्धपुंस्त्वस्त्रीत्वक्लीबत्वेभ्यो भिन्नम् । **शास्त्रीयं** शब्दशास्त्रसम्मतम् । **स्त्रीपुंनपुंसकत्वम्** । **अतः** यतो हि शास्त्रीयं लिङ्गं लौकिकलिङ्गेभ्यो विलक्षणं तस्मात् । **एव** हि । **खट्वादिशब्दवाच्यस्य** खट्वाप्रभृतिशब्दवाच्यार्थस्य । **स्तनकेशादिमत्त्वरूपलौकिकस्त्रीत्वाभावे** स्तनकेशप्रभृतिस्त्रीत्वलक्षणविशिष्टलोकप्रसिद्धस्त्रीत्वविरहे । **अपि च** । **तद्वाचकात्** खट्वादिवाचकशब्दात् । **टाबादिप्रत्ययाः** टाप्प्रभृतिस्त्रीप्रत्ययाः भवन्तीति । यद्यपि खट्वादिशब्दवाच्यार्थस्य न हि स्तनकेशादिस्त्रीत्वचिह्नवत्त्वं तथापि शास्त्रीयलिङ्गस्य विलक्षणत्वादेव खट्वादिशब्दात् स्त्रीत्वद्योतकटाबादिप्रत्ययाः भवन्तीति । लिङ्गस्य नामार्थत्वविषये शब्दशास्त्रेऽपि बहुशः प्रतिपादितमस्ति । कतिपये प्रत्यया हि लिङ्गमाश्रित्य विधीयन्ते आदेशाश्च । यथा हि 'स्वमोर्नपुंसकात्' ( पा० सू० ७।१।२३ ), 'ह्रस्वो नपुंसके प्रातिपदिकस्य' ( १।२।४७ ), 'नपुंसकस्य झलचः' ( ७।१।७२ ), 'स्त्रियाम्' ( ७।२।१२० ), 'तस्माच्छसो नः पुंसि' ( ६।१।१०१ ) इत्यादिसूत्रेषु तत्तल्लिङ्गवाचकस्य ग्रहणं दृश्यते । कैयटेनाप्युक्तम्—'अर्थधर्मत्वाल्लिङ्गस्य नपुंसकार्थाभिधायित्वादस्थ्यादयो नपुंसकशब्देनाभिधीयन्ते' इति । नैतावन्मात्रमपितु 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' ( २।३।४६ ) इति लिङ्गमात्राधिक्ये प्रथमाविभक्तिर्विहिता । एतेनाऽपि प्रातिपदिकस्यैव लिङ्गवाचकत्वं ध्वन्यते । रमाशब्दादौ टाबादेर्लिङ्गवाचकत्वभानं तु प्रत्ययद्योत्यार्थप्राधान्येनैव । यदि टाबादेरेव स्त्रीत्ववाचकत्वं स्यात्तदा 'स्त्रियाम्' ( ७।३।१२० ) इत्यधिकृत्य टाबादय एव न स्युः । यद्यपि लोके—'स्तनकेशवती नारी लोमशः पुरुषः स्मृतः । उभयोरन्तरं यच्च तदभावे नपुंसकम्' ॥ इति लिङ्गनिर्णयः शास्त्रे तु न तथा । शास्त्रे हि लिङ्गं विवक्षाधीनमेव । तत्रापि कथ्यते

संस्त्यानविवक्षायां स्त्रीप्रसवविवक्षायां पुमान् उभयोरविवक्षायां नपुंसकमिति अथवा गुणानां हि तिरोभावविवक्षायां स्त्री आविर्भावविवक्षायां पुमान् अभावविवक्षायां नपुंसकम् अथवा गुणानामाधिक्ये पुमान् तेषामपचयविवक्षायां स्त्री उभयोरभावविवक्षायां नपुंसकमिति । लिङ्गस्य विवक्षाधीनत्वादेव एक एव शब्दः त्रिष्वेव लिङ्गेषु व्यवहारः । यथा तटः तटी तटम् इति । यत्र प्रचण्डत्वविवक्षा तत्र तटः, यत्र चाह्लादकताविवक्षा तत्र तटी स्त्रीति नामैव पेशलमित्युक्तेः, यत्र च नोभयविवक्षा तत्र तटमिति । यथाऽऽह हरिरपि—

भावतत्त्वदृशः शिष्टाः शब्दार्थेषु व्यवस्थिताः ।
यद्यद् धर्मेऽङ्गतामेति लिङ्गं तत्तत्प्रचक्षते ॥ इति ।

( वाक्यपदीयम् ३।१३।२७ ) । एवमेव दाराः पत्नी कलत्रमिति सर्वेऽपि एकस्यैव पत्न्यर्थस्य बोधकाः किन्तु प्रकृत्यनुसारेण त्रिष्वेव लिङ्गेषु प्रयुक्ताः । एवमेव गृहाः गृहाणि च । आह्लादकत्वादेव स्थलीति । उभयप्रकृतिकत्वान्मनो नपुंसकम् । केनचिदुच्यते—

'नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः ।
स तु तत्रैव रमते हताः पाणिनिना वयम् ॥' इति ।

**हिन्दी**—लिङ्ग भी नाम ( प्रातिपदिक ) का अर्थ है । प्रत्यय तो उसके केवल द्योतक होते हैं । वैसा न मानने पर वाक्, उपानह आदि शब्दों का 'इयं तव वाक्' इत्यादि प्रयोगों में स्त्रीत्व के बोध की प्राप्ति नहीं होगी, क्योंकि वाग् में कोई उस अर्थ का बोधक प्रत्यय नहीं है । 'अयम्' इस प्रकार के व्यवहार का विषय होना ही पुंस्त्व है । 'इयम्' इस प्रकार के व्यवहार का विषय होना ही स्त्रीत्व है । 'इदम्' इस प्रकार के व्यवहार का विषय होना ही क्लीबत्व है । इस तरह लौकिक लिङ्ग से स्त्रीत्व, पुंस्त्व और नपुंसकत्व आदि शास्त्रीय लिङ्ग विलक्षण है । इसी कारण खट्वा आदि शब्द के वाच्य अर्थ का स्तन और केश आदि से युक्त रूप वाले लौकिक स्त्रीत्व के अभाव में भी वाचक शब्द से टाप् आदि प्रत्यय होते हैं ।

( १८२ ) सङ्ख्याऽपि नामार्थो विभक्तीनां द्योतकत्वात् । अत एव 'आदिर्ञिटुडवः' इति सूत्रे आदिरिति बहुत्वे एकवचनम् । वाच्यत्वेऽन्वयव्यतिरेकाभ्यां जसं विना नामार्थबहुत्वप्रतीत्यभावापत्तेः ।

**व्याख्या**—सङ्ख्याया अपि प्रातिपदिकार्थत्वं प्रतिपादयति—सङ्ख्येत्यादिना । सङ्ख्या एकत्वादि । अपि च । नामार्थः प्रातिपदिकार्थः एव । विभक्तीनां सुबादीनाम् । द्योतकत्वात् सङ्ख्यायाः प्रकाशकत्वात् न तु वाचकत्वादिति । अतः अस्माद्धेतोः । एव हि । 'आदिर्ञिटुडवः' ( पा० सू० १।३।५ ) इति सूत्रे आदिः । इति बहुत्वे बहुवचनविवक्षायामपि । एकवचनम् । अर्थस्तु आदिस्था ञिटुडवः । इति । वाच्यत्वे सङ्ख्याया विभक्तेर्वाच्यार्थत्वे । अन्वयव्यतिरेकाभ्यां तद्भावे तद्भावोऽन्वयस्तदभावे तदभावो व्यतिरेकस्ताभ्याम् । जसं जस्विभक्तिम् । विना । नामार्थबहुत्वप्रतीत्यभावापत्तेः

आदरित्येकवचनेन नामार्थे बहुत्वस्य प्रतीतेरभावस्य आपत्तेः प्राप्तेरिति । वाच्यत्वे सति सङ्ख्याया अत्र एकवचनेन बहुवचनप्रतीतिर्नैव स्यात्किन्तु तस्याः प्रत्यय-द्योतकत्वेनात्र तद्बोधः । नैयायिकास्तु सङ्ख्या विभक्त्यर्थो लाघवादिति मन्यन्ते । अन्ये तु सा सविभक्तिकप्रातिपदिकार्थं इत्यप्यामनन्ति । यथाऽऽह हरिरपि—

'वाचिका द्योतिका वा स्युर्द्वित्वादीनां विभक्तयः ।
यद्वा सङ्ख्यावतोऽर्थस्य समुदायोऽभिधायकः ॥' इति ।

समुदाय इति विभक्तिप्रातिपदिकयोः ।

हिन्दी—सङ्ख्या भी नाम का ही अर्थ है, क्योंकि विभक्तियाँ तो इसकी द्योतक मात्र हैं । इसी कारण 'आदिर्ञिटुडवः' ( पा० सू० १।३।५ ) इस सूत्र में 'आदिः' जो है, वह वहुत्व में एकवचन है । यदि सङ्ख्या विभक्ति का वाच्य अर्थ होता तो अन्वय एवं व्यतिरेक से 'जस्' विभक्ति के विना नामार्थ के वहुत्व की प्रतीति के अभाव की प्राप्ति होती ( लेकिन वैसा नहीं है ) ।

( नैयायिक तो सङ्ख्या को भी विभक्ति का अर्थ मानते हैं और कुछ अन्य आचार्य तो इसे विभक्ति और प्रातिपदिक के समुदाय से बोध्य अर्थ भी मानते हैं । )

( १८३ ) कारकमपि प्रातिपदिकार्थ इति पञ्चकं प्रातिपदिकार्थः । ननु अन्वयव्यतिरेकाभ्यां प्रत्ययस्यैव तद्वाच्यमिति चेन्न । दधि तिष्ठति, दधि पश्य इत्यादौ कर्मादि कारकप्रतीतेः प्रत्ययं विनाऽपि सिद्धत्वात् । न च लुप्तप्रत्यय-स्मरणात्तत्प्रतीतिरिति वाच्यं प्रत्ययलोपमजानतोऽपि नामत एव तत्प्रतीतेः ।

व्याख्या—कारकस्य प्रातिपदिकार्थत्वं निरूपयति—कारकमित्यादिना । कारकं कर्मादिषट्कारकाणि । अपि च । प्रातिपदिकार्थः नामार्थः । इति इत्थम् । पञ्चकं जातिव्यक्तिलिङ्गसङ्ख्याकारकाणीति पञ्च । प्रातिपदिकार्थः नामार्थः । ननु अन्वयव्यति-रेकाभ्यां प्रत्ययोपस्थितौ तद्बोधस्तदभावे तस्याप्यभाव इति । प्रत्ययस्य सुबादेः । एव हि । तद् कारकम् । वाच्यं वाच्यार्थः । इति इत्थम् । चेत् । न तन्न समीचीनम् । दधि तिष्ठति । दधि पश्य इत्यादौ । कर्मादिकारकप्रतीतेः आद्ये कर्तुः द्वितीये कर्मणः कारक-स्यावभासनस्य । प्रत्ययं स्वमादिप्रत्ययम् । विना । अपि च । सिद्धत्वात् । न नैव । च । लुप्तप्रत्ययस्मरणात् लुप्तस्य 'स्वमोर्नपुंसकादि'ति विहितलुकः प्रत्ययस्य स्वमादेः स्मरणात् विबोधात् । तत्प्रतीतिः तस्य कर्मादिकारकस्य प्रतीतिः । इति । वाच्यम् । प्रत्ययलोपम् अत्र प्रत्ययौ स्वमौ तयोर्लोपमिति लुकम् । अजानतः अबोधयतः । अपि च । नामतः प्रातिपदिकाद् । एव हि । तत्प्रतीतेः तस्य कारकस्य प्रतीतेरवभासनात् । इति ।

कारकस्यापि नामार्थत्वेन जातिव्यक्तिलिङ्गसङ्ख्याकारकाणीति पञ्च नामार्थाः । न च कारकः प्रत्ययार्थ इति वाच्यं तल्लुक्स्थले दधि अस्ति, दधि पश्य इत्यादौ लुकम-जानतोऽपि तद्बोधात् ।

हिन्दी—कारक भी प्रातिपदिक का अर्थ है । इस तरह प्रातिपदिक के पाँच वाच्य अर्थ होते हैं । प्रत्यय के होने से कारक का वोध होना, न होने से न होना जो है,

उस अन्वय एवं व्यतिरेक से प्रत्यय की ही कारक की वाच्यता है, ऐसा कहना ठीक नहीं। 'दधि तिष्ठति' 'दधि पश्य' इत्यादि में कर्म आदि कारकों की प्रतीति प्रत्यय के बिना भी सिद्ध होती है। न तो लुप्तप्रत्यय के बिना स्मरण से उसकी प्रतीति ही मानना ठीक है, क्योंकि प्रत्ययलोप को न जानने वाले को भी नाम से ही उसकी प्रतीति होती है।

( १८४ ) विशेषणतया शब्दोऽपि शाब्दबोधे भासते। युधिष्ठिर आसीदित्यादौ युधिष्ठिरशब्दवाच्यः कश्चिदासीदिति बोधात्।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥

इत्यभियुक्तोक्तेः।

ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा।
तथैव सर्वं शब्दानामेते पृथगिव स्थिते।
विषयत्वमनादृत्य शब्दैर्नार्थः प्रकाश्यते॥

इति वाक्यपदीयाच्च। अत एव विष्णुमुच्चारय इत्यादावर्थोच्चारणासम्भवाच्छब्दप्रतीतिः।

**व्याख्या**—शब्दस्य स्वस्वरूपबोधकत्वप्रतिपादनाय प्रकरणमारभते—**विशेषणतये**त्यादिना। **विशेषणतया** अर्थस्य विशेषणरूपेण। **शब्दः**। **अपि** च। **शाब्दबोधे**। **भासते** द्योतते। **युधिष्ठिर आसीत्**। **इत्यादौ** इत्यादिवाक्ये। **युधिष्ठिरशब्दवाच्यः** युधिष्ठिरशब्दवाच्यार्थभूतः। **कश्चित्**। **आसीत्**। **इति बोधात्**। शब्दस्य स्वं रूपमपि शब्दार्थः। अर्थज्ञानात्प्रागेव तद्बोधकशब्दस्वरूपज्ञानमावश्यकं भवति, शब्दस्वरूपोपस्थापनाभावे न हि तदर्थज्ञानसम्भवः। उक्तार्थे हरिं प्रमाणयति—**नेत्यादिना**। लोके सः प्रत्ययः नास्ति यः शब्दानुगमात् ऋते ( भवेत् ), सर्वं ज्ञानं शब्देन अनुविद्धम् इव भासते इत्यन्वयः। **लोके** जगति। **सः** तादृशः। **प्रत्ययः** ज्ञानम्। **न** नैव। **अस्ति** विद्यते। **यः**। **शब्दानुगमात्** शब्दाश्रयात्। **ऋते** विना। **भवेत्**। **सर्वं** निखिलप्रकारम्। **ज्ञानं** प्रत्ययः। **शब्देन**। **सह**। **अनुविद्धं** संसृष्टम् **इव**। **भासते** द्योतते इति। **इति** इत्थम्। **अभियुक्तोक्तेः** शिष्टवचनात्। पुनरपि उक्तार्थे हरिं प्रमाणयति—**ग्राह्यत्वमित्यादिना**। यथा तेजसः ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तथैव सर्वशब्दानाम् एते पृथक् अवस्थिते इत्यन्वयः। **यथा** येन प्रकारेण। **तेजसः** तेजोद्रव्यस्य। **ग्राह्यत्वं** ज्ञानविषयत्वम्। **ग्राहकत्वं** घटादिविषयकज्ञानजनकत्वम्। **च** अपि। **द्वे** ग्राह्यत्वग्राहकत्वरूपे। **शक्ती**। **स्तः**। **तथैव** तेनैव प्रकारेण। **सर्वशब्दानां** सर्वविधशब्दानाम्। **एते** ग्राह्यत्वग्राहकत्वरूपे शक्ती। शक्तिशक्तिमतोरभेदान्नित्यमात्मभूते अपि। **पृथक्** भिन्ने। **इव**। **स्थिते** प्रतिभासमाने स्त इति। स्वं प्रकाशयन्नेव शब्दः सर्वं प्रकाशयतीति भावः। अत्रोच्यते—यद्यपि घटे ग्राह्यत्वमेव न ग्राहकत्वमिन्द्रियेषु ग्राहकत्वमेव न ग्राह्यत्वमिति ग्राह्यत्वग्राहकत्वशक्त्योर्विरोध इव भासते तथापि प्रदीपादौ तयोः समावेशस्यापि दर्शनादुभयोरेकत्रावस्थानमविरुद्धमिति शब्दे ग्राह्यत्वं ग्राहकत्वञ्च स्वभावादिति कारिकाशयः ( वाक्य० १।५५ )

पुनश्च तमेव प्रमाणयति—विषयत्वमित्यादिना। शब्दैः विषयत्वम् अनादृत्य अर्थः न प्रकाश्यते इत्यन्वयः। अनादृत्येत्यत्र अनापन्नैरिति पाठे तु विषयत्वम् अनापन्नैः शब्दैः अर्थः न प्रकाश्यते इत्यन्वयः। विषयत्वं ग्राह्यत्वम्। अनादृत्य अनाश्रित्य अप्राप्तैरिति। शब्दैः। अर्थः। न। प्रकाश्यते प्रकटयते इति। श्रोत्रेन्द्रियागृहीतैः शब्दैः सत्तामात्रेण नार्थः प्रकाशयितुं शक्यते इत्यस्योत्तरार्द्धः ( वाक्य० १।५६ )। इति इत्थम्। वाक्यपदीयात् वाक्यपदीयवचनाच्चेति। अतः हेतोरस्मात्। एव हि। विष्णुमुच्चारय। इत्यादौ। अर्थोच्चारणासम्भवात् अर्थस्योच्चारणं न सम्भवति तेन। शब्दप्रतीतिः शब्दस्य प्रतीतिः यथाऽर्थस्योच्चारणासम्भवेन शब्दस्योच्चारणं क्रियते तथा शब्दप्रतीतिरिति। तेन शब्दोऽपि विष्णुशब्दस्यार्थ एवेति शब्दस्यापि शब्दार्थत्वसिद्धिः। हरिरप्याह—

'यथा प्रयोक्तुः प्राग्बुद्धिः शब्देष्वेव प्रवर्तते।
व्यवसायो ग्रहीतॄणामेव तेष्वेव जायते॥' इति। ( वाक्य० १।५३ )

हिन्दी—विशेषण के रूप में शब्द भी शाब्दबोध में भासित होता है। 'युधिष्ठिर आसीत्' इत्यादि में युधिष्ठिर शब्द का वाच्य कोई रहा—ऐसा बोध होता है।

संसार में कोई ऐसा ज्ञान नहीं है, जो कि शब्द के अनुगमन के बिना ज्ञात हो। सभी प्रकार का ज्ञान शब्दों के साथ संसृष्ट की तरह भासित होता है। ऐसा अभियुक्त ( शिष्ट ) का कथन है।

जैसे तेज की ग्राह्यत्व एवं ग्राहकत्व दो शक्तियाँ होती है, वैसे सभी प्रकार के शब्दों में ग्राह्यत्व एवं ग्राहकत्व ये दो शक्तियाँ पृथक् रूप से जैसे स्थित होती है।

विषयता को प्राप्त हुए बिना शब्दों के द्वारा अर्थ का प्रकाशन सम्भव नहीं होता। इस तरह वाक्यपदीय में भी कहा गया है। इसी कारण 'विष्णुम् उच्चारय' इत्यादि में अर्थ का उच्चारण सम्भव न होने से शब्द की प्रतीति होती है।

( १८५ ) अत एवानुकरणेनानुकार्यस्वरूपप्रतीतिः। तथा हि स्वसदृशशब्दमात्रबोधतात्पर्यकोच्चारणविषयत्वमनुकरणत्वम्। स्वसदृशशब्दप्रतिपाद्यत्वे सति शब्दत्वमनुकार्यत्वम्। तत्रानुकार्यादनुकरणं भिद्यत इति तयोर्भेदविवक्षायामनुकार्यस्वरूपप्रतिपादकत्वेनार्थवत्त्वात् प्रातिपदिकात् स्वादिविधिः। भेदपक्षज्ञापकः 'भुवो वुग् लुङ्लिटोरि'त्यादिनिर्देशः। अनुकार्यादनुकरणमभिन्नमित्यभेदविवक्षायां चार्थवत्त्वाभावान्न प्रातिपदिकत्वं न वा पदत्वम्। अभेदपक्षज्ञापकस्तु भू सत्तायामित्यादिनिर्देशः। प्रातिपदिकत्वपदत्वाभावेऽपि भू इत्यादि साधु भवत्येव।

व्याख्या—अनुकार्येऽनुकरणज्ञानप्रकारं निरूपयति—अत इत्यादिना। अतः यतो हि शाब्दबोधे शब्दस्वरूपमपि भासते तस्मात्। एव हि। अनुकरणेन अनुकरणशब्देन। अनुकार्यस्वरूपप्रतीतिः यदनुक्रियते यदनुकार्यं तस्य स्वरूपस्य प्रतीतिर्भासनम्। भवतीति। तथाहि। स्वसदृशशब्दमात्रबोधतात्पर्यकोच्चारणविषयत्वं स्वस्यानुकरणस्य

सदृशः समानवर्णानुपूर्वीको यः शब्दस्तन्मात्रबोधस्तात्पर्यं प्रयोजनं यस्य तादृशं यदुच्चारणं तस्य विषयत्वं विषयभावः। **अनुकरणत्वम्।** **स्वसदृशशब्दप्रतिपाद्यत्वे** स्वस्य अनुकार्यस्य सदृशः समानवर्णानुपूर्वीको यः शब्दस्तेन प्रतिपाद्यत्वेऽभिधीयमानत्वे। **सति। शब्दत्वम्।** **अनुकार्यत्वम्** अनुकार्यस्वरूपम्। **तत्र** तयोः। **अनुकार्यात्** यदनुक्रियते तस्माच्छब्दात्। **अनुकरणं** यदनुकरोति तत्। **भिद्यते** भिन्नमेव भवति। **इति** हेतोः। **तयोः** अनुकार्यानुकरणयोः। **भेदविवक्षायां** भेदकथनविवक्षातः। **अनुकार्यस्वरूपप्रतिपादकत्वेन** अनुकार्यभूतशब्दस्वरूपबोधकत्वेन। **तद्रूपे** **अर्थवत्त्वात्** सार्थकत्वात्। **प्रातिपदिकात्** प्रातिपदिकसंज्ञाविषयभूतानुकरणशब्दात्। **स्वादिविधिः** सुबुत्पत्त्यादिक्रमः। **भेदपक्षज्ञापकः** अनुकार्यानुकरणयोर्यो भेदपक्षो पार्थक्यं तस्य ज्ञापको बोधकः। **भुवो वुग्लुङ्लिटोः** 'भुवो वुग्लुङ्लिटोः' (पा० सू० ६।४।८८) इति सूत्रे भुवः। **इत्यादिनिर्देशः** इति व्यवहारः। अत्र भू इत्येतस्य अनुकार्यभूतशब्दस्वरूपज्ञापकानुकरणशब्दत्वेन सार्थकत्वात्प्रातिपदिकसंज्ञायां तस्मात् ङसेरुत्पत्तिरिति भेदपक्षज्ञापकं निदर्शनमिदम्। **अनुकार्यात्** यदनुक्रियते तस्मात्। **अनुकरणं** यदनुकरोति तत्। **अभिन्नं** समानम्। **इति** इत्थम्। **अभेदविवक्षायाम्** अनुकार्यानुकरणयोरभिन्नतापक्षविवेके। **च** तु। **अर्थवत्त्वाभावात्** उभयोरेवैकस्वरूपेण सार्थकत्वविरहात्। **न** नैव। **प्रातिपदिकत्वं** प्रातिपदिकसंज्ञा। **न** नैव। **वा** च। **पदत्वं** पदभावः सुबुत्पत्त्यभावात्। **अभेदपक्षज्ञापकः** अनुकार्यानुकरणयोरैक्यपक्षबोधकः। **तु** हि। **भू सत्तायाम्।** **इत्यादिनिर्देशः** भू इति सङ्केतः निर्विभक्तिकप्रयोगः। **तेन** **प्रातिपदिकत्वपदत्वाभावे** प्रातिपदिकसंज्ञापदभावविरहे। **अपि** च। अनुकार्यानुकरणयोरभेदपक्षज्ञापकत्वेन। **भू इत्यादि** भू सत्तायामित्यादौ भूप्रभृतिः। **साधु** प्रयोगार्हम्। **भवति** सम्पद्यते। **एव** इति निश्चये।

**अयमाशयः**—शाब्दबोधे हि शब्दस्वरूपमप्याभासितं भवति, यथा ह्यनुकरणशब्दादनुकार्यशब्दस्य स्वरूपं ज्ञायते। स भू इत्यमाहेत्यादिवाक्ये श्रोतुस्तस्यैव प्रतीतिर्भवति, यद्धि प्रथमः प्रवक्ता भूपदोच्चारणं कृतवानिति। अत्र हि भू इत्येतस्य भूपदरूपोऽर्थे। भूशब्दस्य स्वरूपातिरिक्तो नान्यो यतो हि वक्तुस्तदतिरिक्तस्य नान्यस्य विवक्षा एतादृशे वाक्ये भवति। अतः शब्दस्य स्वरूपमपि वाक्ये शब्दस्यार्थं एवेति। तादृशो वाचकः शब्दोऽनुकरणशब्द इत्युच्यते, यस्योच्चारणं केवलमेतन्निमित्तमेव क्रियते यत्ततः समानवर्णानुपूर्वीयुक्तवाच्यभूतानुकार्यशब्दरूपस्य प्रतीतिर्भवेदिति। तेनैवोक्तं—'स्वसदृशशब्दमात्रबोधतात्पर्यकोच्चारणविषयत्वमनुकरणत्वम्' इति। 'अनुकार्यत्वञ्च स्वसदृशशब्दप्रतिपाद्यत्वे सति शब्दत्वम्' इति। तेन तादृशो वाच्यभूतः शब्दोऽनुकार्यशब्दो यस्य ज्ञानं तत्समानवर्णानुपूर्वीयुक्तं वाचकभूतानुकरणशब्दाद् भवति। यथा 'भू इत्थमाह' इत्यादिवाक्ये भूशब्दोऽनुकरणशब्दो यतो हि स तत्सदृशानुकार्यभूशब्दस्य वाचकोऽनुकार्यस्तु भू इति एतस्मात्प्रतीतो भूशब्दः। अनुकार्यानुकरणयोः पारस्परिकसम्बन्धविषये द्वौ पक्षौ स्तः। प्रथमपक्षानुसारेणोभौ भिन्नौ मतौ, द्वितीयपक्षानुसारेणाभिन्नावपि। प्रथमपक्षानुसारेणानुकार्यशब्दो वाच्यो यदाऽनुकरणशब्दस्तस्य वाचकः। वाच्यभूतानुकार्यशब्दरूपार्थबोधनादनुकरणभूतशब्दस्यार्थवत्ता भवति, यतो ह्यनुकार्यशब्दाति-

रिक्तो न कोऽप्यन्योऽनुकरणशब्दार्थस्तत्र । अर्थवत्त्वाद्धयनुकरणशब्दस्य प्रातिपदिकसंज्ञा ततः सुबुत्पत्तिश्च भवति, येन तस्य साधुत्वं सम्पद्यते । इत्थमनुकार्यशब्दप्रतीतेरेव तस्मादनुकरणशब्दोऽनुकार्यशब्दव्यक्तिशक्तिमानिति । यथा हि 'भुवो वुग्लुङ्लिटोरि'ति सूत्रे भूशब्दोऽनुकरणशब्दो यस्य भूधातुरनुकार्यशब्दः । उभयोर्भिन्नत्वादेवानुकरणभूतभूशब्दोऽत्र न धातुः । तस्य धातुसंज्ञाभावादनुकार्यभूधातोर्बोधकत्वादर्थवत्त्वेनानुकरणभूत'भू' इत्येतस्य प्रातिपदिकसंज्ञा ततो ङसिविभक्तेरुत्पत्तिश्च । अनुकार्यानुकरणयोरभिन्नत्वे तु भू इत्येतस्य धातुसंज्ञात्वेन न प्रातिपदिकसंज्ञा, न च ततः सुबुत्पत्तिरिति विभक्त्यन्तभूशब्दस्य प्रयोग एव निर्दिशति, यदुभौ अनुकार्यानुकरणशब्दौ भिन्नावेवेति ।

'भू सत्तायाम्' इत्यत्र भूशब्दस्त्वनुकार्यानुकरणयोरभेदपक्षज्ञापकः । अत्र निर्विभक्तिप्रयोगोऽपि नासाधुस्तथैव शिष्टप्रयुक्तत्वात् ।

हिन्दी—इसीलिए ही अनुकरण शब्द से अनुकार्य शब्द के स्वरूप की प्रतीति होती है । जैसे कि अपने सदृश अर्थात् समान वर्णानुपूर्वी वाले शब्द मात्र के बोध का तात्पर्य लेकर उच्चारण का विषय बनना अनुकरणत्व है । अपने सदृश अर्थात् समान वर्णानुपूर्वी वाले शब्द के द्वारा प्रतिपाद्य होने पर शब्द बनना अनुकार्यत्व है । उसमें 'अनुकार्य से अनुकरण भिन्न होता है' इस प्रकार उन दोनों के भेद की विवक्षा में अनुकार्य शब्द के स्वरूप का प्रतिपादक होने से अर्थयुक्त होने पर प्रातिपदिक संज्ञा एवं सुबुत्पत्ति आदि अनुकरण शब्द से होता है । इस प्रकार के भेद पक्ष का ज्ञापक है—'भुवो वुग्लुङ्लिटोः' ( पा० सू० ६।४।८८ ) आदि निर्देश । 'अनुकार्य से अनुकरण अभिन्न है' इस प्रकार के अभेदविवक्षा में तो अर्थवत्ता के अभाव से न प्रातिपदिकत्व होता है, न तो पदत्व ही । अभेदपक्ष का ज्ञापक है—'भू सत्तायाम्' इत्यादि निर्देश । यहाँ प्रातिपदिकत्व एवं पदत्व के अभाव में भी भू इत्यादि साधु ही होते हैं ।

( १८६ ) ननु 'अपदं न प्रयुञ्जीत' इति भाष्यादसाध्विदमिति चेन्न । अपदमित्यस्यापरिनिष्ठितमित्यर्थः । परिनिष्ठितत्वञ्चाप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम् । तद्यथा—'देवदत्तो भवति' इत्यादौ 'तिङ्ङतिङः' इति निघाते जातेऽतिङन्तपदपरतिङन्तत्वरूपोद्देश्यतावच्छेदकसत्त्वेऽपरिनिष्ठितत्ववारणायाप्रवृत्त इति । 'स्वरति–' इत्यादिविकल्पसूत्रस्य पाक्षिकप्रवृत्तौ सेद्धा इत्यादावसाधुत्ववारणाय नित्यविधि इति । अभदेपक्षे तु अर्थवदिति सूत्रस्य अर्थवत्त्वरूपोद्देश्यतावच्छेदकानाक्रान्तत्वात् सूत्राप्रवृत्तावपि भू इत्यादि परिनिष्ठितम् । परिनिष्ठितसाधुशब्दौ पर्यायौ ।

**व्याख्या**—भू सत्तायामित्यादौ भूप्रभृतिनिर्विभक्तिकप्रयोगस्य साधुत्वं साधयति—नन्वित्यादिना । ननु । अपदं निर्विभक्तिकं शब्दम् । न । प्रयुञ्जीत व्यवहरेत् । इति इत्थम् । भाष्यात् महाभाष्यवचनात् । इदं निर्विभक्तिकं भूसत्तायामित्यादौ भूप्रभृतिपदम् । असाधु प्रयोगानर्हम् । इति इत्थमुच्यते । चेत् । न नैव तदुपयुक्तम् । तत्र हेतुं निर्दिशति—अपदमित्यादिना । अपदम् इत्यस्य भाष्यवचने अपदमिति यत्पदं तस्य । नैव पदत्वा-

भावोऽर्थोऽपितु अपरिनिष्ठितं परिनिष्ठितताराहितम् । इति इत्थम् । अर्थः आशयः । किं नाम तदित्यपेक्षायामाह—परीत्यादि । परिनिष्ठितत्वं परिनिष्ठितभावः । च तु । अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम्—अप्रवृत्तोऽप्राप्तो नित्यो निर्विकल्पको यो विधिः विधानं विधायकसूत्रमिति तस्योद्देश्यता विषयता तस्या यः अवच्छेदको धर्मस्तेन अनाक्रान्तत्वमयुक्तत्वम् । तत् उपर्युक्तत्वम् । यथा 'देवदत्तो भवति' इत्यादौ इत्यादिप्रयोगे । तिङ्ङतिङः 'तिङ्ङतिङः' ( पा० सू० ८।१।२८ ) इति सूत्रेण । निघाते भवतीति शब्दे सर्वानुदात्तत्वे । जाते प्राप्ते । अतिङन्तपदपरतिङन्तत्वरूपोद्देश्यतावच्छेदकसत्त्वे अतिङन्तपदानन्तरवर्तितिङन्तपदभवनरूपविषयताधर्मस्य कारणात् । भवतीत्यादौ अपरिनिष्ठतावारणाय परिनिष्ठितत्वाभावनिरासाय । परिभाषायाम् अप्रवृत्त इति अप्रवृत्त इति पदमिति । 'स्वरति–' इत्यादिविकल्पसूत्रस्य 'स्वरतिसूतिसूयतिधूञूदितो वा' (पा० सू० ७।२।४४) इतिप्रभृति विकल्पेन इडागमविधायकसूत्रस्य । पाक्षिकप्रवृत्तौ पक्षेण प्रवृत्तौ । सेद्धा इत्यादौ सेद्धा इतीडागमावरूपप्रभृतौ । असाधुत्ववारणाय अपरिनिष्ठितत्वनिरासाय । नित्यविधि इति परिभाषायां नित्यविधि इति पदम् । अभेदपक्षे अनुकार्यानुकरणयोरभेदवादिमते । तु हि । 'अर्थवद्–' इति सूत्रस्य 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति सूत्रस्य ( पा० सू० १।२।४५ ) । अर्थवत्त्वरूपोद्देश्यतावच्छेदकानाक्रान्तत्वात् अर्थवत्त्वरूपा सार्थकरूपा या उद्देश्यता विषयता तस्या यः अवच्छेदको धर्मस्तेन अनाक्रान्तत्वादयुक्तत्वाद् । सूत्राप्रवृत्तौ सूत्रस्य अप्रवृत्तौ सूत्रप्रवृत्त्यभावे । अपि च । भू इत्यादि भू सत्तायाम् इत्यादौ भूप्रभृति । परिनिष्ठितं साधु । परिनिष्ठितसाधुशब्दौ उभौ परिनिष्ठितशब्दः साधुशब्दश्च तौ । पर्यायौ पर्यायवाचिनौ समानार्थकाविति । अयमाशयः—'अपदं न प्रयुञ्जीते'ति महाभाष्यवचनं श्रूयते । भू सत्तायामित्यादौ भूप्रभृतेर्निर्विभक्तिकत्वेन पदत्वाभावो दृश्यत इति कथं भूप्रभृतेः साधुत्वमिति चेन्न । अपदमिति नैव पदत्वाभावोऽपितु अपरिनिष्ठितमात्रम् । स एवापरिनिष्ठितः शब्दो यत्र कार्यस्य नित्यरूपेण विधायकस्य सूत्रस्य प्रवृत्तिस्तु सम्भवति किन्तु नैव तस्य प्रवृत्तिरिति । भू सत्तायामित्यादौ भू इत्येतस्य धातुत्वेन अर्थवत्सूत्रस्य प्रवृत्तिरेव न सम्भवतीति न तस्यापरिनिष्ठितत्वमिति ।

हिन्दी—'जो पद नहीं है उसका प्रयोग नहीं करना चाहिए' ऐसे भाष्य के वचन से यह ( 'भू सत्तायाम्' में भू का प्रयोग ) असाधु है, ऐसा कहना ठीक नहीं है । अपद का अर्थ अपरिनिष्ठित है । परिनिष्ठितत्व है—अप्रवृत्त तथा नित्य जो विधि है, उसकी विषयता के धर्म से युक्त न होना । वह जैसे 'देवदत्तो भवति' में 'तिङ्ङतिङः' ( पा० सू० ८।१।२८ ) भवति में सर्वानुदात्तता होने पर भी अतिङन्त पद से परे तिङन्तत्वरूप विषयता धर्म के रहने पर भी अपरिनिष्ठितत्व के निवारण के लिए परिभाषा में अप्रवृत्त पद रखा गया है । 'स्वरतिसूतिसूयतिधूञूदितो वा' ( पा० सू० ७।२।४४ ) इत्यादि विकल्प सूत्र के पाक्षिक प्रवृत्ति में 'सेद्धा' इत्यादि में असाधुत्व के निवारण के लिए नित्यविधि पद का प्रयोग किया गया है । अभेदपक्ष में तो 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' ( पा० सू० १।२।४५ ) सूत्र का अर्थवत्त्वरूप विषयता के धर्म से अयुक्त

होने के कारण सूत्र की अप्रवृत्ति में भी भू इत्यादि परिनिष्ठित हैं। परिनिष्ठित एवं साधु शब्द पर्यायवाचक हैं।

( १८७ ) ननु अनुकरणस्यानुकार्यस्वरूपबोधकत्वस्याभावेन कथमनुकार्यस्वरूपप्रतीतिरिति चेत्सादृश्याख्यसम्बन्धेनेति गृहाण। यथा मैत्रसदृशपिण्डदर्शने मैत्रस्मरणमेव भू इत्याद्यनुकरणज्ञाने तादृशानुकार्यस्य ज्ञानमिति सङ्क्षेपः।

इति नामार्थविचारः।

---

व्याख्या—अनुकरणशब्दादनुकार्यशब्दस्वरूपज्ञानं कथमिति समाधत्ते—नन्वित्यादिना। ननु अनुकरणस्य अनुकरणशब्दस्य। अनुकार्यस्वरूपबोधकत्वस्य अनुकार्यस्यानुकार्यशब्दस्य यत्स्वरूपं तस्य यद्बोधकत्वं ज्ञापकत्वं तस्य। अभावेन विरहेण। कथं केन प्रकारेण। अनुकरणशब्दात् अनुकार्यस्वरूपप्रतीतिः अनुकार्यस्वरूपस्य प्रतीतिरवभासनम्। इति इत्थमाशङ्क्यते। चेत्। सादृश्याख्यसम्बन्धेन सादृश्यसंज्ञकसम्बन्धद्वारा। तद्भवतीति। इति इत्थम्। गृहाण अवधारय। यथा येन प्रकारेण। मैत्रसदृशपिण्डदर्शने मैत्रसमानपिण्डावलोकने। मैत्रस्मरणं मैत्रस्य स्मृतिः। एवम् अनेनैव प्रकारेण भू इत्याद्यनुकरणज्ञाने भूप्रभृत्यनुकरणशब्दज्ञाने सति। तादृशानुकार्यस्य तथाविधानुकार्यशब्दस्य। ज्ञानम् अवबोधः। इति इति समाप्तौ। संक्षेपः सारतः उक्तमिति। अयमाशयः—अनुकरणशब्दे वाचकत्वाभावात् अनुकार्यस्वरूपबोधकता तु न सम्भवति, तदा कथं तस्मादनुकार्यस्वरूपप्रतीतिस्तयोरभेदपक्षे इति चेदुच्यते—तद्धि समानवर्णानुपूर्वीप्रभृतिसादृश्यसम्बन्धेन भवतीति। यथा हि मैत्रसमानाकृतिदर्शने मैत्रस्य स्मृतिस्तथैवात्रापीति।

श्रीपर्शुरामतनयश्रीलोकमणिनिर्मिता ।
नामार्थभागसम्बद्धा समाप्ता किरणावली ॥

---

हिन्दी—( अनुकार्य एवं अनुकरण शब्द के अभेद पक्ष में ) अनुकरण में अनुकार्य के स्वरूप के बोधकत्व के न होने से कैसे अनुकरण से अनुकार्य के स्वरूप की प्रतीति होती है ? यदि ऐसी बात है तो उसे सादृश्य सम्बन्ध से जानो। जैसे—मैत्र के समान आकृति वाले पिण्ड के दर्शन से मैत्र का स्मरण होता है, वैसे ही भू इत्यादि अनुकरण ज्ञान में उसी प्रकार के अनुकार्य का ज्ञान होता है। यह संक्षेप से कहा गया।

इस प्रकार नामार्थ-विचार समाप्त हुआ।

---

## ( १४ ) अथ समासादिवृत्त्यर्थः

( १८८ ) अथ समासादिवृत्त्यर्थः । वृत्तिर्द्विधा—जहत्स्वार्था अजहत्स्वार्था च। अवयवार्थनिरपेक्षत्वे सति समुदायार्थबोधिकात्वं जहत्स्वार्थात्वम् । अवयवार्थसंवलितसमुदायार्थबोधिकात्वमजहत्स्वार्थात्वम् । रथन्तरं सामभेदः, शुश्रूषा सेवेति पूर्वस्या उदाहरणम् । राजपुरुष इत्यादावन्त्या । समासादिपञ्चसु विशिष्टे एव शक्तिर्न त्ववयवे । रथन्तरं, सप्तपर्णः, शुश्रूषेत्यादाववयवार्थानुभवाभावात् । अत एव भाष्ये व्यपेक्षापक्षमुद्भाव्य 'अथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसौ एकार्थीभावकृतो विशेषः स वक्तव्यः' इत्युक्तम् । 'धवखदिरौ, निष्कौशाम्बिः, गोरथः, घृतघटः, गुडधानाः, केशचूडः, सुवर्णालङ्कारः, द्विदशाः, सप्तपर्णः' इत्यादौ साहित्यक्रान्तयुक्तपूर्णमिश्रसङ्घातविकारसुच्प्रत्ययलोपवीप्साद्यर्था वाचनिका वाच्या इति तद्भाष्याशयः ।

व्याख्या—नामार्थभागं व्याख्याय सारतः किरणावली ।
समासादिगवृत्त्यर्थव्याख्यां प्रारभतेऽधुना ॥

अथ समासादिवृत्त्यर्थनिरूपणमुपचिक्रमिषुर्ग्रन्थकृत्प्रकरणारम्भनिर्देशपुरस्सरं वृत्तेर्द्वैविध्यं विवृणोति—**अथेत्यादिना** । **अथ** इति प्रारम्भे । **समासादिवृत्त्यर्थः** समासादीनां वृत्तेरर्थाववोधकत्वस्य अर्थं इति प्रकरणारम्भः । **वृत्तिः** समासादौ या वृत्तिः । सा **द्विधा** द्विप्रकारा । **जहत्स्वार्था** जहति त्यजन्ति स्वानि पदानि अर्थं यस्यां सा । **अजहत्स्वार्था** न जहति स्वानि पदानि अर्थं यस्यां सा अजहत्स्वार्था । **चकारः** समुच्चयार्थे । तत्राद्यां लक्षयति—**अवयवेत्यादिना** । **अवयवार्थनिरपेक्षत्वे** अवयवानां स्वसमावेशितपदानां योऽर्थस्तन्निरपेक्षत्वे तदुदासीनत्वे । **सति** । **समुदायार्थबोधिका** समुदायस्य सम्मिलितपदानां योऽर्थस्तस्य बोधिकात्वं ज्ञापिकात्वम् । **जहत्स्वार्थात्वं** जहत्स्वार्थाख्यवृत्तिलक्षणम् । **अवयवार्थसंवलितसमुदायार्थबोधिकात्वम्** अवयवानां समाविष्टपदानां येऽर्थास्तैः संवलितः संसृष्टः समुदायस्य पदौघस्य योऽर्थस्तस्य बोधिकात्वं ज्ञापिकात्वम् । **अजहत्स्वार्थात्वम्** अजहत्स्वार्थावृत्तिलक्षणम् । **रथन्तरं सामभेदः, शुश्रूषा सेवा** । **इति** इत्थम् । **पूर्वस्याः** जहत्स्वार्थायाः । **उदाहरणं** निदर्शनम् । अत्र रथोपपदात् तृधातोः खचि सिद्धो रथन्तरशब्दोऽवयवभूतयोः रथस्य 'तृ' इत्येतस्य चार्थमुपेक्ष्य तद्विलक्षणं सामगानविशेषरूपसमुदायार्थं बोधयति । अतोऽत्र जहत्स्वार्थावृत्तिः । एवमेव शुश्रूषा इत्यत्र श्रुधातोः सनि सिद्धः शब्दोऽयं, न च श्रुधातोः श्रवणार्थं नैव च सनः इच्छार्थमेव गृह्णाति किन्तु तद्विलक्षणमेव सेवार्थं बोधयतीत्यत्रापि जहत्स्वार्थावृत्तिः । **राजपुरुषः** । **इत्यादौ** । **अन्त्या** अजहत्स्वार्था । राज्ञः पुरुष इति पदद्वययोगेन षष्ठीतत्पुरुषात्सिद्धः शब्दोऽयमेकतः राजसम्बद्धपुरुषरूपावयवार्थमपि बोधयति, बोधयति च समुदायबोध्यं राजसेवकरूपार्थमपि ।

तेनायमवयवार्थसंवलितसमुदायार्थबोधक इति अजहत्स्वार्थाया उदाहरणम् । **समासादिपञ्चसु** समासतद्धितकृदन्तैकशेषसनाद्यन्तादिपञ्चसु । **विशिष्टे** समुदाये । **एव हि** । **शक्तिः** अर्थाभिधानयोग्यता । **न** नैव । **तु** । **अवयवे** अङ्गभूतपदे । **रथन्तरम्** ( रथ + तृ + खच् ), **सप्तपर्णः** ( सप्त + पर्ण ), **शुश्रूषा** ( श्रु + सन् + अ + आ ) । **इत्यादौ** इत्यादिपदे । **अवयवार्थानुभवाभावात्** अवयवभूतपदार्थानामर्थानामनुभवस्याभावाद् विरहात् । **अतः** यतो हि समासे विशिष्टैव शक्तिस्तस्मात् । **एव हि** । **भाष्ये** महाभाष्यग्रन्थे । **व्यपेक्षापक्षम्** अवयवे सामर्थ्यमस्ति इति मतम् । **उद्भाव्य** अवतार्य । **अथ** इति कथनारम्भे । **एतस्मिन्** प्रकरणेऽस्मिन् । **व्यपेक्षायां** पदसामर्थ्यवादिमते । **सामर्थ्ये** अर्थाववोधकशक्तौ । **यः** । **असौ** प्राकरणिकः । **एकार्थीभावकृतः** पदानामेकार्थीभावेन कृतः । **विशेषः** वैशिष्टचम् । **सः** । एकार्थीभावकृतविशेषः । **वक्तव्यः** कथनीय इति । **इति** इत्थम् । **उक्तं** कथितम् । **धवखदिरौ** धवश्च खदिरश्च तौ । **निष्कौशाम्बिः** निर्गतः कौशाम्व्या इति । **गोरथः** गोयुक्तो रथः । **घृतघटः** घृतपूर्णो घटः । **गुडधानाः** गुडमिश्रा धानाः । **केशचूडः** केशा चूडा यस्य । **सुवर्णालङ्कारः** सुवर्णस्य अलङ्कारः । **द्विदशाः** । **सप्तपर्णाः** सप्त पर्णानि यस्य । **इत्यादौ** इत्यादिवाक्ये । **साहित्यक्रान्तयुक्तपूर्णमिश्रसङ्घातविकारसुच्प्रत्ययलोपवीप्साद्यर्थाः** क्रमेण धवखदिरावित्यत्र साहित्यार्थः धवसहितः खदिरः खदिरसहितो धव इति । निष्कौशाम्बिरित्यत्र क्रान्तार्थः । गोरथ इत्यत्र युक्तार्थो गोयुक्तो रथ इति । घृतघट इत्यत्र पूर्णार्थो घृतपूर्णो घट इति । गुडधानाः इत्यत्र मिश्रार्थो गुडमिश्रा धाना इति । केशचूड इत्यत्र सङ्घातार्थः केशसङ्घात एव चूडा यस्येति । सुवर्णालङ्कार इत्यत्र विकारार्थः सुवर्णस्य विकारोऽलङ्कार इति । द्विदशा इत्यत्र सुच्प्रत्ययलोपार्थः द्विरावृत्ता दशेति । सप्तपर्णः इत्यत्र प्रत्येकसन्धौ सप्त सप्त पर्णानि सन्ति यस्येति वीप्सार्थः । एतेऽर्थाः । **वाचनिकाः** वचनेन गम्याः इति । **वाच्याः** कथनीया इति ।

परार्थाभिधानं वृत्तिः । तच्च यथा राजपुरुष इत्यादौ राजशब्दः पुरुषस्यार्थस्यापि पुरुषशब्दो राजशब्दस्यार्थस्यापि बोधकः । वाक्यावस्थायां तु राज्ञः पुरुष इत्यत्र राजशब्दः केवलं स्वार्थस्यैव बोधकः पुरुषशब्दश्च । तेनोक्तं परस्य शब्दस्य योऽर्थस्तस्याभिधानं शब्दान्तरेण यत्र सा वृत्तिरित्यर्थः । यथा राजपुरुष इत्यत्र राजशब्देन वाक्यावस्थायामनुक्तः पुरुषार्थोऽभिधीयत इति ।

वस्तुतस्तु शब्दस्य नित्यत्वाच्छब्दे पदानि पदे वर्णा इव निरर्थकाः काल्पनिकाश्च । पदानि हि केवलं स्पष्टतयाऽर्थबोधनायैव । तथा काल्पनिकत्वेन विभक्तानां पदानां तेषामर्थानाञ्चैकीभावतया एकार्थीभावो वृत्तिरित्युक्तम् । उक्तमेव—यद्यपि शब्दान्तरमेव वृत्तिः । अवयवा वर्णवदनर्थकाः । तथापि सादृश्यात्तत्त्वाध्यवसायं पदानामाश्रित्य पृथगर्थानामेकार्थीभाव इत्युक्तमिति । सा चैकार्थीभावरूपवृत्तिः प्राचीनमतानुसारेण कृत्तद्धितसमासैकशेषसनाद्यन्तेषु कल्प्यते । नव्यास्त्वेकशेषे वृत्ति न मन्यन्ते, तत्रान्यशब्दार्थान्वितस्वार्थोपस्थापकताऽभावात् । लघुमञ्जूषायामपि वृत्तेश्चातुर्विध्यमेवोक्तं, यथा—वृत्तिश्चतुर्धा; समासतद्धितकृत्सनाद्यन्तधातुभेदादिति । सा च वृत्तिर्द्विधोक्ता जहदजहत्स्वार्थभेदात् । तत्र पदानि यत्र स्वार्थं जहति सा

जहत्स्वार्था; यथा रथन्तरमित्यादौ। पदमिदं हि अवयवभूतरथतृखजर्थमुपेक्ष्य सामविशेषं बोधयति। एवमेव शुश्रूषा इति अवयवार्थभूतश्रवणेच्छारूपकमर्थमुपेक्ष्य सेवारूपमर्थं बोधयति। यत्र तु पदानि स्वार्थं न जहति अपितु तत्संवलितावयवार्थं बोधयन्ति साऽजहत्स्वार्था; यथा राजपुरुष इत्यादौ। अत्र हि राजपुरुषशब्दौ सम्भूय स्वार्थसंवलितराजसम्बद्धपुरुषरूपं समुदायार्थं बोधयतः। तत्र जहत्स्वार्थायामेकार्थीभावः अजहत्स्वार्थायां तु व्यपेक्षैव। 'समर्थः पदविधिरि'ति सूत्रे समर्थपदमेकार्थीभावसामर्थ्यस्यैव बोधकमिति। तेनैकार्थीभावसामर्थ्ययुक्तपदयोः पदानां वा समास इति बोध्यम्।

हिन्दी—अब समास आदि से सम्बद्ध वृत्ति का अर्थ बतलाया जाता है। वृत्ति दो प्रकार की होती है—जहत्स्वार्था एवं अजहत्स्वार्था। अवयव के अर्थ के प्रति निरपेक्ष होने पर समुदाय से सम्बद्ध अर्थ को जो बतलाना है, वह जहत्स्वार्थात्व है। अवयवों के अर्थ से युक्त समुदाय के अर्थ को बतलाना अजहत्स्वार्थात्व है। रथन्तर साम का भेद, शुश्रूषा सेवा इत्यादि पहले के उदाहरण हैं। 'राजपुरुषः' इत्यादि में दूसरी है। समास आदि पाँचों ( समास, कृदन्त, तद्धितान्त, एकशेष, सनाद्यन्त धातु ) में विशिष्ट ( समुदाय ) में ही शक्ति होती है, न कि अवयवों में। रथन्तरः, सप्तपर्णः, शुश्रूषा आदि में अवयव के अर्थ के अनुभव का अभाव है। इसी कारण भाष्य में व्यपेक्षा पक्ष की उद्भावना करके अब इसमें व्यपेक्षा में जो सामर्थ्य है, उसमें जो यह एकार्थीभाव के द्वारा की गई विशेषता है, उसे कहना चाहिए, ऐसा कहा गया है। धवखदिरौ, निष्कौशाम्बिः, गोरथः, घृतघटः, गुडधानाः, केशचूडः, सुवर्णालङ्कारः, द्विदशाः, सप्तपर्णः इत्यादि में साहित्य क्रान्त युक्त पूर्ण, मिश्र, सङ्घात, विकार, सुच्प्रत्ययलोप, वीप्सा आदि अर्थ वाचनिक अर्थात् वचन से सिद्ध कहना चाहिए—ऐसा भाष्य का आशय है।

( १८९ ) यत्तु व्यपेक्षावादिनो नैयायिकमीमांसकादयः—न समासे शक्तिः, राजपुरुष इत्यादौ राजपदादेः सम्बन्धिनि लक्षणयैव राजसम्बन्धवदभिन्नः पुरुष इति बोधात्। अत एव राज्ञः पदार्थैकदेशत्वान्न तत्र ऋद्धस्य इत्यादि विशेषणान्वयः, पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेत्युक्तेः, सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो न इत्युक्तेश्च। न वा घनश्यामः, निष्कौशाम्बिः, गोरथ इत्यादाविवादिप्रयोगापत्तिः। लक्षणयैवोक्तार्थतया उक्तार्थानामप्रयोग इति न्यायेन इवादीनामप्रयोगात्। नापि 'विभाषा–' इति सूत्रमावश्यकं, लक्षणया राजसम्बन्ध्यभिन्न इति बुबोधयिषायां समासस्य राजसम्बन्धवानिति बुबोधयिषायां विग्रहस्य च प्रयोगनियमसम्भवात्। नापि शक्तिः पङ्कजशब्दवदिति पङ्कजशब्दप्रतिद्वन्द्विता शक्तिसाधिका। तत्रावयवशक्तिमजानतोऽपि ततो बोधात्। न च शक्त्यग्रहे लक्षणया तस्माद् विशिष्टार्थप्रत्ययः सम्भवति। अत एव राजपदादिशक्त्यग्रहे राजपुरुष इत्यादिषु न बोधः। न च चित्रगुरित्यादौ लक्षणासम्भवेऽपि अषष्ठ्यर्थबहुव्रीहौ लक्षणाया असम्भवो बहुव्युत्पत्ति-

भञ्जनापत्तेरिति वाच्यं; प्राप्तोदक इत्यादावुदकपदे एव लक्षणास्वीकारात्। पूर्वपदस्य यौगिकत्वेन तत्र लक्षणाया धातुप्रत्ययतदर्थज्ञानसाध्यतया विलम्बितत्वात्। प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्त्यनुरोधाच्च। घटादिपदे चातिरिक्तता शक्तिः कल्प्यमाना प्रत्येकं वर्णेषु बोधकत्वेऽपि विशिष्टे कल्प्यते, विशिष्टस्यैव सङ्केतितत्वात्। प्रकृतेऽत्यन्तसन्निधानेन प्रत्ययान्वयसौलभ्यायोत्तरपदे एव लक्षणा कल्प्यते इति विशेषः। स्वीकृतश्च घटादिपदेऽपि चरमवर्णस्यैव वाचकत्वं मीमांसकम्मन्यैरित्याहुः।

**व्याख्या**—अत्र नैयायिकानां मीमांसकानाञ्च व्यपेक्षावादिमतं निरूपयति—यदित्यादिना। **यत्** यदेव। **तु** हि। **व्यपेक्षावादिनः** व्यपेक्षाभावसामर्थ्यप्रतिपादकाः। **नैयायिकमीमांसकादयः** नैयायिकाः मीमांसकाश्च। आहुरित्यनेनान्वयः। **समासे** समासवृत्तौ। **शक्तिः** अर्थाववोधकसामर्थ्यम्। **न** नैव, अस्तीति शेषः। **राजपुरुषः। इत्यादौ** इत्यादिपदे। **राजपदादेः। सम्बन्धिनि** सम्बधिभूते। **लक्षणया** लक्षणावृत्त्या। **एव** हि। **राजसम्बन्धवदभिन्नः** राजसम्बन्धवतः पुरुषादभिन्नः। **पुरुषः। इति** इत्थम्। **बोधात्** ज्ञानात्। **अतः** यतो हि राजशब्दे लक्षणया राजसम्बन्धवदभिन्न इत्यर्थात्। **एव** हि। **राज्ञः** राजपदस्य। **पदार्थैकदेशत्वात्** पदार्थैकभागत्वात्। **तत्र** राजपदे। **न** नैव। **ऋद्धस्य। इत्यादिविशेषणान्वयः** विशेषणयोगः। तत्र हेतुमाह—**पदार्थ** इत्यादिना। **पदार्थः** पदस्य अर्थः। **पदार्थेन** अन्येन पदार्थेन एव। **अन्वेति** अन्वितो भवति। **न** नैव। **तु** हि। **पदार्थैकदेशेन** पदार्थैकभागेन। **इति उक्तेः** कथनात्। **सविशेषणानां** विशेषणविशिष्टानाम्। **न** नैव। **वृत्तिः** सामर्थ्यम्। **वृत्तस्य** समस्तस्य। **च** हि। **विशेषणयोगः** विशेषणान्वयः। **न** नैव। **इति** इत्थम्। **उक्तेः** वचनात्। **च** अपि। नैयायिकमीमांसकमतानुसारेण न हि समासे शक्तिः। राजपुरुष इत्यादौ तु राजशब्दस्य लक्षणया राजसम्बन्धवदभिन्न इत्यर्थबोधात् पुरुषेणान्वयः। राजशब्दस्येत्थं पदार्थैकदेशत्वान्न तत्र ऋद्धस्येत्यादिविशेषणान्वयः। यतो हि पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन, सविशेषणानां न वृत्तिर्न च वृत्तस्य विशेषणयोगोऽपीति। **न** नैव। **वा** पक्षान्तरे। **घनश्यामः। निष्कौशाम्बिः। गोरथः। इत्यादौ** इत्यादिपदेषु। **इवादिप्रयोगापत्तिः** घन इव श्यामः इत्यत्र इवशब्दस्य, निष्क्रान्तः कौशाम्ब्या इत्यत्र क्रान्तस्य, गोयुक्तो रथ इत्यत्र युक्तस्य च प्रयोगप्राप्तिः। **तत्र लक्षणया** लक्षणावृत्त्या। **एव** हि। **गतार्थतया** सिद्धतया; घनशब्दस्य घनवदित्यर्थे, निस् इत्येतस्य निष्क्रान्त इत्यर्थे, गोशब्दो गोयुक्त इत्यर्थे लक्षणयैव गतार्थत्वादिति। **उक्तार्थानां** सिद्धार्थानाम्। **अप्रयोगः। इति न्यायेन** न्यायवशात्—एकस्मात् सिद्धेर्नान्यस्मात्पुनः सिद्धिरिति। **तत्र** घनश्यामादौ। **इवादीनाम्** इवक्रान्तयुक्तानाम्। **अप्रयोगात्** प्रयोगासिद्धेः। **न** नैव। **अपि च। विभाषा इति सूत्रम्** 'विभाषा' (पा० सू० २।१।११) इत्येवं विकल्पप्राप्तिसूचकं सूत्रम्। **आवश्यकम्** अपरिहार्यम्। राजपुरुष इत्यत्र **लक्षणया** लक्षणावृत्त्या। **राजसम्बन्ध्यभिन्नः** राजसम्बन्धितोऽभिन्नः। **इति** इत्थम्। **बुबोधयिषायां** बोधयितुमिच्छायाम्। **समासस्य** समस्तरूपस्य। **राजसम्बन्धवान्** राजसम्बन्धयुक्तः। **इति।**

**बुबोधयिषायाम्।** **विग्रहस्य** राज्ञः पुरुष इत्येतस्यैव। **च** अपि। **प्रयोगनियमसम्भवात्** प्रयोगस्य नियमादिति। घनश्याम इत्यादौ घनपदस्य घनवत्यर्थस्य, निष्कौशाम्बिरित्यत्र निसः निष्क्रान्त इत्यर्थस्य, गोरथ इत्यादौ गोशब्दस्य गोयुक्त इत्यर्थस्य च बोधान्न तत्र इवक्रान्तयुक्तादिशब्दापत्तिः; उक्तार्थानामप्रयोग इति न्यायात्। न च पाणिनीयं 'विभाषा' (२।१।११) सूत्रमेवावश्यकं तत्र लक्षणया राजसम्बन्ध्यभिन्न इति कथनाय समासस्य राजसम्बन्धवान् इति कथनाय विग्रहस्यैव सम्भवान्न विभाषाकरणावश्यकतेति। **न** नैव। **अपि च। शक्तिः पङ्कजशब्दवत्** पङ्कजशब्दे इव समासेऽपि समुदाये शक्तिरिति कथनानुसारेण। **पङ्कजशब्दप्रतिद्वन्द्विका** पङ्कजशब्ददृष्टान्तम्। **शक्तिसाधिका** समुदाये शक्तिरस्तीति बोधिका। **तत्र** पङ्कजादिपदे। **अवयवशक्तिम्** अवयवभूतपदार्थबोधकसामर्थ्यम्। **अजानतः** अबोधयतः। **अपि च। ततः** तस्माच्छब्दात्। **बोधात्** कमलमित्यर्थबोधात्। **न** नैव। **च** अपि। **शक्त्यग्रहे** शक्तेर्ग्रहणाभावेऽपि। **लक्षणया। तस्मात्** ततः। **विशिष्टार्थप्रत्ययः** विशिष्टस्यासाधारणस्यार्थस्य प्रत्ययः प्रतीतिः। **सम्भवति। अतः** हेतोरस्मात्। **एव** हि। **राजपदादिशक्त्यग्रहे** राजपदादौ अवयवभूते शक्तेरज्ञाने। **राजपुरुषः। इत्यादिषु। न।** बोधः राजसम्बन्ध्यभिन्नः पुरुष इति न शाब्दबोधः। पङ्कजशब्दवत्समासेऽपि समुदाये शक्तिरिति यदुच्यते तन्न। पङ्कजपदे तु पङ्क+जन्+ड इत्यवयवभूतार्थज्ञानं विनापि कमलमित्यर्थबोधात्तत्र समुदाये शक्तिः, किन्तु राजपुरुष इत्यादौ तु अवयवार्थशक्तिग्रहं विना लक्षणया विशिष्टार्थबोधासम्भवात् राजपदादिशक्त्यग्रहे न राजपुरुष इत्यादिषु राजसम्बन्ध्यभिन्नः पुरुष इति शाब्दबोधसम्भव इति। **न** नैव। **च। चित्रगुः** चित्रा गावो यस्येति। **इत्यादौ। लक्षणासम्भवे** षष्ठ्यर्थत्वाल्लक्षणायाः सम्भवे। **अपि च। अषष्ठ्यर्थबहुव्रीहौ** षष्ठ्यर्थभिन्नबहुव्रीहिविषये। **लक्षणायाः** लक्षणावृत्तेः। **असम्भवः** अप्राप्तिः। **बहुव्युत्पत्तिभञ्जनापत्तेः** बहुविधनियमविरोधात्। **इति** इत्थम्। **वाच्यम्। प्राप्तोदकः** प्राप्तमुदकं यं सः। **इत्यादौ। उदकपदे** एव न तु प्राप्तपदे। **लक्षणास्वीकारात्** लक्षणासमर्थनात्। **पूर्वपदस्य** पूर्वप्रयुक्तप्राप्तपदस्य। **यौगिकत्वेन** यौगिकशब्दरूपत्वात्। **तत्र** तस्मिन् पदे। **लक्षणायाः** लक्षणावृत्तेः। **धातुप्रत्ययतदर्थज्ञानसाध्यतया** धातोः प्रत्ययस्य च तत्तदर्थज्ञानगम्यतया। **विलम्बितत्वात्** विलम्बेनैव प्राप्यार्थत्वात्। **प्रत्ययानां** प्रकृत्यवयवत्वेन संसृष्टानां प्रत्ययत्वेन प्रयुक्तपदानामपि। **सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्त्यनुरोधात्** सन्निहितो निकटस्थो यः पदार्थस्तद्गतस्तत्सम्बन्धो यः स्वार्थस्तद्बोधकत्वस्य व्युत्पत्तेरनुरोधात्। **च** अपि। **घटादिपदे** घटप्रभृतिपदे। **च** अपि। **अतिरिक्ता** सामान्यतो भिन्ना। **शक्तिः** सामर्थ्यम्। **कल्प्यमाना। वर्णेषु** पदगतवर्णेषु। **प्रत्येकम्** एकैकशः। **बोधकत्वे** ज्ञापकत्वे। **अपि च। विशिष्टे** विशेषरूपे। **कल्प्यते। विशिष्टस्य** घटरूपस्य न तु घटसंयुक्तरूपस्य **सङ्केतितत्वात्** सङ्केतविषयत्वात्। **प्रकृते** प्राकरणिके प्राप्तोदक इत्यादौ। **अत्यन्तसन्निधानेन** नितान्तनैकट्यात्। **प्रत्ययान्वयसौलभ्याय** प्रत्ययस्य अन्वयोऽन्वितिः प्रकृत्या सह तत्सौलभ्याय सुखप्राप्तये। **उत्तरपदे** उत्तरवर्तिपदे उदकादौ। **एव। लक्षणा। कल्प्यते। इति विशेषः। इति। स्वीकृतम्** ऊरीकृतम्। **च** एव। **घटादिपदेषु।**

अपि च। **चरमवर्णस्य** अन्तिमवर्णस्य। **वाचकत्वं** बोधकत्वम्। **मीमांसकम्मन्यैः** मीमांसकैरिति। **इति** इत्थम्। **आहुः** कथयन्ति। चित्रगुरित्यादौ चित्रा गौर्यस्येति षष्ठ्यर्थबहुव्रीहित्वेन लक्षणासम्भवेऽपि षष्ठ्यर्थभिन्नस्थले तु न लक्षणासम्भवस्तथासत्यनेकनियमविरोधादिति न वाच्यं प्राप्तोदक इत्यत्र प्राप्तमुदकं यं स इति षष्ठ्यर्थेतरबहुव्रीहावपि उदकपदे लक्षणास्वीकारात्। पूर्वपदभूतस्य प्राप्तशब्दस्य तु यौगिकत्वेन तत्र प्र+आप्+क्त इति धातुप्रत्ययतदर्थज्ञानगम्यतया विलम्बेनैव लक्षणाप्राप्तेः। अपि च प्रत्ययो हि सन्निहितपदार्थसम्बद्धस्वार्थं बोधयतीति उदकपदेनैव तदर्थज्ञापनाच्चेति। प्रत्येकं वर्णानां वाचकत्वेऽपि घटादिपदे चरमवर्णस्यैवार्थबोधकत्वसमर्थनाद् विशिष्टे एवातिरिक्ता शक्तिः विशिष्टे एव सङ्केतग्रहसम्भवात्। प्राप्तोदक इत्यत्रापि नितान्तनैकट्येन प्रत्ययान्वयसौलभ्यायोत्तरपदे एव लक्षणेति सारम्।

**हिन्दी**—जो कि व्यपेक्षासामर्थ्यवादी नैयायिक एवं मीमांसक—समास में शक्ति नहीं है। 'राजपुरुषः' इत्यादि में राजपद आदि के सम्बन्धी में लक्षणा से 'राजसम्बन्ध से युक्त अभिन्न पुरुष' ऐसा बोध होता है। इसीलिए राजा का पदार्थ के एकदेश होने से उसमें ऋद्ध आदि विशेषण का अन्वय नहीं होता। क्योंकि पदार्थ पदार्थ से ही अन्वित होता है, न कि पदार्थ के एक भाग से; ऐसा कथन है और विशेषण से युक्त पद की वृत्ति नहीं होती तथा वृत्त अर्थात् समस्त पद में विशेषण का योग नहीं होता—ऐसा भी वचन है ( ऐसा कहते हैं )। न तो घनश्यामः, निष्कौशाम्बिः, गोरथः इत्यादि में इव आदि शब्दों के प्रयोग की सम्भावना ही है। क्योंकि इव आदि का लक्षणा से ही उक्तार्थ होने से और 'उक्तार्थं ( जिसका अर्थ बतलाया जा चुका है, उसका ) का प्रयोग नहीं होता' ऐसे न्याय के होने से इव आदि के प्रयोग की प्राप्ति ही नहीं होगी। अर्थात् घनश्यामः ( घन इव श्यामः ) में इव शब्द का, निष्कौशाम्बिः ( निष्क्रान्तः कौशाम्ब्याः ) में क्रान्त का, गोरथः ( गोयुक्तो रथः ) में युक्त का लक्षणा से ही उक्तार्थ होने से प्रयोग की प्राप्ति नहीं होती। न तो पाणिनि का 'विभाषा' ( २।१।११ ) यह सूत्र ही आवश्यक है, क्योंकि लक्षणा के द्वारा 'राजसम्बन्धी से अभिन्न पुरुष' ऐसे अर्थ का बोध कराने की इच्छा में समास के राजसम्बन्ध युक्त ऐसे अर्थ का बोध कराने की इच्छा में विग्रह के भी प्रयोग के नियम सम्भव हैं। न तो पङ्कज शब्द में जैसे शक्ति होती है, ऐसा कहने मात्र से पङ्कज शब्द का प्रतिद्वन्द्वी होना ही शक्ति का साधक होना है। पङ्कज पद में तो अवयव ( पङ्क+जन्+ड ) के अर्थ के बोध के बिना भी उससे कमल रूप अर्थ का बोध होता है। अतः उसमें समुदाय में शक्ति है। ऐसी स्थिति अन्यत्र नहीं है। न तो शक्ति का ग्रहण न होने पर भी लक्षणा से उससे विशिष्ट अर्थ की प्रतीति ही सम्भव है। इसी कारण राजपद आदि में शक्तिग्रह के बिना राजपुरुषः आदि में बोध नहीं होता। न तो चित्रगुः आदि में लक्षणा सम्भव होने पर भी षष्ठ्यर्थभिन्न बहुव्रीहि में लक्षणा सम्भव नहीं होती। वैसा मानने पर बहुत-सी व्युत्पत्तियों का विरोध होता है। ऐसा ही कहना ठीक है, क्योंकि प्राप्तोदकः इत्यादि

में उदक पद में ही लक्षणा स्वीकृत है। पूर्वपद ( प्राप्त ) के यौगिक होने से उसके धातु, प्रत्यय, धात्वर्थ, प्रत्ययार्थ आदि के ज्ञान से ही साध्य होने से उसमें लक्षणा विलम्ब से ही प्रवृत्त हो पाती है। प्रत्ययों का सन्निहित पद के अर्थ से सम्बद्ध अपने अर्थ की बोधकता रूप व्युत्पत्ति का अनुरोध भी होता है। घट आदि पदों में कल्प्य-माना अतिरिक्त जो शक्ति है, वह प्रत्येक वर्ण में वाचकता होने पर भी विशिष्ट में ही कल्पित होती है, क्योंकि विशिष्ट ही सङ्केतित होता है। प्रकृत 'प्राप्तोदकः' में अत्यन्त निकट होने से प्रत्यय के अन्वय की सुलभता के लिए उत्तरपद में ही लक्षणा कल्पित है। इसमें यह विशेष है। घटादि पदों में भी चरमवर्ण का ही वाचकत्व मीमांसकों ने भी स्वीकार किया है—ऐसा कहते हैं।

( १९० ) अत्रोच्यते—समासे शक्त्यस्वीकारे विशिष्टस्यार्थवत्त्वाभावेन प्रातिपदिकत्वं न स्यात्। अत एव 'अर्थवद-' सूत्रे भाष्ये अर्थवदिति किम्? अर्थवतां समुदायोऽनर्थकः। 'दश दाडिमानि षडपूपाः कुण्डम् अजाजिनमि'ति प्रत्युदाहृतम्। एवञ्च राजपुरुषपदयोस्त्वन्मते प्रत्येकमर्थवत्त्वेऽपि समुदायस्य दशदाडिमादिवदनर्थकत्वात् प्रातिपदिकत्वानापत्तेः। न च 'कृत्तद्धित-' इति सूत्रे समासग्रहणात् तत्संज्ञेति वाच्यं, तस्य नियमार्थताया भाष्यकृतैव प्रतिपादितत्वात्। अन्यथा सिद्धिं विना नियमायोगात्। अत एव राज्ञः पुरुषः, देवदत्तः पचतीत्यादिवाक्यस्य मूलकेन उपदंशम् इत्यादेश्च न प्रातिपदिकत्वम्।

**व्याख्या**—व्यपेक्षावादिमतदूषणाय प्रक्रमते—**अत्रे**त्यादिना। **अत्र** प्रकरणेऽस्मिन्। **उच्यते** कथ्यते। **समासे** समस्तपदे। **शक्त्यस्वीकारे** समुदायार्थाविबोधकसामर्थ्यासमर्थने। **विशिष्टस्य** समुदायस्य। **अर्थवत्त्वाभावेन** सार्थकत्वाभावात्। **प्रातिपदिकत्वं** प्रातिपदिकसंज्ञाभावः। **न** नैव। **स्यात्**। **अतः** अस्मात्। **एव** हि। **अर्थवत्सूत्रे** 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' ( पा० सू० १।२।४५ ) इति सूत्रसम्बद्धे। **भाष्ये** महाभाष्यग्रन्थे। **अर्थवदिति किम्?** सूत्रे अर्थवदिति पदं किमर्थम्? **अर्थवतां** सार्थकपदानाम्। **समुदायः**। **अनर्थकः** अर्थरहितः तत्रावयवस्यैवार्थप्राधान्यात्। अर्थवतो हि **दशदाडिमानि षडपूपाः कुण्डम् अजाजिनम् इति प्रत्युदाहृतम्** प्रत्युदाहरणानि दत्तानि यत्रावयवास्तु सार्थकाः किन्तु समुदायो निरर्थकः। **एवञ्च**। **राजपुरुष** इत्यत्र। **राजपुरुषपदयोः**। **त्वन्मते** भवत्सम्मतव्यपेक्षापक्षे। **प्रत्येकम्** अवयवयोः। **अर्थवत्त्वे** अर्थयुक्तत्वे। **अपि च**। **समुदायस्य दशदाडिमादिवत्**। दश दाडिमानि इव। **निरर्थकत्वात्** अर्थहीनत्वात्। **प्रातिपदिकत्वानापत्तेः** प्रातिपदिकसंज्ञाऽप्राप्तेः। **न**। **च**। **कृत्तद्धित इति सूत्रे** 'कृत्तद्धितसमासाश्च' ( १।२।४६ ) इति सूत्रे। **समासग्रहणात्** समासपदपाठात्। राजपुरुष इत्येतस्य। अर्थहीनत्वेऽपि। **तत्संज्ञा** प्रातिपदिकसंज्ञा। **इति** इत्थम्। **वाच्यं** कथनीयम्। **तस्य** कृत्तद्धितेति सूत्रे समासस्य। **नियमार्थतायाः** नियमनिमित्तकत्वस्य। **भाष्यकृता** महाभाष्यकारेण। **एव** हि। **प्रतिपादितत्वात्** निर्णीतत्वात्। **अन्यथा** प्रकारान्तरेण सूत्रे समासपदं बिना हि समासयुक्तपदानां प्रातिपदिकसंज्ञायाः। **सिद्धिम्**। **विना**।

**नियमाऽयोगात्** नियमसम्बन्धाभावात्। **अतः** यतो हि सूत्रे समासपदं नियामकमात्रं तस्मात्। **एव हि। राज्ञः पुरुषः, देवदत्तः पचति। इत्यादिवाक्यस्य। मूलकेन उपदंशम् इत्यादेः। च। न। प्रातिपदिकत्वं** प्रातिपदिकसंज्ञाविषयत्वमिति। यदि हि समासे शक्तिर्नैव स्वीक्रियते तदा समुदायस्यार्थवत्ताभावेन तस्य प्रातिपदिकत्वमेव न स्यादर्थवत एव तन्नियमात्। राजपुरुष इत्यत्र व्यपेक्षावादिमते प्रत्येकमर्थवत्त्वेऽपि समुदायस्य दशदाडिमादिवदर्थहीनत्वान्न प्रातिपदिकत्वप्राप्तिः। 'कृत्तद्धितसमासाश्चे'ति सूत्रे समासग्रहणं नियमार्थमेव। नियमस्तु सिद्धिमनुसृत्यैव भवति। तेन राज्ञः पुरुषः इत्यादेर्न प्रातिपदिकत्वमिति।

**हिन्दी** इसमें कहा जाता है—समास में शक्ति का स्वीकार न करने पर विशिष्ट ( समुदाय ) की अर्थवत्ता न होने से प्रातिपदिकत्व नहीं होगा। इसी कारण 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' ( पा० सू० १।२।४५ ) सूत्र के भाष्य में अर्थवत् शब्द किस लिए है? अर्थयुक्तों का समुदाय तो निरर्थक होता है। 'दश दाडिमानि, षडपूपाः, कुण्डम् अजाजिनम्' इत्यादि उसके प्रत्युदाहरण दिये गये है। इसी तरह राज एवं पुरुष पद का आपके मत में प्रत्येक में अर्थवत्ता होने पर भी समुदाय का दश-दाडिम जैसे अनर्थक होने से प्रातिपदिकत्व की प्राप्ति नहीं होगी। न तो 'कृत्तद्धित-समासाश्च' ( १।२।४६ ) इस सूत्र में समास पद के ग्रहण करने से वह संज्ञा होती है, ऐसा कहना चाहिए। वह समास पद नियम के लिए हैं, ऐसा भाष्यकार ने ही प्रतिपादित किया है। प्रकारान्तर से सिद्ध न होने की स्थिति में नियम का योग नहीं होता। इसी कारण 'राज्ञः पुरुषः' 'देवदत्तः पचति' इत्यादि वाक्यों का 'मूलकेन उपदंशम्' इत्यादि का भी प्रातिपदिकत्व नहीं होता।

( १९१ ) किञ्च समासे शक्त्यस्वीकारे शक्यसम्बन्धरूपलक्षणाया अप्यसम्भवेन लाक्षणिकार्थवत्वस्याप्यसम्भवेन सर्वथा प्रातिपदिकत्वाभाव एव निश्चितः स्यादिति स्वाद्यनुत्पत्तौ 'अपदं न प्रयुञ्जीत' इति भाष्यात् समस्तप्रयोगविलयापत्तेः।

**व्याख्या**—ननु न स्यात्समुदायस्यार्थवत्त्वं तथापि तत्र लाक्षणिकार्थवत्त्वेन प्रातिपदिकत्वमस्त्वित्याशङ्कानिरासायाह—किञ्चेत्यादिना। **किञ्च** एतदतिरिक्तमपि। **समासे** समस्तपदे। **शक्त्यस्वीकारे** शक्तेरसमर्थने। **शक्यसम्बन्धरूपलक्षणायाः** शक्यसम्बन्धो लक्षणेति लक्षिताया लक्षणायाः। **अपि। असम्भवेन** अप्रवृत्तेः। **सर्वथा** सर्वतोभावेन। **प्रातिपदिकत्वाभावः** प्रातिपदिकताऽप्राप्तिः। **एव। निश्चितः** निर्णीतः। **स्यात्** इति हेतोः। **स्वाद्यनुत्पत्तौ** विभक्त्यप्राप्तौ। **'अपदं न प्रयुञ्जीत'। इति** इत्थम्। **भाष्यात्** भाष्यग्रन्थात्। **समस्तप्रयोगविलयापत्तेः** सर्वविधप्रयोगतिरोभावप्राप्तेरिति।

यदि हि व्यपेक्षापक्षमाश्रित्य समासे शक्तिर्नैव स्वीक्रियते तदाऽवयवानां सार्थकत्वेऽपि विशिष्टस्य ( समुदायस्य ) अर्थवत्त्वाभावेन शक्यार्थाभावान्न हि तत्र शक्यसम्बन्धरूपलक्षणाया अपि प्रवृत्तिरिति न हि तस्य लाक्षणिकार्थवत्तयाऽप्यर्थवत्त्वं यतः

स्वाद्युत्पत्तिः स्यात्। तथासति अपदस्य प्रयोगनिषेधात् सर्वेऽपि प्रयोगा व्यवहार-बाह्याः स्युः।

हिन्दी—इसके अलावा समास में शक्ति न मानने पर शक्यसम्बन्धरूप लक्षणा के भी असम्भव हो जाने से लाक्षणिक अर्थवत्ता भी असम्भव होने से सर्वथा प्रातिपदिकत्व का अभाव निश्चित हो जाएगा और उससे सु आदि की उत्पत्ति न होने के कारण अपद का प्रयोग नहीं करना चाहिए—ऐसे भाष्य के वचन से समस्त प्रयोगों के विलय की प्राप्ति होगी।

(१९२) अथ 'तिप्तस्झि' इत्यतः ति इत्यारभ्य 'ङचोस्सुप्' इति प्रकारेण तिप्प्रत्याहारो भाष्यसिद्धः। तत्पर्युदासेन 'अतिप् प्रातिपदिकम्' इत्येव सूत्र्यताम्। ततः 'समासश्च' इति सूत्रं नियमार्थमस्तु किं सूत्रद्वयेन। इति सुप्तिङ्भिन्नं प्रातिपदिकमित्यर्थात् समासस्याऽपि सा स्यादिति समासश्च इत्यस्य नियमार्थत्वं सुलभमिति चेत्सत्यम्। प्रत्येकं वर्णेषु संज्ञावारणाय अर्थवदित्यस्यावश्यकत्वेन समासेऽव्याप्तिस्तदवस्थैव। तथा च प्रातिपदिकसंज्ञारूपकार्यमेवार्थतत्त्वमनुमापयति। समासोऽर्थवान् प्रातिपदिकत्वात्। यन्नार्थवत् तन्न प्रातिपदिकम्। अभेदपक्षे 'भू सत्तायाम्' इत्याद्यनुकरणवदिति।

व्याख्या—समस्तपदस्य प्रातिपदिकसंज्ञोपपादनाय प्रस्तावितोपायान्तरं निराकरोति—अथेत्यादिना। अथ यदि विशिष्टस्य न प्रातिपदिकत्वप्राप्तिस्तदा। तिप्तस्झि इत्यतः। ति इत्यारभ्य। ङचोस्सुप् इति प्रकारेण। तिप्प्रत्याहारः। भाष्यसिद्धः। भाष्ये हि ति इत्यारभ्य सुपः पकारेण तिप्प्रत्याहारोऽनुमत एव। तत्पर्युदासेन तस्य तिप्प्रत्याहारस्य। पर्युदासेन निषेधेन। 'अतिप् प्रातिपदिकम्' इति एव। सूत्र्यतां सूत्रं पठ्यताम्। समासश्च इति इत्थम्। सूत्रम्। नियमार्थं नियमनिमित्तकम्। अस्तु। सूत्रद्वयेन अर्थवदिति कृत्तद्धित इति च द्वाभ्यां सूत्राभ्याम्। किं किं प्रयोजनम्? इति इत्थम्। सुप्तिङ्भिन्नं सुप्तिङ्ङतिरिक्तम्। प्रातिपदिकं प्रातिपदिकसंज्ञकम्। इति इत्थम्। अर्थात् अर्थलाभात्। समासस्य समस्तपदस्य। अपि च। सा प्रातिपदिकसंज्ञा। स्यात्। इति इत्थम्। समासश्च। इत्यस्य सूत्रस्य। नियमार्थत्वं नियमनिमित्तकत्वम्। सुलभम्। इति इत्थम्। चेत् कथ्यते चेत्। सत्यं साधु। एव। किन्तु वर्णेषु पदगतवर्णेषु। प्रत्येकम्। संज्ञावारणाय प्रातिपदिकसंज्ञानिरासाय। अर्थवत् अर्थयुक्तम्। इत्यस्य पदस्य सूत्रे। आवश्यकत्वेन अपरिहार्यत्वात्। समासे। अव्याप्तिः प्रातिपदिकसंज्ञाया अप्राप्तिः। तदवस्था यथा पूर्वं तथा। एव। तथा। च। प्रातिपदिकसंज्ञारूपकार्यं प्रातिपदिकत्वरूपं यत्कार्यं तत्। एव। अर्थवत्त्वम् अर्थयुक्तत्वम्। अनुमापयति ज्ञापयति। एवमेव समासः अर्थवान् अर्थयुक्तः। प्रातिपदिकत्वात् प्रातिपदिकभावात्। यत्। न नैव। अर्थवत् अर्थयुक्तम्। तत्। न नैव। प्रातिपदिकम्। इति। अभेदपक्षे अनुकार्यानुकरणयोरभेदवादिपक्षे। भू सत्तायाम्। इत्याद्यनुकरणवत्। इति।

यदि समासे शक्त्यभावे विशिष्टेऽर्थवत्ताऽभावेन प्रातिपदिकत्वाभावादपदत्वेन

प्रयोगविलय आपद्यते तदा भाष्यसिद्धं ति इत्यारभ्य सुपः पकारेण तिप्प्रत्याहार-माश्रित्य तत्पर्युदासेन अतिप्प्रातिपदिकमिति सूत्रं पठ्यतां यस्यार्थः सुप्तिङ्भिन्नं प्रातिपदिकमिति। ततश्च समासश्च इति सूत्रं नियमार्थमस्तु इति कथ्यते चेत्सत्यमेव, किन्तु प्रत्येकं वर्णेषु तन्निवारणाय सूत्रे अर्थवत्त्वग्रहणमावश्यकमेव येन समासे सैव स्थितिः। प्रातिपदिकत्वकार्यं स्वयमेवार्थत्वं ज्ञापयति। यदेवार्थयुक्तं तदेव प्रातिपदिकमिति। समासोऽप्यर्थवान् प्रातिपदिकत्वात्। नार्थहीनं प्रातिपदिकं, यथा अभेदपक्षे भू सत्तायामित्याद्यनुकरणशब्द इति।

हिन्दी—यदि ऐसा हो तो 'तिप्-तस्-झि' इससे ति से आरम्भ कर 'ङयोस्सुप्' के पकार को लेकर तिप्प्रत्याहार तो भाष्यसिद्ध है ही। उसके निषेध को लेकर 'अतिप् प्रातिपदिकम्' ऐसा सूत्र पढा जाय। उसके बाद 'समासश्च' यह सूत्र नियमार्थ हो। इन 'अर्थवत्' एवं 'कृत्तद्धित' सूत्रों से क्या प्रयोजन है? इस तरह सुप् एवं तिङ् से भिन्न प्रातिपदिक होता है, ऐसा अर्थ होने से समास को भी प्रातिपदिक संज्ञा हो जाती है और 'समासश्च' यह सूत्र नियम के निमित्त सुलभ है ही—ऐसा कहा जाय तो ठीक है, लेकिन प्रत्येक वर्ण में प्रातिपदिक संज्ञा के निवारण के लिए 'अर्थवत्' इसकी आवश्यकता होने से समास में अव्याप्ति तो उसी तरह से है ही। और प्रातिपदिकसंज्ञारूप कार्य ही अर्थवत्ता का अनुमान कराता है। समास प्रातिपदिक होने से अर्थवान् होता है। जो अर्थवान् नहीं है, वह प्रातिपदिक नहीं है। अनुकार्य एवं अनुकरण के अभेदपक्ष में 'भू सत्तायाम्' इत्यादि अनुकरण की तरह।

( १९३ ) यत्तु 'पदार्थः पदार्थेन…' इति 'वृत्तस्य विशेषणयोगो ने'ति वचनद्वयेन ऋद्धस्येत्यादिविशेषणान्वयो न भवति, तत्तु समासे एकार्थीभावे स्वीकृतेऽवयवानां निरर्थकत्वेन विशेषणान्वयासम्भवात् फलितार्थपरम्। युष्माकं त्वपूर्ववाचनिकमिति गौरवमित्यग्रे वक्ष्यते।

व्याख्या—व्यपेक्षावादिमतमेव प्रकारान्तरेण दूषयति—यदित्यादिना। यत् यदेव। तु हि। 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' 'वृत्तस्य विशेषणयोगो न'। इति इत्थम्। वचनद्वयेन। राजपुरुष इत्यादौ ऋद्धस्य इत्यादिविशेषणान्वयः विशेषणयोगः। न भवति इत्युक्तम्। तत् तत्कथने। तु हि। समासे समस्तपदे। एकार्थीभावे समुदायार्थे। स्वीकृते गृहीते। अवयवानाम् अवयवभूतपदानाम्। निरर्थकत्वेन पृथगर्थाभावेन। विशेषणान्वयासम्भवात् विशेषणयोगाभावात्। फलितार्थपरं चरितार्थं भवति। युष्माकं भवतां मते। तु हि। अपूर्ववाचनिकं यद्धि स्वतोऽसिद्धं तस्य नियमवाक्यकल्पनया कथनमिति। गौरवम् गौरवाय। इति इत्थम्। अग्रे आगामिप्रकरणे। वक्ष्यते कथयिष्यते इति।

यदुक्तं 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' तथैव 'वृत्तस्य विशेषणयोगो ने'त्यपि तत्तु लाक्षणिकार्थापेक्षया समासे एकार्थीभावेऽवयवानां पृथगर्थाभावेन विशेषणयोगासम्भवात् तत्र फलितं भवति, न तु भवत्सम्मते व्यपेक्षावादिमते। भवतान्त्वपूर्वनियमकल्पनमिति गौरवमेवेति।

**हिन्दी**—जो कि 'पदार्थ पदार्थ के साथ अन्वित होता है न कि उसके एक भाग से', 'वृत्त अर्थात् समस्त पद का विशेषण से सम्बन्ध नहीं होता' इन दो वचनों के आधार पर 'राजपुरुषः' इत्यादि में 'ऋद्धस्य' इत्यादि विशेषणों का योग नहीं होता—ऐसा कहा गया है। वह तो समास में एकार्थीभाव मानने पर अवयवों के निरर्थक होने से उसमें विशेषण का योग सम्भव न होने से अधिक चरितार्थ होता है। आपका अपूर्व कथन ( जो स्वतः सिद्ध नहीं है, उसका नियम-वाक्य बनाकर कहना ) होने से गौरव है। इसको आगे बतलाया जाएगा।

( १९४ ) यत्तु प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिरिति, तन्न। उपकुम्भम्, अर्धपिप्पली इत्यादौ पूर्वपदार्थे विभक्त्यर्थान्वियेन व्यभिचारात्। मम तु प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेर्विशिष्टोत्तरमेव प्रत्ययोत्पत्तेर्विशिष्टस्यैव प्रकृतित्वाद्विशिष्टस्यैवार्थवत्त्वाच्च न दोषः।

**व्याख्या**—प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वं व्यपेक्षावादिमते एव सङ्गच्छते इति नैयायिककथनं दूषयति—यदित्यादिना। **यत्** यदेव। **तु** हि। **प्रत्ययानां** प्रत्ययत्वेन प्रयुक्तानाम्। **सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिः** निकटस्थपदार्थसम्बन्धार्थसम्बन्धस्वार्थबोधकत्वस्य व्युत्पत्तिः। **इति**। **तत्** तत्कथनम्। **न** नैवोपयुक्तम्। **उपकुम्भं** कुम्भस्य समीपम्। **अर्धपिप्पली** अर्धं पिप्पल्याः। **इत्यादौ** इत्यादिपदे। **पूर्वपदार्थे** पूर्ववर्तीपदार्थे। समीपार्थे अर्धार्थे च। **विभक्त्यर्थान्वयेन** विभक्त्यर्थस्यान्वयेन योगेन। **व्यभिचारात्** दोषात्। **मम** मन्मते। **तु** तद्व्यतिरिक्तम्। **प्रत्ययानाम्**। **प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः** यतः प्रत्ययो विधीयते सा प्रकृतिस्तस्या योऽर्थस्तेनान्वितो युक्तो यः स्वार्थस्तस्य बोधकत्वमिति व्युत्पत्तेः। **विशिष्टोत्तरं** विशिष्टमनु। **एव** हि। **प्रत्ययोत्पत्तेः**। **विशिष्टस्य** ( समुदायस्य ) **एव**। **प्रकृतित्वात्**। **विशिष्टस्य** समुदायस्य। **एव** हि। **अर्थवत्त्वात्** अर्थयुक्तत्वात्। **च**। **न**। **दोषः**। **इति**।

न च भवत्सम्मतं प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वमेवोपयुक्तं तथासति उपकुम्भमित्यत्र समीपार्थे अर्धपिप्पली इत्यत्र अर्धार्थे च विभक्त्यर्थान्वयः स्यात्। न च तदभीष्टम्। अस्मत्पक्षे तु प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वात् तेषां समुदायोत्तरमेवोत्पत्तेः समुदायस्यैव प्रकृतेरर्थवत्त्वाच्च न दोष इति।

**हिन्दी**—जो कि प्रत्ययों की निकटस्थ पद के अर्थ से सम्बद्ध अपने अर्थ को बतलाने की व्युत्पत्ति कही गई है, वह भी ठीक नहीं है। वैसा होने पर 'उपकुम्भम्, अर्धपिप्पली' इत्यादि में पूर्व पद में अर्थभूत समीप एवं आधा अर्थ में विभक्त्यर्थ का अन्वय हो जाने से व्यभिचार होगा। हमारे मत में तो प्रत्ययों की प्रकृति के अर्थ से सम्बद्ध अपने अर्थ को बतलाने की व्युत्पत्ति मानी जाती है। विशिष्ट के बाद ही प्रत्यय की उत्पत्ति होती है। विशिष्ट ही प्रकृति है और विशिष्ट ही अर्थवान् होता है, अतः कोई दोष नहीं है।

( १९५ ) किञ्च राजपुरुष इत्यादौ राजपदादेः सम्बन्धिनि सम्बन्धे वा

लक्षणा ? नाद्यः । राज्ञः पुरुष इति विवरणविरोधात् । वृत्तिसमासार्थवाक्यस्यैव विग्रहत्वात् । अन्यथा तस्माच्छक्तिनिर्णयो न स्यात् । नान्त्यः । राजसम्बन्धरूपः पुरुष इत्यन्वयप्रसङ्गात् । ननु तर्हि वैयाकरण इत्यस्य व्याकरणमधीत इति, पाचक इत्यस्य पचति इति च कथं विग्रहः ? वृत्तिसमानार्थत्वाभावादिति । अत आह—

आख्यातं तद्धितकृतोर्यत्किञ्चिदुपदर्शकम् ।
गुणप्रधानभावादौ तत्र दृष्टो विपर्ययः ॥ इति ।

तद्धितकृतोर्यत्किञ्चिदर्थबोधकं विवरणमाख्यातं तिङन्तमिति यावत् । तत्र विवरणविव्रियमाणयोर्विशेष्यविशेषणभावविपर्ययो दृष्ट इति । कृदन्ततद्धितान्तयोराश्रयप्राधान्यमाख्याते व्यापारस्येति बोध्यम् ।

**व्याख्या**—व्यपेक्षावादिमते दोषान्तरमुद्भाव्य दूषयति—**किञ्चेत्यादिना** । **किञ्च** एतदतिरिक्तमपि । **राजपुरुषः इत्यादौ** । **राजपदादेः** राजपदस्येति । **सम्बन्धिनि** सम्बन्धिभूते पुरुषे । **वा** इति पक्षान्तरे । **सम्बन्धे** । **लक्षणा ? न नैव** । **आद्यः** प्रथमः न राजपदसम्बन्धिनि लक्षणा । **राज्ञः पुरुषः इति विवरणविरोधात्** विग्रहवाक्ये विरोधोत्पत्तेः । **वृत्तिसमानार्थवाक्यस्य** वृत्तेः समानार्थं यद्वाक्यं तस्य । **एव** । **विग्रहत्वात्** विग्रहभावात् । **अन्यथा** तदभावे वृत्तिसमानार्थवाक्यस्य विग्रहत्वाभावे । **तस्मात्** विग्रहात् । **शक्तिनिर्णयः** । **न** । **स्यात्** । **न** । **अन्त्यः** न च सम्बन्धे लक्षणेति । तथासति **राजसम्बन्धरूपः** राजसम्बन्ध एव । **पुरुषः** । **इति** इत्थम् । **अन्वयप्रसङ्गात्** अन्वयापत्तेः । **ननु** । **तर्हि** यदि तथा । **वैयाकरणः इत्यस्य** इति पदस्य । **व्याकरणमधीते इति, पाचकः इत्यस्य पचति इति च** । **कथं विग्रहः ? वृत्तिसमानार्थत्वाभावात्** वृत्तेर्यत्समानार्थत्वं तस्य अभावादिति । नहि वैयाकरण इत्यत्र तद्धितवृत्तेः पाचक इत्यत्र कृद्वृत्तेराख्यातेन सह समानार्थत्वमिति । **अतः** एतत्परिहाराय । **आह** कथयति । तदनुवदति—**आख्यातमित्यादिना** । तद्धितकृतोः यत्किञ्चित् उपदर्शकम् आख्यातम्, तत्र गुणप्रधानभावादौ विपर्ययः दृष्ट इत्यन्वयः । **तद्धितकृतोः** तद्धितस्य कृतश्च । **यत्किञ्चित्** स्वल्पमपि **उपदर्शकम्** अर्थाववोधकम् । **आख्यातं** तिङन्तम् । **तत्र** । **गुणप्रधानभावादौ** गुणभावे प्रधानभावे च । **विपर्ययः** विपरीतावस्था । **दृष्टः** इति । कारिकां स्वयमपि व्याख्याति च—**तद्धितेत्यादिना** । **तद्धितकृतोः** तद्धितान्तकृदन्तप्रयोगयोः । **यत्किञ्चित्** स्वल्पमेव न तु सर्वांशतः । **अर्थबोधकम्** । **विवरणं** विग्रहः । **आख्यातं तिङन्तमिति यावत्** तिङन्तमित्याशयः । तद्धितान्तकृदन्तप्रयोगयोर्विग्रहवाक्ये यदाख्यातं तद्यत्किञ्चिदेवार्थबोधकं भवति न तु सर्वांशतः । **तत्र** तद्धितान्तकृदन्तप्रयोगयोः । **विवरणविव्रियमाणयोः** विग्रहस्य पदस्य चोभयोः पचतीति विवरणं पाचक इति विव्रियमाणः । **विशेष्यविशेषणभावविपर्ययः** प्रधानगौणस्थितिवैपरीत्यम् । **दृष्ट** इति । **कृदन्ततद्धितान्तयोः** तत्तदन्तप्रयोगयोः । **आश्रयप्राधान्यम्** आश्रयस्य कर्तुः प्रधानता । **आख्याते** तिङन्ते । **व्यापारस्य** फलजनकस्य । **इति** । **बोध्यं** ज्ञेयमिति । अत एव तत्र न दोष इति ।

यदि राजपुरुष इत्यत्र लक्षणा स्वीक्रियते तदा किं सा राजपदादेः सम्बन्धिनि उताहो सम्बन्धे वेति प्रश्नः ? न हि सम्बन्धिनि लक्षणा सम्भवति तथासति तस्य राज्ञः पुरुष इति विग्रह एवासिद्धः स्यात्, वृत्तिसमानार्थवाक्यस्यैव विग्रहत्वं सम्भवति न हि राज्ञः पुरुष इति विग्रहस्य राजसम्बन्धी पुरुष इत्यर्थस्य च न समानार्थकत्वम्। विग्रह-विगृह्यमाणयोः समानार्थकत्वाभावे ततः शक्तिनिर्णयोऽपि न स्यात्, सम्बन्धे लक्षणाया-मपि राजसम्बन्धरूपः पुरुष इत्यर्थबोधः स्याद्यद्धि नितान्तमनभीष्टम्। यदि हि वृत्ति-समानार्थकवाक्यस्यैव विग्रहत्वं तदा वैयाकरण इत्येतस्य व्याककरणमधीते इति पाचक इत्यस्य पचति इति च कथं विग्रहो वृत्तिसमानार्थत्वाभावादिति चेदुच्यते, तद्धितान्त-कृदन्तप्रयोगयोर्विग्रहवाक्यगतमाख्यातं यत्किञ्चिदेव विगृह्यमाणस्यार्थबोधकं भवति, न तु सर्वांशतः। तद्धितान्तकृदन्तप्रयोगयोराश्रयस्य ( कर्तुः ) प्राधान्यं व्यापारस्य गौणता आख्याते तु व्यापारस्य प्राधान्यमाश्रयस्य गौणतेति। तेन तथाविधस्थले न दोष इति।

हिन्दी—इसके अतिरिक्त 'राजपुरुषः' आदि में राजपद आदि का सम्बन्धी में अथवा सम्वन्ध में लक्षणा हो ? पहला अर्थात् सम्वन्धी में लक्षणा तो हो नहीं सकती। वैसा होने से 'राज्ञः पुरुषः' इस विग्रह में विरोध आ जाता है। वृत्ति का समानार्थक वाक्य ही विग्रह बन पाता है। वैसा न होने से शक्ति-निर्णय भी नहीं हो पाता। न तो अन्त्य ही है अर्थात् न तो सम्बन्ध में ही लक्षणा होती है। वैसा होने पर तो 'राजसम्बन्ध रूप पुरुष' ऐसे अन्वय का प्रसङ्ग आ जाएगा। तब 'वैयाकरणः' इसका 'व्याकरणमधीते' ऐसा, 'पाचकः' इसका 'पचति' ऐसा विग्रह कैसे हो पाएगा ? वहाँ भी वृत्तिसमानार्थकता का अभाव है। इसीलिए तो कहा है—

तद्धितान्त एवं कृदन्त प्रयोग का आख्यात थोड़ा-बहुत ही अर्थ का बोधक होता है, सर्वांशतः नहीं। उसमें गौणता एवं प्राधान्य में विपरीतता भी देखी जाती है।

तद्धितान्त एवं कृदन्त का थोड़ा-बहुत अर्थबोधक विग्रह आख्यात तिङन्त है। उसमें विवरण एवं विव्रियमाण अर्थात् विग्रह एवं विगृह्यमाण में विशेष्य ( प्रधान ) एवं विशेषण ( गौण ) भाव का वैपरीत्य भी देखा गया है। कृदन्त एवं तद्धितान्त प्रयोगों में आश्रय की प्रधानता रहती है और व्यापार की गौणता तथा आख्यात में व्यापार की प्रधानता तथा आश्रय की गौणता जान लेनी चाहिए।

( १९६ ) ननु रथन्तरशब्दाद्रथिकस्यापि प्रत्ययः किं न स्यादिति चेन्मै-वम्। रूढिर्योगार्थमपहरति इति न्यायात्। ननु विशिष्टशक्तिस्वीकारे पङ्कज-पदादेर्विशिष्टप्रतीतिर्मा भूत् समुदायशक्त्यैव कमलपदवत्पुष्पविशेषप्रत्ययः स्यादिति चेन्न। जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी इत्यभियुक्तोक्तेः। अवयवार्थसंवलितसमुदायार्थे पद्मे शक्तिस्वीकारात्। अत एव चतुर्विधः शब्दः। यथा—रूढः, योगरूढः, यौगिको यौगिकरूढश्च। अवयवार्थमनपेक्ष्य समुदायार्थशक्तिमात्रेणार्थबोधकत्वं रूढत्वं रथन्तरमित्यादौ। अवयवार्थ-संवलितसमुदायशक्त्याऽर्थबोधकत्वं योगरूढत्वं पङ्कजमित्यत्र। अवयव-

शक्त्यैवार्थबोधकत्वं यौगिकत्वं पाचिका पाठिका इत्यादौ। अवयवशक्त्या समुदायशक्त्या चार्थबोधकत्वं यौगिकरूढत्वं मण्डपानकर्तृपरोऽपि गृहविशेषपरोऽपि मण्डपशब्द उदाहरणमिति विवेकः।

**व्याख्या**—एकार्थीभावपक्षे समर्थनपक्षं पुनरुद्भावयति—**नन्वित्यादिना**। **ननु**। **रथन्तरशब्दात्**। **रथिकस्य** रथारोहिणः। **अपि च**। **प्रत्ययः** प्रतीतिः। **किं**। **न**। **स्यात्**। **इति** इत्थम्। **चेत्** कथ्यते चेत्। एवं रथन्तरशब्दाद्यौगिकार्थमाश्रित्य रथिकप्रतीतिः। **मा न भवति**। **रूढिः** प्रसिद्धिः। **योगार्थं** यौगिकार्थम्। **अपहरति** निष्क्रियं करोति। **इति** इत्थम्। **न्यायात्** न्यायोपस्थितेः। **ननु विशिष्टशक्तिस्वीकारे विशिष्टे समुदाये** शक्तेरर्थावबोधकसामर्थ्यस्य स्वीकारे। **पङ्कजपदात्**। **अवयवार्थप्रतीतिः** अवयवभूतानां पङ्क जन् डः इत्येतेषामर्थस्य प्रतीतिः प्रत्ययः। **मा**। **भूत्**। **समुदायशक्त्या** विशिष्टशक्त्या। **एव हि**। **कमलपदवत्**। **पुष्पविशेषप्रत्ययः** कुसुमविशेपप्रतीतिः। **स्यात्**। **इति चेत्**। **मा नैव** समीचीनम्। **तत्रैव** तादृशस्थल एव। **जहत्स्वार्था** जहति पदानि स्वमर्थं यस्यामिति सा। **यत्र** यस्मिन् स्थले। **रूढिः** प्रसिद्धिः। **विरोधिनी** प्रतिकूला भवतीति शेषः। **इति** इत्थम्। **अभियुक्तोक्तेः** शिष्टवचनात्। **अवयवार्थसंवलितसमुदायार्थे** अवयवस्यार्थेन संवलितो यः समुदायस्तदर्थे। **पद्मे**। **शक्तिस्वीकारात्** सामर्थ्यसमर्थनात्। **अत एव**। **शब्दः चतुर्विधः** चतुष्प्रकारकः। **रूढः, यौगिकः, योगरूढः यौगिकरूढः चेति**। **तत्र अवयवार्थम्** अवयवबोध्यार्थम्। **अनपेक्ष्य** तिरस्कृत्य। **समुदायशक्तिमात्रेण** विशिष्टे या शक्तिस्तन्मात्रेण। **अर्थबोधकत्वम्**। **रूढत्वं** रूढलक्षणम्। **रथन्तरम्** इत्यादौ रूढत्वमिति शेषः। रथन्तरशब्दो हि अवयवभूतानां रथतॄ खच् इत्येतेषामर्थमनपेक्ष्य विशिष्टसामविशेषार्थं प्रस्तौति। तेन शब्दोऽयं रूढ इति। **अवयवार्थसंवलितसमुदायशक्त्या** अवयवद्योत्यार्थसंयुक्तसमुदायशक्तिविशेषेण। **अर्थबोधकत्वम्**। **योगरूढत्वं** योगरूढलक्षणमिति। **यथा पङ्कजमित्यादौ**। पङ्कजशब्दो हि अवयवभूतानां पङ्क जन् ड इत्येतेषामप्यर्थमादाय तत्संवलितकमलरूपसमुदायार्थं बोधयतीति पङ्कजशब्दो योगरूढस्योदाहरणमिति। **अवयवशक्त्या** अवयवसम्बद्धशक्त्या। **एव हि**। **अर्थबोधकत्वं यौगिकत्वं** यौगिकलक्षणम्। **यथा पाचिका पाठिका इत्यादौ**। पचतीति पच्+कर्तरि ण्वुल्+टाप् इति सर्वैः सम्भूय पाककर्त्री स्त्रीति बोधः। एवमेव पाठिकाऽपि। **अवयवशक्त्या समुदायशक्त्या चोभाभ्यामेव** शक्तिभ्याम्। **अर्थबोधकत्वं यौगिकरूढत्वं** यौगिकरूढलक्षणम्। **यथा मण्डपानकर्तृपरः** यो हि मण्डं पिबति तत्परः। **अपि च**। **गृहविशेषपरः** भवनविशेषबोधकः। **अपि च**। **मण्डपशब्दः उदाहरणं** निदर्शनम्। **इति** इत्थम्। **विवेकः** विवरणम्। इति।

न हि रथन्तरशब्दाद् रथिकस्यापि बोधो भवति, रूढिर्योगार्थमपहरतीति न्यायात्। पङ्कजशब्दात् न च अवयवार्थमनपेक्ष्य समुदायार्थमात्रबोधोऽपि न यत्र रूढिर्विरोधिनी तत्रैव जहत्स्वार्थायां विषयत्वादत्र तु न तथेति। चतुर्विधो हि शब्दः—रूढ-यौगिक-योगरूढ-यौगिकरूढभेदात्। तत्र अवयवार्थमनपेक्ष्य समुदायार्थमात्रबोधकत्वं रूढत्वं, यथा

रथन्तरमित्यत्र । यत्र चावयवार्थसंवलितसमुदायार्थबोधकत्वं योगरूढत्वं, यथा पङ्कजमित्यत्र । यत्र चावयवशक्त्यैवार्थबोधकत्वं तद्यौगिकत्वं, यथा पाचिका इत्यादौ । यत्र चावयवशक्त्या समुदायशक्त्या चार्थबोधकत्वं यौगिकरूढत्वं, यथा मण्डपशब्दो मण्डपानकर्तरि भवनविशेषेऽर्थे चेति ।

हिन्दी—रथन्तर शब्द से रथिक की भी प्रतीति क्यों न हो ? ऐसा कहना ठीक नहीं है, क्योंकि 'रूढि योगार्थ का अपहरण करती है' ऐसा न्याय है । विशिष्ट शक्ति के स्वीकार करने पर पङ्कज पद से अवयवों के अर्थ की प्रतीति न हो, समुदाय-शक्ति से ही कमल पद में जैसे पुष्प-विशेष की प्रतीति हो, ऐसा कहना ठीक नहीं है । 'जहत्स्वार्था वहीं होती है जहाँ रूढि विरोधिनी हो' ऐसा शिष्ट का कथन है । अवयवों के अर्थ से संवलित समुदायार्थ पद्म में शक्ति मानी गई है । इसी कारण शब्द चार प्रकार के बतलाये गये हैं—रूढ, योगरूढ, यौगिक और यौगिकरूढ । अवयवों के अर्थ की अनदेखी कर समुदाय की शक्ति मात्र से अर्थ का बोध कराना रूढत्व है; जैसे रथन्तर आदि में । अवयवार्थ से युक्त समुदाय-शक्ति से अर्थ को बतलाना योगरूढत्व है; जैसे पङ्कज आदि में । अवयव की शक्तिमात्र से अर्थ को बतलाना यौगिकत्व है; जैसे पाचिका पाठिका में । अवयव-शक्ति एवं समुदाय-शक्ति से भी अर्थ को बतलाना योगरूढत्व है; जैसे माँड पीने वाले तथा भवन-विशेष में भी मण्डप शब्द ।

( १९७ ) व्यपेक्षापक्षे दूषणं शक्तिसाधकम् । हरिरप्याह—

> 'समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ।
> बहूनां वृत्तिधर्माणां वचनैरेव साधने ॥
> स्यान्महद् गौरवं तस्मादेकार्थीभाव इष्यते ।' इति ।

पङ्कजशब्दे योगार्थस्वीकारे शैवालादेरपि प्रत्ययः स्यात् । वृत्तिधर्माः—विशेषणलिङ्गसङ्ख्याद्ययोगादयः । सविशेषणानां वृत्तिर्न···इत्यादिवचनैरेव साध्या इति तत्तद्वचनस्वीकारे एव गौरवम् । मम तु एकार्थीभावस्वीकारादवयवार्थाभावाद् विशेषणाद्ययोगो न्यायसिद्धः । वचनञ्च न कर्तव्यं न्यायसिद्धे चेति लाघवम् ।

**व्याख्या**—व्यपेक्षापक्षेऽनेकान् दोषानुद्भाव्य एकार्थीभावसामर्थ्यपक्षमुन्नाययति—व्यपेक्षेत्यादिना । **व्यपेक्षापक्षे** व्यपेक्षासामर्थ्यपक्षे । **दूषणं** दोषाणामुद्भावनम् । **शक्तिसाधकं** शक्तेरर्थावबोधकसामर्थ्यस्य साधकम् । उक्तार्थे हरिं प्रमाणयति—हरिरित्यादिना । **हरिः** वाक्यपदीयकृत्तन्नामा । **अपि च** । **आह** कथयति । तदनुवदति—**समास** इत्यादिना । समासे खलु पङ्कजशब्दवत् भिन्ना एव शक्तिः बहूनां वृत्तिधर्माणां वचनैः एव साधने महत् गौरवं स्यात्, तस्मात् एकार्थीभाव आश्रित इत्यन्वयः । **समासे** समस्तपदे । **खलु** हि । **पङ्कजशब्दवत्** पङ्कजशब्दे इव । **भिन्ना** अवयवार्थेतरा समुदायार्थरूपा । **एव** हि । **शक्तिः** सामर्थ्यम् । **बहूनामनेकासाम्** । **वृत्तिधर्माणां** विशेषणलिङ्गसङ्ख्याऽयोगादीनाम् । **वचनैः** वार्तिकैः । **एव** हि । **साधने** प्रतिपादने । **महद्** । **गौरवम्** ।

स्यात् सर्वत्र वचनकरणादिति । **तस्मात्** तेन हि । **एकार्थीभावः** एकार्थीभावसामर्थ्यपक्षः । **आश्रितः** अवलम्बित इति । **पङ्कजशब्दे योगार्थस्वीकारे** अवयवार्थग्रहणे । **शैवालादेः** शैवालप्रभृतिपङ्कोत्पन्नतृणादेः । **अपि च** । **प्रत्ययः** प्रतीतिः । **स्यात्** । **वृत्तिधर्माः** ये खलु वृत्तिधर्मास्ते । **विशेषणलिङ्गसङ्ख्याद्ययोगादयः** विशेषणेन लिङ्गेन सङ्ख्यया च । सम्बद्धत्वप्रभृतयः । **सविशेषणानां वृत्तिर्न····** विशेषणयुक्तानां वृत्तिर्न भवति । **इत्यादिवचनैः** इत्यादिकथनैः । **एव हि** । **साध्याः** प्रतिपाद्याः । **इति** हेतोः । **तत्तद्वचनस्वीकारे** तत्तत्सम्बद्धकथनग्रहणे । **एव** । **गौरवम्** । **मम** मत्पक्षे । **तु** हि । **एकार्थीभावस्वीकारात्** समासादौ एकार्थीभवनपक्षग्रहणात् । **अवयवार्थाभावात्** अवयवभूतपदपृथगर्थाभावात् । **विशेषणाद्ययोगः** विशेषणप्रभृतिवृत्तिधर्मायोगः । **न्यायसिद्धः** । **न्यायसिद्धे** न्यायेनैव सिद्धे तथ्ये । **वचनं** पुनर्वाक्यविन्यासो नियमनं वा । **न** नैव । कर्तव्यमिति ।

पङ्कजशब्दे इव समासे अवयवार्थेतरा समुदायरूपा शक्तिः । यदि पङ्कजशब्दे योगार्थः स्वीक्रियते तदा तस्माच्छैवालादेरपि प्रतीतिः स्यात्, तेषामपि पङ्कजन्यत्वात् । समासे विशेषणलिङ्गसङ्ख्याद्ययोगः एकार्थीभावे न्यायसिद्धः । व्यपेक्षापक्षे तु वचनं कर्तव्यम् । विशेषणायोगो यथा राजपुरुष इत्यत्र ऋद्धस्येत्यादिविशेषणायोगः, लिङ्गायोगो यथा—कुक्कुट्या अण्डं कुक्कुटाण्डं, मृग्याः क्षीरं मृगक्षीरम् । सङ्ख्यायोगो यथा—राज्ञः राज्ञो राज्ञां वा पुरुषः राजपुरुष इति । लाघवार्थमपि एकार्थीभाव आश्रयितव्य इति पक्षः ।

**हिन्दी**—व्यपेक्षा पक्ष में दूषण अर्थात् एकार्थीभाव ही शक्ति का साधक है । हरि ने भी कहा है—

पङ्कज शब्द की तरह समास में अवयवार्थ से भिन्न ही समुदायार्थ रूप शक्ति होती है । बहुत से वृत्तिधर्म—विशेषण, लिङ्ग, सङ्ख्या आदि का अयोग जो है, उसको वचनों के द्वारा ही सिद्ध करना गौरव पड़ेगा । अतः समास आदि में एकार्थीभाव माना गया है ।

पङ्कज शब्द में यौगिक अर्थ को स्वीकार करने पर उससे पङ्कज से उत्पन्न होने वाले शैवाल आदि की भी प्रतीति होती हैं । वृत्ति के धर्म है—विशेषण, लिङ्ग, सङ्ख्या इत्यादि के अयोग आदि 'सविशेषणानां वृत्तिर्न···' इत्यादि वचनों के द्वारा ही साध्य मानने से उन-उन वचनों के स्वीकार में बड़ा ही गौरव होगा । हमारा तो एकार्थीभाव के स्वीकार से अवयवों के अर्थ के अभाव में विशेषण आदि का अयोग न्यायसिद्ध है । न्यायसिद्ध बात में वचन की आवश्यकता नहीं पड़ती । इसी में लाघव है ।

( १९८ ) व्यपेक्षायां दूषणान्तरमाह—

चकारादिनिषेधोऽयं बहुव्युत्पत्तिभञ्जनम् ।
कर्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितिः ॥

घटपटौ इति द्वन्द्वे साहित्यद्योतकचकारनिषेधस्त्वया कर्तव्यः । आदिना घनश्याम इत्यादौ इवशब्दस्य । मम तु साहित्याद्यवच्छिन्ने शक्तिस्वीकारा-

दुक्तार्थानामप्रयोग इति न्यायात् तेषामप्रयोगः। बहुव्युत्पत्तिभञ्जनमिति—अषष्ठ्यर्थबहुव्रीहौ प्राप्तोदक इत्यादौ पृथक् शक्तिवादिनां मते प्राप्तिकर्त्रभिन्नमुदकमित्यादिबोधोत्तरं तत्सम्बन्धिग्रामलक्षणायामपि उदककर्तृकप्राप्तिकर्मग्राम इत्यर्थालाभे प्राप्ते प्राप्त इति क्तप्रत्ययस्य कर्त्रर्थकस्य कर्मार्थे लक्षणा। ततोऽपि समानविभक्तिकनामार्थयोरभेद एव संसर्ग इति व्युत्पत्त्या उदकाभिन्नं प्राप्तिकर्म इति स्यात्। उदकस्य कर्तृतया प्राप्तावन्वये तु नामार्थयोरभेदान्वयव्युत्पत्तिभञ्जनं स्यादिति तात्पर्यम्। नामार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति विभक्त्यर्थोपस्थितेः कारणत्वमिति व्युत्पत्तिभञ्जनञ्च। मम तु पृथक् शक्त्यनङ्गीकाराद् विशिष्टस्यैव विशिष्टार्थवाचकत्वान्नामार्थद्वयाभावान्न क्वचिदनुपपत्तिरित्यलम्।

इति समासादिवृत्त्यर्थः।

इति श्रीशिवभट्टसुतसतीदेवीगर्भजनागेशभट्टकृत-
परमलघुमञ्जूषा समाप्ता।

---

**व्याख्या**—व्यपेक्षासामर्थ्यपक्षे दूषणान्तरं निरूपयति—**व्यपेक्षायामित्यादिना**। **व्यपेक्षायां** व्यपेक्षासामर्थ्यवादिपक्षे। **दूषणान्तरम्** अन्यमपि दोषम्। आह कथयति। तत्र शिष्टवाक्यमनुवदति—**चकारेत्यादिना**। अथ ते चकारादिनिषेधः बहुव्युत्पत्तिभञ्जनं कर्तव्यम्, अस्माकं तु तत् न्यायसिद्धम् इति स्थितिः इत्यन्वयः। अथ व्यपेक्षावादिपक्षे। **ते** भवन्मते। **चकारादिनिषेधः** घटश्च पटश्च घटपटावित्यत्र चकारस्य घन इव श्यामः घनश्याम इत्यत्र इवशब्दस्य च लक्षणयैवार्थबोधादुक्तार्थानामप्रयोग इति निषेधः। यदुच्यते तत्र **बहुव्युत्पत्तिभञ्जनं** चार्थे द्वन्द्वः 'उपमानानि सामान्यवचनैरि'-त्यादि बहुविधविवृतिभञ्जनम्। **कर्तव्यं** यद्धि महद् गौरवम्। **अस्माकं** मते तु **तत्** चकारादिनिषेधः। **न्यायसिद्धम्** एकार्थीभावस्वीकारेण स्वतः सिद्धम्। **इति**। **स्थितिः** व्यवस्थेति। तदेव व्याख्याति—**घटपटावित्यादिना**। **घटपटौ** घटश्च पटश्च घटपटौ। **इति**। **द्वन्द्वे** चार्थकद्वन्द्वसमासे। **साहित्यद्योतकचकारनिषेधः** घटपटसहितभावद्योतकस्य चकारस्य निषेधः। **त्वया** व्यपेक्षावादिना। **कर्तव्यः**। **आदिना** चकारादिनिषेध इत्यत्र पठितेन आदिपदेन। **घनश्यामः** घन इव श्यामः। **इत्यादौ**। **इवशब्दस्य** च **निषेधः** **कर्तव्यः**। **मम** अस्मत्सम्मतैकार्थीभावपक्षे। **तु** तद्व्यतिरिक्तम्। **साहित्याद्यवच्छिन्ने** सहितभावादिविशिष्टे। **शक्तिस्वीकारात्** सामर्थ्यसमर्थनात्। **उक्तार्थानाम्** अन्यतः सिद्धार्थानाम्। **अप्रयोगः** न पुनः प्रयोगः। **इति**। **न्यायात्**। **तेषां** चादीनाम्। **अप्रयोगः** प्रयोगाभाव इति। **बहुव्युत्पत्तिभञ्जनमिति—अषष्ठ्यर्थबहुव्रीहौ** षष्ठ्यर्थेतरबहुव्रीहिसमासे। **प्राप्तोदकः** प्राप्तमुदकं यं सः। **इत्यादौ**। **पृथक् शक्तिवादिनां** व्यपेक्षावादिनाम्। **मते** पक्षे। **प्राप्तिकर्त्रभिन्नं** प्राप्तिकर्तुरभिन्नम्। **उदकम्**। **इत्यादिबोधोत्तरम्** इति ज्ञानानन्तरम्। **तत्सम्बन्धिग्रामलक्षणायाम्**—प्राप्तोदकसम्बद्धग्रामे लक्षणायां मतायाम्। **अपि च**। **उदककर्तृकप्राप्तिकर्मग्रामः** उदकं कर्तृ यत्र तादृशी या प्राप्तिस्तस्याः कर्म

ग्रामः । इति । अर्थालाभे अर्थस्याप्राप्तौ । प्राप्ते । प्राप्त इति क्तप्रत्ययस्य प्राप्त इत्यत्र यः क्तप्रत्ययस्तस्य । कर्त्रर्थकस्य कर्त्रर्थे विहितस्य । कर्मार्थे कर्मरूपेऽर्थे । लक्षणा लक्षणा कर्तव्या । ततः लक्षणायां कर्मार्थे कृतायाम् । अपि । समानविभक्तिकनामार्थयोः समानविभक्तियुक्तनामार्थयोः । अभेदः भेदाभावः । एव संसर्गः सम्बन्धः । इति व्युत्पत्त्या । उदकाभिन्नम् उदकादभिन्नम् । प्राप्तिकर्म । इति स्यात् । उदकस्य । कर्तृतया कर्तृरूपेण । प्राप्तौ प्राप्तिकर्मणि । अन्वये सम्बन्धे । तु । नामार्थयोरभेदान्वयव्युत्पत्तिभञ्जनं नामार्थयोरभेदेनान्वय इति या व्युत्पत्तिस्तस्याः भञ्जनम् । स्यात् । इति । तात्पर्यम् आशयः । नामार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं नामार्थप्रकारकं नामार्थयोरभेदान्वयपक्षकं यच्छाब्दबुद्धित्वं शाब्दबोधस्तेनावच्छिन्नं विशिष्टम् । प्रति । विभक्त्यर्थोपस्थितेः विभक्त्यर्थस्य भाव एव । कारणं हेतुः । इति । व्युत्पत्तिभञ्जनम् । चेति । मम मन्मते । तु तद्व्यतिरिक्तम् । पृथक्शक्त्यनङ्गीकारात् अवयवानां पृथगेव शक्तिरित्यस्वीकारात् । विशिष्टस्य समुदायस्य । एव हि । विशिष्टार्थवाचकत्वात् विशिष्टार्थबोधकत्वात् । नामार्थद्वयाभावात् द्वयोः प्रातिपदिकार्थयोरभावात् । न नैव । क्वचित् कुत्रापि । अनुपपत्तिः अव्यवस्था । इति । अलमतिविस्तरेणेति ।

व्यपेक्षावादिमतं शतशो दूषयन्नप्यतृप्तो ग्रन्थकृत् पुनस्तदेव प्रकरणमुत्थापयन् कथयति यद्—व्यपेक्षावादिमते घटपटावित्यत्र चकारनिषेधः घनश्याम इत्यत्र इवशब्दनिषेधश्च एवमेवान्यत्रापि तत्पक्षसिद्धये बहुविधव्युत्पत्तिभञ्जनञ्च कर्तव्यम् । एकार्थीभावपक्षे तु सर्वस्य न्यायसिद्धत्वान्न तथा दोष इति । घटपटावित्यत्र लक्षणया साहित्यबोधे चकारनिषेधः कर्तव्यः । एकार्थीभावपक्षे तु साहित्याद्यवच्छिन्ने एव शक्तिस्वीकारात् स्वत एव तन्निवृत्तिरुक्तार्थानां प्रयोगनिषेधात् । प्राप्तोदक इत्यस्य उदककर्तृकप्राप्तिकर्मग्राम इत्यर्थः, किन्तु व्यपेक्षावादिमते पृथक्शक्तिस्वीकारात् कर्त्रर्थे कृतस्य क्तप्रत्ययस्य कर्मार्थे लक्षणा कर्तव्या भवति । ततोऽपि नामार्थयोरभेदान्वयव्युत्पत्त्या उदकाभिन्नं प्राप्तिकर्म इत्येव बोधो भवति । यदि उदकस्य कर्तृत्वेन प्राप्तावन्वयः क्रियते तदा नामार्थयोरभेदान्वय इति व्युत्पत्तेर्भञ्जनं स्यात् । एकार्थीभावपक्षे तु विशिष्टस्यैव विशिष्टार्थवाचकत्वाद् द्वयोः प्रातिपदिकार्थयोरभावान्न स दोष इति ।

समासादिगवृत्त्यर्थभागव्याख्यानतत्परा ।
प्रणीता लोकमणिना समाप्ता किरणावली ॥
नागेशभट्टविदुषा प्रणीतात्वेन सम्मता ।
परमा लघुमञ्जूषा व्याख्याताऽत्र यथामति ॥
प्रीयेतामनया देवौ नित्यौ शब्दार्थविग्रहौ ।
प्रीयन्तां गुरवः शिष्टाश्छात्रवर्गः प्रसीदतु ॥

इति श्रीवत्ससगोत्रीयविप्रकुलोत्पन्नपरशुरामात्मजविष्णुमायासुतलोकमणिदाहालप्रणीता वैयाकरणसिद्धान्तपरमलघुमञ्जूषायाः किरणावल्याख्या व्याख्या सम्पूर्णा ।

---





हिन्दी—व्यपेक्षा में कुछ और दोष बतलाते हैं—

चकार आदि का निषेध और अनेक प्रकार की व्युत्पत्तियों का भञ्जन भी आपके मत में करना पड़ेगा। हमारे मत मे सब न्यायसिद्ध होने से किसी भी दोष के न होने की स्थिति है। 'घटपटौ' में जो द्वन्द्व समास है, उसमें साहित्य अर्थ के द्योतक चकार का निषेध आपको करना पड़ेगा। आदि पद से 'घनश्यामः' इत्यादि में इव शब्द का भी। मेरे मत में तो साहित्य आदि से अवच्छिन्न ( विशिष्ट ) में शक्ति के मानने से 'उक्तार्थं का प्रयोग नहीं होता' इस न्याय से उनका प्रयोग नहीं होता।

अनेक प्रकार की व्युत्पत्तियों का भञ्जन भी आपके मत में करना पड़ता है। षष्ठ्यर्थभिन्न बहुव्रीहि 'प्राप्तोदकः' इत्यादि में अवयवों में पृथक् शक्ति मानने वालों के मत में 'प्राप्तिरूप क्रिया के कर्ता से अभिन्न उदक' इत्यादि ज्ञान के अनन्तर उससे सम्बन्धित ग्राम में लक्षणा करने पर भी उदक है कर्ता जिसमें, ऐसी जो प्राप्ति है, उसका कर्म ग्राम --ऐसे अर्थ का लाभ प्राप्त न होने पर 'प्राप्त' में कर्त्रर्थं में विहित क्त प्रत्यय का कर्म अर्थ में लक्षणा करनी पड़ेगी। उससे भी 'समान विभक्ति वाले नाम एवं अर्थ को अभेद ही संसर्ग होता है'—ऐसी व्युत्पत्ति से 'उदक से अभिन्न प्राप्तिकर्म' ऐसा बोध होगा। उदक को कर्ता के रूप में प्राप्ति के साथ अन्वय करने पर तो नाम एवं अर्थ का अभेद रूप से अन्वय होता है—ऐसी व्युत्पत्ति का भञ्जन होता है; यह तात्पर्य है। इसके अतिरिक्त प्रातिपदिकार्थ है प्रकार अर्थात् विशेषण जिसमें, ऐसे शाब्दबोध के प्रति 'विभक्ति के अर्थ का ज्ञान कारण होता है' इस व्युत्पत्ति का भी भञ्जन होगा।

हमारे मत में तो अवयवों में पृथक् शक्ति न मानने के कारण विशिष्ट का ही विशिष्ट अर्थ का वाचक होने से दो प्रातिपदिकार्थों के अभाव में कहीं भी अनुपपत्ति नहीं होती। इस तरह संक्षेप में विवेचना की गई।

**इस प्रकार समासादि वृत्त्यर्थ भाग समाप्त हुआ।**

**इस प्रकार वैयाकरणसिद्धान्तपरमलघुमञ्जूषा की 'किरणावली' व्याख्या समाप्त हुई।**

---

